**कच्चित् पुराणौ पुरुषौ स्वनाभ्यपद्मानुवृत्त्येह कलावतीर्णौ ।**
**आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥ २६ ॥**

**तात्पर्यम्– 'पद्मो ब्रह्मा समुद्दिष्टः पद्मा श्रीरपि चोच्यत' इति ब्राह्मे । 'लोकानां सुखकर्तृत्वमपेक्ष्य कुशलं विभोः । पृच्छ्यते सततानन्दात्कथं तस्यैव पृच्छ्यत' इति पाद्मे ॥ २६ ॥**

**प्रकाशिका–** कच्चिच्छब्दो यद्यपि कुशलप्रश्नार्थः । तथाप्यत्रोत्तरत्र च कुशलादिशब्दानां पृथक् सत्वात्प्रश्नमात्रार्थः । तथाच कुशलमास्त इत्यर्थः । स्वनाभ्यपद्मेत्यत्र नाभिसम्बन्धिपद्मस्य जडत्वेनानुवृत्तिशब्दोक्तप्रार्थनाऽसम्भवात्पद्मशब्दविवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ पद्मो ब्रह्मेति । तथाच स्वो विष्णुस्तस्य नाभ्यो नाभिसम्बन्धिपद्मजः पद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनया कृतक्षणौ कृतावसरौ । उर्वीकुशलकरणकाले तयोरवसरो नाभूदिति भावः । अत्र कुशलमास्ते किमिति भगवत्कुशलप्रश्नाभिप्रायं प्रमाणेनाह ॥ लोकानामिति । कुशलं पृच्छ्यते । पुराणेष्विति शेषः । इतरदेवकुशलप्रश्नः किं न स्यादित्यतः प्रतीतार्थे बाधकमाह ॥ सततेति । तथाच भगवत्यकुशलप्रसक्तेरभावात्तस्यैव कुशलप्रश्नो न घटत इत्यर्थः । तथाच शूरगेहे लोकानां कुशलं यथा स्यात्तथा । सुखं कुर्वाणाविति यावत् । आसाते किमिति मूलं व्याख्येयमिति भावः ॥ २६ ॥

**कश्चित् कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः ।**
**यो वै स्वसॄणां पितृवद् ददाति वरान् वदान्यो वरतर्पणेन ॥ २७ ॥**

**तात्पर्यम्– वरतर्पणेन भर्तृतर्पणेन ॥ २७ ॥**

**प्रकाशिका–** कुरूणां नो भामः पूज्यो यद्वा भामो भगिनीभर्ता सम्बन्धे विचारिते देवक्याः पाण्डुभगिनीस्थानीयत्वात् । शौरिर्वसुदेवः स्वसॄणां कुंत्यादीनां वरान्वरणीयान्पदार्थान्वदान्यो दानशीलः । वरतर्पणेनेत्येतदप्रतीत्या व्याचष्टे । वरतर्पणेनेति । तथाच वरशब्दः स्वसॄणां ये भर्तारः पतयस्तत्परस्तत्तर्पणेन सहेति व्याख्येयम् । स्वसॄणां तत्पतीनां च तृप्तिं करोतीति भावः ॥ २७ ॥

**कच्चिद् वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः ।**
**यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान् स्मरमादिसर्गे ॥ २८ ॥**

**प्रकाशिका–** वरूथाधिपतिः सेनाधिपतिः । आदिसर्गे पूर्वजन्मनि स्मरं कामं सन्तम् । विप्रानाराध्येति वचनं लोकशिक्षणपरम् ॥ २८ ॥

**कच्चित् सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः सः आस्ते ।**
**यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाधिं परिहृत्य दूरात् ॥ २९ ॥**

**तात्पर्यम्– 'आधिर्मनोवरूथं च आत्मा स्वमिति चोच्यत' इत्यभिधानम् ॥ २९ ॥**

**प्रकाशिका–** सात्वतादिशब्दवाच्यानां यादवविशेषाणामधिप उग्रसेनो यमुग्रसेनमभ्यषिंचत् । राज्य इति शेषः । शतपत्रं पुण्डरीकं तद्वदायते नेत्रे लोचने यस्य स तथोक्तः । नृपासनाधिं सिंहासनविषयकमाधिं दूरात्परिहृत्येत्यत्राधिशब्देन सिंहासनं मम नाभूदिति मानसी व्यथा प्रतीयते । आधिस्तु मानसी पीडेत्यमरोक्तेः तां परिहृत्येति व्याख्याने भगवन्मनसीतरपुरुषमानसीव व्यथा-प्रसक्तिरायाति । न च सा युक्ताऽतोऽत्र विवक्षितमाधिशब्दार्थं प्रमाणेनैव दर्शयति ॥ आधिरिति । तथाचात्राधिशब्दो मनःपरो न तु तद्गतपीडापरो नृपासनं मम भूयादित्याधिं तद्विषयकं मनो दूरादेव परिहृत्येति मूलार्थ इति भावः । न चात्रापि भगवन्मनसि नृपासनविषयकत्वप्रसक्तिः । तस्यादोषत्वभावात् । तत्त्यागेन वैराग्यलक्षणगुणालाभाच्चेति ध्येयम् ॥ २९ ॥

**कच्चिद्धरेः सौम्यसुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः ।**
**असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ ३० ॥**

**प्रकाशिका–** सदृक्षः पुत्रत्वयोग्यः साधु कुशलमास्त इत्यन्वयः । अग्रे पूर्वजन्मन्यंबिकया पार्वत्या धृतः पुत्रत्वेन पालितः ॥ ३० ॥

**क्षेमं स कच्चिद् युयुधान आस्ते यः फल्गुनाल्लब्धधनूरहस्यः ।**
**लेभेऽञ्जसाधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥**

**प्रकाशिका–** युयुधानः सात्यकिः फल्गुनादर्जुनात् । गतिं ज्ञानम् । अत्र धनुर्विद्यारहस्यत्वं भगवत्स्वरूपज्ञत्वं च प्रष्टव्योपपादकतयोक्तम् । एवमग्रेऽपि तत्तद्विशेषणानि प्रष्टव्यत्वोपपादकानीति द्रष्टव्यम् ॥ ३१ ॥

**कच्चिद् बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ।**
**यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥ ३२ ॥**

**प्रकाशिका–** अनमीवो निष्पापः श्वफल्कपुत्रोऽक्रूरो मार्गस्थपांसुष्वचेष्टत लुण्ठनरूपां चेष्टां चकार । कथं भूतः । प्रेम्णा भक्त्युद्रेकेण विभिन्नं विनष्टं धैर्यं राजभृत्येन मया मार्गपांसुषु लुण्ठनं न कार्यमिति मनोदार्ढ्यं यस्य स तथोक्तः ॥ ३२ ॥

**कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ।**
**या वै स्वगर्भेण बभार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥**

**प्रकाशिका–** नाम्ना देवकः कुलेन भोजो भोजश्चासौ देवकश्च देवकभोजस्तस्य पुत्र्या देवक्या देवमातुरदितेरिव विष्णुः प्रजापुत्रो यस्याः । त्रयी श्रुतिः । यज्ञविस्ताररूपमर्थं यज्ञो विष्णुस्तद्वितानं तद्विस्ताररूपं माहात्म्यं तल्लक्षणमर्थमिति वा । यथा बिभर्ति प्रतिपादयति तथा या स्वगर्भेण देवं बभार । वा इत्यनेन तस्याः पुण्यातिशयप्रसिद्धिं दर्शयति ॥ ३३ ॥

**अपिस्विदास्ते भगवान् सुखं वा यः सात्वतां कामदुघोऽनिरुद्धः ।**
**यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्वतुरीयमर्थम् ॥ ३४ ॥**

**प्रकाशिका–** अपिस्वित् किंस्वित् । वाशब्दोऽप्यर्थः । अनिरुद्ध इत्यनेन संबध्यते । यं शब्दयोनिं शब्दैकसमधिगम्यं मनोमयं ज्ञानपूर्णं सत्वं वासुदेवमपेक्ष्य तुरीयं चतुर्थरूपमामनन्ति श्रुतयः । इदं शब्दयोनिमित्यादिकं बलभद्रे पुराणपुरुषत्वाद्युक्तिवदनिरुद्धे आविष्टहरिरूपापेक्षयोक्तमिति ज्ञातव्यम् ॥ ३४ ॥

**अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ।**
**हार्दिक्यसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ॥ ३५ ॥**

**प्रकाशिका–** निजात्मदैवमनागन्तुकस्वदेवतारूपं कृष्णं सत्यात्मजः सत्यभामातनूजो भानुनामा । चारुदेष्णो रुग्मिणीतनूजो गदो वसुदेवपुत्रः ॥ ३५ ॥

**अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ।**
**दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥**

**प्रकाशिका–** एवं यादवानां कुशलं पृष्ट्वा पाण्डवानां तत्पृच्छति ॥ अपिस्विद्दोर्भ्यामित्यादिना । विजयाच्युताभ्याम् । अथवा स्वदोर्भ्यां बाहूवद्वर्तमानाभ्यां विजयोऽर्जुनोऽच्युतः कृष्णस्ताभ्यामित्यर्थः । धर्मेण धर्ममार्गेण धर्मो धर्मपुत्रः सेतुं धर्ममर्यादां तत्सभायां यस्य युधिष्ठिरस्य सभायां विजयो दिग्विजयस्तमनुवृत्तिर्वर्तनं यस्याः सा तथा तया श्रीमदादितरेषां धर्मसेत्वतिक्रमः संभावितः सोऽस्य नास्तीति प्रश्नबीजम् ॥ ३६ ॥

**किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद् दीर्घतमं व्यमुश्चत् ।**
**यस्यांघ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥**

**तात्पर्यम्–** अघं व्यमुञ्चत् । पुनरपराधबुद्धिं हित्वाऽऽस्ते ॥ ३७ ॥

**प्रकाशिका–** भीमः कृताघेषु कृतापराधेषु दुर्योधनादिषु किं वाऽघं व्यमुञ्चदित्यत्र स्वनिष्ठं पापं तेष्वमुञ्चदित्यन्यथाप्रतीतिवारणायात्र विवक्षितमघशब्दार्थं दर्शयति ॥ अघमिति । पुनरपराधबुद्धिं प्रत्यपकारबुद्धिम् । तथाचात्राघशब्दस्य प्रत्यपकारवाचकस्य दीर्घतमं बहुकालमनुवर्तमानमित्यनेन व्यमुञ्चदित्यनेन चान्वयस्वारस्याय स्वबुद्धिलक्षकत्वे प्रत्यपकारः कर्तव्य इति बहुकालीनां बुद्धिं किं वा व्यमुञ्चत्तां बुद्धिं मुक्त्वाऽऽस्ते किं स्वकर्तव्यत्वेन बहुकालचिन्तितं प्रत्यपकारं कृतवान् किमित्यर्थः । अङ्घ्रिपाते निमित्तमाह ॥ मार्गमिति । गदाया गदायुद्धस्य विचित्रं विविधं मार्गं चरत इत्यन्वयः ॥ ३७ ॥

**कच्चिद् यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ।**
**अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥**

**प्रकाशिका–** रथयूथपानां मध्ये यशोधाः कीर्तिधारी । उपरता अरयो यस्मात्सः । यस्य शरकूटेन बाणसमूहेन गूढ आच्छन्नो माययेच्छया किरातो गृहीतकिरातवेषः ॥ ३८ ॥

**यमावुतस्वित् तनयौ च माद्र्याः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ।**
**रेमात उद्धृत्य मृधे स्वरिक्थं सुधां सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥**

**प्रकाशिका–** यमौ नकुलसहदेवौ । उत स्वित् किं स्वित् । चशब्दोऽप्यर्थे । माद्रवत्यास्तनयावपि पार्थैः पृथापुत्रैः । अक्षिणीपक्ष्मभिरावृतौ रक्षितौ । मणीवादित्वादक्षिणी वेति सम्बन्धः । मृधे युद्धे स्वरिक्थं स्वराज्याख्यधनमुद्धृत्याच्छिद्य वज्रिवक्त्रादिन्द्रमुखात्सुपर्णौ गरुडाविव । अभूतोपमा । यदि द्वौ गरुडाविन्द्रमुखादमृतमानयेतां तर्हि तद्वदित्यर्थः ॥ ३९ ॥

**अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनापि तेन ।**
**यस्त्वेक वीरोऽतिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥**

**प्रकाशिका–** पृथायाः किं नु कुशलं पृच्छेयं यतस्तस्याः पाण्डुना विना जीवनमेवाश्चर्यमित्याह ॥ अहो इति । ध्रियते । प्राणैरिति शेषः । जीवतीति यावत् । न चात्याश्चर्यं यतोर्भकाणां पुत्राणामर्थे ध्रियते न भोगार्थम् । यद्वा ध्रियते । पुत्रैरिति शेषः । तेन विनाऽपि याऽर्भकार्थ एवासीत् । न माद्रीवत्सहगमनं कृतवतीत्यर्थः । तेन पाण्डुना चतस्रः ॥ ४० ॥

**सौम्यानुशोचे तमधः पतन्तं भ्रात्रे परेताय विदुद्रुहे यः ।**
**निर्यापितो येन सुहृत् स्वपुर्या अहं स्वपुत्रान् समनुव्रतेन ॥ ४१ ॥**

**प्रकाशिका–** धृतराष्ट्रस्तु न कुशलप्रश्नयोग्यः किन्तु शोच्य एव । यतोऽधःपतनसाधन-पापकारीत्याह ॥ सौम्येति । हे सौम्य सोमार्ह । तं धृतराष्ट्रं जीवन्तमनुशोचामि । कस्मात् । अधःपतन्तं तत्रापि परेताय मृताय भ्रात्रे पाण्डवे तत्पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान् । किञ्च जीवतो ममापि अपकारस्तेन कृत इत्याह । येन सुहृद्भ्रात्राऽहं च स्वपुर्याः सकाशान्निर्यापितो विवासितः ॥ ४१ ॥

**सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां चालयतो विधातुः ।**
**नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र ॥ ४२ ॥**

**प्रकाशिका–** पुरान्निर्यापितस्य तव मनसि किं खेदो नेत्याह ॥ सोऽहमिति । यो निर्यापितः सोऽहमित्यर्थः । विधातुर्हरेः कृष्णस्य प्रसादात्तस्य पदवीं माहात्म्यं पश्यन् । कथंभूतस्य । नृणां दृशो हरिरेव भूभारहरणायात्रावतीर्ण इति । चित्तवृत्तीर्मर्त्यविडम्बनेन स्वमाहात्म्याच्छादकेन मनुष्यानु-करणेन चालयतो भ्रामयतः । श्रीकृष्ण एव स्वमाहात्म्यमाछाद्य स्वस्मिन्मानुष्यभ्रममुत्पाद्य धृतराष्ट्र-दीन्पापभागिनः करोत्येवं तन्माहात्म्यं पश्यन्नहं गतविस्मयश्चित्तविकाररहितस्तत्प्रसाद एवायमिति मत्वा सुखेनैव चरामीत्याशयः ॥ ४२ ॥

**नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः ।**
**वधात् प्रपन्नार्तिजिहीर्षयेशो ह्युपैक्षताघं भगवान् कुरूणाम् ॥ ४३ ॥**

**प्रकाशिका–** ननु भूभारहरणायावतीर्णः श्रीकृष्णः स्वभक्तपाण्डवद्रोहिणो दुर्योधनादीन् राज्या-पहारानन्तरमेव कस्मान्न हतवानित्यत आह ॥ नूनमिति । ईशस्तदैव हन्तुं समर्थोऽपि भगवान् कृष्णो विद्यामदो धनमदस्तथैवाभिजनोमदः । एतेन मदान्धानां त एव च सहतां दमा इति वचनाद्विद्याध-नाभिजननिमित्तैस्त्रिभिर्मदैरुत्पथानां पन्थानमपहाय वर्तमानानां च भूमिरष्टादशाक्षौहिणीगणिताभि-र्मुहुर्महीं चालयतां नृपाणां वधान्निमित्तात्प्रपन्नार्तिजिहीर्षया प्रपन्ना भूमिस्तस्या आर्तिर्भारस्तन्निमित्तं दुःखं तज्जिहीर्षया कुरूणां दुर्योधनादीनामघमपराधमुपेक्षित इति नूनं तर्कयामि । तर्कनिश्चययोर्नून-मित्यभिधानात् । तदानीमेव तेषां वधे सर्वभूभारहरणं न स्यादित्याशयेन तदैव न हतवानिति भावः ॥ ४३ ॥

**अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुग्रहणाय पुंसाम् ।**
**न त्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम् ॥ ४४ ॥**

**तात्पर्यम्– 'न देहयोगो हि जनिर्विष्णोर्व्यक्तिर्जनिः स्मृते'त्याग्नेये । 'हरिः कर्ताप्यकर्तेति फलाभावेन भण्यत' इति च ॥ ४४ ॥ इति तृतीयतात्पर्ये प्रथमोऽध्यायः ॥ १ ॥**

**प्रकाशिका–** नन्वीश्वरस्य कृष्णादिरूपेण जन्म तावन्नोपपद्यते । तस्याजत्वात् । नापि कर्माणि संभवन्ति । तस्याकर्तृत्ववचनात् । परिपूर्णस्य जन्मनामकर्मभिश्च प्रयोजनाभावाच्चेत्यत आह ॥ अजस्येति । अत्राजस्य जन्मेत्यकर्तुः कर्माणीति च व्याहतमिव प्रतीयतेऽतः प्रश्नक्रमेण प्रमाणद्वयमुदाहृत्योभयं घटयति ॥ न देहयोग इत्यादिना । हि यस्माद्देहयोगो जनिर्न तस्माद्व्यक्तिर्जनिः स्मृतेत्यर्थः । न देहयोग इत्यनेन कोऽर्हति देहयोगमित्येतदपि प्रमापितमिति मन्तव्यम् । स्वभावेन कर्ताऽपि स्वस्य फलाभावेनाकर्तेति गौण्या वृत्त्या भण्यते व्यवह्रियत इत्यर्थः ॥ ततश्चायमर्थः ॥ अजस्य जीववत् त्रिगुणात्मकदेहयोगशून्यस्यापि जन्मोपपद्यते जन्मशब्दार्थतया प्रादुर्भावस्यैव विवक्षितत्वात् । उत्पथनृपशासनरूपप्रयोजनसद्भावाच्च । अकर्तुः फलाभावेनैवाकर्तृत्वेनोच्यमानस्य कर्माणि विहितानि नित्यनैमित्तिकादीनि संभवन्ति । यतः स्वप्रयोजनाभावेऽपि पुंसामधिकारिणां गृहणाय शिक्षणाय भवन्ति । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहमिति वचनात् । नन्वजत्वश्रुतेः स्वरूपापेक्षयाऽप्युपपत्तेरीश्वरस्यापि जीववद्देहयोगरूपमेव जन्म कर्म च किं न स्यादित्यत आह ॥ न त्वन्यथेति । अन्यथा प्रादुर्भावरूपजन्माद्यपेक्षया प्रकारान्तरं गुणात्मकदेहयोगेन जननं विधिबन्धकेन कर्म च न तु नैव । कुतः । यतो गुणानां परो गुणातीतः । नित्यमुक्त इति यावत् । को देहयोगं गुणात्मकदेहयोगरूपां जनिं कर्मतन्त्रमुत कर्मविस्तारमप्यर्हति न कोऽपीत्यर्थः । नित्यमुक्तत्वाज्जीवजन्म विधिभयेन कर्म च नास्त्येवेति भावः ॥ ४४ ॥

**तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ।**
**अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ॥ ४५ ॥**

**॥ इति श्रीमद्भागवते तृतीयस्कन्धे प्रथमोऽध्यायः ॥**

**प्रकाशिका–** उत्पथनृपशासनेनापि किं फलमित्यपेक्षायां तत्साध्यं फलं दर्शयन् स्वाभीष्टं फलं प्रार्थयते ॥ तस्येति । प्रपन्ना अनादिकालेन शरणं प्राप्ता येऽखिला लोकपाला इन्द्रादयस्तेषां स्वे स्वीयेऽनुशासने श्रुतिस्मृत्यादिरूपेऽवस्थितानामन्येषांचार्थायप्रयोजनाय । अनेन शिष्टप्रतिपालनमेवोत्पथनृपशासनप्रयोजनमिति सूचितम् । वार्तां कथाम् । तीर्थवत्पुण्यकरकीर्तेः ॥ ४५ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ३-१ ॥

# अथ द्वितीयोऽध्यायः ।

शुक उवाच–

**इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम् ।**
**प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात् स्मारितेश्वरः ॥ १ ॥**

**प्रकाशिका–** भागवत उद्धवः प्रियः श्रीकृष्णस्तदाश्रयां तद्विषयकां नोत्सेहे नैव प्रयत्नं कृतवान् । औत्कण्ठ्याद्भक्त्युद्रेकात् । स्मारितो विदुरवचनचातुर्येणासंप्रज्ञातसमाधिविषयीकृत ईश्वरो येन स तथा । असंप्रज्ञातसमाधिं प्राप्तो यतोऽतः प्रतिवचने यत्नवान्न जात इत्यर्थः । एवमग्रेऽपि स्मरणमसंप्रज्ञातसमाधिरूपमेव ज्ञेयम् ॥ १ ॥

**यः पञ्चहायनो मात्रा प्रातराशाय याचितः ।**
**नैच्छत् तद् रचयन् यस्य सपर्यां बाललीलया ॥ २ ॥**

**प्रकाशिका–** इदमेव कैमुत्येनोपपादयति ॥ य इति । य उद्धवः पञ्चहायनः पञ्चवर्षः प्रातराशाय प्रातःकालीनभोजनाय तत्प्रातर्भोजनं सपर्यां मानसीं बाह्यां च रचयन्कुर्वन् । बाललीलामित्यनेन बाल्यावस्थापन्नस्य क्रीडारूपोऽपि व्यापार एतादृश इति सूचयति ॥ २ ॥

**स कथं सेवया तस्य कालेन जरसं गतः ।**
**पृष्टो वार्तां प्रतिब्रूयाद् भर्तुः पादावनुस्मरन् ॥ ३ ॥**

**प्रकाशिका–** जरसं जराम् । अनेन तस्य हरौ मनोवाक्कायवृत्तीनामभ्यासपाटवं सूचयति । भर्तुः कृष्णस्य ॥ ३ ॥

**स मुहूर्तमभूत् तूष्णीं कृष्णांघ्रिसुधया भृशम् ।**
**तीव्रेण भक्तियोगेन निमग्नः साधु निर्वृतः ॥ ४ ॥**

**प्रकाशिका–** कृष्णाङ्घ्रिस्मरणरूपसुधया । तृतीया सप्तम्यर्थे । सुधायां निमग्नः सन् साधुनिर्वृतः स्वरूपानन्दाविर्भावं प्राप्तः ॥ ४ ॥

**पुलकोद्भिन्नसर्वाङ्गो मुञ्चन् मीलद्दृशाश्रु सः ।**
**पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥**

**प्रकाशिका–** प्रत्युत्तरावचनेन विदुरमनसि तस्मिन्किं कोपो जातो नेत्याह ॥ पुलकेति । पुलकै रोमाञ्चैरुद्भिन्नान्यङ्कुरितान्युज्जृंभितानि वा सर्वाण्यङ्गानि यस्य सः । मीलितदृशा मीलितनेत्रेणाश्रुबाष्पकलां मुञ्चन् यतः स्नेहप्रसरसंप्लुतो भक्तिनदीप्रवाहनिमग्नः । असंप्रज्ञातसमाधिस्थ इति यावत् । स उद्धवस्तेन विदुरेण लक्षितोऽनुमितोऽतः पूर्णार्थः कृतार्थो मुक्त इव लक्षित इत्यर्थः । रोमाञ्चादिना तदीयासंप्रज्ञातसमाधिमनुमायाहो मुक्त इवायं परमानन्दमग्नो जातोऽस्त्यतोऽस्य तूष्णींभाव इति ज्ञातवानिति भावः ॥ ५ ॥

**शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ।**
**विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥**

**प्रकाशिका–** भगवतो लोकात्प्रकाशादसंप्रज्ञातसमाधिरूपान्नृलोकं मनुष्यदेहानुसन्धानमागतः प्राप्त उत्स्मयन्विप्रशापं निमित्तीकृत्य यदुकुलविनाशं कर्तुमुद्युक्तस्य श्रीकृष्णस्य माहात्म्यस्मरणेनोत्कृष्टं विस्मयं कुर्वन् ॥ ६ ॥

**उद्धव उवाच–**
**कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह ।**
**किं नु नः कुशलं ब्रूयां गतश्रीषु यदुष्वहम् ॥ ७ ॥**

**प्रकाशिका–** भाविना कृष्णादियादववियोगेन सन्तप्यमान आह ॥ कृष्णेति । कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचेऽस्तमये आसन्ने सति । अत एव गतश्रीषु विगतशोभेषु विप्रशापाख्याजगरेण गीर्णेषु गिलितप्रायेषु नोऽस्मत्संबन्धियदुषु किं नु कुशलं ब्रूयाम् । हेति खेदे ॥ ७ ॥

**दुर्भगो बत लोकोऽयं यदवो नितरामपि ।**
**ये संवसन्तो न विदुर्हरिं मीना यथाम्भसि ॥ ८ ॥**

**प्रकाशिका–** ननु कृष्णस्मरणेन तव यथैतादृशसुखप्राप्तिस्तथेतरेषां जनानां यदूनां च कृष्णं स्मरतामेतादृशसुखप्राप्तिः कुतो नेत्यत आह ॥ दुर्भग इति । अयं भूमिष्ठो लोको जनो ये लोका यादवाश्च कृष्णेन संवसन्तोऽपि सह विद्यमाना अपि कृष्णं हरिं हरिरयमिति न विदुः । प्रत्युतायमप्येको मनुष्य इत्येव विदुः । अतो न तेषां कृष्णस्मरणेनास्मद्वत्सुखप्राप्तिरिति भावः । अत्र दृष्टान्तो यथांऽभसि समुद्रे विद्यमाना मीना हरिं मत्स्यरूपं हरिरयमिति न जानन्ति तथैवेति । मीना इवोडुपमिति पाठे मीना यथा जले प्रतिबिंबितमुडुपं चन्द्रं प्रतिबिंबितत्वेन न जानन्तीति व्याख्येयम् ॥ ८ ॥

**इङ्गितज्ञाः पुरूप्रौढा एकारामाश्च सात्वताः ।**
**सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥**

**प्रकाशिका–** ननु विप्रकर्षाद्भवतु लोकस्यैतादृशमज्ञानं विपरीतज्ञानं वा यादवानामतिचतुराणां कृष्णेन सहैकत्र सतां कथमीदृशमज्ञानादिकमित्यत आह ॥ इङ्गितज्ञा इति । इङ्गितं हृद्गतो भावः । इङ्गितं चाङ्गचेष्टितमित्यभिधानात् । अत्रेङ्गितशब्दस्तन्त्रेणोभयार्थ उपात्तः । तथा चेङ्गितेन परस्याङ्गचेष्टितेनेङ्गिततच्चित्तस्थं जानन्तीतीङ्गितज्ञा इति व्याख्येयम् । पुरु अतिशयेन प्रौढा निपुणाः पुरप्रौढा इति पाठे पुरे पट्टणे वासेन प्रौढा इत्यर्थः । एकस्मिन्नेव स्थाने आरमन्तेति तथा । च शब्दोऽप्यर्थः । सात्वता यादवा एवंभूता अपि भूतावासं सर्वजगदीश्वरं कृष्णं सात्वतां यादवानामेव ऋषभं श्रेष्ठममंसतामन्यत न सर्वेश्वरोऽयमिति ज्ञातवन्त इति भावः ॥ ९ ॥

**देवस्य मायया स्पृष्टा ये चान्ये असदाश्रयाः ।**
**भ्राम्यते धीर्नतद्वाक्यैरात्मन्युप्तात्मनाम् ॥ १० ॥**

**प्रकाशिका–** नन्वेवं तेषां ज्ञानाभावे भ्रमे च किं निमित्तमित्यत आह ॥ देवस्येति । मायया बन्धकशक्त्या स्पृष्टा बद्धा यतोऽतोऽमंसतेति पूर्वेणान्वयः । निमित्तान्तरमप्याह ॥ ये चान्ये इति । येऽन्ये कुवादिनोऽसदाश्रया असच्छास्त्रावलम्बनास्तेषां वाक्यैश्च दुःशास्त्रैरप्यमंसतेत्यन्वयः । नन्वेवं भवदादीनामप्युक्तैर्निमित्तैः कस्मान्न भ्रमो भवतीत्यत उक्तम् । आत्मनि स्वात्मनि हरौ विषये उप्तो दृढं निक्षिप्त आत्मा मनो येषां ते तेषामस्मदादीनां धीस्तद्वाक्यैर्न भ्राम्यत इति । सर्वदा हरिरेवा-यमिति प्रमाणज्ञत्वान्नास्मदादीनामुक्तभ्रम इति भावः ॥ १० ॥

**प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।**
**आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥**

**प्रकाशिका–** ननु कृष्णस्य न हरित्वमुपपद्यते । तस्य निम्लोचशब्देन त्वयैव मरणस्योक्तत्वादि-त्याशङ्कायां निम्लोचशब्दार्थं दर्शयति ॥ प्रदर्श्येति । सर्वदा दर्शनसाधनं न तप्तं तपो यैरत एवावितृप्तदृशां नृणां स्वबिम्बं स्वस्वरूपभूतं शरीरं प्रदर्श्य । तुशब्दोऽवधारणे । आदायैवा-विहायैवान्तरधादन्तर्धास्यति । एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यत इति वचनात् । अन्तर्धानमेव पूर्वोक्तो निम्लोचो न देहहानिरूपमरणमिति भावः । कीदृशं स्वबिम्बम् । लोकानां लोचनानि यस्मिन् अतिसुन्दरमिति यावत् ॥ ११ ॥

**यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ।**
**विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥**

**प्रकाशिका–** लोकलोचनपदेन सूचितबिम्बसौन्दर्यमेवोपपादयति ॥ यन्मर्त्येति त्रिभिः । यत्स्वबिम्बं मर्त्यलीलौपयिकं मनुष्यकर्तृकलीलासूपयुक्तं स्वयोगमायाबलं स्वस्वरूपयोगमाहात्म्यबलं दर्शयता हरिणा गृहीतं प्रकटीकृतम् । अनेन जननमपि तस्य नास्तीति सूचयति । स्वस्य च स्वस्यापि विस्मापनं विस्मयकरं सौभगर्द्धेः सौभाग्यातिशयस्य परं मुख्यं पदं स्थानम् । चरमकाष्टेति यावत् । भूषणानामपि भूषणानि भूषणायितान्यङ्गानि यस्मिंस्तत् ॥ १२ ॥

**यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।**
**कात्स्न्र्येन चात्रोपगतं विधातुरर्वाक् सृतौ कौशलमित्यमन्यत ॥ १३ ॥**

**तात्पर्यम्– त्रिलोकस्याज्ञानं बत । 'आनन्दरूपं दृष्ट्वाऽपि लोको भौतिकमेव तु । मन्यते विष्णुरूपं च अहो भ्रान्तिर्बहुस्थिते'ति स्कान्दे ॥ १३ ॥**

**प्रकाशिका–** दृक् स्वस्त्ययनं दृशामानन्दकरं यच्छ्रीकृष्णशरीरं निरीक्ष्य त्रिलोक इत्यमन्यत । बत कथं विधातुर्विरिंचस्यार्वाक् सृतावंत्यसृष्टौ कात्स्न्र्येन कौशलं नैपुण्यमत्र शरीरे उपगतं पर्याप्तं नातःपरं पर्याप्तस्य कौशलमस्तीत्येवं मेने । यथाऽऽदौ वक्रतया लिखति पश्चादभ्यासपाटवे तत्कर्तृकलेखने कौशलं कात्स्न्र्येनायाति तथैवेति भावः ॥

अत्र बतेत्यनेन सूचितमर्थं दर्शयति । त्रिलोकस्येति । अत्राज्ञानशब्दोभ्रमपरः । चिदानन्दाद्यात्मकस्य कृष्णशरीरस्य विरिञ्चस्रष्टृत्वबुद्धेर्भ्रमत्वात् । तथा च लोके भ्रमः केषांचिदेव सम्भावितः । अस्मिंश्चार्थे लोकत्रयगतानां बहूनां भ्रमोभवति । इदमाश्चर्यमित्यर्थः । अत्र प्रमाणान्तरसंवादमाह ॥ आनन्दरूपमिति । आनन्दद्यात्मकमपि विष्णुरूपं कृष्णादिशरीरं दृष्ट्वा शरीरत्वेनैव रूपेण ज्ञात्वा लोकस्त्रिलोकगतो जनस्तु विशेषेणेतरशरीरापेक्षयाऽतिशयेन भौतिकमेव । पञ्चभूतोपादानकमेव न चिदानन्दाद्यात्मकमित्येवशब्दार्थः । चशब्दो विरिञ्चस्रष्टृत्वसमुच्चयार्थः । बहुषु स्थिता अहो आश्चर्यम् । एकस्मिन्नर्थे बहूनां भ्रान्तेरदर्शनादिति भावः ॥ १३ ॥

**यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ।**
**व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥**

**प्रकाशिका–** मूले यस्य श्रीकृष्णस्यानुरागः स्नेहस्तेन प्लुता व्याप्ता हासाश्च रासलीला रासक्रीडा चावलोको निरीक्षणं च ते तथा । अनुरागप्लुताश्च ते हासादयश्च तैः प्रतिलब्धो मानो याभिस्ता व्रजे

विद्यमानाः स्त्रियो दृग्भिः सहानुप्रवृत्ता गच्छन्तमेवानुगता धियो यासां तास्तथाविधाः सत्यः कृत्ये भोजनादिरूपे शेषो यासां ताः । असमापितकृत्या एव निरीक्षणार्थमागता अवतस्थुः । तस्य सौन्दर्यनिधित्वादेतत्सम्भावितमित्यर्थे किलशब्दः । वार्तासम्भावयोः किलेति वचनात् ॥ १४ ॥

**स्वशान्तरूपेष्वितरैश्च रूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ।**
**परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः ॥ १५ ॥**

**प्रकाशिका–** एवं निम्लोचशब्दो न प्रसिद्धमरणपरः किं त्वन्तर्धानपर एवेत्युपपाद्येदानीं जनिरपि तस्य नेतरसाधरणेत्याह ॥ स्वशान्तरूपेष्विति । अत्र रूपशब्दः प्रतिमापरः । स्वस्य शान्तरूपेषु सात्विकप्रकृतिषु सुरादिष्वितरैरशान्तरूपैः स्वस्य रूपैस्तामसैरसुरैरभ्यर्द्यमानेषु सत्स्वनुकम्पितः कृपायुक्त आत्मा मनो यस्य सः । महतां वायुशेषेन्द्रादीनामंशैर्युक्तोऽजोऽपि जडदेहसम्बन्धे-नोत्पत्तिरहितोऽपि जातः प्रादुर्भूतः । वाय्वादीनामुक्तविधाजत्वस्याभावात्प्रसिद्धैव जनिरिति सूचयितुं हिशब्दः । यथाऽग्निः काष्ठेषु विद्यमान एवाविर्भवति तथैव । न चाजस्य जन्मोत्पथनाशायेत्यने-नैतत्पुनरुक्तम् । तद्विवरणरूपत्वाद्वक्तृभेदाच्च ॥ १५ ॥

**मां खेदयत्येतदजस्य जन्मविडम्बनं यद्वसुदेवगेहे ।**
**व्रजे च वासोऽरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः ॥ १६ ॥**

**प्रकाशिका–** नन्वेवं जन्ममरणराहित्येन कृष्णस्येश्वरत्वं चेत्कथं तेनानीश्वरकर्तव्यानि कृतानीत्यत आह ॥ मां खेदयतीति द्वाभ्याम् । एतदनीश्वरवत्कर्मकरणं खेदयति । असुरजनमोहनार्थमेवैतन्न स्वतः । तत्स्वभावस्यानैवंविधत्वेन श्रुत्यादिसिद्धत्वादिति समाधानेन चित्तचाञ्चल्यपरिहाररूप-क्लेशयुक्तं करोतीत्यर्थः । एतदित्युक्तमेवाह । वसुदेवगेहे वसुदेवभार्यायां यज्जन्मविडम्बनं लौकिकजन्मानुकरणम् । अरिभयादिव व्रजे निलीय वासः । अरिर्जरासंधादिस्तद्भयादिव पुरान्मधु-रापुराद्व्यवात्सीद्गोमन्तगिरिं प्रत्यपलायत् । अनन्तवीर्य इत्यनेनासुरमोहनाय मनुष्यानुकरणमेवैतन्न वास्तवमिति दर्शयति ॥ १६ ॥

**दुनोति चेतः स्मरतो ममैतद् यदाह पादावभिवन्द्य पित्रोः ।**
**ताताम्ब कंसादुरुकम्पितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥ १७ ॥**

**प्रकाशिका–** एतच्च कृष्णस्य कर्म स्मरतो मम चेतः कर्मभूतं दुनोति उक्तरीत्या क्लेशयुक्तं करोति । एतदित्युक्तमेव विशदयति ॥ यदाहेति । कंसहननानन्तरमिति शेषः । हे तात हे अम्ब ।

युवां प्रसीदतं प्रसादं कुरुताम् । अकृता निष्कृतिः कंसकृतापराधप्रतिक्रिया आत्मना धनेन वा तृप्तियैस्तेषां नोऽस्माकम् । बहुवचनं जातौ । आवयोरित्यर्थः ॥ १७ ॥

**को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशेत पुमान् विजिघ्रन् ।**
**यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥**

**प्रकाशिका–** नन्वनीश्वर एवायं किं न स्यात्तव तु श्रद्धामात्रमेतदतः किं तद्विरहनिमित्तेन दुःखेनेत्याशङ्कायां तस्येश्वरत्वं साधयंस्तद्विरहो दुःसह इत्याह ॥ को वा इति त्रिभिः । अंघ्रिसरोजयो रेणुमपि विजिघ्रन्सेवमानोविस्फुरन्त्योर्विभ्रमंत्योः भ्रुवोर्विटपेन लेशेन तल्लक्षणेन कृतान्तेन । अनेन भ्रूविलासमात्रेण भूभारसंहर्तृत्वादयमीश्वर इति युक्तेति ज्ञातव्यम् ॥ १८ ॥

**दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः ।**
**यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत ॥ १९ ॥**

**प्रकाशिका–** भक्तकृतप्रामादिकापराधमुपेक्ष्य मोक्षदातृत्वाच्चायमीश्वर इत्याह ॥ दृष्टेति । चैद्यस्य जयांशत्वाद्भक्त्याऽसुरावेशेन द्विषतोऽपि सिद्धिः सायुज्यरूपा । यां सिद्धिं सम्यगनुष्ठितेन योगेन संस्पृहयन्ति प्राप्तुमिच्छन्ति ॥ १९ ॥

**तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम् ।**
**नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥**

**प्रकाशिका–** चैद्यवदन्येऽपि स्वयोग्यां सिद्धिमापुरित्याह ॥ तथैवेति । ये कर्णादय आहवे भारतयुद्धे पार्थास्त्रपूतास्तदस्त्रैर्मृतत्वेन निष्पापाः सन्तः ॥ २० ॥

**स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वराज्यलक्ष्म्याप्तसमस्तकामः ।**
**बलिं हरद्भिः सुरलोकपालैः किरीटकोट्येडितपादपीठः ॥ २१ ॥**

**प्रकाशिका–** एवं स्वयमीश्वरोऽपि यदुग्रसेनभृत्यत्वं दर्शितवांस्तदत्यन्तं मामुक्तक्लेशवन्तं करोतीत्याह ॥ स्वयं त्विति । तुशब्दोऽवधारणे । स्वयमेव नान्यः । त्र्यधीशस्त्रयाणां लोकानामीशः स्वराज्यलक्ष्म्या स्वाधीनराज्यलक्ष्म्या बलिं करं पूजां वा हरद्भिः समर्पयद्भिः ॥ २१ ॥

**तत्तस्य कैङ्कर्यमलं भृतान्नो विग्लापयत्यङ्ग यदुग्रसेनम् ।**
**तिष्ठन् निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद् देव निधारयेति ॥ २२ ॥**

**प्रकाशिका–** एवं विधोऽपि परमेष्ठिधिष्ण्ये सिंहासने निषण्णमासीनमुग्रसेनं तिष्ठंस्तत्पुरतः स्वयं तिष्ठन् । हे देव । अस्मद्वचो निर्धारयावधारयेति न्यबोधयद्विज्ञापितवानिति यद्वचनं तत्तस्य कृष्णस्य कैंकर्यं दासत्वमुपागतान्प्राप्तान्नोऽस्मान् । हे अङ्ग विदुर । विग्लापयत्यसुरजनमोहनाय वा भक्तवात्सल्यप्रदर्शनाय वेदमिति समाधानेन चित्तचांचल्यपरिहाररूपां ग्लानिं प्रापयति ॥ २२ ॥

**अहो बकीयं स्तनकालकूटं जिघांसया पाययदप्यसाध्वी ।**
**लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ २३ ॥**

**प्रकाशिका–** स्वभावतो भक्तानां प्रामादिकमपराधमुपेक्ष्य मोक्षमेव ददातीत्येतदुदाहरणान्तरेणापि दर्शयन्नयमेव भजनीय इत्याह ॥ अहो इति । बकभक्षण इति धातोर्बकी भक्षणशीला ताटका संसर्गेण शिशुमारिका । अत एवासाध्वी पूतनाविष्टोर्वशी तदा विष्णुं जिघांसया हंतुमिच्छया स्तनयोः सम्भृतं कालकूटं विषमपाययत्तदाविष्टोर्वशी धात्र्या यशोदाया उचितां योग्यां गतिं लोकं लेभे यतस्ततः कारणात्ततोऽन्यं कं वा शरणं व्रजेम मोक्षार्थं भजेम ॥ २३ ॥

**मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ।**
**ये संयुगेऽचक्षत तार्क्ष्यपुत्रस्यांसे सुनाभायुधमापतन्तम् ॥ २४ ॥**

तात्पर्यम्– **'असुरा अपि ये विष्णुं शङ्खचक्रगदाधरम् । भक्तिपूर्वमवेक्षन्ते ज्ञेया भागवता इति । विद्विषन्ति तु ये विष्णुमृषिपुत्रा अपि स्फुटम् । असुरास्तेऽपि विज्ञेया गच्छन्ति च सदातमः । जीवद्वयसमायोगाद्धिरण्यकमुखाः परे । भक्तिद्वेषयुताश्च स्युर्गतिस्तेषां यथा निजा । कंसपूतनिकाद्याश्च बान्धवादियुता यतः । जीवद्वयसमायोगाद्गतिद्वयजिगीषवः । सर्वथा भक्तितो मुक्तिर्द्वेषात्तम उदीरितम् । नियमस्त्वनयोर्नित्यं मोहायान्यवचो भवेदि'ति ब्राह्मे ॥ २४ ॥ इति तृतीयतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥**

**प्रकाशिका–** नन्वेवं भागवतानेव भगवाननुगृह्णाति तदा बल्यादीनामसुराणां भगवदनुग्रहभागित्वं न स्यात्तेषामसुरयोनित्वेन भागवतत्वाभावादित्याशङ्कायामासुरयोनित्वम् अप्रयोजकं भागवतत्वे भक्तिरेव प्रयोजिकाऽतस्तेऽपि भक्तिमत्वाद्भागवता एवेत्याशयेनाह ॥ मन्य इति । असुरानप्यहं भागवतान्मन्ये । संरम्भः क्रोधस्तल्लक्षणेन मार्गेणाभिनिविष्टं भक्तिपूर्वकं निविष्टं चित्तं येषां तान् । हेतुगर्भविशेषणमिदम् । आदावसुरावेशेन क्रोधयुक्ता अपि पश्चाद्भक्तिमन्त एव ते भवन्तीति भावः । अत एवाचक्षत इति ते भक्तिपूर्वकमपश्यन्निति । तार्क्ष्यः कश्यपस्य पुत्रो गरुडस्तदंशे स्कंधे सुनाभं चक्रमायुधं यस्य तम् । अत्रासुरानिति सामान्योक्त्या भगवन्तं पश्यतां सर्वेषामसुराणां

भागवतत्वमुच्यत इति प्रतीयते न तद्युक्तम् । द्वेषिणामपि मुक्तिप्रसङ्गात् । अतोऽसुरयोनित्वं न भागवतत्वे प्रयोजकं किन्तु भक्तिरेव भागवतत्वप्रयोजिकेत्यभिप्रायं प्रमाणेनैव दर्शयति ॥ असुरा इति । असुरयोनिजा इत्यर्थः । बल्यादयोऽसुरा न स्वभावतोऽसुराः। तर्हि द्वेषयुतहिरण्यकादीनामन्ते कथं मुक्तिरित्यत आह ॥ जीवद्वयेति । साध्वसाधुजीवद्वयसंमेलनादित्यर्थः । परे परमात्मनि । चशब्दोऽवधारणे । भक्तिद्वेषयुता एव स्युर्न केवलं द्वेषयुता इत्यर्थः । अतस्तेषां यथा निजं स्वरूप-मनतिक्रम्य वर्तमाना गतिर्भक्तस्य मुक्तिर्द्वेषिणस्तम इत्यर्थः । अनेन चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिरित्येतदप्युक्ततात्पर्यमिति ज्ञातव्यम् । हिरण्यकस्यैव तृतीये जन्मनि चैद्यत्वात् । नन्वेवं भयात्कंसः अहो बकीयमिति कंसपूतनादीनां भगवद्द्वेषिणां मुक्तिकथनमनुपपन्नमित्यतस्तत्रापि जीवद्वयसमावेशेनोक्तैव गतिरित्याह ॥ कंसेति । आद्यशब्देन दन्तवक्रादिग्रहणम् । बान्धवो भक्तः । आदिपदेन कंसे भृगुर्भक्तः कालनेमिर्द्वेषी पूतनिकायां तूर्वशी भक्ता ताटका द्वेषयुतेत्यादि द्रष्टव्यम् । ताभ्यां युता यतोऽतो जीवद्वयसमायोगात् । गतिद्वयं मुक्तिस्तमश्च तज्जिगमिषवस्तत्प्राप्ति सम्भावनाविषयाः । तथा च भयात्कंसः अहो बकीति वचनद्वयं तदाविष्टसज्जीवविषयतया व्याख्ये-यमिति भावः । नन्वेवं जीवद्वयकल्पना तत्र कुतः कार्येत्यत आह ॥ सर्वथेति । नियमेनेत्यर्थः । उदीरितम् । श्रुत्यादाविति शेषः । यत उदीरितमतो नित्यं सर्वदा नियमः कदाऽपि न व्यभिचरतीति भावः । अङ्गीकार्य इति शेषः । तर्हि द्वेषाच्चैद्यादयो नृपा इत्यादिरूपद्वेषस्य मुक्तिसाधनत्वप्रतिपादकं वचनं कथमित्यत आह ॥ मोहायेति । अन्यवाचोऽन्यस्य द्वेषस्य मुक्तिसाधनत्ववचोऽसु-रजनमोहनाय । अतो न तद्यथाश्रुतार्थं किन्तु भगवतः कृपालुत्वरूपगुणप्रशंसापरमिति भावः॥२४॥

**वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ।**
**चिकीर्षुर्भगवांच्छर्म अब्जेनाभियाचितः ॥ २५ ॥**

**प्रकाशिका–** यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतमिति भगवच्छरीरग्रहणस्य मर्त्यलीलौपयिकत्वं स्वयोगमायाबलप्रदर्शकत्वं च पूर्वमुक्तं तत्र कास्ता मर्त्यलीलाः कीदृशं च स्वयोगमायाबलमित्यपेक्षायां तत्सर्वं जन्मारभ्य भक्त्युद्रेकात्संक्षेपतो दर्शयति ॥ वसुदेवस्येत्यादिना । वसुदेवस्य सकाशात् । प्रयोजनमाह ॥ भोजेन्द्रेति । भोजेन्द्रः कंसस्तेन तयोः कारागृहे बन्धने कृते सति तयोः शर्म सुखं तद्धननादिना चिकीर्षुः । निमित्तान्तरमप्याह ॥ अब्जजेनेति ॥ २५ ॥

**ततो नन्दव्रजमितः पित्रा कंसाद् विबिभ्यता ।**
**एकादशसमस्तत्र गूढार्चिः सबलोऽवसत् ॥ २६ ॥**

**प्रकाशिका–** ततो मधुरात् । गूढार्चिरप्रकाशितस्वमाहात्म्यः ॥ २६ ॥

**परीतो वत्सपैर्वत्सांश्चारयन् व्यहरद्धरिः ।**
**यमुनोपवने कूजद्द्विजसंकुलिताङ्घ्रिपे ॥ २७ ॥**

**प्रकाशिका–** व्यहरदक्रीडत् । कूजन्तोऽव्यक्तशब्दं कुर्वन्तो द्विजाः पक्षिणस्तैः सङ्कुलिता व्याप्ता अङ्घ्रिपा वृक्षा यस्मिंस्तत्तथोक्तं तस्मिन् ॥ २७ ॥

**कौमारा दर्शयंश्चेष्टाः प्रेक्षणीया व्रजौकसाम् ।**
**रुदन्निव हसन् मुग्धबालसिंहावलोकनः ॥ २८ ॥**

**प्रकाशिका–** कौमारा इत्यत्र ङीबभावश्छान्दसः । मुग्धो बालश्च यः सिंहस्तद्वदवलोकनं यस्य स तथोक्तः ॥ २८ ॥

**स एव गोकुलं लक्ष्म्या निकेतं सितगोवृषम् ।**
**चारयन्ननुगान् गोपान् रणद्वेणुररीरमत् ॥ २९ ॥**

**प्रकाशिका–** स एवाधिकं वयः प्राप्तः सन् लक्ष्म्याः शोभादिसंपदो निकेतं मन्दिरम् । सिताः शुभ्रा गोवृषा यस्मिंस्तत् । चारयन् । तृणानीति शेषः । रणन् शब्दं कुर्वन्वेणुर्यस्य सः । अरीरमद्रमयामास ॥ २९ ॥

**प्रयुक्तान् भोजराजेन मायिनः कामरूपिणः ।**
**लीलया व्यनुदत् तांस्तान् बालः क्रीडनकानिव ॥ ३० ॥**

**प्रकाशिका–** प्रत्युक्तान्प्रेषितान्मायिनो मायया निजरूपाच्छादिनो व्यनुदज्जघान । क्रीडनकान् तृणादिनिर्मितान् सिंहादीन्यथा ॥ ३० ॥

**विपन्नान् विषपानेन निगृह्य भुजगाधिपम् ।**
**उत्थाप्यापाययद् गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥**

**प्रकाशिका–** विपन्नान्मृतान्निगृह्य शिक्षयित्वा गावो गा उत्थाप्य प्रकृतौ स्वभावे स्थितम् । निर्विषमिति यावत् । तदेव तोयमपापयत् ॥ ३१ ॥

**अयाजयद् गोसवेन गोपराजं द्विजोत्तमैः ।**
**वित्तस्य चोरुभारस्य चिकीर्षन् सद्व्ययं विभुः ॥ ३२ ॥**

**प्रकाशिका–** गोसवेनेत्यत्र गोपदं ब्राह्मणाद्युपलक्षकम् । तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मख इति वक्ष्यमाणत्वात् । तथा च गोब्राह्मणाद्रिपूजारूपयज्ञेनेत्यर्थः । गोपराजं नन्दम् । चशब्दादिन्द्रस्य मानभङ्गं कुर्वन् । उरुभारस्यातिसमृद्धस्य ।। ३२ ।।

**वर्षतीन्द्रे व्रजः कोपाद् भग्नमानेऽतिविह्वले ।**
**गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ।। ३३ ।।**

**प्रकाशिका–** कोपाद्वर्षति भग्नमानेऽपहृतपूजने । अत एवातिविव्हले कर्तव्यमूढे गोत्रलीलातपत्रेण पर्वताख्यक्रीडाछत्रेण । हे भद्र कल्याणात्मन्विदुर ।। ३३ ।।

**शरच्छशिकरैर्मृष्टं मानयन् रजनीमुखम् ।**
**गायन् कलपदं रेमे स्त्रीणां मण्डलमण्डनः ।। ३४ ।।**

**इति श्रीमद्भागवते तृतीयस्कन्धे द्वितीयोऽध्यायः ।**

**प्रकाशिका–** शरदृतावुदितः शशी शरच्छशी शीतस्य करैः किरणैर्मृष्टम् अलङ्कृतं रजनीमुखं प्रदोषं कलपदं यथा भवति तथा मण्डलं समूहं मण्डयतीति मण्डलमण्डनः ।। ३४ ।। इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ।। ३-२ ।।

## अथ तृतीयोऽध्यायः ।

**उद्धव उवाच–**

**ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षयाशां बलदेवसंयुतः ।**
**निपात्य तुङ्गाद् रिपुयूथनाथं हतं व्यकर्षद् व्यसुमोजसोर्व्याम् ।। १ ।।**

**प्रकाशिका–** ततो वृन्दावनात् । पुरीं मधुराम् । आशा दिगतितृष्णयोरित्यभिधानात् । कदा कंस हनिष्यतीत्यादिरूपां तृष्णां तदभीष्टकंसहननादिचिकीर्षयेति यावत् । तुङ्गाद्राजमञ्चात् । रिपुयूथनाथं कंसम् । व्यसुं विगतप्राणम् ।। १ ।।

**सान्दीपिनेः सकृत् प्रोक्तं ब्रह्माधीत्य सविस्तरम् ।**
**तस्मै प्रादाद् वरं पुत्रं मृतं पञ्चजनोदरात् ।। २ ।।**

**समाहुता भीष्मककन्यया ये श्रियः सवर्णेन जिहीर्षयैषाम् ।**
**गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत् सुपर्णः ॥ ३ ॥**

**तात्पर्यम्– भीष्मककन्याया अर्थे सवर्णमात्रतया आहूताः । एषां श्रियोजिहीर्षयाऽऽह्वान-बुद्धिर्भगवता कृता । 'सुपर्णः सुपरानन्दात्काकुत्स्थो वाचि संस्थिते'रिति पाद्मे ॥ ३ ॥**

**प्रकाशिका–** ब्रह्म वेदं सविस्तरं षडङ्गादिसहितम् । पुत्रलक्षणवरं पञ्चजनाख्यदैत्यादेर-प्रवेशान्मृतम् । समाहुता इति ह्रस्वश्छान्दसः । अत्र भीष्मकन्यया समाहूता इत्यन्यथाप्रतीतिवारणाय विवक्षितं व्याख्यानं दर्शयति ॥ भीष्मककन्याया इति । अनेन तृतीया षष्ट्यर्थे स च तादर्थ्यरूप इत्युक्तं भवति । श्रियो लक्ष्म्याः सवर्णेन समानरूपेणाहूता इति व्याख्यानमसदिति भावेन सवर्णेत्यस्याभिप्रायमाह ॥ सवर्णमात्रतयेति । सवर्णशब्दो भावप्रधान इति दर्शयितुं सवर्णतयेत्युक्तम् । आहूता इत्यनेनान्वयप्रदर्शनेनाव्हाने सवर्णेनेत्यस्य निमित्तता दर्शिता । मात्रपदाध्याहारेण च समानजातितयैव क्षत्रियत्वेनैव निमित्तेन समाहूता न रुग्मिणीप्राप्तियोग्यतयाऽपीति दर्शयति । नन्वेवं श्रिय इत्युक्तस्य केनान्वय इत्यतस्तस्यान्वयं दर्शयति ॥ एषामिति । अनेनापव्याख्याने जिहीर्ष-येत्यस्यान्वयाभाव इति सूचितं भवति । एतद्भयेन बुभूषयेति पाठकल्पनेऽर्थविशेषालाभेन तस्य वैयर्थ्यमिति ज्ञातव्यम् । नन्वेवं समाहूता इत्यत्र कर्तृवाचकपदाभावात्कथमन्वयः । न च भीष्मकेणेत्यध्याहार्यं तस्यैषां श्रीजिहीर्षाभावात् । अतोऽत्रापेक्षितं कर्तृवाचिपदमध्याहृत्यान्वयं दर्शयति ॥ भगवतेति । आहूता इति पूर्वेणान्वयः । नन्विदं बाधितम् । न हि भगवान् रुग्मिण्यर्थे राज्ञामाव्हानं कृतवानित्येतत्प्रामाणिकम् । सत्यं भीष्मकेणैव ते आहूता इति । तथाऽप्येषां श्रियो जिहीर्षया भगवानेव भीष्मके स्थित्वा तदाव्हानबुद्धिमुत्पादितवानित्यभिप्रायोऽत्र विवक्षितोऽतोऽत्र न कोऽपि दोष इति भावः । ननु सुपर्णो गरुडः स्वभागं जऱ्ह इत्यसङ्गतम् । न च सुपर्णः स्वभागं सुधामिवेति लुप्तोपमा । दार्ष्टान्तिकभागस्याध्याहारप्रसंङ्गात् । अतः सुपर्णशब्द एव महायोगवृत्त्या भगवति मुख्य इत्याशयेन तत्र सुपर्ण शब्दनिर्वचनं प्रमाणेन दर्शयति ॥ सुपर्ण इति । णश्च निर्वृतिवाचक इत्यभिधानात् । णकार आनन्दवाचीति भावः । परेत्यस्याकार लोपो निर्वचनत्वात् ॥ ततश्चायं श्लोकार्थः ॥ भीष्मककन्याया रुग्मिण्या अर्थे सवर्णेन समानजातितया क्षत्रियत्वेनैव निमित्तेन रुग्मिणीप्राप्तियोग्यतयाऽपीति भावः । विजातीयानां वैश्यादीनामाव्हानं व्यावर्तयितुमिदं निमित्तमुक्तमिति ध्येयम् । एषां राज्ञां श्रियः शोभा जिहीर्षया गृहीतुमिच्छया भीष्मकान्तर्गतेन भगवता ये राजान आहूता भगवताऽऽव्हानबुद्धावुत्पादितायां भीष्मकेणैव ये आहूता इत्यर्थः । मिषतां पश्यतां तेषां मूर्ध्नि पदं दधत् । तांस्तुच्छीकृत्येति यावत् । तत्र हेतुगर्भविशेषणं सुपर्ण इति । यतः सुष्टु परमानन्दरूप इत्यर्थः । गान्धर्ववृत्त्या परस्परसंमतिरूपया स्वभावं स्वस्यैव योग्यं भागं रुग्मिण्याख्यं जऱ्हे जहारेति ॥ ३ ॥

**ककुद्मतोऽविद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह ।**
**तान् भग्नमानानभिगृध्यतोऽज्ञान् जघ्नेऽक्षतः शस्त्रभृतश्च शस्त्रैः ॥ ४ ॥**

**प्रकाशिका–** ककुद्मतो वृषभान् अविद्धनसो अविद्धनासिकान् दमित्वा गृहीत्वा नाग्नजितीं नीलां तद्भग्नमानान् तैर्वृषैर्भग्नो मानो येषां तान् । अभिगृध्यतः कन्यामाकांक्षमाणान् । अज्ञान् कृष्ण-प्राप्तियोग्यामजानतः शस्त्रभृतो राज्ञस्तच्छस्त्रैरक्षत एव जघ्ने जघान ॥ ४ ॥

**प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद् द्युतरुं यदर्थे ।**
**वज्र्यद्रवत् तं सगणो रुषान्धः स्वार्थे पुरा तैर्यमयाचतानतः ॥ ५ ॥**

**प्रकाशिका–** ग्राम्यविषयासक्त इव प्रियायाः सत्यभामायाः प्रियमभीष्टं विधित्सुः कर्तुकामः प्रभुः कृष्णो द्युतरुं पारिजाताख्यं स्वर्गवृक्षमार्च्छदहार्षीत् । रुषान्धः कोपेन कृष्णमाहात्म्यमजानन् सगणो देवगणेन सहितो वज्रींद्रस्तं कृष्णमाद्रवत् । यदर्थे यस्य द्युतरोरर्थे स्वार्थे नरकासुरवधादिरूपस्व प्रयोजनायानतः प्रणतो भूत्वा ॥ ५ ॥

**सुतं मृधे स्वं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्याः ।**
**आमन्त्रितस्तत्तनयाय शेषं दत्वा तदन्तःपुरमाविवेश ॥ ६ ॥**

**प्रकाशिका–** सुतं नरकसंज्ञं स्वसुतं सुनाभेण चक्रेणोन्मथितं हतं दृष्ट्वा धरित्र्या भूम्या आमन्त्रितः प्रार्थितः सन् तत्तनयाय भगदत्ताय शेषमपहृतकोशादिशेषं राज्यं दत्वा ॥ ६ ॥

**तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम् ।**
**उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ७ ॥**

**प्रकाशिका–** तत्रान्तःपुरे कुजेन भूमिपुत्रेणाहृता यास्ताः । प्रहर्षश्च व्रीडा चानुरागः स्नेहश्च तैः प्रहिताः प्रेरिता येऽवलोकास्तैर्जगृहुः पतित्वेन स्वीकृतवत्यः ॥ ७ ॥

**आसां मुहूर्त एकस्मिन् नानागारेषु योषिताम् ।**
**सविधिं जगृहे पाणीन् पुरुरूपः स्वमायया ॥ ८ ॥**

**प्रकाशिका–** आसां योषितां पाणिम् । समुदायापेक्षयैकवचनम् । कथंभूतम् । विधिना शास्त्रोक्त-कर्मणा सह वर्तत इति सविधिस्तं स्वमायया स्वसामर्थ्येन पुरुरूपः सन् ॥ ८ ॥

**तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ।**
**एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥**

**तात्पर्यम्–** 'उत्तमैः सर्वतः साम्यं किञ्चित्साम्यमुदीर्यत' इत्याग्नेये ॥ ९ ॥

**प्रकाशिका–** सर्वतः सर्वप्रकारेणात्मतुल्यानि स्वसदृशानि । अत्रापत्यानां सर्वप्रकारेण कृष्ण-सादृश्यमुच्यमानं प्रमाणबाधितमतः प्रमाणेनैव तदभिप्रायं दर्शयति ॥ उत्तमैरिति । उत्तमैः सर्वतः साम्यं यदुदीर्यते पुराणादौ तत्किञ्चित्साम्यमभिप्रेत्येति शेषः । तथाच प्रमाणान्तरबलात्तत्र सर्व शब्देनासङ्कुचितवृत्तिरिति भावः । प्रकृतेर्जडप्रकृतेर्विबुभूषया विविधभवनेच्छया मदवतारकाले जडप्रकृतेर्नानाविधसुन्दरतरशरीरोपादानत्वेन बहुभावो भवत्वितीच्छयेति यावत् ॥ ९ ॥

**कालमागधशाल्वादीननीकैरुन्धतः पुरम् ।**
**अजीघनत् स्वयं दिव्यं स्वपुंसां तेज आदिशन् ॥ १० ॥**

**प्रकाशिका–** कालः कालयवनो रुन्धतः आवृण्वतः पुरं मधुरां स्वयं साक्षादेव साल्वादीन-जीघनत् । कांश्चन कालमागधादीन् स्वपुंसां स्वभक्तानां मुचकुन्दभीमादीनां तेज; सामर्थ्य-विशेषमादिशन् सम्यक् प्रयच्छन् तद्वाराऽजीघनत् ॥ १० ॥

**शंबरं विविदं बाणं मुरं बल्वलमेव च ।**
**अन्यांश्च दन्तवक्त्रादीनवधीत् कांश्च घातयन् ॥ ११ ॥**

**प्रकाशिका–** शंबरमिति । अत्रापि शंबरविविदादीन् । प्रद्युम्नबलरामादिभिरघातयत् । मुरादीन्स्व-यमेवावधीदिति विवेकः ॥ ११ ॥

**अथ ते भ्रातृपुत्राणां पक्षयोः पतितान् नृपान् ।**
**चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥**

**प्रकाशिका–** अथ दन्तवक्त्रादीनां हननानन्तरं नृपानघातयदित्यनुवर्तते । कथं भूतान् । कुरुक्षेत्रं प्रत्यापततामागच्छतामेषां बलैः सैन्यैः । भूः सर्वाऽपि चचाल ॥ १२ ॥

**सकर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम् ।**
**सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां स ननन्द पश्यन् ॥ १३ ॥**

**प्रकाशिका–** तान् स कृष्णः कुमन्त्रस्य कुत्सितविचारस्य पाकेन परिपाकेन हते गते श्रियायुषी यस्य स तथोक्तस्तम् । ऊर्व्यां शयानं ननन्द । अवतारप्रयोजनं प्रायो जातमिति सन्तोषं लोकस्य दर्शितवानिति भावः । स्वभक्तानां पाण्डवानां जयोऽतो न मद्भक्तिर्व्यर्थेत्याशयेन सन्तोषं दर्शितवानिति वा ॥ १३ ॥

**कियान् भुवोऽयं क्षपितोरुभारो यद् द्रोणभीष्मार्जुनभीमशल्यैः ।**
**अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥**

**प्रकाशिका–** कलियुगे देवांशानामपि यादावानां भूमेर्भारायमाणत्वात्तेऽपि संहार्या इत्यचिन्तयदित्याह ॥ कियानिति । मद्विशेषावेशयुक्तत्वान्मदंशैः द्रोणादिभिः क्षपितोऽष्टादशाक्षौहिणीकः । ह्रस्वश्छान्दसः । भुवो यद्यो भारः । स कियान् । अत्यल्प एव यस्मात्सुरासुरैर्दुर्विषहं यदूनां बलमास्ते । तच्चास्मिन्युगे भारायमाण एवातो भूमिभारहरणायावतीर्णेन मया तदपि संहार्यमिति वाक्यशेषः ॥ १४ ॥

**मिथो यदैषां भविता विवादो माध्व्या मदात् ताम्रविलोचनानाम् ।**
**नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेन्तर्दधते स्वयं स्म ॥ १५ ॥**

**प्रकाशिका–** परस्परमर्मवचनादिना कलह एवैषां वधोपायो नान्य इत्यप्यचिन्तयदित्याह ॥ मिथ इति । यदा यस्मिन्काले माध्व्या मधुजाताया वारुण्याः पानेन जातान्मदात्ताम्रविलोचनानामारक्तनेत्राणाम् । अनेन भ्रंशितज्ञानत्वं लक्ष्यते । येषां यादवानां मिथो विवादो मर्मवचनं तज्जन्यः कलहश्च भविता तदा स एवैषां वधोपायोऽन्योपि किं न स्यादित्यत आह ॥ वधोपाय इयान् एतावान् अतोऽन्यन्नेति । मिथो विवादोऽपि कदा भवितेत्यत आह ॥ मयीति । मय्युद्यते पृथिवीलोकत्यागायोद्युक्ते सति स्वयं स्वयमेवान्तर्दधते मिथो विवादेनान्तर्धानं प्राप्नुवन्तीत्यर्थः । स्मेत्यनेनास्यान्यथार्थत्वं नेति दर्शयति ॥ १५ ॥

**एवं सञ्चिन्त्य भगवान् स्वाराज्ये स्थाप्य धर्मजम् ।**
**नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥**

**प्रकाशिका–** स्वाराज्ये स्वर्गसाम्राज्ये ॥ १६ ॥

**उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ।**
**स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥ १७ ॥**

**प्रकाशिका–** भगवता धृतो रक्षितः ॥ १७ ॥

**अयाजयद् धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ।**
**सोऽपि क्ष्मामनुजै रक्षन् रेमे कृष्णमनुव्रतः ॥ १८ ॥**

**प्रकाशिका–** त्रिभिरुत्तमकल्पदक्षिणादानेन त्रिगुणफलैः पञ्चसङ्ख्याकैरश्वमेधैरित्यर्थः ॥ १८ ॥

**भगवानपि विश्वात्मा लोकवेदपथानुगः ।**
**कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥**

**तात्पर्यम्– केवलं भगवज्ज्ञानं साङ्ख्यमित्यभिधीयत' इत्यध्यात्मे ॥ १९ ॥**

**प्रकाशिका–** भगवानपि कामान्सिषेव इत्युक्त्या लोकानुकरणमेतदिति सूचितम् । विषय-सेवायामपि न तत्र तस्य स्नेह इत्याह । असक्तो रागवर्जितो निष्ठाप्रयोगेण सर्वदैवंरूप इति सूचयति । तत्र हेतुकथनाय विशेषणं साङ्ख्यमास्थित इति । अत्र साङ्ख्यशास्त्रोक्तं प्रकृतिजीवविवेकमास्थित इति व्याख्यानं न प्रकृतसङ्गतं स्वस्य जीवत्वाभावात् । अतोऽत्र विवक्षितं साङ्ख्यशब्दार्थं प्रमाणेनैव दर्शयति ॥ केवलमिति । इतरपदार्थाविषयकमित्यर्थः । तथाच जडामिश्रे परममङ्गले स्वस्वरूप एव रममाणो यत इत्यर्थ इति भावः ॥ १९ ॥

**स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ।**
**चरित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥**

**प्रकाशिका–** स्निग्धो यः स्मितसहितोऽवलोकस्तेन पीयूषकल्पयाऽमृततुल्यया श्रियो लक्ष्म्या निकेतेनाश्रयेणात्मना देहेन ॥ २० ॥

**इमं लोकममुंश्चैव रमयन् सुतरां यदून् ।**
**रेमे क्षणदया दत्तक्षणः स्त्रीक्षणसौहृदः ॥ २१ ॥**

**प्रकाशिका–** क्षणदया रात्र्या दत्तक्षणोऽवसरो यासां स्त्रीणां तासु क्षणं सौहृदं यस्य सः । अनेनासक्तत्वं प्रकारान्तरेणोपपादितमिति ज्ञातव्यम् ॥ २१ ॥

**तस्येत्थं रममाणस्य संवत्सरगणान् बहून् ।**
**गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥**

**तात्पर्यम्–** **'सर्वदापि विरक्तः सन् भासयीत विरागिवत् । कादाचित्कः कुतस्तस्य लोकशिक्षार्थमिष्यत' इति पाद्मे ॥ २२ ॥**

**प्रकाशिका–** गृहमेधेषु गृहाश्रमोचितधर्मेषु योगेषु कामभोगोपायेषु । अत्रेदानीं विरागः समजायतेत्युक्त्या पूर्वं वैराग्याभावः प्रतीयते । तथात्वे च प्रागुक्तासक्तत्वविरोधप्रसङ्ग इत्यतोऽत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ सर्वदाऽपीति । विगतो रागो यस्य स विरागः । कदाचिद्विरक्तः पुरुषस्तद्वदित्यर्थः भासयीत । स्वात्मानम् । लोकान्प्रतीति शेषः । तथा च तत्परं कादाचित्कवैराग्यवचनमिति वाक्यशेषः । प्रतीतार्थ एव किं न स्यादित्यतस्तत्र बाधकमाह ॥ कादाचित्क इति । कुतः। न कुतोऽपि प्रमाणबाधिततत्वादिति भावः । ननु हरेः कादाचित्कं वैराग्यप्रदर्शनमपि किमर्थमित्यत आह ॥ लोकेति । कादाचित्कं वैराग्यप्रदर्शनमिति शेषः । अनेन दैवाधीनेष्विति वक्ष्यमाणस्यापि तात्पर्यमुक्तं भवतीति ज्ञातव्यम् । अनेन मूले रागाभाववाचिरागशब्दः स्वविषयकलोककर्तृकज्ञानोपलक्षक इति सूचयति । तथाच भगवन्निष्ठवैराग्यविषयकं ज्ञानं लोकानां समजायतेत्यर्थः ॥ २२ ॥

**दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ।**
**को विश्रंभेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥**

**तात्पर्यम्– अतः कोऽन्यो विस्रम्भं कुर्यात् तेनापि विरागः प्रदर्शितः ॥ २३ ॥**

**प्रकाशिका–** ननु कादाचित्कं वैराग्यप्रदर्शनमपि भगवता किमर्थं कृतमित्यतो लोकशिक्षणार्थमित्याह ॥ दैवाधीनेष्विति । कथमनेन लोकशिक्षणं लब्धमित्यतस्तं प्रकारं दर्शयति ॥ तेनापीति । वशीकृतसर्वविषयेणानन्याधीनेनापीत्यर्थः । प्रदर्शित इत्यनन्तरं यत इति शेषः । अनेन पूर्वश्लोकोक्तस्य हेतुतयाऽत्रोपयोग इति सूचयति । अतः कोऽन्य इत्येतत् श्लोकतात्पर्यकथनम् । तथाच मूले यतोऽतः शब्दावन्यशब्दश्चाध्याहार्य इति सूचयति । अन्यथा कृष्णमपेक्ष्यैतदुच्यत इति प्रतीतिप्रसङ्गेनेदं वाक्यं बाधितार्थकं स्यादिति ध्येयम् ॥ ततश्चायमर्थः यत एवं भगवता वशीकृतसर्वविषयेणानन्याधीनेनापि विषयेषु विरागः प्रदर्शितः । अतो दैवाधीनेषु स्वानधीनेषु कामेषु विषयेषु स्वयमपि दैवाधीनो न स्वतन्त्रः कोऽन्यः पुमान् विस्रंभेत विश्वासं प्रीतिं वा कुर्यात् । न कोऽपि । किन्तु वैराग्यवानेव भवेत् । तथाच हरिप्रदर्शितवैराग्यस्य लोकवैराग्यौपयिकतया लोकशिक्षार्थत्वं प्राप्तमिति ध्येयम् । नन्वेतादृशश्लेपि विषयेषु प्रीतिं कुर्वाणा बहवो दृश्यन्तेऽतः कथमेतदित्यत आह ॥ योगेनेति । योगेन निवृत्तकर्मध्यानादिरूपेण योगेनेश्वरं श्रीकृष्णमनुवृतश्चेत् कृष्णप्रदर्शितयोगमार्गानुष्ठाता चेदित्यर्थः । तथा च कृष्णप्रदर्शितयोगमार्गानुष्ठाता पुमान्यः स एव कृष्णप्रदर्शितवैराग्यं दृष्ट्वा स्वयमपि उक्तनीत्या विरक्तो भविष्यति न सर्व इति भावः ॥ २३ ॥

**पुर्यां कदाचित् क्रीडद्भिर्यदुभोजकुमारकैः ।**
**कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥**

**प्रकाशिका–** यदुकुलनाशे मिथो विवादो भवितेत्यत्र यन्निमित्तं भगवता चिन्तितं तत्रापि भगवत्कारितं मूलकारणं विप्रशापं दर्शयति ॥ पुर्यामिति । कोविदा अभिज्ञा; ॥ २४ ॥

**ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः ।**
**ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥**

**तात्पर्यम्– 'एष्यच्च निश्चितं यत्तदतीतत्वेन भण्यते । चक्रवत्परिवृत्तेर्वा दुष्टानां मोहनाय वे'ति स्कान्दे ॥ २५-२८ ॥ इति तृतीयतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥**

**प्रकाशिका–** ततः कतिपयैर्मासैरित्यादिना वक्ष्यमाणं प्रभासगमनादिकं भारतादौ विदुरोद्धवसंवादमपेक्ष्योत्तरकालीनमिति निर्णीतम् । अत्र तु तत्सर्वमतीतत्वेनोच्यत इत्यतो विरोध इत्यतो यथा न विरोधस्तथैतद्ग्रन्थयोजनां प्रमाणेनैव दर्शयति ॥ एष्यदिति । निश्चितं भविष्यतीति निश्चितम् । अनेन निश्चितत्वेन मुख्यार्थसादृश्यं निमित्तं दर्शितम् । भण्यत इत्यनेन रूढोपचारोऽयमिति सूचयति । मुख्यार्थमेवाश्रित्य योजनान्तरमाह ॥ चक्रवदिति । प्रतिकल्पम् । कथामार्गस्येति शेषः । तथा चातीतकल्पीययादवविषयमेतदिति योजनोक्ता भवति । न चैतदसङ्गतम् । भावियदुविनाशे दृष्टान्ततया कथनसंभवात् । ननु किमर्थमेवं पुराणकारस्य वचनं स्पष्टमेव कस्मान्नोक्तमित्यत आह ॥ दुष्टानामिति । ततश्च ततः कतिपयैरित्यादिमूलस्यायमर्थः । मासैः सुखहेतुत्वाद्वत्सरैर्ययुर्यास्यन्ति । देवः कृष्णस्तेन विमोहिताः ॥ २५ ॥

**तत्र स्नात्वा पितॄन् देवान् ऋषींश्चैव तदंभसा ।**
**तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥**

**प्रकाशिका–** गावो गा बहुगुणाः सौशील्यादिसर्वगुणोपेता ददुर्दास्यन्ते ॥ २६ ॥

**हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् ।**
**हयान् रथानिभान् कन्यां धरां वृत्तिकरीमपि ॥ २७ ॥**

**प्रकाशिका–** वृत्तिकरीं जीविकाप्रदाम् ॥ २७ ॥

अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणम् ।
गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे तृतीयोऽध्यायः ।

**प्रकाशिका–** उरुरसं षड्रसोपेतं भगवदर्पणं यथा स्यात्तथा गवां विप्राणां चार्थेऽसवः प्राणा येषां ते तथा । प्रणेमुः प्रणमिष्यन्ति ॥ २८ ॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ॥ ३-३ ॥

## अथ चतुर्थोऽध्यायः ।

उद्धव उवाच–
अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् ।
तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥

**प्रकाशिका–** तैर्विप्रैर्भोजनायानुज्ञाता वारुणीं मदिराम् । तया वारुण्या विस्रंशितं विभ्रंशितं स्वः पर इति ज्ञानं येषां ते तथोक्ताः । मर्मपस्पृशुः परस्परं मर्मवाचकदुरुक्तीर्वदिष्यन्तीत्यर्थः ॥ १ ॥

तेषां मैरेयदोषेण विषमीकृतचेतसाम् ।
निम्लोचति रवावासीद् वेणूनामिव मर्दनम् ॥ २ ॥

**प्रकाशिका–** वारुण्येव मैरेयं तस्य दोषेण तत्पानजनितचित्तविभ्रंशेन निम्लोचत्यस्तं गच्छति सति मर्दनं युद्धलक्षणसङ्घर्ष आसीद्भविष्यति ॥ २ ॥

भगवानात्ममायाया गतिं तामवलोक्य सः ।
सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥

तात्पर्यम्– आत्ममायायाः आत्मसामर्थ्यस्य गतिं पूर्वमेवावलोक्य । 'ज्ञात्वा कतिपयैर्वर्षैः पूर्वमेव जनार्दनः । मौसलं ज्ञानसन्तत्या उद्धवं बदरीं नयत् । स ज्ञानं तत्र विस्तीर्य पुनर्द्वारवतीं ययौ ॥ ३ ॥

तात्पर्यम्– पूर्वमेवोपदिष्टोऽपि हरिणा ज्ञानमुद्धवः । स्वर्गारोहणकाले तु पुनः पप्रच्छ केशवम् । पुनः श्रुत्वा बदर्यां तु वर्षत्रयमुवास ह । ज्ञानं संस्थाप्य पश्चाच्च स्वेच्छया स्वर्गतः प्रभुरि'ति गारुडे ॥ ५ ॥

**प्रकाशिका –** आत्ममाययेत्यत्रात्ममायाशब्दस्यानिर्वाच्याविद्यापरत्वप्रतीतिनिरासायात्रोपयुक्तमर्थमाह ॥ आत्ममायाया इति । आत्मसामर्थ्यस्य यदुकुलसंहरणरूपस्य गतिं स्थितिम् । अवलोक्येति वचनं संजिहीर्षुरिति वक्ष्यमाणेति वक्ष्यमाणविरुद्धं संहारस्य तदानीं जातत्वे सञ्जिहीर्षासंभवात् । अतोऽत्रापेक्षितं पूरयति ॥ पूर्वमेवेति । यदुकुलनाशापेक्षया षड्विंशति वत्सरेभ्यः पूर्वमेवेत्यर्थः । अत्र प्रमाणमप्याह ॥ ज्ञात्वेति । मौसलं मुसलकार्यं यदुकुलनाशं ज्ञात्वेत्यन्वयः । उद्धवम् । स्वयमुपदिश्येति शेषः । ज्ञानसन्तत्यै मुनीनां स्वयमुपदेशेन ज्ञानविस्ताराय नयदनयत् । नन्वेवमुद्धवोपदेशबदरीगमनयोर्यदुकुलसंहारात्पूर्वकालीनत्वे संहृत्य स्वकुलं स्फीतमिति वक्ष्यमाणविरोधः । तत्र यदुकुलसंहारानन्तरमुद्धवस्य ज्ञानोपदेशबदरीगमनयोर्वक्ष्यमाणत्वादित्यतस्तदपि सत्यम् । उद्धवस्य ज्ञानोपदेशबदरीगमनयोरन्तरेऽपि पुनर्जातत्वादित्याशयेनात्राप्युक्तप्रमाणशेषमेव पठति ॥ पूर्वमेवेति । तथाच भगवानात्ममाययेत्यादेरयमर्थः ॥ आत्ममायाया यदुकुलसंहरणरूपस्यात्मसामर्थ्यस्य तां भाविनीं गतिं स्थितिं स्वर्गारोहणापेक्षया षड्विंशतिवत्सरेभ्यः पूर्वमेवावलोक्य प्रभासं गत्वा तत्र सरस्वतीमुपस्पृश्य स्नानाचमनादिकं कृत्वेत्यर्थः । वृक्षमूले उपाविशदुपविष्टोऽभूत् ॥ ३ ॥

**अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह ।**
**बदरीं त्वं प्रयाहीति स्वकुलं सञ्जिहीर्षुणा ॥ ४ ॥**

**प्रकाशिका–** तत्र प्रभासगमनसमये प्रपन्ना ये बदरीवासिनस्तदार्तिहरेण भगवता त्वं बदरीं प्रयाहीति अहमुक्तश्च । हेत्यनेनास्योपदेशस्य यदुकुलनाशात्पूर्वकालीनत्वं प्रामाणिकमिति सूचयति । एतद्ग्रन्थस्वारस्येनैवोद्धवस्य पूर्वोपदेशः प्रभासे सरस्वतीतीरे वृक्षमूल एव जात इति ज्ञायते ॥ ४ ॥

**अथापि तदभिप्रेतं जानन्नहमरिंदम ।**
**पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥**

**प्रकाशिका–** अथाऽपि प्रयाहीत्युक्तेऽपि तदभिप्रेतं तस्य कृष्णस्य ज्ञानोपदेशाभिप्रायमजानन् । अहं भो । अरिंदम कामादिवैरिदमन विदुर ॥ ५ ॥

**अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिम् ।**
**श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥**

**प्रकाशिका–** विचिन्वन्मार्गमाणो दयितं प्रेष्टं सरस्वत्याम् । तत्तीरे कृतकेतं कृतनिवासम् । अकेतनमनन्याधारम् ॥ ६ ॥

**श्यामावदातं विरजं प्रशान्तारुणलोचनम् ।**
**दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥**

**प्रकाशिका–** श्यामवर्णेनावदातं निर्मितं निर्मलं प्रकाशमानं वा विरजं विरजसं विगतदोषं प्रशान्ते स्तिमितेऽरुणे लोचने यस्य तम् । विदितं लक्षितं कुशेन कृमिविशेषेण कौशं तच्च तदंबरं च तेन ॥७॥

**वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् ।**
**अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥**

**प्रकाशिका–** अधिश्रित्योपरि स्थापयित्वा । अपाश्रितार्भकाश्वत्थमिति पाठे अपाश्रितः पृष्टतोऽवष्टब्धोऽर्भकावस्थः कोमलावस्थोऽश्वत्थवृक्षो येन तम् । अर्भकावस्थमिति पाठे तु अवतार-दशायां या बाल्यावस्था तामाश्रितमिति व्याख्येयम् । अकृशं परिपूर्णाङ्गं त्यक्तं दूरीकृतं पिप्पलं कर्मफलं येन तम् ॥ ८ ॥

**तस्मिन् महाभागवतो द्वैपायनसुहृत् सखा ।**
**लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥ ९ ॥**

**प्रकाशिका–** तस्मिन्देशे काले च द्वैपायनस्य सुहृत्सखा च । मैत्रेयस्य पराशरशिष्यत्वात् । सिद्धो ज्ञानी ॥ ९ ॥

**तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभारानतकन्धरस्य ।**
**आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥**

**प्रकाशिका–** तस्य मुनेराशृण्वतः सतोऽनुरागहासाभ्यां स्नेहमन्दस्मिताभ्यां सहितया समीक्षया सम्यक् निरीक्षणेन विश्रमयन्विगतश्रमं कुर्वन् ॥ १० ॥

**भगवानुवाच–**

**वेदाहमन्तर्मनसीप्सितं ते ददामि यत् तद् दुरवापमन्यैः ।**
**सत्रे पुरा विश्वसृजां मनूनां मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥**

**प्रकाशिका–** ते मनस्यन्तरीप्सितं ज्ञानं मे स्यादिति यद्वाञ्छितं तदहं वेद वेद्मि । ते ज्ञानं ददामि । ज्ञानदानकारणं तस्य पूर्वपुण्यमाह ॥ सत्र इति । विश्वसृजां प्रजापतीनां मनूनां ज्ञानिनां देवानां च सत्रे यागविशेषे पुरा पूर्वजन्मनि मत्सिद्धिकामेन मत्तो ज्ञानसिद्धिकामेन त्वयाऽहमिष्टः

पूजितो यतोऽतो ददामीति योज्यम् । ननु देवानां प्रजापतीनां वा सत्रे मया त्वं कथमिष्ट इत्यत उक्तम् ॥ वसो इति । तेषां मध्ये वसतीति वसुस्तस्य संबुद्धिर्वसो इति । तथाच तेषां यजमानभूतानां देवानां मध्ये त्वमपि बृहस्पतिरूपो देवोऽभूरतस्त्वयाऽहमिष्ट इति भावः ॥ ११ ॥

**स एष साधो चरमो भवानामासादितस्ते मदनुग्रहोऽयम् ।**
**यन्मां नृलोकं रह उत्सृजन्तं दिष्ट्या ददृश्वान् विशदानुवृत्त्या ॥ १२ ॥**

**प्रकाशिका–** तस्य ज्ञानदानाय स्वानुग्रहयोग्यतामभिनन्दति ॥ स एष इति । हे साधो । भवानां जन्मनां मध्ये बृहस्पतिनामकस्य त्वन्मूलरूपस्य सोऽण्डाद्बहिर्विद्यमान एषो बह्माण्डान्तर्गतश्च भवश्चरमः । न तूद्धवनामकदेहेन भवश्चरमः । लयपर्यन्तं प्रतिदिनमुद्धवदेहजननात् । कुतः । तस्य ज्ञानदानाय स्वानुग्रहयोग्यः । यद्यस्मात्त्वयाऽयं मदनुग्रहो मोक्षहेतुरात्यन्तिकप्रसाद आसादितो लब्धः। एतादृशात्यन्तिकप्रसादलाभेऽपि किं कारणमित्यत आह ॥ यन्मामिति । विशदानुवृत्त्या बहुकालीननिर्मलसेवया नृलोकान् जीवलोकान् भूरादीन् उत्सृजन्तं स्रष्टुकामम् । चरमोपदेश-विवक्षायां तूत्सृजन्तमिति यथा स्थितम् । मां रहो दिष्ट्या ददृश्वान् दृष्टवानसि । अस्मिन्समये मद्दर्शनमेव मत्प्रसादविशेषजनकमिति भावः ॥ १२ ॥

**पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णय ममादिसर्गे ।**
**ज्ञानं परं मन्महिमावभासं यत् सूरयो भागवतं वदन्ति ॥ १३ ॥**

**प्रकाशिका–** श्रद्धातिशयजननाय स्वस्य विप्रलंभकतापरिहाराय च वक्ष्यमाणं ज्ञानं स्तौति ॥ पुरेति । पुराऽस्मिन्पाद्मे कल्पे तत्राप्यादिसर्गे सर्गोपक्रमे मम ज्ञानं मन्महिम्नोऽवभासो ज्ञानं यस्माद्यच्च सूरयो भगवदेकविषयत्वाद्भागवतं वदन्ति तत्ते ददामीति पूर्वेणान्वयः ॥ १३ ॥

**इत्यादरोक्तः परमस्य पुंसः प्रतीक्षणानुग्रहभाजनोऽहम् ।**
**स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चन् शुचः प्राञ्जलिराबभाषे ॥ १४ ॥**

**प्रकाशिका–** पूर्वमादृतः पश्चादुक्तश्च प्रतीक्षणं सम्यक् निरीक्षणं तल्लक्षणो योऽनुग्रहस्तद्भाजनः पात्रभूतः । अमत्रं भाजनं पात्रमित्यभिधानात् । शुचोऽश्रूणि विमुंचन् आबभाषे उक्तवानस्मि । आबभाष इति परोक्ष्येण निर्देशः स्वस्य तदा बाह्यज्ञानाभावप्रदर्शनार्थः । सुप्तोऽहं विललाप किलेत्यादौ दृष्टत्वात् ॥ १४ ॥

**को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ।**
**तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥**

---

**प्रकाशिका–** चतुर्विधान्पुरुषार्थान्विहाय ज्ञानमेव तवाभीप्सितं कुत इत्यत आह ।। कोन्वीश इति । पादसरोजभाजां श्रवणादिरूपभजनं कुर्वतां चतुर्ष्वर्थेषु धर्मादिषु तथाऽपि तानहं न प्रवृणोमि । निषेवणं श्रवणादिरूपं तत्रैवोत्सुको यतः ।। १५ ।।

**कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात् पलायनम् ।**
**कालात्मनो यत् प्रमदायुताश्रयः स्वात्मन्रतेः खिद्यति धीर्विदामपि ।। १६ ।।**

**प्रकाशिका–** निश्चिततत्त्वस्य तव पुनः श्रवणादौ कस्मादौत्सुक्यमिति शंकायामाह । कर्माणीति श्लोकद्वयेन । अनीहस्य विहितनिषिद्धक्रियारहितस्य ते तव कर्माणि विधिबद्धवत्स्नानदानादि-कर्माण्यभवस्योत्पत्तिरहितस्य भव उत्पत्तिः कालात्मनः सर्वसंहारकस्य ते द्वारकादिदुर्गाश्रयोऽरीणां जरासन्धादीनां भयात्पलायनं च स्वात्मन् स्वस्वरूपे रती रमणं यस्य तस्य ते प्रमदानां स्त्रीणामयु-ताश्रयो बहुस्त्रीपरिग्रह इति यत् तस्मिन्विषये विदां विदुषां निश्चिततत्त्वानामपि धीरन्तःकरण-प्रभेदरूपा बुद्धिः खिद्यति अलंबुद्धिं न प्राप्नोति चञ्चला भवतीति भावः ।। १६ ।।

**मन्त्रेषु मां वा उपहूय यत् त्वमकुण्ठिताखण्डसदात्मबोधः ।**
**पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव ।। १७ ।।**

**प्रकाशिका–** किञ्च मन्त्रेषु विचारेषु प्रसक्तेषु सत्सु मां वै अहो उपहूय । अकुण्ठितः सर्वत्राप्रतिबुद्धः । अखण्डोऽपरिच्छिन्नः सन् निर्दुष्ट आत्मबोधः स्वरूपज्ञानं यस्य स तथोक्तः । एवं भूतोऽपि त्वं मुग्ध इवाज्ञो यथा पृच्छति तथा । अप्रमत्तोऽवहितः स मां पृच्छेः अप्रच्छ इति यत्तन्नोऽस्माकं मनो मोहयतीव मोहयुक्तं करोतीव । इदं सर्वमसुरजनमोहनाय लोकानुकरणं न वास्तवमिति समाधानम् । अज्ञानमपि स्वस्येव शब्देन दर्शयति । तथा चैतादृशधीचाञ्चल्य-प्रसक्तिपरिहाराय पुनर्ममज्ञानोपदेशश्रवणाद्यौत्सुक्यमिति भावः ।। १७ ।।

**ज्ञानं परं स्वात्मरहः प्रकाशं प्रोवाच कस्मै भगवान् समग्रम् ।**
**अपि क्षमं नो ग्रहणाय भर्तर्वेदाञ्जसा यद् वृजिनं तरेम ।। १८ ।।**

**प्रकाशिका–** पुराऽजाय प्रोक्तं ज्ञानं तुभ्यं ददामीत्युक्ते तत्रानधिकार्युद्धवो विज्ञापयति ।। ज्ञानमिति । स्वात्मरहः प्रकाशं स्वमहिमावभासकं यत्समग्रमपि ज्ञानं ज्ञानकरणं वेदादिरूपं शास्त्रं कस्मै ब्रह्मणे । सर्वनामत्वं छान्दसम् । प्रोवाच तन्मध्ये यावन्नोऽस्माकं गृहणाय क्षमं योग्यम् । हे भर्तः स्वामिन् । तावद्भवान्वेद । तावदेव मह्यं देहीति भावः । यद्येन दत्तेन वृजिनं सांसारिकं दुःखमञ्जसा तरेम ।। १८ ।।

**इत्यावेदितहार्दाय मह्यं स भगवान् परः ।**
**आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥**

**प्रकाशिका–** हार्दं हृद्गतं परमामुत्कृष्टां स्थितिं माहात्म्यम् ॥ १९ ॥

**स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ।**
**प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥**

**प्रकाशिका–** आराधितं सर्वैः पूजितं पादतीर्थं पादोदकम् । यस्य तस्मात्कृष्णादधीतोऽधिगतस्तत्त्वान्यव्यक्तादीनि । आत्मा परमात्मा जीवश्च । एतेषां विबोधमार्गः समीचीनज्ञानमार्गो यस्य स तथा । परिवृत्य प्रदक्षिणीकृत्य विरहेण तद्वियोगेनातुरः क्लिष्ट आत्मा मनोयस्य स तथा ॥ २० ॥

**सोऽहं त्वद्दर्शनाह्लादवियोगार्तियुतः प्रभो ।**
**गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥**

**प्रकाशिका–** श्रीकृष्णवियोगोत्पन्नार्तियुतस्तस्य श्रीकृष्णस्य दयितं प्रियं बदर्याश्रममण्डलं तत्प्रान्तस्थं कलापग्रामम् ॥ २१ ॥

**यत्र नारायणो देवो नरश्च भगवान् ऋषिः ।**
**मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥**

**प्रकाशिका–** मृदु परोपद्रवशून्यं तीव्रं दुश्चरं दीर्घमाकल्पान्तं तेपाते चरतः । लोकभावनौ लोकशिक्षकौ ॥ २२ ॥

**शुक उवाच–**
**इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् ।**
**ज्ञानेनाशमयत् क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥**

**प्रकाशिका–** वधं भाविनं संहारं यतोबुधः ॥ २३ ॥

**स तं महाभागवतं व्रजन्तं कौरवर्षभः ।**
**विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥**

**प्रकाशिका–** विस्रंभादयमस्मदिष्टं वक्ष्यतीति विश्वासात् । कृष्णपरिग्रहे कृष्णपरिचारके जने ॥२४॥

**ज्ञानं परं स्वात्मरहः प्रकाशं यदाह योगेश्वर ईश्वरस्ते ।**
**वक्तुं भवान् नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥**

**प्रकाशिका–** इदमित्युक्तं विशदयति ॥ ज्ञानमिति । अत्र हेतुमाह ॥ यदिति । यद्यस्मात्स्वभृत्योर्थकृतः स्वभृत्यप्रयोजनसाधकाः सन्तश्चरन्ति । न हि कृतकृत्यानामन्यत्प्रयोजनमस्तीति हिशब्दार्थः ॥ २५ ॥

**उद्धव उवाच–**
**ननु ते तत्त्वसंराद्ध ऋषिः कौषारवोऽन्ति मे ।**
**साक्षाद् भगवतादिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥**

**प्रकाशिका–** नन्विति विदुरे भगवदनुग्रहास्वादनम् । तत्त्वसंराद्धस्तत्त्वज्ञानसिद्धः । कौषारवो मैत्रेयः । अन्तिमे मे ममान्ति समीपे मर्त्यलोकं जिहासता त्यक्तुमिच्छता भगवता साक्षात्स्वमुखेनैव ते तुभ्यमादिष्टः । तत्त्वोपदेशायेति शेषः । अतो न मया पृथग्वक्तव्यमिति भावः ॥ २६ ॥

**सूत उवाच–**
**इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लुतोरुतापः ।**
**क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥ २७ ॥**

**प्रकाशिका–** गुणकथाख्यसुधया प्लुतो गत उरु तपो यस्य स तथा । प्लुगताविति धातोः । यमस्वसुर्यमुनायाः पुलिने वालुके तां निशां क्षणमिव समुषितः । उपगोरपत्यमौपगविः । उद्धवस्ततो यमुनावालुकात् ॥ २७ ॥

**राजोवाच–**
**निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ।**
**स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥**

**तात्पर्यम्– आकृतिं पृथिवीम् । 'शरीरमाकृतिर्देहः कुः पृथ्वी च मही तथे'त्यभिधानम् । 'पृथिवीलोकसन्त्यागो देहत्यागो हरेः स्मृतः । नित्यानन्दस्वरूपत्वादन्यत्नैवोपलभ्यते ॥ दर्शयेज्जनमोहय सदृशीं मृत(का)कृतिम् । नटबद्भगवान्विष्णुः परज्ञानाकृतिः वयमि' ति स्कान्धे । 'राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवैहि यथा नटस्ये'ति च ॥ २९ ॥**

**प्रकाशिका–** रह उत्सृजन्तमित्यादिप्रयोगेणोद्धवस्य चरमोपदेशबदरीगमनयोरपि पूर्वमभिप्रेतत्वेनोद्धवावशेषं बुध्वा राजा पृच्छति ।। निधनमिति । निधनं नाशम् । तुशब्दोऽवधारणे । स उद्धव एक एव कथमवशिष्टः । अयोद्धृत्वादवशिष्ट इत्यत उक्तम् ।। अधिरथेति । अधिरथानां यूथं पातीत्यधिरथयूथपास्तेषामपि यूथं पातीत्यधिरथयूथयूथपास्तेषु मुख्यो मुख्यतो योद्धेति भावः । सामर्थ्यविशेषवत्वादवशिष्ट इत्यत आह ।। यद्धरिरिति । यद्यस्मात्त्र्यधीशस्त्रयाणां लोकानामधीशः । अनेनेन्द्रादिदेवोत्तमत्वमुक्तम् । तथा च मनुष्यविशेषेषु सामर्थ्यविशेषो विप्रशापतिरस्कारको नेति किं वाच्यमिति भावः । अत्राकृतिं देहं तत्यज इति हरेर्देहत्याग उच्यत इति भात्यतोऽत्र विवक्षितमाकृति शब्दार्थं दर्शयति ।। आकृतिमिति । तथाच पृथिवीलोकं तत्यज इत्यर्थः । नन्वाकृतिशब्दस्य पृथिवीवाचकत्वं कुत इत्यतस्तत्राभिधानं दर्शयति ।। शरीरमिति । देह इत्यनेन त्यक्ष्यन्देहमिति वक्ष्यमाणमप्युक्तार्थमिति ज्ञातव्यम् । ननु देहत्याग एवात्र तत्र च विवक्षितः किं न स्यात् । किं पृथिवीलोकसंत्यागार्थकल्पनयेत्यतोऽत्र बाधकं प्रमाणं पठति ।। पृथिवीति । स्मृतः स्मृत्यादावुक्तः । हरेर्देहत्यागः पृथिवीलोकसंत्याग एव । कुतः । नित्यानन्दस्वरूपत्वात् अन्यच्छरीरत्यागरूपमुपलभ्यते । योगिभिरिति शेषः । तथाच योगिप्रत्यक्षानुगृहीतानुमानविरुद्धं शरीरत्यागरूपार्थकल्पनमिति भावः । नन्वेवं तत्रत्यैर्मनुष्यैर्भगवच्छरीरस्य मृतस्य दृष्टत्वात्तद्विरोध इत्यतो न तद्भगवच्छरीरमित्याह ।। दर्शयेदिति । सदा परोक्षज्ञानः परोक्षज्ञानात्मकाकृतिरपि विष्णुः स्वसदृशीं मृतकाकृतिं मृतं देहं दर्शयेन्नटवत् । नटो यथाऽस्वकीयमेव किञ्चिद्रूपं लोकानां स्वकीयत्वेन प्रदर्शयति तथेत्यर्थः । लोकानां प्रत्यक्षं भ्रमरूपम् । अतो न तद्विरोध इति भावः । प्रतीतार्थे बाधकं भागवतविरोधमप्याह । राजन्निति । परस्य हरेस्तनुभृद्भज्जननाप्ययरूपामीहां चेष्टां मायया स्वेच्छया विडम्बनं लोकानुकरणमवैहि । स्वस्मिन् जननाप्ययाभावेऽपि जातवन्मृतवत्स्वात्मानं दर्शयतीत्यवैहीत्यर्थः । इदमेकादशस्कन्धगतं वाक्यम् । देहत्यागसक्तिपरिहारार्थमेव तत्रोक्तमतो निरवकाशमिति मन्तव्यम् । इदमुपलक्षणम् । प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् । आदायान्तरधाद्देव इति पूर्वोक्तमपि वाक्यमत्र प्रतीतार्थे बाधकत्वेन ग्राह्यम् । समीपस्थत्वेनोहसंभवात् । स्ववचनेनाप्रदर्शनम् ।। २८ ।।

**शुक उवाच–**

**ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः ।**
**संहृत्य स्वकुलं नूनं त्यक्ष्यन् देहमचिन्तयत् ।। २९ ।।**

**प्रकाशिका–** ब्रह्मशापापदेशेन ब्रह्मशापशब्दवाच्येन कालेन मृत्युना देहं पृथिवीम् । अत्रामोघं वाञ्छितं यस्येत्यनेनामोघेच्छया भगवदिच्छयैवोद्धवोऽवशिष्ट इत्युत्तरमुक्तमिति ज्ञातव्यम् । नन्वत्र संहृत्य स्वकुलमित्युक्तोद्धवस्य चरमोपदेशबदरीगमने यदुकुलसंहारानन्तरमुक्ते । एकादशस्कन्धे तु ततो महाभागवते उद्धवे निर्गते वनम् । द्वारवत्यां किमकरोद्भगवान् भूतभावन इति वक्ष्यमाणत्वेन यदुकुलसंहारात्पूर्वमेव ते उक्ते । अतो विरोध इति चेत् । संहृत्य संहर्तुं निश्चित्येति व्याख्याने विरोधाभावात् ॥ २९ ॥

**अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् ।**
**अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मवतां परः ॥ ३० ॥**

**प्रकाशिका–** किं तद्भगवद्वाञ्छितं यद्बलादुद्धवोऽवशिष्ट इत्यतो भगवद्वांछां दर्शयति ॥ अस्मादिति । उपरते निर्गतेऽर्हति स्थातुमिति शेषः । आत्मवतां ब्रह्मज्ञानिनां मध्ये ॥ ३० ॥

**नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्निर्जितः प्रभुः ।**
**अतो मद्वत् पुनर्लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥**

**तात्पर्यम्– 'उत्तमैरधिकत्वं वा साम्यं वा विजयोऽपि वो । उच्यतेऽपि तु नीचानां मोहार्थं वाप्युपेक्षया । मूढदृष्ट्यनुसाराद्वा किञ्चित्साम्येन वा क्वचिदि'ति ब्रह्मतर्के ॥ ३१ ॥ इति तृतीयतात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥**

**प्रकाशिका–** एतदेवाह ॥ नेति । यद्यस्य गुणैर्भक्त्यादिभिः प्रभुरहं निर्जितो वशीकृतो लोकं साधुजनं प्रतिग्राहयन् उपदिशन् । अत्रोद्धवोऽण्वपि मन्न्यूनो नेत्युक्त्योद्धवस्य कृष्णसाम्यं प्रतीयतेऽतस्तदुक्तेरभिप्रायं प्रमाणेनैव दर्शयति ॥ उत्तमैरिति । नीचानामप्युत्तमैर्यत्कचिदधिकत्व-ादिकमुच्यते तत् । तुशब्दोऽवधारणे । मोहार्थमेव । प्रकारान्तरमप्याह ॥ अप्युपेक्षयेति । तदीयनीचत्वस्योपेक्षयाऽपीत्यर्थः । तदीयनीचत्वमुपेक्ष्य स्तुतिरूपार्थवादतया आधिक्यादिवचनमिति भावः । मूढदृष्ट्येति । मूढानामुद्धवादिषु कृष्णसाम्यादिकं यद्दृश्यते तदनुवादोऽयमित्यर्थः । तथाच दर्शनभाषयेदमुक्तमिति भावः । साम्यवचनस्यैव गत्यन्तरमाह ॥ किञ्चित्साम्येन वेति । तथाच यत्किञ्चित्साम्येन वा साम्यमुच्यत इति योज्यम् ॥ ३१ ॥

**एवं त्रिलोकगुरुणा सन्दिष्टः शब्दयोनिना ।**
**बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥**

**प्रकाशिका–** उपदिष्टशास्त्रप्रतिपाद्योऽपि कृष्ण एवेति दर्शयितुं मूले शब्दयोनिनेत्युक्तम् । ईजे पूजयामास । समाधिनाद्दढध्यानेन ॥ ३२ ॥

**विदुरोऽप्युद्धवात् श्रुत्वा कृष्णस्य परमात्मनः ।**
**क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥**

**प्रकाशिका–** उपात्तदेहस्य प्रकटीकृतदेहस्य ॥ ३३ ॥

**देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम् ।**
**अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम् ॥ ३४ ॥**

**प्रकाशिका–** देहन्यासं पृथिवीलोकसंत्यागम् । धैर्यवर्धनं वैराग्यादिगुणसंपादनमिति शेषः । पशूनां पशुप्रायाणामन्येषामज्ञानिनां विक्लवात्मनामधीरचित्तानां दुष्करतरमतिशयेन दुःखकरम् ॥३४॥

**आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् ।**
**ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥**

**प्रकाशिका–** आत्मानं स्वमीक्षितं स्मृतं श्रुत्वेति पूर्वेणान्वयः ॥ ३५ ॥

**कालिन्द्याः कतिभिर्विद्वानहोभिर्भरतर्षभ ।**
**प्रापद्यत द्युसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्थोऽध्यायः ।**

**प्रकाशिका–** कालिंद्या यमुनायाः सकाशात् । द्युसरितं भागीरथीम् । मित्रासुतो मैत्रेयः ॥ ३६ ॥
इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ ३-४ ॥

## अथ पञ्चमोऽध्यायः ।

**शुक उवाच–**
**द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।**
**क्षत्ताऽभिसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तम् ॥ १ ॥**

**प्रकाशिका–** श्रीद्युनद्या गङ्गाया द्वारि हरिद्वारे आसीनं न तु कर्मकरणे व्यग्रम् । उपसंहृत्य गुरूपसत्तिविधिना प्राप्याच्युतभावेनाच्युतभक्त्या शुद्धः । तृप्त इति पाठेऽच्युतभावेन विषयेऽप्यलंबुद्धिमानित्यर्थः । कथं भूतं मैत्रेयम् । विदुरस्य सौशील्यादिगुणैरतितृप्तं सन्तुष्टम् । अनेन तत्त्वज्ञानयोग्यत्वं वक्तृप्रेमास्पदत्वं श्रोत्रानुकूल्यं च दर्शितमिति ज्ञातव्यम् ॥ १ ॥

**विदुर उवाच–**

**सुखाय कर्माणि करोति लोको न तैः सुखं नान्यदुपारमं वा ।**
**विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः ॥ २ ॥**

**प्रकाशिका–** पप्रच्छेत्युक्तप्रश्नानेव दर्शयति ॥ सुखायेत्यादिना । सुखाय सुखप्राप्तये यागादिकर्माणि करोति । तैः कर्मभिरन्यदन्यस्य दुःखस्योपरमं नाशं वा न विन्देत् प्रत्युतानर्थप्राप्तिरेव ततः स्यादित्याह ॥ भूय इति । ततः कर्मणो भूयो दुःखमेव विन्देत् । अत्र सुखप्राप्तये आत्यन्तिकदुःखनिवृत्तये च यद्युक्तं कर्तुं योग्यं तद्भगवान्नोऽस्माकं वदेन्निरूपयतु ॥ २ ॥

**जनस्य कृष्णाद् विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ।**
**अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥**

**प्रकाशिका–** सज्जनदुःखनाशनं भवादृशानां हरिभक्तानां स्वभाव एवातोऽत्र मया नातीवनिर्बन्धः कार्य इत्याशयेनाह ॥ जनस्येति । दैवात्प्राचीनकर्मप्रेरकात् । सद्गुरूपदेशाभावेन कृष्णाद्विमुखस्य जनस्य मोक्षयोग्यजनस्यात एवाधर्मशीलस्येत्यादि । अनुग्रहाय तद्दुःखनाशाय सुखप्राप्तये चेह कर्मभुवि भव्यानि मङ्गलानि जनार्दनस्य भूतानि जनार्दनभृत्यतया विद्यमाना भवदादयश्चरन्ति ॥३॥

**तत् साधुवर्यादिश शर्मवर्त्म संराधितो भगवान् येन पुंसाम् ।**
**हृदि स्थितो यच्छति भक्तिपूते ज्ञानं स्वसत्ताधिगमं पुराणम् ॥ ४ ॥**

**प्रकाशिका–** तत्तस्मात् । हे साधुवर्य मैत्रेय । शर्मवर्त्म सुखप्राप्तिमार्गमादिशेत्यन्वयः । ननु भगवत्ज्ञानमेव दुःखनिवृत्त्यादिरूपमोक्षसाधनत्वेन श्रुत्यादिसिद्धम् । अतः किं तत्प्रश्नेनेत्याशङ्कायां तत्ज्ञानमेव केन कर्मणाऽन्तःकरणशुद्धिद्वारा भवतीति मदीयप्रश्नाशय इत्याह । येन कर्मणा संराधितो भगवान्पुंसामधिकारिणां वैराग्यद्वारा भक्तिपूतो हृदिस्थितः श्रवणादिना ध्यातः सन् स्वसत्ताधिगमं स्वमाहात्म्यविषयकं पुराणं गुरुसंप्रदायागतं ज्ञानमपरोक्षज्ञानं यच्छति । तत्कर्मादिशेत्यन्वयः ॥ ४ ॥

**करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः ।**
**यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥**

**प्रकाशिका–** स्वसत्ताधिगममिति यस्य भगवन्माहात्म्यस्य ज्ञानं मोक्षसाधनमुक्तं तदेव माहात्म्यं पृच्छति ॥ करोतीत्यादिना । यानि कर्माणि करोति तानि वर्णयेत्यादिरूपेण प्रत्येकमग्रेतनक्रियासंबन्धः । कृतवतारः कृतपुरुषाद्यवतारः । कर्माण्येव विशेषतः पृच्छति ॥ यथेति । अग्रे आदिकाले । निरीहः स्वप्रयोजनेच्छारहितो यथा केन प्रकारेण ससर्ज यथान्यंसंस्थाप्य सम्यक् स्थितं कृत्वा वृत्तिं जीविकां विधत्ते तथा वर्णयेत्यर्थः ॥ ५ ॥

**यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः ।**
**योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथासीत् ॥ ६ ॥**

**प्रकाशिका–** पुनः प्रलये स्वे स्वीये निजोदराकाशे गुहायां जगदाच्छादिकायां तमोरूपायांचेतनप्रकृतौ शेते । निवृत्तवृत्तिर्निवृत्तजगत्सृष्ट्यादिव्यापारः पुनः सृष्टौ सत्यामेतद्ब्रह्माण्डप्रविष्टो यथा बहुधा मत्स्यादिरूपेण तैरवतारभेदैर्यानि कर्माणि विधत्ते करोति । तानि च वर्णयेत्यर्थः ॥ ६ ॥

**क्रीडन् विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ।**
**मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥**

**प्रकाशिका–** पुनर्विशेषं प्रष्टुं स्वौत्सुक्यमाविष्करोति ॥ मन इति । सुश्लोकाः पुण्यकीर्तयस्तेषां मौलिरिव मौलिरुपरि विराजमानस्तस्येत्यर्थः ॥ ७ ॥

**यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान् सह लोकपालान् ।**
**अचीक्लृपद् यत्र हि सर्वसत्वनिकायभेदोऽधिकृतः प्रतीतः ॥ ८ ॥**

**प्रकाशिका–** यैस्तत्त्वभेदैर्महदादितत्त्वविशेषैरधिलोकनाथो लोकनाथाधिपोऽलोकान् लोकालोकपर्वताद्बहिर्विद्यमानभागान् । अचीक्लृपत् कल्पयामास । यत्र येषु लोकेष्वलोकेषु च सर्वेषां सत्त्वानां प्राणिनां निकायास्तेषां भेदोऽधिकृतः । स्वस्य योग्यकर्मकरण इति शेषः । आश्रित इति वा प्रतीतः । आगमादिनेति शेषः । तदपि वर्णय ॥ ८ ॥

**येन प्रजानामुत आत्मकर्मरूपाभिधानेन भिदां व्यधत्त ।**
**नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ॥ ९ ॥**

**प्रकाशिका–** सर्वसत्त्वनिकायेत्यनेन सामान्यतः पृष्टमेव विशेषतः पृच्छति ॥ येनेति । येन प्रकारेण । उतापि । आत्मा स्वभावस्तदनुसारि कर्म तत्कृतं रूपं शरीरं तदनुसार्यभिधानं नाम । द्वन्द्वैकवद्भावः । तेन भिदां परस्परव्यावृत्तिं आत्मनश्चतुर्मुखस्य योनिः । अनेन चतुर्मुखद्वारा कथमेतत्सर्वं कृतवानिति प्रश्नाभिप्रायं सूचयति ॥ ९ ॥

**परावरेषां भगवन् कृतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ।**
**न तृप्नुमः कर्णसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥ १० ॥**

**तात्पर्यम्– ऋते अवगमे । ऋ गताविति धातोः । तेषां तात्पर्यावगमे कृष्णकथामृतौघ एवासौ यतः ॥ १० ॥**

**प्रकाशिका–** ननु महाभारतादिना व्यासमुखात्सर्वं श्रुतमेव त्वयाऽतः किं पुनस्तद्वर्णनेनेत्यत आह ॥ परावरेषामिति । अत्र परे त्रैवर्णिका अवरे शूद्रादयस्तेषां कृतानि तद्योग्यानि कर्माणि । परे देवर्ष्यादयोऽवरे क्षितिपादयस्तेषां कृतानि चरित्राणीति वा । मे मया व्यासमुखादभीक्ष्णं यद्यपि पुनः पुनः श्रुतानि तथाऽपि कर्णसुखावहत्वात्तेषाम् । षष्ठी तृतीयार्थे । कर्णसुखावहैस्तैर्व्यासोक्तै- र्भारतादिभिर्न तृप्तः । कुतः । यतः कृष्णकथामृतौघादृते विना तानि भवन्त्यतो न तृप्नुम इति भारतादौ हरिकथाभावरूपा निन्दा प्रतीयतेऽतोऽत्र विवक्षितमर्थं दर्शयितुमृत इत्येतद्व्याख्याति ॥ ऋत इति । तथा च ऋत इत्येतत्सप्तम्यन्तं न विनार्थकमव्ययमिति भावः । ऋत इत्यस्यावगमार्थत्वे नियामकं पठति । ऋ गताविति धातुव्याख्यानात् । गत्यर्थानां च ज्ञानार्थत्वादिति भावः । इदानीं वाक्यार्थमाह ॥ तेषामिति । परावरकर्मप्रतिपादकानां भारतादीनामित्यर्थः । तात्पर्येति । ऋत इत्यत्र योग्यताबलात्तात्पर्येति लभ्यत इति भावः । कृष्णकथामृतौघ एवासौ यत इति तात्पर्यकथनेन कृष्णकथामृतौघत्वादिति भावप्राधान्यविवक्षया मूलं योज्यमिति सूचयति । तथा च यद्यपि व्यासमुखाद्भारतादिकं श्रुतं तत्र चापाततः परावरेषां कर्माण्येव प्रतिपादितानीति प्रतीयते । तत्त्वेन दुर्गमार्थत्वादुपक्रमादिना लिङ्गेन तेषां तात्पर्यनिश्चये हरिकथामृतौघत्वमुत्तमाधिकारिभिरेव ज्ञायते । न सर्वैः । भाषात्रयेण प्रवृत्तत्वेन दुर्गमार्थत्वात् । अतस्तैर्न तृप्नुमः । मन्दाधिकारिभिस्तेषां हरिपरत्वस्य ज्ञातुमशक्यत्वात् । अतो मन्दाधिकार्यनुजिघृक्षया समाधिभाषयैव वर्णयेति मूलाभिप्राय इति भावः ॥ १० ॥

**कस्तृप्नुयात् तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात् ।**
**यः कर्णनाडीं पुरुषस्य यातो भयप्रदां गेहरतिं छिनत्ति ॥ ११ ॥**

**प्रकाशिका–** तर्हि तवोत्तमाधिकारित्वात्त्वां प्रति मदीयं हरिमाहात्म्यवर्णनं व्यर्थमित्यत आह ॥ कस्तृप्नुयादिति । को रसज्ञ उत्तमाधिकारी तृप्नुयात्तत्रालंबुद्धिं कुर्यात् । तीर्थपदो हरेरभिधानात्कथामृताद्धः सत्रेषु समाजेषु सूरिभिर्नारदादिभिः पुनः पुनः श्रवणेन प्रयोजनमाह ॥ य इति । यो हरिः पुरुषस्योत्तमाधिकारिणः कर्णनाडीं यातः पुनरपि श्रूयमाण इत्यर्थः । छिनत्ति । तस्येति शेषः । उत्तमाधिकारिभिरपि वैराग्यवृद्ध्यर्थं हरिमाहात्म्यं पुनः पुनः श्रोतव्यमेवेति भावः ॥ ११ ॥

**मुनिर्विवक्षुर्भगवद्गुणानां सखाऽपि ते भारतमाह कृष्णः ।**
**यस्मिन् नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता न हरेः कथायाम् ॥ १२ ॥**

**तात्पर्यम्– यस्मिन् भारते हरेः कथायां ग्राम्यसुखानुवादैर्मतिर्न गृहीता । 'भारतान्नाधिकं विष्णोर्महिमावाचकं क्वचित् । भारतान्न विरागाय भारतान्न विमुक्तय' इति पाद्मे ॥ १२ ॥**

**प्रकाशिका–** ननु भारते व्यासेनोत्तमाधिकारिणः प्रत्यपि भगवद्गुणान्प्रतिपादितत्वात्तत्र ग्राम्यसुखानुवादस्यैव प्रतीयमानत्वादुपक्रमादिना तत्रैव तात्पर्यावगमाच्च । अतस्तेषामृते कृष्णकथामृतौघादित्युक्तमयुक्तमित्यत आह ॥ मुनिरिति । अत्र यस्मिन्नित्यस्य कृष्णपरामर्शत्वप्रतीतिवारणायार्थमन्वयं च दर्शयन्वाक्यार्थमाह ॥ यस्मिन्निति । हरेः कथायां हरिप्रतिपादकत्वेन कथायामुकप्रमादिना । अवगम्यमानायामिति शेषः । ग्राम्यसुखानुवादैरुत्तमाधिकारिणो मतिर्न गृहीता । उत्तमाधिकारिणो बुद्धिरापातप्रतीतग्राम्यसुखादिरूपार्थमात्रावगाहिनी न भवतीत्यर्थः । तद्भारतं ते सखा मुनिः सर्वज्ञः कृष्णो व्यासो भगवद्गुणानाम् । षष्टि द्वितीयार्थे । भगवद्गुणानपि विवक्षुर्महातात्पर्यवृत्त्या प्रतिपादयितुकाम आहेत्यन्वयः । अपिशब्देनावान्तरतात्पर्येण भारतस्य प्रतीतार्थपरत्वमप्यस्तीति दर्शयति । भारतस्य विष्णुमाहात्म्यप्रतिपादन एव तात्पर्यमित्यत्र प्रमाणं दर्शयति ॥ भारतादिति । भारतान्न विरागायेति द्वितीयार्धेन साश्रद्दधानस्येत्युत्तरश्लोकोक्तमपि प्रमापितमिति ज्ञातव्यम् ॥ १२ ॥

**सा श्रद्धधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ।**
**हरेः सदानुस्मृतिनिर्वृतस्य समस्तदुःखाप्ययमाशु धत्ते ॥ १३ ॥**

**तात्पर्यम्– या ग्राम्यसुखानुवादैर्न गृहीता हरेः कथायां विवर्धमाना मतिः ॥ १३ ॥ इति तृतीयतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥**

**प्रकाशिका–** ग्राम्यसुखानुवादैरुत्तमाधिकारिणो मतिर्न गृहीतेत्युक्तम् । ततः किं करोतीत्यत आह ॥ सा श्रद्दधानस्येति । अत्र सेत्यनेन परामृश्यं विवर्धमानेत्यत्रापेक्षितानुवृत्तिं च दर्शयति ॥ सेति ।

तथा च श्रुत आस्तिक्यबुद्धिं दधानस्य पुंस उत्तमाधिकारिणो या भारततात्पर्यावगमे ग्राम्यसुखानुवादेन न गृहीता मतिः सा हरेः कथायामेव विशेषेण वर्धमाना सत्यन्यत्र विषयेषु विरक्तिं करोति जनयति । अनन्तरं हरेः सदाऽनुस्मृतिनिर्वृतस्य ध्यानादिना प्राप्तस्वरूपानन्दस्य समस्तदुःखाप्ययं धत्ते विधत्त इति मूलं योज्यमिति भावः ॥ १३ ॥

**ताञ्छोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन ।**
**क्षिणोति देवोऽनिमिषस्तु तेषामायुर्वृथावादगतिस्मृतीनाम् ॥ १४ ॥**

**प्रकाशिका–** ननु मन्दाधिकारिणः प्रति भगवन्माहात्म्यमवश्यं वर्णयेति त्वया कस्मात्प्रार्थ्यत इत्याशङ्कायां ते मत्कृपाविषया इत्याह ॥ तानिति । शोच्यशोच्यान् अत्यन्तशोच्यानित्यर्थः । अविदो भारततात्पर्यानभिज्ञान् अत एवाघेनाघकरेण नानाविधव्यसनेन हरेः कथायां विमुखान् अनिमिषो देवः कालनामा हरिः । वृथावादगतिस्मृतीनां वृथैव वादगतिस्मृतयो वाग्देहमनोव्यापारा येषां तेषामायुस्तु विशेषेण क्षिणोति वृथैव नाशयतीत्यर्थः । अतोऽनुशोच इत्यर्थः ॥ १४ ॥

**तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम् ।**
**उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥**

**प्रकाशिका–** तत्तस्मादस्मत्कृपाविषयत्वादस्याधिकारिणः शर्मदातुर्मोक्षादिपुरुषार्थप्रदस्य हरेः कथासु मध्ये सारं सारभूतां कथामेव यथा पुष्पेभ्यो मधु मधुप उद्धरति । तद्वदुधृत्य शिवाय मोक्षाय कीर्तय । कथंभूतस्य हरेः । तीर्थवत्पवित्रकरी कीर्तिर्यस्य तस्य ॥ १५ ॥

**स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ।**
**चकार कर्माण्यतिपौरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥**

**शुक उवाच–**
**स एवं भगवान् पृष्टः क्षत्रा कौषारविर्मुनिः ।**
**पुंसां निःश्रेयसार्थाय तमाह बहुमानयन् ॥ १७ ॥**

**प्रकाशिका–** कथासारमेव दर्शयन्नाह ॥ स इति । संयमः प्रलयः । कृतवासुदेवाद्यवतारः प्रगृहीता लीलयैव सहकारितयोपात्ताः शक्तयः सत्त्वाद्यभिमानिन्यः श्रीभूदुर्गा येन स तथोक्तः । तथा च कृष्णादिलीलयैव कथासार इति भावः । मह्यं नः ॥ १६,१७ ॥

**मैत्रेय उवाच–**

**साधु पृष्टं त्वया साधो लोकान् साध्वनुगृह्णता ।**
**कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजात्मनः ॥ १८ ॥**

**प्रकाशिका–** बहुमानप्रकारमेवाह ॥ साधु पृष्टमित्यादिना । लोकान्मन्दाधिकारिण आत्मनः स्वस्याधोक्षजे आत्मा मनो यस्य ॥ १८ ॥

**नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे ।**
**गृहीतोऽनन्यभावेन यत् त्वया हरिरीश्वरः ॥ १९ ॥**

**प्रकाशिका–** एतादृशप्रश्नकरणं तवोचितमेवेत्याशयेनाह ॥ नैतदिति । एतदेतादृशप्रश्नकरणम् । बादरायणवीर्यजत्वं धृतराष्ट्रेऽप्यस्ति । अतोऽत्र विशेषमाह । यद्यस्माद्धरिरनन्यभावेन अनन्य-साधारणभक्त्या त्वया गृहीतो ज्ञातस्तस्मादेतन्न चित्रमित्यन्वयः ॥ १९ ॥

**माण्डव्यशापाद् भगवान् प्रजासंयमनो यमः ।**
**भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥**

**प्रकाशिका–** देव एव त्वं शापाच्छूद्रजातिरस्यतोऽपि नैतच्चित्रमित्याशयेनाह ॥ माण्डव्येति । व्यासस्य भ्रातुर्विचित्रस्य क्षेत्रे भार्यात्वेन स्वीकृतायां भुजिष्यायां दास्याम् ॥ २० ॥

**भवान् भगवतो नित्यं सम्मतः सानुगस्य हि ।**
**ज्ञानोपदेशाय च मामादिशद् भगवान् व्रजन् ॥ २१ ॥**

**प्रकाशिका–** श्रीकृष्णस्य प्रियत्वेन संमतत्वाच्च नैतच्चित्रमित्याह ॥ भवानिति । संमतः । प्रियत्वेनेति शेषः । हि शब्देनायमर्थः प्रसिद्ध इति दर्शयति । किञ्च स्वधाम व्रजन् तव ज्ञानोपदेशाय मामादिशदिति यस्मात्तद्भवान् भगवतः प्रियत्वेन संमत इति योज्यम् ॥ २१ ॥

**अथ ते भगवल्लीला योगमायोपबृंहिताः ।**
**विश्वस्थित्युद्भवांतार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चमोऽध्यायः ॥**

**प्रकाशिका–** अथ तस्मात्प्रष्टुस्तवैवंविधत्वात् । योगः स्वरूपसामर्थ्यं माया प्रकृतिस्ताभ्या-मुपबृंहिता वर्धिता विश्वस्थित्यादयोऽर्था विषया यासां ताः ॥ २२ ॥ इति श्रीभागवतटिप्पण्यां पञ्चमोऽध्यायः ॥ ३-५ ॥

## अथ षष्ठोऽध्यायः ।

**मैत्रेय उवाच–**

**भगवानेक आसेदमग्र आत्मात्मनां विभुः ।**
**आत्मेच्छानुगतो ह्यात्मा नानाशक्त्युपलक्षितः ॥ १ ॥**

**तात्पर्यम्– आत्मनां विभुर्जीवाधिपतिः ॥ १ ॥**

**प्रकाशिका–** तत्र सृष्टिविषयलीलां वर्णयितुं ततः पूर्वभाविनीं स्थितिमाह ॥ भगवानेक इति द्वाभ्याम् । अत्रात्मानामात्मा स्वरूपभूत इत्यन्यथाप्रतीतिवारणाय विवक्षितमन्वयं दर्शयति ॥ आत्मनामिति । नन्वात्मनामित्यस्य स्वामिनामित्यर्थत्वे विभुपदस्य च व्याप्तत्वार्थत्वे योग्यताभाव इत्यतोऽत्र विवक्षितं शब्दद्वयलब्धमर्थं दर्शयति ॥ जीवेति । तथाच षष्ठ्यंतमात्मपदं जीवपरं विभु शब्दश्च प्रभुपर्यायोऽधिपतिवाचीति भावः । ततश्चायं श्लोकार्थः ॥ इदमग्रेऽस्याग्रेऽत्तीत्यात्मा जगत्संहर्ता भगवान् एकः केवल आस आसीत् । ननु जीवानामपि तदा सत्वात्कथमवधारणार्थक एकशब्द इत्यत उक्तम् ॥ आत्मनां जीवानां विभुरधिप इति । ननु कुतो जीवाधिपत्वं तस्येत्यत उक्तम् । हि यस्मादात्मा जीवसमूहः परमात्मेच्छानुगतस्तस्मादात्मनां विभुरिति । तथाच स्वतन्त्र एक एवासीदित्यवधारणार्थ इति भावः । नन्वेवं निमित्तोपादानाद्यभावे कथं तस्माज्जगत्सृष्टिस्तत्सद्भावे च कथं तत्सापेक्षस्य स्वातन्त्र्यमित्यत उक्तम् ॥ नानाशक्त्युपलक्षित इति । नानाविधानामुपादानादीनां नियामकशक्तिभिरुपलक्षितो युक्त इत्यर्थः । तथाच तदधीनोपादानादिसत्वात् नोक्तदोषद्वयमिति भावः ॥ १ ॥

**स वा एष तदा द्रष्टा नापश्यद् विश्वमेकराट् ।**
**मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २ ॥**

**तात्पर्यम्– 'परमात्मा यतो जीवं मेनेऽसन्तमशक्तितः । असन्नसावतो नित्यं सत्यज्ञानो यतो हरि'रित्याग्नेये ॥ 'शक्यत्वाच्छक्तयो भार्याः शक्तिः सामर्थ्यमुच्यत' इति ब्रह्मतर्के ॥ 'सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः । अनास्थाऽन्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनमि'ति व्योमसंहितायाम् ॥ २ ॥**

**प्रकाशिका–** एकराट् स्वतन्त्रः स एव भगवान् तदा प्रलये विश्वं स्वव्यतिरिक्तं प्रपञ्चं नापश्यत् । दर्शनशक्त्यभावान्नापश्यदित्यत उक्तम् ॥ द्रष्टेति । स्वातन्त्र्येण सर्वदा द्रष्टेत्यर्थः । नान्याऽतोऽस्ति

द्रष्टेत्यादि श्रुतेरिति वैशब्दः । ननु जीवानां सत्वात्कथं स्वव्यतिरिक्तं नापश्यदित्युक्त इत्यत आह ॥ मेन इति । अत्रात्मानं स्वात्मानमसंतमविद्यमानं मेन इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्यानं दर्शयति ॥ परमात्मेति । आत्मानमित्यस्यार्थः ॥ जीवमिति । असत्वेन ज्ञाने निमित्तमाह ॥ अशक्तित इति । अशक्तत्वत इत्यर्थः । न त्वविद्यमानत्वेनेति भावः । अनेनेवशब्दार्थो दर्शित इति ज्ञातव्यम् । न केवलं जीवेऽसत्वेन भगवज्ज्ञाने इदं निमित्तं किन्तु नान्यत् किञ्चनेत्यादि श्रौतसत्ववचनस्यापीत्याशयेनाह ॥ असन्नसाविति । अतोऽशक्तत्वगुणयोगेनैवासौ जीवो नित्यमसन्नित्युच्यत इति शेषः । अनेन प्रलयकाल इव स्थितिकालेऽपि जीवस्याशक्तत्वसाम्यादसत्वव्यपदेशः स्यादित्यापादनस्येष्टापत्त्या दुष्टत्वं सूचयति । कुत एवं व्याख्येयमित्यतः प्रतीतार्थे बाधकमाह ॥ सर्वदा हरिर्यतः सत्यज्ञान इति ॥ अनेन सत्यत्वेन श्रुत्यादिसिद्धेषु जीवेष्वविद्यमानत्वं चेद्भगवान्न जानाति तर्हि मिथ्याज्ञानी स्यादिति बाधकं सूचयति । ननु तथाऽपि तदा चेतनप्रकृतेरचेतनप्रकृतेश्च सत्वात्कथमन्यं नापश्यदित्युक्तमित्यतो मूले ॥ सुप्तशक्तिरिति । तदभिप्रायं प्रमाणेनैव दर्शयति ॥ शक्यत्वादिति । तथाच कर्मव्युत्पत्त्याऽत्र शक्तिशब्दो भार्यापरः तदभिमन्यमानजडप्रकृतिपरश्चेति भावः ॥ सामर्थ्यमिति । भावव्युत्पत्त्या क्वचिदिति शेषः । नन्वेवं भगवद्भार्याया रमायाः कथं सुप्तिस्तस्याः सर्वदाऽऽविर्भूत ज्ञानत्वादित्याशंकायां तस्या अत्राभिप्रेतां सुप्तिं प्रमाणेनैव दर्शयति ॥ सुप्तिस्त्विति । तु शब्दोऽवधारणे । अतीवभगवद्रतिरेवान्यत्र जगद्व्यापारेऽनास्थाऽऽसक्त्यभाव एवेति सम्बध्यते । न ज्ञानाभावरूपेत्यवधारणार्थः । जडप्रकृतौ चापरिणामित्वमेव सुप्तिशब्दार्थ इत्यपि ज्ञातव्यम् । ननु भगवतोऽपि क्वचित्प्रलये सुप्तिरुच्यते तत्र कथं व्याख्येयमित्यपेक्षयामाह ॥ विष्णोरिति । चक्षुर्निमीलनं सुप्तिः प्रोक्तेत्यन्वयः । चक्षुर्निमीलनमित्यनेन सुप्तदृगित्येतदपि उक्ततात्पर्यमित्यवगन्तव्यम् । उपरमशून्यचक्षुरिन्द्रियोऽपि निमीलितचक्षुरिति व्याख्यानस्य सूचितत्वात् ॥ २ ॥

**सा वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका ।**
**माया नाम महाभाग ययेदं निर्ममे विभुः ॥ ३ ॥**

**प्रकाशिका–** शक्तिशब्दोक्ताया भार्याया जडप्रकृतेश्च स्वरूपं नाम चाह ॥ सेति । जगद्व्यापारं विहाय भगवत्समीप एव रमते या च परिणामशून्या सेत्यर्थः । वैशब्दः प्रमाणप्रसिद्धिद्योतकः । शक्तिर्भार्या सदसदात्मिका महदादि- कार्यकारणरूपजडप्रकृत्यभिमानिनी अन्या तद्रूपा मायानाम । प्रधानत्वान्मयो विष्णुस्तस्येयं माया । चेतनप्रकृतेराद्यावतारभूताऽचेतना च । भगसमूहो भागो महान् भागो यस्य स तथा महतीं भां गच्छतीति महाभागस्तस्य सम्बुद्धिर्महाभागेति । ययोभयरूपया ॥३॥

**कालवृत्त्यां तु मायायां गुणमय्यामधोक्षजः ।**
**पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ ४ ॥**

**प्रकाशिका–** ययेदं निर्मम इत्युक्तमेव प्रपञ्चयति ॥ कालवृत्त्यां त्विति । कालेन सृष्टिकालप्रेरकेण तन्नाम्ना हरिणा प्राप्ता वृत्तिः सिसृक्षत्वादिविशेषा यस्याश्चेतनायाः सा तथोक्ता । अन्यत्र वृत्तिः परिणामोन्मुखत्वं गुणमय्याम् । सत्त्वादिगुणाभिमानिन्यां तद्रूपायां च मायायां चेतनायामचेतनायां च । तुशब्दो माययोरुक्तविशेषार्थः । वीर्यवान् व्यक्तजगत्सर्जनशक्तिमान् । अधोक्षजोऽतीन्द्रियः प्रलयकालवर्ती परमात्माऽऽत्मभूतेनादौ आविर्भूतस्वस्वरूपांशरूपेण पुरुषेण पुरुषनाम्ना वासुदेवेन वीर्यं रेताख्यं परिणामसामर्थ्यं चाधत्त स्थापितवान् अन्यत्रोद्बुद्धमकरोत् ॥ ४ ॥

**ततोऽभवन्महत्तत्त्वमव्यक्तात् कालचोदितात् ।**
**विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमो नुदन् ॥ ५ ॥**

**प्रकाशिका–** ततो वासुदेवान्महत्तत्त्वं तन्नामकं जडरूपं तत्त्वं तदभिमानिपुन्नामकब्रह्मदेहश्चाव्यक्तात्तत्त्वोत्पत्तिविवक्षायां त्रिगुणात्मकप्रधानादभिमानिदेहोत्पत्तिविवक्षायां रेतोरूपेण परिणतादिति शेषः । अत्र महत्तत्त्वादीनामुत्पत्तिः सूक्ष्मरूपेणैव विवक्षिता । स्थूलात्मना तेषामुत्पत्तेरनिरुद्धेनान्यत्रोक्तत्वात् । अतो न विरोध इति ज्ञातव्यम् । कालचोदितात्कालनामकेन हरिणा प्रेरितात् । एवं तत्त्वतदभिमानिदेवयोरुत्पत्तिं विधायेदानीमभिमानिनश्चेतनस्यापि उत्पत्तिमाह । विज्ञानात्मा ब्रह्माऽपि पुरुषनामा तत्त्वे देहे चाभिमानिनोत्पत्त्याऽभवदिति । तस्य प्रलयकालेऽप्यविलुप्तवृत्तिज्ञानत्वसूचनाय विज्ञानात्मेत्युक्तम् । तस्य कृत्यमाह ॥ आत्मदेहेति । आत्मनः स्वस्याभिमन्यमानतया देहस्थानीये महत्तत्वे कारणरूपेण विद्यमानं विश्वं व्यंजयन्व्यक्तं कुर्वन् । उत्पादयन्निति यावत् । तमस्तत्कालीनं सूर्य इव नुदन्परिहरन् स्वसृज्यानां शेषादीनामज्ञानं परिहरन्निति वा । तथा चाहंकारादिसर्वजगत्सर्जनाय तेषामुभयविधतमोनाशनाय च ब्रह्माऽभवदित्याशयः ॥ ५ ॥

**सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ।**
**आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ ६ ॥**

**तात्पर्यम्– अंशो जीवः । कालजीव गुणादीनामभिमानी चतुर्मुखः । सर्वजीवाभिमानित्वादंश इत्येव चोच्यत' इति ब्राह्मे ॥ ६ ॥**

**प्रकाशिका–** एतदेव विशदयति ॥ सोऽपीति । अत्रांशगुणकालात्मेत्येतदंशगुणकालस्वरूप इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव सम्यग्व्याख्यातुमत्र विवक्षितमंशशब्दार्थं तावदाह ॥ अंश इति जीवस्यापि परमात्मविभिन्नांशत्वस्य प्रसिद्धेरिति भावः । महत्तत्त्वाभिमानदशायां ब्रह्मणश्चतुर्मुखत्वा-भावात्कथं प्रमाणे तत्र चतुर्मुख शब्दप्रयोग इत्यत आह ॥ महत्तत्त्व इति । चतुर्मुखशब्दो रूढ्या ब्रह्मपरः । कालमायांशयोगेनेत्यादिवक्ष्यमाणानामंशशब्दानामपि विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ सर्वेति । तथाचात्रांशशब्दो जीवपरस्तदात्मत्वं च तदभिमानित्वम् । उत्तरत्र तु जीवाभिमानित्वेन निमित्तेनांश इति शब्देन चतुर्मुख एवोच्यत इत्यर्थः ॥ ततश्चायं मूलार्थः ॥ स आत्मा महत्तत्त्वाभिमानी विरिंचोऽप्यंशो जीवो गुणाः सत्त्वादयः कालः सृष्टिकाल एषामात्माभिमानी भगवत्कृपादृष्टेर्विषयः । आत्मानं स्वाभिमन्यमानं महत्तत्त्वं व्यकरोद्विकारोन्मुखमकरोत् ॥ ६ ॥

**महत्तत्त्वाद् विकुर्वाणादहन्तत्त्वमजायत ।**
**कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोभवः ॥ ७ ॥**

**प्रकाशिका–** अहंतत्त्वमजायतेत्यादौ तत्त्वानां तदभिमानिदेहानामभिमानिनां चोत्पत्तिर्ग्राह्या । अहंतत्त्वलक्षणमाह ॥ कार्येति । कार्याणि भूतानि कारणानीन्द्रियाणि कर्तार इन्द्रियाभिमानिनो देवा मनश्चैतेषामात्मा कारणम् । कार्यकारणादिपदविवक्षितमर्थं स्वयमेवाह ॥ भूतेति । मनःशब्देन देवाश्च ग्राह्याः । एतेषां भव उत्पत्तिर्यस्मात्स तथा ॥ ७ ॥

**वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।**
**अहंतत्त्वाद् विकुर्वाणान्मनो वैकारिकादभूत् ॥ ८ ॥**

**प्रकाशिका–** एतत्प्रपञ्चयितुमहंकारतत्त्वविभागं तावदाह ॥ अहमिति । इदं प्रकारान्तरमव्ययं तत्त्ववाचि । इदानीं वैकारिकादीनां कार्यप्रदर्शनेनोक्तं प्रपञ्चयति ॥ अहंतत्त्वादिति । वैकारिकाद्वै-कारिकनामकादहंतत्त्वादित्यन्वयः ॥ ८ ॥

**वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ।**
**तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च ॥ ९ ॥**

**प्रकाशिका–** वैकारिका वैकारिकनामानस्तेषां कार्यं दर्शयति ॥ अर्थेति । यत एभ्य इन्द्रियाभिमानिभ्योऽर्थानां शब्दादीनामभिव्यञ्जनं प्रकाशो भवति । ते देवाश्चेत्यन्वयः । इन्द्रियाण्येव तैजसानि तैजसाहंकारकार्याणि । न तदभिमानिन इत्येवकारार्थः । ज्ञानमयानि ज्ञानप्रधानकानि कर्ममयानि कर्मप्रधानकानि चेति बुद्ध्या विविक्तसमुच्चये चशब्दः ॥ ९ ॥

**तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ १० ॥**

**प्रकाशिका–** तामसस्तामसाहंकारो भूतसूक्ष्मस्य शब्दस्यादिकारणं यतः शब्दात्स्वमाकाशमुत्पन्नम् । कथं भूतं खम् । आत्मनः परमात्मनो लिङ्गं सर्वगतत्वनित्यत्वयोर्दृष्टान्ततया ज्ञापकम् । आकाशवत्सर्वगतश्च नित्य इति श्रुतेरित्यर्थः ॥ १० ॥

**कालमायांशयोगेन भगवद्वीक्षितं नभः ।**
**तामसानुसृतं स्पर्शं विकुर्वन् निर्ममेऽनिलम् ॥ ११ ॥**

**तात्पर्यम्– कालमायांशयोगतः । कालात्परिणामात् । प्रकृतेर्हिरण्यगर्भाच्च ॥ ११-१४ ॥**

**प्रकाशिका–** कालमायांशयोगेनेत्यस्य विवक्षितमर्थं दर्शयति ॥ कालेति । अत्र यद्यपि कालमायांशयोगेनेत्येवानुवादोयुक्तः । न तु कालमायांशयोगत इति । तथाऽप्यत्रत्यकालमायांशपदानां व्याख्यानं वक्ष्यमाणे कालमायांशयोगत इत्यादावप्यनुसन्धेयमिति दर्शयितुं कालमायांशयोगत इत्यनुवादः कृत इति ध्येयम् । परिणामात्परिणामजनकात् । प्रकृतेरिति मायापदव्याख्यानं चेतनप्रकृतेरित्यर्थः । अंशशब्दव्याख्यानं हिरण्यगर्भादिति । योगशब्दार्थप्रदर्शनायेतरेतरयोगवाची चशब्दः प्रयुक्तः । ततश्चायं मूलार्थः । कालः परिणामकाले माया चित्प्रकृतिरंशः सर्वजीवाभिमानी हिरण्यगर्भ एतेषां योगेन परस्परसहकारित्वेन मेलनलक्षणसम्बन्धेन भगवता वीक्षितं कृपया निरीक्षितं तामसानुसृतं तामसाहंकारानुस्यूतं नभः स्पर्शं विकुर्वन् विशेषेण कुर्वन् तदाकारेण परिणतम् । सदिति यावत् । तद्द्वाराऽनिलं वायुं निर्ममे ॥ ११ ॥

**अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ।**
**ससर्ज रूपतन्मात्रां ज्योतिर्लोकस्य लोचनम् ॥ १२ ॥**

**प्रकाशिका–** नभसा स्वस्मिन्ननुस्यूतेनोरुबलान्वितो रूपतन्मात्रां ससर्ज तद्द्वारा लोकस्य लोचनं प्रकाशकं ज्योतिस्तेजःसंज्ञं भूतं ससर्ज ॥ १२ ॥

**अनिलेनान्वितं ज्योतिर्विकुर्वत् परवीक्षितम् ।**
**आधत्ताम्भो रसमयं कालमायांशयोगतः ॥ १३ ॥**

**प्रकाशिका–** अन्वितमनुस्यूतं परेण हरिणा विवक्षितं रसमयं रसकार्यम् । अनेन रसद्वाराऽम्भसां सृष्टिरुक्तेति ज्ञातव्यम् ॥ १३ ॥

**ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वत् परवीक्षितम् ।**
**महीं गन्धगुणामाधात् कालमायांशयोगतः ॥ १४ ॥**

**प्रकाशिका–** अनुसंसृष्टमनुस्यूतं गन्धाख्यो गुणः कारणीभूतो यस्याः सा तथोक्ता । तथा च गन्धद्वारा महीसृष्टिरुक्ता भवति ॥ १४ ॥

**भूतानां नभआदीनां यद्यद् भाव्यं परात् परम् ।**
**तेषां परानुसंसर्गाद् यथासङ्ख्यं गुणान् विदुः ॥ १५ ॥**

**प्रकाशिका–** शब्दादीनामाकाशाद्यसाधारणगुणत्वभ्रमनिराकरणायाह ॥ भूतानामिति । भूतानां मध्ये यद्यत्परात्पूर्वस्मात्परं पश्चाद्भाव्यमुत्पाद्यं तेषां परानुसंसर्गात्पूर्वकारणानुषङ्गात् यथासंख्यं यथाक्रमं गुणान् शब्दादीनुत्तरोत्तरमधिकसंख्यान्विदुः । ज्ञानिन इति शेषः । तथाचाकाशे शब्दो वायौ शब्दस्पर्शौ तेजसि शब्दस्पर्शरूपाण्यंभसि शब्दस्पर्शरूपरसा मह्यां शब्दस्पर्शरूपरसगन्धा इति विदुरित्यर्थः । अत्र महदहंकारादीनां पृथिव्यंतानां प्रकृतिसंज्ञकानि तत्तत्सूक्ष्मरूपाण्येवोपादानानि । अत्रोक्तं गुणत्रयात्मकाव्यक्तमहदादिकं उपचायकमात्रमिति संप्रदायः ॥ १५ ॥

**एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ।**
**नानात्वात् स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ १६ ॥**

**तात्पर्यम्– कालमायांशलिङ्गिनः । तन्निमित्तशरीराः ।हिरण्यगर्भस्यैव कालाभिमानी जीवाभिमानीति द्विविधं रूपम् । 'कालजीवाभिमानेन रूपद्वन्द्वी चतुर्मुख' इति पाद्मे ॥ १६ ॥**

**प्रकाशिका–** ब्रह्माण्डसर्जनाय महदाद्यभिमानिदेवाः श्रीविष्णुस्तुतिं चक्रुरित्याह । एत इति । विष्णोः कला भिन्नांशाः । कालमायांशलिङ्गिन इत्येतदप्रतीत्या व्याख्याति ॥ कालेति । तन्निमित्तानि तत्कर्तृकाणि शरीराणि येषां ते तन्निमित्तशरीराः । नन्वेषां शरीराणां जीवाभिमानित्वेनांशशब्दवाच्यो हिरण्यगर्भः कर्ताऽस्तु । मायाशब्दवाच्या चित्प्रकृतिरपि कर्त्रीत्यस्तु । कालस्य तु जडत्वात्कथं कर्तृत्वमित्याशङ्कायां कालशब्देनापि तदभिमानी हिरण्यगर्भ एव विवक्षित इत्याशयेनाह ॥ हिरण्यगर्भस्यैवेति । द्विविधं रूपं कर्तृतयाऽत्र विवक्षितमिति शेषः । एवं हिरण्यगर्भस्य रूपद्वयसद्भावे प्रमाणमाह ॥ कालेति । तथाच कालस्तदभिमानी हिरण्यगर्भो माया चित्प्रकृतिरंशो जीवाभिमानिहिरण्यगर्भस्यापरं रूपमेतैः कृतानि लिङ्गानि शरीराणि येषां सन्तीति कालमायांशलिङ्गिन इति मूलं व्याख्येयमिति भावः । नानात्वाद्विश्लिष्टत्वात् । स्वक्रियायां ब्रह्माण्डोत्पादनरूपायामनीशाः ॥ १६ ॥

देवा ऊचुः–

**नताः स्म ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ।**
**यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ १७ ॥**

**प्रकाशिका–** प्रपन्नानां भक्त्या भजतामाध्यात्मिकादित्रिविधतापोपशमे आतपत्रं छत्रमिव स्थितम् । एतदेव विशदयति ॥ यन्मूलेति । यस्य पादारविन्दस्य मूलं तलं केत आश्रयो येषां ते तथा । अंजसा यतयः सम्यगिन्द्रियजयादिप्रयत्नवन्तो बहिर्दूरादुत्क्षिपंति परित्यजंति । यन्मूलकेता इति यत्पादारविन्दाश्रयत्वमुक्तं तत्तत्ज्ञानित्वमेव विवक्षितम् । अन्यथा तेन संसार-निवृत्तिकथनानुपपत्तेः ॥ १७ ॥

**ऋते यदस्मिन् भव ईश जीवास्तापत्रयेणाभिहता न शर्म ।**
**आत्मल्लँभन्ते भगवंस्तवाङ्घ्रिच्छायांशविद्यामत आश्रयेम ॥ १८ ॥**

**तात्पर्यम्– ब्रह्मविद्या हरेश्छाया तदंशो हि सुरेष्वपि । सर्वविद्याः श्रियः प्रोक्ताः प्रधानांशश्चतुर्मुख' इति ब्राह्मे ॥ १८ ॥**

**प्रकाशिका–** तत्ज्ञानस्य संसारनिवृत्त्यादिरूपमोक्षजनकं कुत इत्यपेक्षायां अन्वयव्यति-रेकाभ्यामेवेत्याहुः ॥ ऋत इति । अत्रांघ्रिच्छायांशविद्यामित्यस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ ब्रह्मविद्येति । अत्र हरिशब्देन तत्स्वरूपभूता विद्या लक्ष्यते । तथाच हरेर्हरिविद्यायाः छाया साक्षात्प्रतिबिम्बभूताया ब्रह्मविषयकविद्या तदंशस्तत्प्रतिबिम्बरूपांशः सुरेषु । अपिशब्दादृष्यादिषु च तिष्ठतीत्यर्थः । हि शब्दोऽत्र प्रामणप्रसिद्धिद्योतकः । तर्हि सा बिम्बरूपेण कुत्र तिष्ठतीत्यत उक्तम् । सर्वेति । सर्वविद्यानां देवादिविद्यानां बिम्बभूताः श्रियः प्रोक्ताः । आगमेष्विति शेषः । अवान्तरविशेषापेक्षया बहुवचनम् । सुरेषु तदंशाः किं साम्येन संन्ति नेत्याह ॥ प्रधानांश इति । चतुर्मुखे सरस्वत्याद्यपेक्षया प्रधानः श्रेष्ठो बहुतरोंऽशः प्रतिबिम्बरूपस्तिष्ठतीत्यर्थः । अनेने-तरेऽप्यंशास्तारतम्येन तिष्ठन्तीति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ हे ईश । जीवा अस्मदादयोऽस्मिन् भवे यद्याम् ऋते विनाऽऽत्मन् आत्मनि शर्म सुखं न लभन्ते । यस्यां च सत्यां लभन्त इत्यन्वयोऽपि ग्राह्यः । यत एवमन्वयव्यतिरेकौ स्तः । अतस्तां तवांघ्रिच्छायांशविद्याम् । अङ्घ्रिशब्देन तत्स्वरूपभूता विद्या लक्षणीया । तथाच तवांघ्रिस्वरूपभूतविद्यायाः छाया साक्षात्प्रतिबिम्बभूता । या रमायास्त्वद्विषयकविद्या तत्प्रतिबिम्बांशभूता या ब्रह्मविद्या तामेवास्मन्मोक्षार्थमाश्रयेम ॥ १८ ॥

**मार्गन्ति यत् ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते ।**
**यच्चाघमर्षो द्युसरिद्वरायाः परं पदं तीर्थपदः प्रपन्नाः ॥ १९ ॥**

**तात्पर्यम्–** द्युसरितो धरायाश्च ॥ १९ ॥

**प्रकाशिका–** भगवत्पादारविन्दज्ञानं मोक्षसाधनमित्युक्तं तज्ज्ञानसाधनं दर्शयति ॥ मार्गंतीति । ऋषयो ज्ञानिनो विविक्ते स्थित्वा तव मुखपद्ममेव नीडमावासस्थानं येषां ते तथा तैः छन्दःसुपर्णैर्वेदलक्षणपक्षिभिः । इदं वेदानां भगवतोऽनायासेनैव निर्गतत्वान्नाप्रामाण्यशङ्का तत्र कार्येति सूचनाय । यत्पदं मार्गयन्ति विचारयन्ति । यच्च यस्माच्च प्रपन्नानामघमर्षः पापनाशः स्यात् । यच्च द्युसरिद्वरायाः परमं पदमुत्पत्तिस्थानम् । अत एव तीर्थपदस्तीर्थपच्छब्दवाच्यस्य तव तत्पदं प्रपन्नाः । मनसेति शेषः । ध्यायन्तीति यावत् । अत एव ध्येया गुणा यच्चाघमर्षमित्यादिनोक्ताः । तथा चानेन श्रवणादिकं तज्ज्ञानसाधनमुक्तमिति ज्ञातव्यम् । अत्र द्युसरिद्वराया इत्यस्य षष्ठीसमासत्वप्रतीतिवारणाय विवक्षितं तात्पर्यं दर्शयति ॥ द्युसरित इति । तथा च द्युसरित्सहिता धरा द्युसरिद्वरा तस्या इति मध्यमपदलोपी समास इति भावः ॥ १९ ॥

**यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधार्य ।**
**ज्ञानेन वैराग्यबलेन धीरा व्रजन्ति यत् तेऽङ्घ्रिसरोजपीठम् ॥ २० ॥**

**प्रकाशिका–** मोक्षसाधने सहकार्यंतराणि दर्शयन्त आहुः ॥ यच्छ्रद्धयेति । श्रुतवत्या श्रवणपूर्विकया भक्त्या संमृज्यमाने संशोध्यमाने हृदयेऽवधार्य संनिधाप्य वैराग्यबलं यस्य तेन ज्ञानेन ॥ २० ॥

**विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते ।**
**व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ २१ ॥**

**प्रकाशिका–** न केवलं मोक्षार्थं त्वपादारविन्दं श्रयेम किं त्वैहिकभयपरिहारार्थमपीत्याहुः ॥ विश्वस्येति । स्वपुंसां भक्तानाम् ॥ २१ ॥

**यत् सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ।**
**पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत् ते भगवन् पदाब्जम् ॥ २२ ॥**

**प्रकाशिका–** नन्वेवं भगवज्ज्ञानमेव मोक्षजनकं तर्हि सर्वेऽपि तत्कस्मान्न सम्पादयन्तीत्यत आहुः ॥ यदिति । सानुबन्धे पुत्रादिपरिकरसहितेऽसत्यमङ्गले देहसहिते गेहे पुंसां पुर्यां देहे वसतोऽपि तव

यत्पदाम्बुजं दूरं साक्षात्कर्तुमशक्यं तत्ते पदाब्जं भजेम । अनेन वैराग्याभावात्सर्वे सम्पादयन्तीत्युक्तं भवति ॥ २२ ॥

**तं त्वामसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश ।**
**अथो न पश्यंत्युरुगाय नूनं यत् ते पदन्यासविलासलक्ष्म्याः ॥ २३**

**प्रकाशिका–** ननु निकटवर्तिनः पदार्थस्य दर्शने किं वैराग्येणेत्यत उक्तमुपपादय त्वामिति। तं त्वामन्तः स्थितम् । असत्स्वमङ्गलेषु विषयेषु वृत्तयो येषां तानि ते रक्षिभिरिन्द्रियैः पदन्यासविलासलक्ष्म्यास्तव पदन्यासो गमनं तस्य विलासो विभ्रमस्तस्य शोभा तस्याः सकाशात्पराहृतं बहिःकारितमन्तोंऽतःस्थग्रहणयोग्यं मनो येषां ते तथा । एतेऽथो तस्मादेव नूनं निश्चयेन तं त्वामन्तः स्थितं न पश्यन्ति । वैराग्याभावे बा मनःस्वविषयेषु नयन्ति । अतोंऽतःस्थितोऽपि न मनसा दृश्यत इति भावः ॥ २३ ॥

**पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।**
**वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा त्वेयुरकुण्ठधिष्ण्यम् ॥ २४**

**प्रकाशिका–** मार्गन्तीत्यादिना यच्छ्रवणादिरूपविचारभक्तिवैराग्यादिकं ज्ञाने प्राधान्ये मुक्तं तत्र । सर्वेषामधिकारिणामवश्यं वायुजयादियोगप्रधानानां श्रवणाद्यप्राधान्येऽपि मन त्वेन वायुजयादियोगेनैव शीघ्रं मुक्तेः प्रमाणप्रसिद्धत्वादित्याशङ्कायां तेषां मुक्तिर्न स त्वल्पैवेत्याशयेनाह ॥ पानेनेति । हे देव । ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्र भक्त्या विशदाशया निर्मलांतःकरणा ये ते वैराग्यसारं वैराग्यफलं यथा यथार्थं बोधम प्रतिलभ्य प्राप्यांजसाऽनल्पतयाकुण्ठधिष्ण्यमप्रतिहतमन्दिरस्थानीयं त्वामापुः प्रापुः ॥ २४

**तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।**
**त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्नतु सेवया ते ॥ २५**

**तात्पर्यम्– 'वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथे'ति दत्तात्रेययोगे ॥ २५ ॥**

**प्रकाशिका–** तथाशब्दः समुच्चये । परे त्वन्ये साधकाः । तुशब्दोक्तमेव विशेषं आत्मसमाधीति । आत्मनि परमात्मनि समाधिश्चित्तैकाग्र्यं योगो वायुजयादिस्तद्बलेन ब रजेयां प्रकृतिं दुर्गां जित्वा वशीकृत्य धीरा धीषु रममाणा अपरोक्षज्ञानिनः पुरुषं पूर्ण विशंत्येव । न तु त इवांजसा । न केवलमेषामञ्जसा मुक्त्यभावः किंतु साधना

वायुजयादिना श्रमश्च स्यादित्याह ॥ तेषामिति । नायं श्रमः पूर्वेषामित्याह । ते सेवया श्रवणादिरूपया ये त्वां विशंति तेषां श्रमो वायुजयादिनिमित्तो न तु नैव । अतः श्रवणादि-प्रधानानामेव मुक्तिरनल्पेति तदर्थं प्राधान्येन श्रवणादिकमेव सम्पाद्यमिति भावः । अत्र प्रकृतिं जित्वेति प्रकृतिजयो योगशब्देन वायुजयश्च कथ्यते स न प्रसिद्धः सम्भवति । अतोऽत्र विवक्षितजयशब्दार्थं प्रमाणेनैव दर्शयति । वायोश्चेति । प्रकृतेश्चित्प्रकृतेर्भक्त्या प्रसादोन्मुखीकरण-मित्यर्थः । जयशब्दार्थ इत्यर्थः । अन्यथा बलात्कारेण वशीकरणादिरूपो नेत्यर्थः ॥ २५ ॥

**तत् ते वयं लोकसिसृक्षयाऽद्य त्वया विसृष्टास्त्रिभिरात्मभिर्ये ।**
**सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत् प्रतिकर्तवे ते ॥ २६ ॥**

**तात्पर्यम्–** त्रिभिरात्मभिः कालमायांशैः ॥ २६ ॥

**प्रकाशिका–** इदानीं स्वाभीष्टं प्रार्थयते चतुर्भिः । अत्र त्रिभिरात्मभिरित्यस्य विवक्षितमर्थं दर्शयति ॥ त्रिभिरिति । पूर्वं तेषामेव निमित्ततया प्रकृतत्वादिति भावः । सत्प्रमुखा इत्यस्यापि प्रकृतसङ्गतमर्थं दर्शयति ॥ सत्प्रमुखा इति । महदादयो महदाद्यभिमानिनः । सच्छब्दस्य कार्यवाचित्वेन महत आदिकार्यत्वान्मुख्यतया तदेवात्र विवक्षितमिति भावः । ततश्चायं श्लोक-चतुष्टयार्थः ॥ यस्मात्त्वमेवं मोक्षादिसर्वपुरुषार्थप्रदस्तस्मात्त्वया लोकसिसृक्षया त्रिभिरात्मभिः कालमायांशरूपैश्चेतनैर्विसृटा ये ते वयमद्येदानीं सर्वे वियुक्ता विश्लिष्टा अत एव स्वविहारतन्त्रं स्वस्य तव क्रीडोपकरणं यद्ब्रह्माण्डं तत्प्रतिकर्तवे प्रतिकर्तुं न शक्नुमः । अतस्त्वं नश्चक्षुः परिदेहीति चतुर्थेनान्वयः ॥ २६ ॥

**यावद् बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।**
**तथोभयेषां त इमे ह लोका बलिं हरन्तोऽन्नमदन्त्यनीशाः ॥ २७ ॥**

**प्रकाशिका–** ब्रह्माण्डनिर्माणानन्तरमपि कर्तव्यज्ञानं प्रार्थयन्ते ॥ यावदिति । यावद्यावता ज्ञानेन बलिं पूजाम् । हे अज विष्णो । काले स्वावसरे यत्र यस्मिन् देशे यथा येन प्रकारेण वयं चान्नमदाम । अनीशा अस्मत्प्रेरणामन्तरेण प्रवृत्तावसमर्थास्त इमे लोका जना यथा येन प्रकारेणोभयेषामस्माकं युष्माकं च बलिं हरन्तः सन्तोऽन्नमदन्ति तावत् । तथा चक्षुर्मानं परिदेहीत्यन्वयः ॥ २७ ॥

**त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।**
**त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः ॥ २८ ॥**

**प्रकाशिका–** कुत एवं मां प्रत्येव प्रार्थनमित्यत आहुः ॥ त्वं न इति । त्वं सान्वयानां सन्ततीनां सुराणां न आद्यो जनकोऽसि । जनकत्वे हेतुः पुराणः पुरातनः पुरुषः पूर्णषड्गुण इति । न परिणामितया जनक इत्याहुः ॥ कूटस्थ इति । निर्विकार इत्यर्थः । तर्हि कथं जनक इत्याशङ्कां परिहरन्तः स्वशक्तिं च विज्ञापयन्तो ब्रह्माण्डनिर्माणोपयुक्तं ज्ञानं प्रार्थयन्ते ॥ त्वं देवेति । गुणकर्मयोनौ गुणाः सत्त्वादयः कर्माण्यदृष्टान्येतल्लक्षणा योनिर्जगत्कारणं सहकारिभूतं यस्याः सा तथोक्ता तस्यामजायां प्रकृतिशब्दवाच्यायां शक्त्यां भार्यायारेत आदधे । अनेन पितृवन्निमित्ततयैव जनकत्वमित्युक्तं भवति ।॥ २८ ॥

**ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते ।**
**त्वं नः स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण ॥ २९ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे षष्ठोऽध्यायः ।**

**तात्पर्यम्– सत्प्रमुखा महदादयः ॥ २९ ॥ इति तृतीयतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥**

**प्रकाशिका–** ततो रेतसः सत्प्रमुखा महदादितत्त्वाभिमानिनो यदर्थे यस्य कार्यस्यार्थे बभूविम । हे आत्मन् स्वामिन् । तत्किं ते कार्यं करवाम न किमपि । तदुपयुक्तज्ञानाद्यभावादिति भावः । अतो यस्य तवानुग्रहेण क्रियार्थे ब्रह्माण्डनिर्माणाय शक्ताः स्याम । स त्वं नोऽस्माकं चक्षुस्तदुपयुक्तं ज्ञानं परिदेहि ॥ २९ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ३-६ ॥

## अथ सप्तमोऽध्यायः ।

**ऋषिरुवाच–**

**इति तासां स्वशक्तीनामसतीनां समेत्य सः ।**
**प्रसुप्तलोकतन्त्राणां निशम्य गिरमीश्वरः ॥ १ ॥**

**तात्पर्यम्– 'शक्यत्वाच्छक्तयो विष्णोर्महदाद्या रमा तथा । स्वरूपशक्तिः शक्तित्वान्मुख्यशक्तिर्हि सा यत' इति ब्रह्मतर्के ॥ समेत्यासतीनां असमेतानां प्रसुप्तलोकतन्त्राणाम् अनाविर्भूतलोकसृष्टिशक्तीनाम् । 'तनुतेयेन कार्यं यत्तन्त्रं साधनमुच्यते । कारणानां स्वशक्तिर्वा प्रधानं साधनं यत' इति ब्रह्मतर्के ॥ १ ॥**

**प्रकाशिका–** स्तुत्या प्रसन्नस्य हरेः कृत्यं दर्शयति ।। इतीति । अत्र स्वशक्तीनामित्येतच्छक्तिपदं महदादिवाचकमेव । अन्यथाऽसङ्गतिप्रसङ्गात् । अतस्तत्र शक्तिशब्दप्रवृत्तौ निमित्तं प्रमाणेनैव दर्शयति । शक्यत्वादिति । महदाद्यास्तथा रमा इत्येताः शक्तयः शक्तिशब्दवाच्याः । शक्तित्वादिति भावव्युत्पत्तिप्रदर्शनम् । हि शब्दः प्रमाणप्रसिद्धिद्योतकः । यतः सा विष्णुस्वरूपशक्तिः प्रधानशक्तिः अतस्तत्रान्यविषयशक्तित्वमसम्भावितमिति भावः । असतीनां समेत्येत्यनयोर्यथास्थितान्वयभ्रान्तिं वारयति ।। समेत्येति । ततो लब्धमर्थं दर्शयति ।। असमेतानामिति । विश्लिष्टानामित्यर्थः । प्रसुप्तलोकतन्त्राणामित्यस्य प्रकृतसङ्गतमर्थं दर्शयति ।। प्रसुप्तेति । प्रसुप्तेत्यस्यार्थः ।। अनाविर्भूतेति । लोकसृष्टीत्यनेन लोकपदं सृष्ट्युपलक्षणमिति सूचयति । शक्तीति तन्त्रशब्दार्थकथनम् । तथाच प्रसुप्तान्यनाविर्भूतानि लोकसृष्टिजनकानि तन्त्राणि शक्तयो यासां तास्तथोक्तास्तासामिति मूलार्थ इति भावः । तन्त्रशब्दस्य शक्तिवाचकत्वे निमित्तं प्रमाणेनैव दर्शयति ।। तनुत इति । यद्यस्मात्स्व-शक्तिः स्वरूपभूताशक्तिरेव तन्त्रमुच्यत इत्यर्थः । ननूक्तनिर्वचनेन सर्वकारणानां तन्त्रशब्दवाच्य-त्वसम्भवात्कथं शक्तेरेव तन्त्रशब्दवाच्यत्वमित्यत आह ।। प्रधानमिति । शक्त्यभावेनैव रासभादी-नामसाधनत्वं दण्डादीनां तु तत्सद्भावेनैव साधनत्वमित्युपजीव्यत्वाच्छक्तिः प्रधानसाधनमत उक्तनिर्वचनेन प्रधानस्यैव ग्राह्यत्वेन शक्तेरेव तन्त्र शब्दमुख्यवाच्यत्वमिति भावः ।। १ ।।

**कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ।**
**त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ।। २ ।।**

**तात्पर्यम्– 'शब्दाद्या नभ आद्याश्च मनोयुक्तेन्द्रियाणि च । अहङ्कारो महांश्चैव त्रयोविंशतिको गणः ।। देवतेन्द्रिययोरैक्यान्न पृथग्गणनं तयोः । पृकृतिस्तु चतुर्विंशा पञ्चविंशो हरिः स्वयम् ।। यदा जडांशस्वीकारो जीवस्तत्पञ्चविंशकः । षड्विंशको महाविष्णुः श्रिया वा सप्तविंशक' इति तत्त्वनिर्णये ।। 'त्रयोविंशति तत्त्वानि प्राविशद्रमया सह ।। कालाख्यया स्वयं विष्णुः शक्यत्वाच्छक्तिरूपया ।। २ ।।**

**प्रकाशिका–** त्रयोविंशतितत्त्वानामित्यत्र विवक्षितं त्रयोविंशतितत्त्वं प्रमाणेनैव दर्शयति ।। शब्दाद्या इति ।। शब्दाद्याः पञ्च नभ आद्याः पञ्च मनोयुक्तेन्द्रियाण्येकादश अहंकार एको महांश्चैक इत्येवं त्रयोविंशतिको गण इत्यर्थः । ननु पूर्वमुक्तानां वैकारिकदेवानामसङ्ग्रहान्न्यूनतेत्यत आह ।। देवतेन्द्रिययोरिति । तथा चेन्द्रियग्रहणेनैव देवा अपि गृहीता इति भावः । अनेनैव न्यायेन महदादिग्रहणेन तदभिमानिनामपि ग्रहणं द्रष्टव्यम् । नन्वेवमपि प्रकृतेर्हरेश्चासंग्रहान्न्यूनतेत्यत आह ।। प्रकृतिरिति । प्रकृतिश्चेतनाचेतनरूपा तुशब्दः सकलकार्यजनकत्वरूपविशेषसूचकः । स्वं

स्वयमेवात्राभिमन्यमानो जडो नास्तीति भावः । तथाच मूले उरुक्रमशब्देन हरेः कर्तृतया मायाशब्देनोभयविधप्रकृतेः सहकारितया पृथगुक्तत्वान्न तयोः कर्मतयोक्तत्रयोविंशतिगणान्तर्भाव इति भावः । नन्वेवमन्यत्र कचित्तत्त्वानां षड्विंशतिसंख्यायाः कचित्सप्तविंशतिसंख्यायाश्चोक्तत्वात्तद्विरोध इत्यतस्तस्याभिप्रायमाह ॥ यदेति । जडांशस्वीकारः प्रकृत्यादिजडांशमात्रस्वीकारः । जीवोऽभिमानी चेतनः । तत्तदा जीवशब्देनाभिमानिजीवमात्रग्रहणे त्वाह ॥ श्रिया वेति । तदा प्रकृत्यभिमानिनी श्रीः पृथगेव विवक्षितेति भावः ॥ इदानीं समग्रश्लोकं प्रमाणेनैव विवृणोति ॥ त्रयोविंशतीति । तत्त्वानि चेतनाचेतनरूपाणि । देवीं बिभ्रदित्यस्य तात्पर्यमाह ॥ रमया सहेति । कालसंज्ञामित्यस्य तात्पर्यम् । कालाख्ययेति । शक्तिमित्यस्यार्थः ॥ शक्यत्वादिति ॥ २ ॥

**सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् ।**
**भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥**

**तात्पर्यम्– सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः । तानि भिन्नानि तत्त्वानि योजयामास चांशत' इति च ॥ ३ ॥**

**प्रकाशिका–** सोऽनुप्रविष्ट इतिश्लेकतात्पर्यमाह ॥ सर्वेति । भगवानित्यस्य तात्पर्यम् । स्वसामर्थ्येनेति । भिन्नानि विश्लिष्टान्यंशतोंऽशानुद्धृत्य ॥ ततश्चायं श्लोकार्थः ॥ स्वशक्तीनां महदादीनां समेत्यासतीनामसमेतानां प्रसुप्तलोकतन्त्राणां अनाविर्भूतलोकसृष्टिजनकशक्तीनां देवीं रमां बिभ्रत् । तया सहेति यावत् । ग्रन्थान्तरविरोधपरिहाराय कालसंज्ञामित्युक्तम् । शक्यत्वाच्छक्ति-शब्दवाच्यम् । इदमपि ग्रन्थान्तरविरोधपरिहारायैवेति ज्ञातव्यम् । उरुक्रम उत्कृष्टपराक्रम इति युगपदनेकप्रवेशे सामर्थ्यं दर्शयति ॥ चेष्टारूपेण चेष्टाप्रदरूपेण भिन्नं विश्लिष्टं संयोजयामास । अंशानुद्धृत्येति शेषः । सुप्तं कार्योन्मुखं कर्म तेषां क्रियाशक्तिमदृष्टं वा प्रबोधयन् कार्योन्मुखं कुर्वन्निति ॥ ३ ॥

**प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ।**
**प्रेरितोऽजनयत् स्वाभिर्मात्राभिरधि पूरुषम् ॥ ४ ॥**

**तात्पर्यम्– मात्राभिरंशैः ॥ ४ ॥**

**प्रकाशिका–** प्रबुद्धं कार्योन्मुखीकृतं कर्म क्रियाशक्तिरदृष्टं वा यस्य स तथा । दैवेनेश्वरेण । मात्राभिरित्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ मात्राभिरिति । अधिपुरुषं पुरुषशब्दवाच्यं विराजमधिकृत्य वर्तमानं ब्रह्माण्डम् ॥ ४ ॥

**परेण विशता स्वस्मिन् मात्रया विश्वसृग् गणः ।**
**चुक्षोभान्योन्यमासाद्य यस्मिन् लोकश्चराचरः ॥ ५ ॥**

**प्रकाशिका–** जननप्रकारमेवाह ॥ परेणेति । परेण परमात्मना विश्वसृजां तत्त्वानां गणः । मात्रयांऽशेनान्योन्यमासाद्य विष्णुवीर्यरूपेण परिणामं प्राप्य चुक्षोभ । ब्रह्माण्डाकारेण परिणत इत्यर्थः । यस्मिन् ब्रह्माण्डे ॥ ५ ॥

**हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ।**
**आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥**

**प्रकाशिका–** हिरण्मयो हिरण्मयब्रह्माण्डान्तराविर्भूतः स पुरुषः पुरुषनामांऽडकोशे विद्यमानास्वप्सु सर्वैः सत्त्वैर्जीवैरुपबृंहितः ॥ ६ ॥

**स वै विश्वसृजां गर्भो दैवकर्मात्मशक्तिमान् ।**
**विबभाजाऽत्मनाऽत्मानमेकधा दशधा त्रिधा ॥ ७ ॥**

**तात्पर्यम्– 'ईश्वरो दैवमुद्दिष्टं सर्वस्यापि प्रभुत्वत' इति च । आत्मशक्तिः प्रकृतिः ॥ ७ ॥**

**प्रकाशिका–** स ब्रह्माण्डान्तःस्थितः । वैशब्दः प्रमाणान्तरप्रसिद्धिद्योतकः । विश्वसृजां तत्त्वानां गर्भो भगवान् उदरगतमहदादितत्त्वांश इत्यर्थः । दैवकर्मेत्यत्र विवक्षितं दैवशब्दार्थं प्रमाणेनैव दर्शयति ॥ ईश्वर इति । तर्ह्यात्मशक्तिरित्येतत्पुनरुक्तमित्यतः तत्रापि विवक्षितमर्थमाह ॥ आत्मशक्तिरिति । तथा च दैवशक्तिः प्रभुत्वं कर्मशक्तिः क्रियाशक्तिरात्मशक्तिः स्वभार्यारूपा प्रकृतिरेतत्त्रितययुक्त इत्यर्थः । विबभाजविभागं कृतवान् । आत्मना स्वेच्छयैवात्मानं स्वात्मानं ब्रह्मदेहे । एकधा हृदयस्थरूपेण । दशधा दशविधप्राणानियामकतया । त्रिधाऽध्यात्मादिनियामकतया ॥ ७ ॥

**एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ।**
**आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥**

**तात्पर्यम्– पुरुषेणात्मभूतेनेति योऽण्डमसृजत्स एष इत्युक्तः । 'आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः । असृजत्स महत्तत्त्वं स एवाण्डं समाविशत् ॥ ८ ॥**

**प्रकाशिका–** ननु हिरण्मयः स पुरुष इति ब्रह्माण्डान्तराविर्भूतस्य पुरुषस्य पुरुषेणात्मभूतेनेति यो महत्तत्त्वजनकः पुरुष उक्तस्तस्माद्भेद एव स्थानभेदात्कार्यभेदाच्चेत्याशंकायामाह ॥ एष हीति ।

अनेन कथमुक्तशङ्कापरिहार इत्यतोऽस्याभिप्रायमाह ॥ पुरुषेणेति । पुरुषेणात्मभूतेनेति पूर्वाध्याये उक्तो यः पुरुषशब्दवाच्यो वासुदेवो महदादिसृष्टिद्वारांऽडमसृजत् । स एव एष इत्यनेनोक्तः परामृष्टः। हिरण्मयः स पुरुष इत्युक्तो ब्रह्माण्डान्तराविर्भूतः पुरुष इत्यर्थः । अतो न तयोर्भेदः शङ्कनीयः । स्थानभेदादिकं तु विशेषशक्त्योपपादनीयमिति भावः ॥ ततश्चायं मूलार्थः ॥ योऽशेषसत्त्वानां ब्रह्मादीनामात्माऽदानादिकर्ता परमात्मनोंऽश आद्योऽवतारः पुरुषेणात्मभूतेनेति पूर्वमुक्तः । यत्र येन भूतग्रामो महदाद्यण्डपर्यन्ततत्त्वसमूहो विशेषेण भाव्यत उत्पाद्यत स एवैष हिरण्मयः स पुरुष इत्यादिनोक्तोऽतो न तयोर्भेदः शङ्कनीय इति । अनेन हिरण्मयः स पुरुष इत्यादिनोक्तः पुरुषो द्वितीयोऽवतार इति सूचयति । अत्र हिशब्दसूचितं प्रमाणं दर्शयति ॥ आद्योऽवतार इति । तु शब्दो विष्णोः प्रलयकालवृत्तित्वादिविशेषसूचकः । अण्डं समाविशदण्डान्तराविर्भूतपुरुषशब्दवाच्योऽपि स एव नान्य इत्यर्थः । तथा चायं द्वितीयोऽवतार इति भावः । स एव ब्रह्माण्डान्तो विराड्देहं सृष्ट्वा तत्प्रेरणायान्तराविर्भूत इत्याशयेनाह ॥ स इति । ब्रह्मणो विराजः । हृदिस्थत्वादित्यनेन हृदि अयत इति हृदयशब्दमिति निर्वचनं सूचयति । स्थ शब्दात्पुरुष इति कीर्त्यत । इत्यपि ग्राह्यम् । तथा चायं तृतीयोऽवतार इति भावः । तथोक्तमन्यत्र । प्रथमं महतः सृष्टं द्वितीयं त्वण्डसंस्थितम् । तृतीयं देहिनां देह इति । अनेनोत्तरश्लोके एकधा हृदयेन चेति वक्ष्यमाणहृदयशब्दार्थो दर्शित इति ज्ञातव्यम् ॥ ८ ॥

**साध्यात्मं साधिदैवं च साधिभूतमिति त्रिधा ।**
**विराट्प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥**

**तात्पर्यम्– स ब्रह्मणो हृदिस्थत्वाद्धृदयं चेति कीर्त्यत' इति च । 'प्राणादिपञ्चकं चैव तथा नागादिपञ्चकम् । सनागकूर्मकृकलदेवदत्तधनञ्जयाः । एवं तु दशधा प्राण अध्यात्मादित्रिधाखिला' इति च व्योमसंहितायाम् ॥ ९ ॥**

**प्रकाशिका–** एकधा दशधा त्रिधेत्युक्तं विवृणोति । साध्यात्ममिति । त्रैविध्यं सर्वदैवसहितस्य परमात्मनो दशविधत्वं मुख्यप्राणतत्पुत्रसहितस्यैकविधत्वं केवलस्यैवेति । संख्यातारतम्यमभिप्रेत्योक्तक्रमवैपरीत्येन विवरणम् । पूर्वमेकधेत्यादिनिर्देशस्तु हर्यादीनां स्वरूपतारतम्यमभिप्रेत्येति ध्येयम् । अत्रैकधा हृदयेनेत्यस्य पूर्वोदाहृतप्रमाणेन व्याख्यातत्वात् तद्विहाय प्राणो दशविध इत्यस्य साध्यात्ममिति पूर्वार्धस्य च व्याख्यानं प्रमाणेनैव दर्शयति ॥ प्राणादीति । प्राणापानव्यानोदानसमानसंज्ञानां पञ्चानां वर्गः प्राणादिपञ्चकम् । नागकूर्मकृकलदेवदत्तधनञ्जयसंज्ञानां पञ्चानां वर्गो नागादिपञ्चकम् । प्राण एवैवं दशधेत्येवकारान्वयः । तुशब्दः प्राणशब्दवाच्यमुख्यत्व-

रूपविशेषसूचकः। अध्यात्मादिभेदेन त्रिधा येऽत्रोक्तास्तेऽखिलाः सर्वेऽपि तत्त्वाभिमानिनो विवक्षिता इत्यर्थः ॥ ततश्चायं श्लोकार्थः। विशेषेण राजत इति विराट् ब्रह्मदेहान्तर्गतः पुरुषः साध्यात्ममध्यात्मदेवैः सहितं तन्नियामकं रूपं प्रथमम्। साधिदैवमधिदैवगतदेवनियामकं द्वितीयम्। साधिभूतमधिभूतदेवनियामकं तृतीयमिति। अनेनाभिप्रायेण त्रिधा उक्त इति शेषः। प्राणो दशविधप्राणनियामकतया दशरूपो दशविध उक्तः। हृदयेन हृदयगतेन हृदयनियामकेन रूपेण। तद्विवक्षयेति यावत्। एकधोक्त इत्यर्थः ॥ ९ ॥

**स्मरन् विश्वसृजामीशो विज्ञापितमधोक्षजः।**
**विराजमतपत् स्वेन तेजसैषां विवृद्धये ॥ १० ॥**

**प्रकाशिका–** अध्यात्मादिभेदमेव प्रपञ्चयितुमाह ॥ स्मरन्निति। विज्ञापितं यावद्बलिं त इत्यादिकं विराजं ब्रह्मशरीरमतपत् एवं कर्तव्यमित्यालोचितवान्। स्वेन स्वरूपभूतेन तेजसा ज्ञानेनैषामग्न्यादि-देवानां विवृद्धये विशेषेण व्यापाराय ॥ १० ॥

**अथ तस्याभितप्तस्य कतिचायतनानि ह।**
**निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥**

**प्रकाशिका–** अभितप्तस्यालोचितस्य शरीरस्य सकाशाद्देवानामग्न्यादीनामायतनान्याश्रयभूता-नीन्द्रियस्थानानि निरभिद्यन्तोत्पन्नानि तानि मे मत्तो गदतो वदतः ॥ ११ ॥

**तस्याग्निरास्यं निर्भिण्णं लोकपालोऽविशत् पदम्।**
**वाचा स्वांशेन वक्तव्यं ययासौ प्रतिपद्यते ॥ १२ ॥**

**प्रकाशिका–** एवं सामान्यत उक्त्वा विशेषतोऽप्याह ॥ तस्याग्निरित्यादिना। तस्यालोचनं कुर्वतो हरेः सकाशात्। आस्यं मुखाख्यं स्थानं निर्भिन्नमुत्पन्नम्। तत्पदं स्थानमधिदैवं लोकपा-लोऽग्निरग्निनामा देवो वाचा वागिन्द्रियेण सह वाचा वाङ्नामकेन स्वांशेन स्वरूपभूतांशेन तदिन्द्रियाभिमानिरूपेणाविशत्। यया वाचाऽसौ विराट् वक्तव्यं व्यवहर्तव्यं शब्दं प्रतिपाद्यते प्राप्नोति। व्यवहरतीति यावत्। एवमेवोत्तरत्र व्याख्यानं द्रष्टव्यम्। अग्न्यादिकं प्रथमान्तनि-र्दिष्टमधिदैवं यद्वागिन्द्रियं तदभिमानिरूपं च तदध्यात्मम्। यच्च प्रतिपत्तव्यतयोक्तं शब्दादि तदधिभूतमिति ज्ञातव्यम् ॥ १२ ॥

**निर्भिण्णं तालु वरुणो लोकपालोऽविशद्धरेः।**
**जिह्वयांशेन च रसान् ययाऽसौ प्रतिपद्यते ॥ १३ ॥**

**प्रकाशिका–** तालु जिह्वामूलम् ॥ १३ ॥

**निर्भिण्णे अश्विनौ नासे विष्णोराविशतां पदम् ।**
**घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥**

**प्रकाशिका–** नासे गोलके ॥ १४ ॥

**निर्भिण्णे अक्षिणी त्वष्टा लोकपालोऽविशत् प्रभोः ।**
**चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥ १५ ॥**

**प्रकाशिका–** अक्षिणी गोलके । त्वष्टा सूर्यः ॥ १५ ॥

**निर्भिण्णान्यथ चर्माणि लोकपालोऽनिलोऽविशत् ।**
**प्राणोनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥ १६ ॥**

**तात्पर्यम्– 'प्राणः प्रथमजो यस्तु प्रधानो वायुरीरितः । त्वगात्माद्यास्तु तत्पुत्रा द्विधाभूतमुदाहृतमि'ति तत्त्वनिर्णये ॥ १६ ॥**

**प्रकाशिका–** चर्माणि त्वगिन्द्रियस्थानानि प्राणेन त्वगिन्द्रियेण सह तन्नामकेन स्वांशेन तदिन्द्रियाभिमानिरूपेणेत्यर्थः । अत्र त्वगभिमानित्वेनोक्तः पूर्वं दशविधत्वेनोक्तश्च प्राण एक एवेति प्रतीतिं प्रमाणेनैव परिहरति ॥ प्राण इति । तुशब्दोऽवधारणे । स प्रधानो वायुरेवेति । इत्यन्वयः । त्वगात्मा त्वगिन्द्रियाभिमानी प्राण आद्यो येषां ते त्वगात्माद्याः । त्वगभिमानिप्राणः स्पर्शाद्यभिमानिनोऽपानादय इत्यर्थः । तुशब्दोऽवधारणे बहिस्तत्पुत्रा एव प्रधानवायुपुत्रा एवेत्यर्थः । तथा च यो बहिर्भूतवायोः प्रधानाभिमानी मुख्यवायुः स एव प्रथमजः प्राणः पूर्वं दशविधतयोक्तः । यस्त्वमुख्यस्तदभिमानी प्रधानवायुपुत्रः स एव च त्वगभिमानिप्राणोऽत्र विवक्षित इति भावः ॥ १६ ॥

**कर्णावस्य विनिर्भिण्णौ धिष्ण्यं स्वं विविशुर्दिशः ।**
**श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥**

**प्रकाशिका–** दिशो यममित्रावरुणकुबेराः । यमश्च मित्रावरुणकुबेरश्च दिगीश्वरा इत्यैतरेय भाष्योक्तेः । सिद्धिं ज्ञानम् ॥ १७ ॥

**त्वचमस्य विनिर्भिण्णां विविशुर्धिष्ण्यमोषधीः ।**
**अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ १८ ॥**

**प्रकाशिका–** त्वगिन्द्रियस्याभिमान्यन्तरं विषयान्तरं च दर्शयति ॥ त्वचमस्येति । त्वचं चर्म । ओषधीरोषधयः । अधिदैवमोषधिदेवताः पारिजाताद्या इत्यर्थः । रोमभिरिति । रोमनामकत्वेन त्वगिन्द्रियेणेत्यर्थः । अंशेनेति । रोमनामकेणैव त्वगिन्द्रियाभिमानिरूपेणैवेत्यर्थः । कण्डूं तल्लक्षणं विषयम् ॥ १८ ॥

**मेढ्रं तस्य विनिर्भिण्णं स्वधिष्ण्यं क उपाविशत् ।**
**रेतसांशेन येनासावानन्दं प्रतिपद्यते ॥ १९ ॥**

**प्रकाशिका–** मेढ्रं गुह्यस्थानम् । को दक्षप्रजापतिः । रेतसा गुह्येन्द्रियेण सह तन्नामकेन दक्षेणानन्दं मैथुनसुखम् ॥ १९ ॥

**गुदं पुंसो विनिर्भिण्णं मित्रो लोकेश आविशत् ।**
**पायुनांशेन येनासौ विसर्गं प्रतिपद्यते ॥ २० ॥**

**प्रकाशिका–** पुंसः पुरुषनामकाद्धरेर्विसर्गं मलोत्सर्गम् ॥ २० ॥

**हस्तावस्य विनिर्भिण्णाविन्द्रः स्वर्पतिराविशत् ।**
**वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते ॥ २१ ॥**

**प्रकाशिका–** स्वर्पतिः स्वर्गस्य पतिः । वार्तया, हस्तेन्द्रियेण पुरुषो विराड्वृत्तिमादानादिरूपां क्रियाम् ॥ २१ ॥

**पादावस्य विनिर्भिण्णौ लोकेशो विष्णुराविशत् ।**
**गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते ॥ २२ ॥**

**प्रकाशिका–** विष्णुरुपेन्द्रः । अत्र पाददेवो जयन्तो विष्णुस्तु तदाश्रयतयैवोक्तो न तत्त्वाभि-मानितयेत्यनुसन्धेयम् । गत्या गतिसाधनपादरूपेन्द्रियेण प्राप्यं गम्यं प्रपद्यते गमनरूपक्रियां करोतीत्यर्थः ॥ २२ ॥

**हृदयं चास्य निर्भिण्णं चन्द्रमा धिष्ण्यमाविशत् ।**
**मनसांशेन येनासौ विक्रियां प्रतिपद्यते ॥ २३ ॥**

**प्रकाशिका–** हृदयं मनसो निवासस्थानं मनसेन्द्रियेण विक्रियां सङ्कल्पविकल्परूपाम् ॥ २३ ॥

आत्मानं चास्य निर्भिण्णं वाचस्पतिरुपाविशत् ।
बुद्ध्या स्वांशेन येनासौ निश्चयं प्रतिपद्यते ॥ २४ ॥

अहं चास्य विनिर्भिण्णमभिमानोऽविशत् पदम् ।
कर्त्रा सवांशेन येनासौ कर्तव्य प्रतिपद्यते ॥ २५ ॥

सत्त्वं चास्य विनिर्भिण्णं महान् धिष्ण्यमुपाविशत् ।
चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २६ ॥

**तात्पर्यम्– 'अहं सत्वमि'ति द्वेधा ब्रह्मनाड्या अवान्तरम् । कर्तृनामा ह्यहङ्कारस्त्वहंनाड्यां व्यवस्थितः । तत्त्वनाड्यास्तथा चित्तमभिमानो हरस्तथा । अहंनाड्यां सत्वनाड्यां ब्रह्मा चैव व्यवस्थितः । 'आत्मनाड्यां तथा बुद्धिस्तत्रस्थश्च बृहस्पति'रिति ॥ २६ ॥**

**प्रकाशिका–** आत्मानं चेत्यादिश्लोकत्रयोक्तं गोलकेन्द्रियाभिमानिनां स्वरूपं प्रमाणेनैव दर्शयति ॥ अहंसत्वमिति । अवान्तरं गोलकतया विवक्षितमिति शेषः । अनेनाहं चास्येत्यत्राहंसत्त्वशब्दयोरर्थ उक्त इति ज्ञातव्यम् । कर्त्रेत्यस्य तात्पर्यम् । कर्तृनामा त्विति । कर्तत्वाभिमतिजनकत्वात्कर्तृनामाऽहंकारः । तुशब्दः प्रसिद्धाहंकारतत्त्वभिन्नत्वरूपविशेषार्थः । तथा चायमहंकारो मनः प्रभेदरूपेन्द्रियमित्यर्थः । चित्तेनेत्यस्य तात्पर्यम् तत्त्वनाड्यामिति । चित्तं मनःप्रभेदरूपेन्द्रियम् । उभयत्राभिमानिनौ वक्तुं तावदभिमान इत्येतदनूद्य व्याख्याति ॥ अभिमान इति । अहंकाराभिमानित्वादिति भावः । तथाशब्दः समुच्चये । अहं नाड्यां व्यवस्थित इत्यर्थः । इदानीं महानित्यस्य तात्पर्यं दर्शयन्नाह ॥ सत्त्वनाड्यामिति । सत्त्वनाड्यामेवेति सम्बन्धः । चशब्दः पूर्वोक्तेन्द्रियसमुच्चयार्थः । आत्मानं चेत्यस्य तात्पर्यम् ॥ आत्मनाड्यामिति । बुद्ध्येत्यस्य तात्पर्यम् ॥ बुद्धिरिति । बुद्धिर्मनः प्रभेदरूपमिन्द्रियम् । तत्रस्थ आत्मनाडीस्थः । तथाचशब्दौ परस्परसमुच्चये । वाचस्पतिशब्दव्याख्यानम् । बृहस्पतिरिति । अत्राहं सत्त्वनाड्योर्ब्रह्मनाडीप्रभेदत्वरूपत्वज्ञापनाय क्रमोल्लङ्घनमिति ज्ञेयम् । ततश्चायं श्लोकार्थः । आत्मानमात्मनामकनाडीविशेषं वाचस्पतिर्बृहस्पतिः । बुद्ध्या बुद्धिनामकेन मनःप्रभेदरूपेन्द्रियेण स्वांशेन तन्नामकेन तदिन्द्रियाभिमानिरूपेण । निश्चयमित्थमेवेत्यवधारणरूपम् ज्ञानम् । अहमहंनामकनाडीविशेषम् । अभिमानाहंकारपदवाच्यो रुद्रः । कर्त्रा । अहंकारनामकमनः प्रभेदरूपेन्द्रियेण कर्तव्यं प्रतिपद्यते । इदं कर्तव्यमिति जानातीत्यर्थः । सत्त्वं सत्त्वनामकनाडीविशेषम् । महान्महत्तत्त्वाभिमानी ब्रह्मधिष्ण्यं स्थानं चित्तेन चित्तनामकमनःप्रभेदरूपेन्द्रियेण । विज्ञानं ज्ञानविशेषम् ॥ २४-२६ ॥

**शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ।**
**गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥ २७ ॥**

**प्रकाशिका–** इदानीमस्मादेव लोकोत्पत्तिमाह ॥ शीर्ष्ण इति । शिरस इत्यर्थः । खमन्तरिक्षम् । गुणानां सत्त्वादीनां वृत्तयः कार्यभूतधर्मवन्तो येषु लोकेषु ॥ २७ ॥

**औत्पत्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ।**
**धरां रजःस्वभावेन पणयो ये चताननु ॥ २८ ॥**

**प्रकाशिका–** एतदेव विवृणोति ॥ औत्पत्तिकेनेति । उत्पत्तिमारभ्य स्थितेनेत्यर्थः । सत्त्वेन सात्विकधर्मेण रजस्वभावेन राजसधर्मेण पणन्ते वागादिना व्यवहरन्तीति पणयो मनुष्यास्ताननु तदुपकरणभूता ये वागादयस्तेऽपि धरां प्रपेदिरे ॥ २८ ॥

**तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ।**
**उभयोरन्तरं व्योम ये रुद्रपार्षदा गणाः ॥ २९ ॥**

**प्रकाशिका–** तार्तीयेन तामसतामसेन स्वभावेन स्वधर्मेणोभयोर्द्यावापृथिव्योरन्तरं मध्यं व्योमान्तरिक्षं तदेव भगवन्नाभिस्तामाश्रिता रुद्रपार्षदानां भूतादीनां गणाः ॥ २९ ॥

**मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ।**
**यत्रोन्मुखत्वाद् वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः ॥ ३० ॥**

**बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ।**
**यो जातस्त्रायते वर्णान् पुरुषान् कण्टकक्षतात् ॥ ३१ ॥**

**विशोऽवर्तन्त तस्योर्वो र्लोकवृत्तिकरीर्विभोः ।**
**वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥ ३२ ॥**

**पद्भ्यां भगवतो जज्ञे शुश्रूषाकर्मसिद्धये ।**
**तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥ ३३ ॥**

**तात्पर्यम्– 'ब्रह्माभिमानि तु भृगुरजनि ब्रह्मणो मुखात् । क्षत्राभिमानी तु मनुर्ब्रह्मबाह्वोरजायत । ऊर्वोर्विडभिमानी च वास्तुः । पादात्कृतिस्थता । एते पूर्वं हरेर्जाता ब्रह्मणस्तदनन्तरम् । एवं रुद्राद्यवायोश्च तदन्तस्थहरेर्यत' इति षाड्गुण्ये ॥ ३३ ॥**

**प्रकाशिका–** इदानीं ब्राह्मणादिवर्णोत्पत्तिमपि तस्मादाह ॥ मुखत इति । अत्र श्लोकचतुष्टये ब्राह्मणादीनां चतुर्णामुत्पत्तिः कथ्यते । एते ब्राह्मणादयो विनिगमकाभावात्के ग्राह्या इत्याकांक्षायां तान्प्रमाणेनैव दर्शयति ॥ ब्रह्मेति । ब्राह्मणजात्यभिमानीत्यर्थः । एवं क्षत्राभिमानी विडभिमानीत्येतदपि व्याख्येयम् । तुशब्दश्चशब्दार्थः । मनुः स्वायम्भुवः । वास्तुस्तन्नामको देवः । कृतिः शूद्रजात्यभिमानी देवः । अजायतेति सम्बन्धः । ननु मूले पुरुषस्य भगवत इत्यादिवचनाद्वर्णोत्पत्तिर्भगवत एवोच्यतेऽत्र तु ब्रह्मणोऽतो विरोध इत्यतः स्वयमेव विरोधं परिहरति ॥ एत इति । तथा चानन्तरिकीमुत्पत्तिमपेक्ष्य ब्रह्मणो मुखादित्यादिकमत्रोक्तमतो न विरोध इत्याशयः । एवं क्वचिद्रुद्राद्वायोश्चोत्पत्तिवचनस्याप्यानन्तरिक्युत्पत्तिरेवार्थो न प्राथमिकीत्याह ॥ एवमिति । वायोश्च तदनन्तरं ब्रह्मण उत्पत्त्यनन्तरं जाता इत्यर्थः । प्रकारान्तरेणापि विरोधं परिहरति ॥ तदन्तस्थेति । तेषां ब्रह्मादीनामन्तस्थाद्धरेर्यतो जाताः । अतोऽपि न विरोध इति शेषः । अधिष्ठानविवक्षया सर्वत्र हरिजातत्वस्यैवाभिधानादिति भावः ॥ ततश्चायं श्लोकचतुष्टयार्थः । अत्र यज्जाताः सहवृत्तिभिरिति वक्ष्यमाणत्वाद्वर्णानां तद्वृत्तीनां चोत्पत्तिरुच्यते । पुरुषस्य ब्रह्मदेहगतस्य मुखतो ब्रह्म ब्राह्मणजात्यभिमानी भृगुर्वेदश्चावर्तत प्रवृत्तम् । वेदस्य ब्राह्मणवृत्तिमुपपादयति ॥ यत्रेति । यत्र वेदे विषये ब्राह्मणो मुख्यगुरुभूतः । कुतः उन्मुखत्वान्मुखादुद्भूतत्वान्मुखादुत्पन्नत्वात् मुखव्यापारमेव तस्य वृत्तिं कृतवानिति भावः । मुख इत्यनेनापदि क्षत्रियादेरमुख्यं गुरुत्वमस्तीति सूचयति । अनेनाध्यापितो वेद एव ब्राह्मणस्य वृत्तिरित्युपपादितमिति ज्ञातव्यम् । ब्रह्माणतीति ब्राह्मण इति निर्वचनमपि सूचितम् ॥ बाहुभ्य इति । पुरुषस्येति वर्तते । क्षत्रियाभिमानी मनुः क्षतात्त्राणरूपवृत्तिश्च क्षत्रियः । तत् क्षतात्त्राणं पालनम् । अनुव्रतोऽनुसृतः । अनेन क्षत्रमनुसृत्य वर्तत इति क्षत्रिय इति निर्वचनं सूचयति। क्षत्रशब्दोक्तां वृत्तिं क्षत्रियस्य दर्शयति ॥ य इति । बाहुभ्य इति वर्तते । बाहुभ्यो जातत्वादेवेति हेतुसूचनायायमनुवादः । कण्टकाः शत्रवः । तथाच बाहुजातत्वाद्बाहुव्यापारं क्षतात्त्राणं क्षत्रियाणां वृत्तिं कृतवानिति भावः । विशो विडभिमानीवास्तुः कृष्यादिव्यापाराश्च । लोकस्य वृत्तिकरीर्जीविका हेतवः । आद्यव्याख्याने जातौ बहुवचनम् । कृष्यादिकरणरूपां वृत्तिं वैश्ये दर्शयति ॥ वैश्य इति । तदुद्भव ऊरूद्भव इत्यनुवादः पूर्ववद्धेतुसूचनाय । करोर्वोः सामीप्यात्करोद्भवं व्यापारमूरुजस्य वृत्तिं कृतवानिति । वार्तां कृष्यादिरूपिकां जीविकाम् । विट् शब्दोक्तकृष्यादिव्यापारकर्तृत्वाद्वैश्य इति निर्वचनमत्र ज्ञातव्यम् । शुश्रूषा, त्रिवर्णानां सेवा किमर्थं कर्मसिद्धये । अत्र कर्मशब्देन शूद्रजन्मापादकमदृष्टं ग्राह्यम् । तस्य सिद्धये साफल्याय । तस्यास्तदर्थम् । तां कर्तुमिति यावत् । पुरा पूर्वं शूद्रस्तज्जात्यभिमानी कृतिर्भगवतः पद्भ्यां जात इत्यर्थः । अनेन पादोद्भवत्वात्पादोद्भवं कर्म सेवाख्यं तस्य वृत्तिं कृतवानित्यपि ज्ञातव्यम् । ननु शुश्रूषया कथं शूद्रजन्मापादकादृष्टस्य साफल्यमित्यत आह ॥ यद्वृत्त्येति । यस्य शूद्रस्य वृत्त्या

शुश्रूषारूपया भगवदनुसन्धानेन कृतया हरिस्तुष्यते । हरितोषजनकत्वमेव कर्मणां साफल्यमिति भावः । अनेन शुचा शूद्रजन्मप्राप्तोऽस्मीति शोकेन द्रवति सेवां करोतीति शूद्र इति निर्वचनं सूचितं ज्ञातव्यम् ॥ ३३ ॥

**एते वर्णाः स्वधर्मेण यजन्ते स्वगुरुं हरिम् ।**
**श्रद्धयाऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ ३४ ॥**

**प्रकाशिका–** तुष्यते हरिरित्युपलक्षणया सर्ववर्णवृत्त्या हरिरेवेज्य इति सूचितम् । तत्कुतः किमर्थं चेत्यत आह ॥ एत इति । स्वधर्मेण स्ववृत्त्या । स्वगुरुमित्यनेन गुरुत्वादिहेतुरुक्तः । आत्मनोऽन्तःकरणस्य विशुद्ध्यर्थ्यमित्यवान्तरफलनिरूपणम् । यद्यस्माद्वृत्तिभिर्जीविकाभिः सह जाता इत्यनेन पितृत्वात्पतित्वाच्चेति हेतुद्वयमुक्तमिति ज्ञातव्यम् ॥ ३४ ॥

**एतत् क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ।**
**कः श्रद्दध्यादुदाहर्तुं योगमायाबलोदयम् ॥ ३५ ॥**

**तात्पर्यम्– 'अधिकत्वाद्देवशब्दोदैवतेष्वधिको यतः ॥ दैवं हरिः कर्ममूलं कृतिरित्येव भण्यते । व्याप्तत्वादात्मशब्दश्च श्रीपतित्वाच्च माधव' इति च ॥ ३५ ॥**

**प्रकाशिका–** एवं विधस्य हरेर्माहात्म्यं साकल्येन निरूपयितुमिच्छाऽपि कर्तुमशक्येत्याह ॥ एतदिति । अत्र दैवकर्मात्मरूपिण इति देवताद्यभेदः प्रतीयतेऽतोऽत्र विवक्षितान्दैवादि-शब्दार्थान्प्रमाणेनैव दर्शयति ॥ अधिकत्वादिति । राजा भट्टारको देव इत्यभिधानात् । नरदेव इत्यादिप्रयोगाच्च । देवशब्दाधिक्यार्थे णप्रत्यय इति भावः । मूलं कारणभूता प्रकृतिः प्रयत्नो यस्य स तथा । मूलकर्तृत्वादेव कर्मेति भण्यत इत्यर्थः ॥ व्याप्तत्वादिति । आङ्पूर्वकत्वात्तनोतेर्डमन् प्रत्यय इति भावः । आत्मशब्द आत्मेति शब्दो यस्य स आत्मशब्दवाच्य इत्यर्थः । श्रीपतित्वादि-त्यन्यत्रोक्तस्य माधवशब्दस्य व्याख्यानम् ॥ ततश्चायं श्लोकार्थः । भो क्षत्तः विदुर । दैवं सर्वदेवाधिकं कर्ममूलकर्तृभूतमात्मा व्याप्तं रूपमस्यास्तीति दैवकर्मात्मरूपी तस्य दैवकर्मात्मरूपिणो भगवत एतद्योगमायया जगदुपायरूपेच्छाया बलोदयं सामर्थ्यप्रसरं कः पुमान्साकल्येनोदाहर्तुं निरूपयितुं श्रद्दध्यादिच्छां कुर्यात् । अनन्तत्वेन साकल्येन ज्ञानस्यैवासम्भवात् । निरूपयितुं दूरतोऽपास्तमिति भावः ॥ ३५ ॥

**अथापि कीर्तयाम्यङ्ग यथामति यथाश्रुतम् ।**
**कीर्तिं हरेः स्वां संस्कर्तुं गिरमन्याभिधां सतीम् ॥ ३६ ॥**

**प्रकाशिका–** यद्यपि साकल्येन निरूपयितुमशक्तोस्म्यथाऽप्यन्यस्य हरिव्यतिरिक्तस्याभिधामभिधानं यस्याः साऽन्याभिधानां सतीं विद्यमानां स्वां गिरं संस्कर्तुं शुद्धां कर्तुमन्याभिधानेनासतीं सतीं कर्तुमित्यर्थः । अत एव क्वचिदन्याभिधां सतीमित्येव पाठः । तत्रान्याभिधा चासावसती चेति विग्रहः ॥ ३६ ॥

**एकान्तलाभं वचसो नु पुंसः सुश्लोकमौलेर्गुणवादमाहुः ।**
**श्रुतेश्च विद्वद्भिरुपाकृतायाः कथासुधाया उत संप्रयोगम् ॥ ३७ ॥**

**प्रकाशिका–** यथामति कीर्तनश्रवणयोरप्यभावे बाधकं सूचयन्नाह ॥ एकान्तेति । वचसो वागिन्द्रियस्य सुश्लोकमौलेः समीचीनकीर्तिमतां श्रेष्ठस्य हरेर्गुणानुवादं गुणानामभिवदनमेकान्तलाभमव्यभिचरितपुरुषार्थसाधनम् । आहुर्ज्ञानिनः । श्रुतेः श्रवणेन्द्रियस्य चोपकृताया निरूपितायाः सम्प्रयोगं सम्यक् प्रकर्षेण सम्बन्धम् । आदरातिशयेन श्रवणमिति यावत् । उतशब्द एकान्तलाभमाहुरित्यस्यानुकर्षणार्थः । तथा च यथाशक्ति श्रवणकीर्तनयोरप्यभावे वाक्श्रवणयोर्वैयर्थ्यं बाधकं सूचितमिति ज्ञातव्यम् । सम्प्रयोग इति पाठेऽपि विभक्तिविपरिणामेनैकान्तलाभमित्यस्यानुकर्षणार्थ उतशब्दः ॥ ३७ ॥

**आत्मनोऽवसितो वत्स महिमा कविनादिना ।**
**संवत्सरसहस्रान्ते धिया योगविपक्वया ॥ ३८ ॥**

**प्रकाशिका–** साकल्येन हरिज्ञानं न कस्याप्यस्तीत्येतत्कैमुत्येनोपपादयन्नाह ॥ आत्मन इति । आत्मनः परमात्मन आदिना कविना ब्रह्मणाऽपि योगेन भक्तिध्यानादिरूपेण विपक्वया परिपाकमाप्तया धिया सकलसदागमार्थभूतगुणक्रियारूपावगाहनशक्त्या बुध्या किं साकल्येनावसितो नैवेति काका योज्यम् । तथा चान्यैर्भगवान् तथा नावसेय इति किं वाच्यमिति भावः ॥ ३८ ॥

**अतो भगवतो मायां मायिनामपि मोहिनीम् ।**
**यत् स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ॥ ३९ ॥**

**तात्पर्यम्– 'आत्मा ब्रह्मा न वेद । अहं रुद्रः । 'गुणपूर्तेरात्मशब्दो ब्रह्मा हीनत्वतो हरः । अहं शब्दस्तथाप्येतौ न जानीतो हरिं परमि'ति ब्राह्मे । भगवतो मायां भगवतो महिमानम् । 'माया तु महिमा प्रोक्ता प्राचुर्ये तु मयड्यत' इति पाद्मे । आत्मवर्त्मा परमात्मगतिः ॥ ३९ ॥**
**इति तृतीयतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥**

**प्रकाशिका–** नन्वतियत्नेन भगवान् ज्ञानिभिः कथंचित्साकल्येन ज्ञातुं शक्य इति मन्दाशङ्कामपाकुर्वन्नुक्तमेव कैमुत्यं विशदयति । अत इति । अत इति परामृष्टं पूर्वोक्तं हेतुं दर्शयति । यत्स्वयमिति । अत्रात्मा न वेदेत्यत्र विवक्षितमात्मशब्दाभिधेयं दर्शयति ॥ आत्मा न वेदेति । अत्र न वेदेत्यस्यानुवादो भगवत्परोऽयमात्मशब्दो न भवति । तस्य सर्वज्ञत्वेन न वेदेत्यस्य बाधितत्वप्रसङ्गादिति दर्शयितुं यत इत्युत्तरश्लोकेऽहं शब्दोऽस्मदादेशरूपो मैत्रेयपर इति प्रतीति-वारणायाह ॥ अहं रुद्र इति । तथा च मकारान्तमव्ययमिदम् । अहंकारतत्त्ववाचित-दभिमानिरुद्रपरमेव । अन्यथा ऋषेर्दैवापेक्षया पूर्वमुपादानस्यासम्भवादिति भावः । आत्माहंशब्दयो-र्ब्रह्मरुद्रवाचकत्वे निमित्तं तदङ्गेयरूपवाक्यार्थं च प्रमाणेनैव दर्शयति ॥ गुणेति । ब्रह्मा आत्मशब्दवाच्यः । गुणपूर्तेः स्वयोग्यगुणपूर्णत्वात् । तथा चाप्नोतीत्यात्मा स्वयोग्यगुणानिति सामर्थ्याल्लभ्यत इति भावः । हरो रुद्रोऽहीनत्वतोऽहेयत्वतः । तथा च नञुपपदस्योहाक् त्याग इत्यस्येदं रूपमिति भावः । अहंशब्दोऽहंशब्दवाच्य इत्यर्थः ॥ तथाऽपीति गुणपूर्त्यादिमत्वेऽपीत्यर्थः। परिपूर्णं यथा स्यात्तथा न जानीम इत्यर्थः । भगवतो मायामित्यत्र मायाशब्दस्यानिर्वा-च्याविद्यारूपत्वप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ भगवत इति ॥ अत्र प्रमाणमप्याह ॥ मायात्विति । तुशब्दोऽवधारणे । महिमैवेति सम्बन्धः । द्वितीयस्तुशब्दः प्राचुर्यस्य गुणाभिसम्बन्धि-त्वरूपविशेषार्थः । मयडिति । अत्र यद्यपि मयशब्देन मयट् प्रत्ययरूपः प्रकृत्यभावात् । तथाऽपि तत्समानार्थकः । तस्माच्च स्वार्थे णप्रत्यय इति भावः । आत्मवर्त्मेत्यत्र वर्त्मशब्दस्य मार्गार्थत्वप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ आत्मेति । गतिरवगतिः स्वयोग्यतानुसारेण परमात्मज्ञानवानित्यर्थः । वर्त्मशब्दो गतेर्लक्षक इति भावः । अत्रान्वयप्रदर्शनाय कर्तृत्ववाच्यात्मपदं प्रथमतो व्याख्यायानन्तरं तस्याहंशब्दस्य चैकस्मिन्प्रमाणे व्याख्यातत्वाल्लाघवाय वक्ष्यमाणाहंशब्दं च व्याख्यायानन्तरं कर्मवाचकं भगवतो मायामित्येतद्व्याख्यातम् । ननु नेदं कर्मवाचकम् । द्वितीयार्धेऽप्यात्मवर्त्मेति द्वितीयां तस्य कर्मवाचकस्य सत्वादित्याशङ्कापरिहारायात्मवर्त्मेत्ये-तत्प्रथमान्ततयैव विच्छिद्यान्ते व्याख्यातमित्यवगन्तव्यम् । ततश्चायं श्लोकद्वयस्यार्थः ॥ अत इति परामृष्टं पूर्वोक्तहेतुं विशदयति ॥ यदिति । यद्यतः । चशब्दोऽप्यर्थः । आत्मस्वयोग्यगुणपूर्णो ब्रह्मा स्वयमितराधिकार्यपेक्षया मुख्यत आत्मवर्त्माऽपि परमात्मावगतिमानपि मायिनां ज्ञानिनामपि स्वयोग्यतामतिक्रम्याधिकज्ञानाय प्रयत्ने मोहिनीं बुद्धिभ्रंशकरीं भगवतो मायां महिमानं साकल्येन न वेद । अपरे रुद्राद्याः साकल्येन न विदुरिति किमुवाच्यमित्यर्थः ॥ ३९ ॥

**यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह ।**
**अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे सप्तमोऽध्यायः ।**

**प्रकाशिका–** अत्र यतो वचो निवर्तन्त इत्याद्याः श्रुतयः प्रमाणमित्याशयेन ता अर्थतोऽनुवदन् भक्त्यतिशयात्तद्गुणविशिष्टं भगवन्तमन्ते नमति ॥ यत इति । वाचो वेदाभिमानिन्यो देवता मनसा चित्तरूपमनोऽभिमानिना ब्रह्मणा सहाप्राप्य । तद्गुणावसानमिति शेषः । यतो यद्गुणौघवर्णनान्निवर्तन्ते । अहमहंकाराभिमानी रुद्रः । अन्ये इमे तत्त्वाभिमानिनो देवाश्चाप्राप्य यतो निवर्तन्ते तस्मै नम इत्यन्वयः । अत्र पूर्वार्धे । यतो वाच इति श्रुत्यर्थानुवादबलादुत्तरार्धेऽपि तथाविधश्रुत्यर्थस्त्वनूद्यत इति ज्ञातव्यम् ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ॥ ३-७ ॥

## अथ अष्टमोऽध्यायः ।

**एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ।**
**प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥**

**प्रकाशिका–** स्वज्ञानार्थेन प्रश्नेन वक्तुः प्रीतेरपि जननात्प्रीणयन्निवेत्युक्तम् । वस्तुतस्तत्प्रीतिर्नोद्दिश्येति ज्ञापनायेवशब्दः । भारत्या वाचा ॥ १ ॥

**विदुर उवाच–**
**ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः ।**
**लीलया चापि युज्येरन् निर्गुणस्य गुणाः क्रियाः ॥ २ ॥**

**प्रकाशिका–** कालवृत्त्यां तु मायायां गुणमय्यामधोक्षज इत्यादिना सत्त्वादिगुणत्मिकां प्रकृतिमुपादानीकृत्येश्वरो जगत्सृजतीत्युक्तम् । तत्र विदुरश्चोदयति ॥ ब्रह्मन्निति । चिन्मात्रस्य जडामिश्रस्य । अत एवाविकारिणः क्रिया निर्गुणस्य सत्त्वादिगुणात्मकप्रकृतिविधुरस्य गुणाः सत्त्वादिगुणात्मकप्रकृतिबन्धाः कथं युज्येरन् विरोधान्न कथमपीत्यर्थः । लीलयेति चेत्तत्राह ॥ लीलया चेति । न हि कश्चित्प्रेक्षावान् लीलयाऽऽत्मनो दुःखापादकमुपादत्त इति सम्भवतीति प्रश्नाभिप्रायः ॥ २ ॥

**क्रीडाया मुद् यतोऽर्हस्य कामं चिक्रीडिषान्यतः ।**
**स्वतस्तृप्तस्य तु कथं निर्वृतस्य सदात्मनः ॥ ३ ॥**



**तात्पर्यम्–** **क्रीडाया मुत् । अर्हस्यापूर्णसुखस्य । अन्यतः अरतेः ॥ ३ ॥**

**प्रकाशिका–** ननु लोके सुखप्राप्त्यर्थं क्रीडायां प्रवृत्तिदर्शनाद्भगवानपि सुखप्राप्त्यर्थं क्रीडयैव सृष्ट्यादिकं करोतीत्यत आह ॥ क्रीडाया इति । अत्र विवक्षितच्छेदं दर्शयन्व्याख्याति ॥ क्रीडाया इति । तथाच क्रीडाया मुत् यत इति पदत्रयमत्र विवक्षितम् । अन्यथा क्रीडायामुद्यत इति छेदेऽर्ह-स्येति षष्ठ्यन्तस्यानन्वयप्रसङ्ग इति भावः । अर्हस्येत्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ अर्हस्येति । अन्यत इत्यस्यापि प्रकृतोपयुक्तमर्थं दर्शयति ॥ अन्यत इति मुदिति मुच्छब्देन रतेः प्रकृतत्वात्तदन्या तद्विरुद्धा रतिरेवात्र व्याख्येयेति भावः ॥ ततश्चायं श्लोकार्थः ॥ यतः क्रीडायाः सकाशात् मुत् सुखम् अर्हस्य क्रीडाजन्यसुखयोग्यस्य । अपूर्णसुखस्येति यावत् । भवति स्वतः क्रीडादिसाधनमनपेक्ष्य तु विशेषेण तृप्तस्य । पूर्णसुखस्येति यावत् । कथं क्रीडासाध्यमुत् न कथमपीत्यर्थः । किञ्च क्रीडा-सम्भवेन क्रीडैव तस्य यदा न सम्भवति तदा तज्जन्यं सुखं तस्य नास्तीति किं वाच्यमित्याशयेनाह ॥ काममिति । कामं यथा स्यात्तथा क्रीडितुमिच्छाऽन्यतोऽरतितो रत्यभावाद्भवति । सदा निर्वृतस्या-रतिशून्यस्यात्मनः कथञ्चित्क्रीडिषा सम्भवति न कथमपीति ॥ ३ ॥

**अस्राक्षीत् भगवान् विश्वं गुणमय्याऽऽत्ममायया ।**
**तथा संस्थापयत्येतद् भूयः प्रत्यभिधास्यति ॥ ४ ॥**

**प्रकाशिका–** निर्गुणस्य गुणा अविकारिणः क्रियाश्च भ्रान्तिकल्पिता एव न सत्या अतः को विरोधः इत्यतः आह अस्राक्षीदिति । गुणमय्या रजोरूपया तथा सत्वरूपया तमोरूपया प्रत्यभिधास्यति संहरिष्यतीत्येतत् । श्रुत्यादिसिद्धमतः कथं भ्रान्तिकल्पितं स्यादिति भावः ॥ ४ ॥

**देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।**
**अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥ ५ ॥**

**प्रकाशिका–** भगवान्न कदाऽपि प्रकृतिबन्धार्हः । सर्वदा तद्विरोधिस्वसाक्षात्कारत्वादिति युक्त्याऽपि प्रकृतिबन्धस्तस्य न घटत इत्याह ॥ देशत इति । देशकालादिभिरस्मदाद्यवबोधस्य लोपो भवति न तथा भगवतोवबोधस्य नित्यत्वादिति भावः ॥ ५ ॥

**भगवानेष एवैकः सर्वक्षेत्रेष्ववस्थितः ।**
**अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥ ६ ॥**

**तात्पर्यम्–** **दुर्भगक्लेशशरीरस्थत्वात्तस्यापि भाव्यम् । न च तद्युच्यते ॥ ६ ॥**

**प्रकाशिका–** पुनः शङ्कते ॥ भगवानिति । अत्र पूर्वार्धेऽप्रसक्तं दुर्भगत्वादिकं कथम्
आक्षिप्यत इत्याशङ्कापरिहाराय पूर्वार्धे दुर्भगत्वादिप्रसक्तिं दर्शयति ॥ दुर्भगेति । दुर्भगेत्
वप्रधानम् । ततश्च दुर्भगत्वं क्लेशकरशरीरस्थत्वादित्यर्थः । अनेन सर्वक्षेत्रेऽवस्थित इत्
इत्यध्याहारेण योजनीयमिति सूचयति । तस्यापि भगवतोऽपि भाव्यमिति पूर्वार्धे शेषोक्तिः
इत्यस्य प्रश्नार्थत्वप्रतीतिवारणायोत्तरार्धतात्पर्यमाह ॥ न चेति । तद्दुर्भगत्वादिकं श्रुत्यादिविरोधात्
भावः । ततश्चायं मूलार्थः ॥ भगवानेको मुख्यः सर्वक्षेत्रेषु शरीरेषु प्रेरकतया व्यवस्थित इति
श्रुत्यादिप्रसिद्धम् । शरीराणि च कर्मभिरारब्धानि स्वांतस्थस्य दुर्भगत्वादिकमापादयन्ति
एतादृशः सर्वक्षेत्रेषु व्यवस्थितोऽतस्तस्यापि दुर्भगत्वादिकं देवदत्तवद्भाव्यम् । न च तद्युज्यत
॥ अमुष्येति । भगवत इत्यर्थः । कुतो न कुतोऽपि । निरनिष्टो निरवद्य इत्यादिश्रुतिविरोधात्
भावः । अतो मे संशय इति शेषः ॥ ६ ॥

**एतस्मिन् मे मनो विद्वन् खिद्यतेऽज्ञानसंकटे ।**
**तन्नः पराणुद विभो कश्मलं मानसं महत् ॥ ७ ॥**

**प्रकाशिका–** एतस्मिन्नज्ञानसङ्कटे तत्त्वनिश्चयाभावमूलके संशये सति मे मनः खिद्यते
प्राप्नोति । तत्संशयनिमित्तं कश्मलं मानसं बाह्यांतःकरणगं पराणुदापाकुरु ॥ ७ ॥

**शुक उवाच–**
**स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः ।**
**प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥ ८ ॥**

**प्रकाशिका–** स्मयन्निवाहंकारं कुर्वन्निव । इव शब्दोऽल्पार्थे । दशरात्रैर्भुक्तमिवेति प्रयोगात् ।
चाल्पं हासं कुर्वन्कथमयमपरोक्षज्ञानी निश्चिततत्त्वो मां प्रतिप्रश्नं करोतीति मन्दस्मितं कुर्वन्
गतस्मयो विगताहंकारः ॥ ८ ॥

**मैत्रेय उवाच–**
**सेयं भगवतो माया न्याय्यं येन विरुध्यते ।**
**ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ९ ॥**

**तात्पर्यम्–** सेयं भगवतो माया । अयं हि भगवन्महिमा । तस्य कार्पण्यं बन्धनादि न युज्
इति यदुक्तं तन्न्याय्यमेव । दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्श एव तन्महिमेत्यर्थः ॥ ९ ॥

**प्रकाशिका–** दुर्भगशरीरस्थस्यापि दुर्भगत्वाद्यप्राप्तिर्माहात्म्यातिशयादिति परिहरति ।। सेयमिति । अत्र माया शब्दस्याविद्यार्थत्वप्रतीतिनिरासाय विवक्षितमर्थं दर्शयति ।। सेयमिति । यत उक्तं तदिति पदत्रयमध्याहृत्यावशिष्टपदत्रयतात्पर्यमाह ।। तस्येति । ईश्वरस्य विमुक्तस्येत्यर्थः । कार्पण्यं दुर्भगत्वम् । बन्धनं कर्मलेपः । आदिपदेन क्लेशः । अनेन द्वितीयार्धतात्पर्यमुक्तम् । न युज्यत इत्यादिना । न्याय्यमिति पदस्यायं हि भगवन्महिमेत्युक्तस्याभिप्रायमाह ।। दुर्भगादीति । अत्रापि दुर्भगमिति भावप्रधानम् । दुर्भगत्वाधिकरणशरीरस्थस्यापीत्यर्थः । तद्दोषाः कार्पण्यादयस्तेषामस्पर्शो सम्बन्धस्तन्महिमाप्रयुक्त इत्यर्थः । ततश्चायं श्लोकार्थः ।। ईश्वरस्य कार्पण्यं दुर्भगत्वं विमुक्तस्य नित्यमुक्तस्य बन्धनं कर्मलेपः । उत शब्दात्क्लेशादिकं च । येन कारणेन प्रमाणैर्विरुध्यते तेन तन्न युज्यत इति यत्त्वयोक्तं तन्न्याय्यं युक्तम् । ननु कथं युक्तं शरीरस्थत्वाद्यज्ञदेवदत्तवद्दुर्भगत्वादि प्राप्तिरिति युक्तिविरुद्धत्वादित्यत उक्तम् । इयमिति । अयं भगवन्महिमेत्यर्थः । इयं केत्यत उक्तम् । सेति । दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्श इत्यर्थः । तथाच दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्शो यः सा भगवतो माया तन्महिमैव तत्प्रयुक्तैवेत्यर्थः । यथा दह्यमानगेहान्तर्गतस्याग्नि-स्तंभनादिसामर्थ्यवतो न दाहस्तथेति भावः । अनेन विवक्षितमाहात्म्याभावरूपोपाधिग्रस्तोक्त-युक्तिरतो न तद्विरोध इत्युक्तं भवति । एतेनैव निर्गुणस्य कथं गुणा अविकारिणः कथं क्रिया इति प्रश्नद्वयमपि परिहृतमिति ज्ञातव्यम् । गुणानां सम्बन्धेऽपि महिमातिशयेन तन्निमित्तदोषास्पर्शेन निर्गुणत्वाद्युपपत्तेः । सृष्ट्यादिरूपक्रियावत्वेऽपि तत्साध्यक्लेशाद्यभावेनाविकारित्वसम्भवाच्च । एतत्सूचनायैव तद्दोषास्पर्श इति सामान्यत एव भगवत्पादैरुक्तम् ।। ९ ।।

**यथाऽर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः ।**
**प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ।। १० ।।**

**प्रकाशिका–** ननु देहगतस्येश्वरस्य क्लेशादिरूपसंसारो न चेत्स कस्य भवति । जीवस्येति चेत्तस्यापीश्वरप्रतिबिम्बस्य चिन्मात्रस्यैतादृशदुःखाद्यनुभवरूपसंसारे कारणाभावादित्यतो जीवस्यो-क्तविधसंसारे कारणभूतां भ्रान्तिं दृष्टान्तमुखेनोपपादयति ।। यथेति । यथार्थेन बाह्यस्वशिरच्छेदादिना विनाऽपि । उप समीपे द्रष्टुः । स्वप्नद्रष्टुरिति यावत् । हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति समीपस्थस्तथा स्वप्नमिति वचनात् । स्वशिरच्छेदनादिको बाह्यस्वशिरच्छेदादिरूपोऽर्थः प्रतीयते । ममेदं शिरश्छिन्नमिति भ्रान्त्या प्रतीयते । तथाऽमुष्य चिन्मात्रस्य पुंसो जीवस्यात्मनोऽस्वतन्त्रस्य स्वस्य विपर्ययो देहादावहंममेत्यादिरूपं स्वातन्त्र्यं भ्रान्त्यैव प्रतीयते । तयैव तस्य संसार इति शेषः ।। १० ।।

**यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ।**
**दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥ ११ ॥**

**प्रकाशिका–** नन्वेवं स्वातन्त्र्यवद्भ्रान्तिमूलोऽयं दुःखादिरनर्थोऽपि जीवस्य किं मिथ्याभूत एव दृश्यते किमित्याशङ्कायां नेति सदृष्टान्तमाह ॥ यथेति । तत्कृतो जलरूपोपाधिकृतः कम्पनादिर्गुणो जले प्रतिबिम्बितस्य चन्द्रमसः सन्नपि दृश्यते । न त्वसन् । तथाऽनात्मनोंतःकरणस्य गुणो दुःखादिद्रष्टुस्तदनुभवितुरात्मनो जीवस्य सन्नेव दृश्यते न मिथ्याभूत इत्यर्थः । तत्सत्यत्वे साक्षिणं प्रमाणयितुं द्रष्टुरित्युक्तम् ॥ ११ ॥

**स वै निवृत्तिधर्मेण वासुदेवानुकम्पया ।**
**भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥ १२ ॥**

**तात्पर्यम्– 'कथं देहपरो देवो न लिप्येत हि बन्धनैः । कथं न दुःखी स भवेद्दुःखी चेदीश्वरः कुतः । महिमा परमस्यैष यद्देहस्थो न बाध्यते । यददुःखी स ईशानो मायेति महिमोच्यते । प्रधानं मय इत्याहुः प्राधान्यान्मयता भवेत् । अतो मायामयं प्राहुर्महामायमनामयमि'ति भाल्लवेयश्रुतिः ॥ 'अलुप्तबोधरूपत्वान्नासौ प्राकृतदेहवान् । न च सृष्ट्यादिकं भ्रान्तिर्भ्रान्तिवादा हि दानवाः । अतो भ्रान्त्यादिसम्बन्धो नास्य कचन युज्यते । 'भ्रान्त्या जीवस्य संसार ईशज्ञानाद्विलीयते । भ्रान्तिर्देहाद्यभिमतिरीशज्ञाना-द्विनश्यती'ति ब्रह्माण्डे ॥ १२ ॥**

**प्रकाशिका–** ननु संसारस्य सत्यत्वे कथं तन्निवृत्तिरूपो मोक्षः सत्यस्यानिवृत्तेरित्यत आह ॥ स वा इति । वै शब्दः प्रमाणप्रसिद्धिद्योतकः । स दुःखादिरूपः संसारः । निवृत्तिधर्मेण जातेन भक्तियोगेनापरोक्षज्ञानद्वारा जातया वासुदेवानुकम्पया वासुदेवप्रसादेन तिरोधत्ते विलीयते । इह जीवे । शनैः साधनोत्कर्षानुसारेण सत्यस्यापि निगडबन्धस्य सेवादिजनितराजप्रसादेन निवृत्तिदर्शनादिति भावः । ब्रह्मन्कथं भगवत इत्यारभ्य तिरोधत्ते शनैरिहेत्यन्तस्य तात्पर्यं श्रुतिस्मृतिभ्यां दर्शयति ॥ कथमिति । इह देहे विद्यमानः परोदेवः कथं कर्मबन्धनैर्न लिप्येत लिप्येतैव । जीववद्यदि लिप्येत तर्हि दुःखी कथं न भवेद्भवेदेव । यदि दुःखी स्यात्तर्हि कुत ईश्वरो न कुतोऽपि । भवति चेश्वरोऽतो दुःखायोगान्न कर्मबन्धनं तस्येत्येव वक्तव्यम् । दुर्भगदेहस्थत्वयुक्त्या जीववत्कर्मबन्धनं च तस्य प्राप्नोत्यतः संशय इत्यर्थः । अनेन भगवानेक एवैष इत्यादिकमुक्ततात्पर्यम् । सेयं भगवतो मायेत्यस्यार्थमाह ॥ महिमेति । यद्देहस्थ इत्यनेनोक्तहेतुर्महिमाभावरूपोपाधिग्रस्त इत्युक्तं भवति ।

नन्वेवमीश्वरो न कर्मबन्धवान्महिमातिशयवत्वादित्युपाध्यभावेनानुमेयम् । तत्राप्रयोजकत्व-मित्याशङ्कायां विपक्षबाधकतर्कं सूचयंस्तस्य विपर्यये पर्यवसानं दर्शयति ॥ यद्दुःखीति । स परमात्मा यद्यस्माद्दुःखी ईशानः सर्वप्रेरकश्च श्रुत्यादिसिद्धस्तस्मान्न बद्ध्यत इत्यन्वयः । अनेनेश्वरो बन्धवान्स्यात्तदा दुःखी स्यात्ततश्च सर्वस्येशानो न स्यात् । भवति चेशानोऽदुःखी च तस्मान्न बन्धवानिति तर्कः सूचित इति ज्ञातव्यम् । ननु यदि देहस्थस्यापीश्वरस्य बन्धाभावे महिमा प्रयोजकस्तदा सेयं भगवतो मायेति मायायास्तत्प्रयोजकत्वं मूले कथमुक्तमित्यत आह ॥ मायेति । ननु यदि मायाशब्दो महिमार्थस्तदा मायामयो भगवानिति श्रौतप्रयोगेन तस्य मिथ्यात्व-मुच्यमानमनुपपन्नं स्यादित्याशङ्कायां भगवति मायामयशब्दवाच्यत्वमन्यथोपपादयति ॥ प्रधानमिति । यतः प्रधानं वस्तु मयमित्याहुरतः प्राधान्यान्निमित्तान्मयता मयशब्दवाच्यता भवेत् । यतः एवं मायामयशब्दयोरर्थोऽतो महामायं प्रधानमहिमानं भगवन्तं मायामयं मायामयशब्दवाच्यमाहुः । मायाप्रधानभूता माया महिमा यस्येति विग्रहमभिप्रेत्येति भावः । अग्न्याहितादिवत्परनिपातः । अविद्याकल्पितत्वमर्थो नेति सूचयितुमनामय इत्युक्तम् । अविद्यादिदोषास्पृष्टमित्यर्थः । भगवान्प्राकृतदेहबद्धो न भवतीत्यत्र युक्त्यन्तरमपि स्मृत्या दर्शयति ॥ अलुप्तेति । सर्वदा बन्धविरोधिस्वसाक्षात्कारवत्वादित्यर्थः । प्राकृतदेहवान्प्रकृतिनिर्मितदेहबद्धो न भवतीत्यर्थः । अनेनाविलुप्तावबोधात्मेत्येतदुक्तार्थम् । ननु निर्गुणस्य गुणा अविकारिणः क्रियाश्च भ्रान्तिकल्पिता एवेति कुतो न समाधीयत इत्यत आह ॥ न चेति ॥ भ्रान्तिर्भ्रान्तिकल्पितं हि यस्माद्दानवा एव भ्रान्तिकल्पितत्वं वदन्तीति भ्रान्तिवादाः । अतो भ्रान्त्याऽस्य जगतः सम्बन्धो विषयविषयिभावरूपः क्व च न कस्मिन्नपि काले न युज्यते । सत्यत्वश्रुतिविरोधादिति हि शब्दार्थः । यद्वा । भ्रान्ति शब्देनाविद्या लक्षणीया । तथाच न सृष्ट्यादिकमीश्वराविद्याकल्पितं हि यस्माद्दानवा एवेश्वरस्याविद्याकल्पितं वदन्ति न ज्ञानिनोऽतोऽस्य सर्वज्ञस्येश्वरस्य भ्रान्त्याऽविद्यासंबन्धः कदाऽपि नेति योज्यम् । अनेनास्राक्षीद्भगवानित्येतदुक्तार्थम् । नन्वीश्वरस्य प्राकृतबन्धाभावे देहबन्धरूपः संसारः कस्य भवति । जीवस्येति चेत्तस्यापि चिन्मात्रस्वभावस्यैतादृशदेहसंबन्धे कारणाभावादित्यत आह ॥ भ्रान्त्येति । भ्रान्त्या कारणभूतया संसारः सत्य एव । भवतीति शेषः । अनेन यथार्थेन विनेत्येतदुक्ततात्पर्यम् । ननु संसारस्य सत्यत्वे कथं तन्निवृत्तिरित्यत आह ॥ ईशेति । ननु कीदृशी संसारकारणीभूता भ्रान्तिः । तस्याश्चानिवृत्तौ कथं संसारस्येशज्ञानाद्विलय इत्यत आह ॥ भ्रान्तिरिति । देहाद्यभिमतिर्देहादौ ममेदमिति स्वातन्त्र्याभिमानः । अतः प्राकृतात्ज्ञानादी-शज्ञानादित्यर्थः । क्वचिदीशज्ञानादित्येव पाठः । तथाच कारणीभूतभ्रान्तिनाशे तत्कार्यस्य संसारस्यापि भगवत्प्रसादेन नाश इति भावः । अनेन स वै निवृत्तिधर्मेणेत्येतदुक्ततात्पर्यम् ॥ १२ ॥

**यदेन्द्रियोपरामार्थो दृष्टात्मनि परे हरौ ।**
**विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १३ ॥**

**तात्पर्यम्–** इन्द्रियोपरामाख्यः पुरुषार्थो मुक्तिः ॥ १३ ॥

**प्रकाशिका–** तर्हि सर्वक्लेशनिवृत्तिः कदेत्यपेक्षायामाह ॥ यदेति । अत्रेन्द्रियाणामुपरामो नैश्चल्यमित्यन्यथाप्रतीतिनिवारणाय प्रकृतोपयुक्तमर्थं सूचयन्नर्थशब्दार्थमाह ॥ इन्द्रियेति । तथाच जडेन्द्रियाणामुपरामो नाश इति वा स्वरूपेन्द्रियाणामुप भगवत्समीपे रामो रमणमिति वा तस्यार्थ इति भावः । ननु धर्मादिपुरुषार्थत्रयस्येन्द्रियोपरामरूपत्वाभावात्कथमेतद्व्याख्यानमित्यत आह ॥ मुक्तिरिति ॥ ततश्चायं श्लोकार्थः ॥ परे सर्वोत्तमे हरौ जीवेन द्रष्टात्मन्यपरोक्षीकृतस्वरूपे सति यदेन्द्रियोपरामाख्यार्थः पुरुषार्थः । मुक्तिरिति यावत् । तदा कृत्स्नशः कार्त्स्न्येन सर्वे क्लेश । विलीयन्ते आत्यन्तिकमुच्छिद्यन्ते पुनस्तत्सजातीयोत्पत्तिर्न भवतीत्यर्थः । कृत्स्नक्लेशविलयमात्रे दृष्टान्तः संसुप्तस्येवेति ॥ १३ ॥

**अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।**
**किं वा पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १४ ॥**

**प्रकाशिका–** स वै निवृत्तधर्मेणेति मोक्षसाधननिरूपणपरे श्लोके श्रवणादीनामनुक्तत्वात्तानीदानीं वदंस्तेषु सप्रेमध्यानस्योत्तमत्वमपि किं पुनर्न्यायेन दर्शयति ॥ अशेषेति । गुणानामनुवादः प्रवचनम् । मननमिति यावत् । तेन सहितं श्रवणमात्मनि मनसि लब्धा तच्चरणारविन्दपरागानां सेवा ध्यानरूपा तया सहिता रतिः । अशेषसंक्लेशशमं विधत्त इति किं पुनर्वक्तव्यम् । अस्यार्थस्यास्वादने वा शब्दः ॥ १४ ॥

**विदुर उवाच–**
**संछिन्नः संशयो मह्यं तव सूक्तासिना विभो ।**
**उभयत्रापि भगवन्मनो मे सम्प्रधावति ॥ १५ ॥**

**प्रकाशिका–** विदुरः स्वपृष्टस्य सर्वस्योत्तरदानाय मैत्रेयमभिनन्दंस्तत्कृतोपकारमाह ॥ सञ्छिन्न इति । सूक्तमेवासिः खड्गं तेन यद्यपि दुर्भगदेहस्थस्य हरेस्तद्गतदुःखादिभागविषयेऽनुमानमूलो यः संशयः स सञ्छिन्नस्तथाऽप्युभयत्र मे मनः संप्रधावत्युभयकोटिकज्ञानं भवति । पुनः संशयो भवत्येवार्थः ॥ १५ ॥

**साधु तद् व्याहृतं विद्वन्नात्ममायायनं हरेः ।**
**आभात्यपार्थं निर्मूलं विश्वमूलं न यद् बहिः ॥ १६ ॥**

**तात्पर्यम्– स्वरूपसामर्थ्याश्रयम् । यद्व्याहृतम् । अपार्थं निर्मूलं च देहसम्बन्धित्वाद्याभाति । विश्वमूलं ब्रह्म च यन्ममज्ञानाद्बहिर्न भवति । तस्मादुभयत्र धावति । तस्मादन्तरितोऽस्मि । तथापि तां प्रतीतिं पराणुदे ॥ १६ ॥**

**प्रकाशिका–** उभयत्रेत्युक्तमेव दर्शयितुमाह ॥ साध्विति । अत्रात्ममायायनमित्यस्य विवक्षितमर्थं दर्शयति ॥ स्वरूपेति । स्वरूपेत्यात्मशब्दस्य सामर्थ्येति मायाशब्दस्याश्रयमित्ययनशब्दस्यार्थ-कथनम् । व्याहृतमित्यस्य विधित्वप्रतीतिनिरासायाह ॥ यद्व्याहृतमिति । तथा च तत्साध्विति साधुत्वमेव विधीयत इति भावः । अपार्थं निर्मूलं निश्वमूलमित्येतेषामेकविशेष्यपरत्वभ्रमवारणाया-पेक्षितमध्याहृत्य भिन्नवाक्यतया योजयति ॥ अपार्थमिति । देहसंबन्धित्वं जडदेहवत्त्वम् । आदिपदेन तत्प्रयुक्तक्लेशादिसङ्ग्रहः । अपार्थं जीव इव न पुरुषार्थापादकम् । नानवाप्तमवाप्तव्यमिति वचनात् । निर्मूलं स्वातन्त्र्यभ्रान्त्यादिकारणशून्यं च यः सर्वज्ञ इत्यादिवचनात् । विश्वमूलमित्यत्रापेक्षितं पूरयति ॥ विश्वमूलमिति । सर्वकारणं ब्रह्म च मम ज्ञानाद्बहिर्न भवति मज्ज्ञाने विषयीकृतमित्यर्थः । यस्मादित्यर्थकस्य यद्बहिरिति यच्छब्दस्यापेक्षितं तस्मादिति पदमध्याहृत्य तस्यान्वयं दर्शयति ॥ तस्मादिति । यश्च मूढतमो लोक इति श्लोकमुत्थापयितुं मध्येऽपेक्षितं पूरयति ॥ तस्मादन्त-रितोऽस्मीति । अन्तरितोऽन्तर्गतः । मध्यस्त इति यावत् । ताञ्चापीत्यत्रापि शब्दयोजनां दर्शयंस्तामित्यस्य परामृश्यान्वयं दर्शयति ॥ तथाऽपीति । तथाचापिशब्दस्तथाऽपीत्यर्थः । तामिति तच्छब्दः प्रतीतस्येत्यत्र प्रकृतपरामर्शक इति भावः ॥ ततश्च साधु तद्व्याहृतमिति श्लोकत्रयस्यार्थः ॥ यद्दुर्भगजीवशरीरस्थस्यापि तत्स्थक्लेशाद्यसङ्गित्वमात्ममायायनं स्वरूपसामर्थ्यप्रयुक्तं व्याहृतं सेयं भगवतो मायेत्यनेनोक्तं तत्साधु समीचीनम् । तद्विषयेऽनुमानमूलस्य मदीयसंशयस्य तेन छिन्नत्वात्त-थाऽपीश्वरस्य जडदेहकत्वं तद्गतक्लेशादिकं चावतारेषु प्रत्यक्षेणैवाभाति । तच्च यद्यप्यपार्थमपगतोऽर्थः पुरुषार्थो यस्मात्तथा । ईश्वरस्य जीवस्येव पुरुषार्थसाधनम् । ईश्वरस्याप्तकामत्वात् । निर्मूलं च जीव इव भ्रान्त्यादिकारणाभावादतो युक्तिबाधितम् । तथाऽप्याभाति स्पष्टं प्रत्यक्षेणैवावतारेषु भाति । अतो न हातुं युक्तम् । प्रत्यक्षस्य जात्या प्रबलत्वात् । द्वितीयां कोटिं दर्शयति ॥ विश्वभूलमिति । सर्वजन्मादिकारणं ब्रह्म च मम ज्ञानाद्बहिर्न भवति । मया जडदेहशून्यतया क्लेशादिशून्यतया च कृतमस्तीत्यर्थः । जडदेहाभावाद्युपपादनायैव विश्वमूलमित्युक्तम् । सर्वकारणे जडदेहसंबन्धादे-रुत्पादकासंभवेनासंभवादिति भावः । यद्यस्मादेव तस्मादुभयत्रापि हरेर्जडदेहवत्त्वादौ तदभावे च मे मनः संप्रधावति । हरेर्जडदेहवत्त्वादौ प्रत्यक्षमाश्रित्य पुनः संशयो भवतीत्यर्थः । तस्मान्मध्य-स्थोऽस्मि ॥ १६ ॥

**यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।**
**तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥**

**प्रकाशिका–** अस्तु मध्यस्थत्वं ततः किमित्यत आह ॥ यश्चेति । मूढतमः सर्वथा ब्रह्मज्ञानशून्यो बुद्धेः शास्त्रजनितब्रह्मज्ञानस्य परं परभागम् । पारमिति यावत् । गतो ब्रह्मविषयकनिश्चयवानित्यर्थः । अन्तरितो मध्यस्थः संशयवानित्यर्थः ॥ १७ ॥

**अर्थाभावं विनिश्चित्य प्रतीतस्याप्यनात्मनः ।**
**तां चापि युष्मच्चरणसेवयाहं पराणुदे ॥ १८ ॥**

**प्रकाशिका–** एतत्संशयनिराकरणे मम न पुनर्युष्मदुपदेशापेक्षा सेयं भगवतो मायेति पूर्वतनयुष्मदुपदेशविमर्शेन मयैव निराकर्तुं शक्यत्वादित्याशयेनाह ॥ अर्थाभावमिति । अपि यद्यप्येवं संशयस्तथाऽपीत्यर्थः । ईश्वरावतारे प्रतीतस्य प्रत्यक्षप्रतीतिविषयस्याप्यनात्मनो जडदेहस्य सकाशादर्थाभावमीश्वरस्य पुरुषार्थाभावम् । उपलक्षणमेतत् । भ्रान्त्यादिरूपसंसारकारणाभावं च युष्मच्चरणसेवया युष्मच्चरणसेवालब्धयुष्मदुपदेशार्थपर्यालोचनेन विनिश्चित्येदमित्थमेवेत्यवधार्य तां च तामपि जात्या प्रबलामुक्तप्रत्यक्षप्रतीतिमपि पराणुदे दुर्बलतया स्वार्थसाधनाक्षमां करोतीत्यर्थः । अयं भावः । सत्यं भगवदवतारेषु जडदेहवत्त्वादिकं लोकानां प्रत्यक्षत एव प्रतीयत इति । तथाऽपि न तत्सत्यम् । उपजीव्यागमार्थसङ्ग्राहकयुष्मद्वचनार्थपर्यालोचनया विरुद्धत्वात् । तथाहि । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीदित्याद्यागमे च कृष्णस्य निरनिष्टो निरवद्य इत्याद्यागमोक्तं विष्णुत्वं निश्चित्य कृष्णे दोषग्राहिप्रत्यक्षं विष्णौ दोषग्राहीति वक्तव्यम् । अन्यथा कश्चिदयं दोषी स्यान्न विष्णुर्दोषीति । अतो निरनिष्ट इत्याद्यागमस्योक्तप्रत्यक्षोपजीव्यत्वम् । सेयं भगवतो मायेति युष्मद्वचनस्य तदर्थानुवादरूपत्वात् । उक्तप्रतीतेः स्वोपजीव्यागमार्थसंवादियुष्मद्वचनार्थपर्यालोचनया विरुद्धत्वं तस्मान्न स्वार्थसाधकत्वमतो न तन्मूलसंशयावकाश इति ॥ १८ ॥

**यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।**
**रतिरासो भवेत् तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥**

**प्रकाशिका–** हरिचरणारविन्दसेवैव पुरुषार्थहेतुत्वादभ्यर्थनीया किमस्मच्चरणसेवयेत्यत आह ॥ यत्सेवयेति । येषां युष्माकं सेवया मधुद्विषः । उपलक्षणयाऽध्यात्मगतमध्यादिसर्वदैत्याभिभावकस्य हरेः पादयोस्तीव्रो दृढतरो रतिरासो भक्तिलक्षणोत्सवो व्यसनं संसारमर्दयति नाशयतीति व्यसनार्दनः । तथा च युष्मच्चरणसेवा हरिचरणसेवा साधिकेति भावः ॥ १९ ॥

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥

**तात्पर्यम्–** 'आत्मनस्तु गुणाभावं वदतो नत्वसत्यता । अपृष्टस्य दमार्थं च गुणायैव भवत्यपी'ति व्यासस्मृतेः । विद्यमानमप्यनुभवमन्यथा वदति विदुरः । 'द्रोणद्रौणिकृपाः पार्थो भीष्मो विदुरसञ्जयौ । ये चान्ये तत्र देवांशाः सम्यक्तत्त्वापरोक्षिण' इति स्कान्दे ॥ २० ॥

**प्रकाशिका–** ननु तर्ह्यस्मदादिसेवया कुतः सर्वसंसारं नार्दयन्नित्यत आह ॥ दुरापेति । वैकुण्ठलोकमार्गभूतेषु महत्सु । यत्र येषु जननं जननादिरूपसंसारमर्दयतीति जनार्दनः । तथाच पूर्वार्जितपुण्यसंपन्नैः कैश्चिद्भिरेव भवादृशानां सेवा लभ्या न सर्वैरिति भावः । अत्र तत्त्वनिश्चयवतो विदुरस्योभयत्र मनो धावत्यन्तरितोऽस्मीत्यादीनां संशयवचनमुत्तरत्र च ब्रूहि मेऽज्ञस्येत्यज्ञानवचनं च कथम् । असत्यवचनेन दोषस्मरणादित्याशङ्कां प्रमाणेनैवापाकरोति ॥ आत्मनस्त्विति । तु शब्दोऽपि शब्दार्थः । देवादेरिति शेषः । आत्मनः स्वस्य ज्ञानादिगुणाभावं वदतोऽपि देवादेरसत्यताऽसत्यवचनजन्यदोषो न तु नैव । यत उक्तरूपमसत्यवचनमपृष्ठस्यापृष्ठत्वस्य दमार्थं नाशार्थं भवति । मैत्रेयादिभिर्वक्ष्यमाणस्य प्रमेयस्य पृष्ठत्वलाभाय भवतीति यावत् । नाशार्थम् । च शब्दस्तत्साध्यलोकोपकारसमुच्चयार्थः । अन्यथा नापृष्टः कस्यचिद् ब्रूयादिति वचनात्तेषां वचनप्रसक्तेरेवाभावे लोकानां ज्ञानप्राप्तिर्न स्यात् । अतो लोकोपकारकस्य पृष्ठत्वलाभवत् । नासत्यवचनं दोषापादकमिति भावः । न केवलमेवं वचनमुक्तरित्या दोषानापादकं प्रत्युत तस्य गुणापादकमेवेत्याह ॥ गुणायैवेति । स्वस्येति शेषः । गुणायैव प्राप्तज्ञानदार्ढ्यविशेषज्ञानलाभादि- रूपगुणायैवेत्यर्थः । जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय च । पृच्छन्ति साधव इत्यादि वचनात् । अपि शब्दोऽपृष्टत्वदमसमुच्चयार्थः । ननु विदुरस्य ज्ञानमस्तीत्येतत्कुत इत्यत आह ॥ विद्यमानमपीति । अनुभवं तत्त्वनिश्चयम् । अन्यथोभयत्रेति संशयरूपत्वेनाज्ञस्येत्यज्ञानत्वेन च वदतीत्यर्थः । ननु विदुरोऽपीतरवदज्ञात्वैव पृच्छतीति किं न स्यादित्याशंकायां तस्य ज्ञानित्वे प्रमाणमाह ॥ द्रोणेति । ये चान्येऽभिमन्युप्रभृतयः । तत्र कुरुषु यतो देवांशाः ॥ २० ॥

सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ।
तेभ्यो विराजमुद्धृत्य तमनु प्राविशद् विभुः ॥ २१ ॥

**तात्पर्यम्–** विराजं ब्रह्माणम् । 'ब्रह्माणं प्राविशद्विष्णुः सहस्राक्षः सहस्रपादि'ति ब्राह्मे ॥ 'अनुप्रविश्य ब्रह्माणं प्राणं दशविधं तथा । इन्द्रियाणीन्द्रियार्थांश्च वर्णांश्चैवासृजद्धरिरि'ति गारुडे ॥ २१-२४ ॥

**प्रकाशिका–** प्रमेयान्तरं प्रष्टुं विदुरः पूर्वं मैत्रेयेणोक्तमनुवदति ।। सृष्ट्वेत्यादि त्रिभिः । कंाराणि ब्रह्माण्डलक्षणकार्यसहितानि । तेभ्यस्तदंशेभ्य उद्धृत्योत्पाद्य । अत्र विकार ब्रह्माण्डस्योक्तत्वाद्विराजमित्यस्य विवक्षितमर्थमाह ।। विराजमिति । ब्रह्माणं ब्रह्माण्डान्तर्गत देहम् । कुत इत्यतो यमाहुराद्यमिति वक्ष्यमाणविराडान्तर्गतपुरुषलक्षणस्य ब्रम्हाण्डान्त निष्ठतयाऽन्यत्रोक्तत्वादित्याशयेनाह ।। ब्रह्माणमिति । विराजाख्यमिति शेषः । यस्मिन्दशवि वक्ष्यमाणद शविधप्राणादिस्रष्टत्वस्यापि ब्रह्माण्डान्तर्गतनिष्ठतयाऽन्यत्रोक्तत्वादयं विराट् शब्दो एवेत्याशयेनाह ।। अनुप्रविश्येति ।। २१ ।।

**यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् ।**
**यत्र विश्व इमे लोकाः सविकाराः समासते ।। २२ ।।**

**प्रकाशिका–** प्रविष्टस्य स्वरूपमाह ।। यमिति । आहुः पुरुषसूक्ताद्यागमाः सविकाशमसंक ।।

**यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ।**
**त्वयेरिता यतो वर्णास्तद्विभूतीर्वदस्व नः ।। २३ ।।**

**यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ।**
**प्रजा विचित्राकृतय आसन् याभिरिदं ततम् ।। २४ ।।**

**प्रकाशिका–** प्राणादयः पञ्चनागादयः पञ्चेति दशविधः । इन्द्रियार्थैरिन्द्रियविषयैः शब्दा रिन्द्रियैश्चक्षुरादिभिः सहितः सेन्द्रियार्थेन्द्रियः । अध्यात्मादिभेदेन त्रीणि रूपाणि त्रिवृत् । अध्यात्मादित्रिधा खिला इत्युक्तत्वात् । यस्मिन्यस्माद्यतो ब्रह्मान्तर्यामिणः सकाशा वर्णा वर्णाभिमानिनस्तस्य ब्रह्मान्तर्यामिणो विभूतीरैश्वर्याणि । महात्म्यानीति यावत् । यत्र यस्मा नप्तृभिः पौत्रपुत्रैः ।। २३,२४ ।।

**प्रजापतीनां स पतिश्चक्लृपे कान् प्रजापतीन् ।**
**सर्गांश्चैवानुसर्गांश्च मनून् मन्वन्तराधिपान् ।। २५ ।।**

**प्रकाशिका–** प्रजापतीनां पतिः स ब्रह्मान्तर्गतश्चक्लृपे चकार । सर्गान्नवविधान् । अनुसर्गा न्भेदान् ।। २५ ।।

**एतेषामपि वंशांश्च वंशानुचरितानि च ।**

**उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ।**
**तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥ २६ ॥**

**प्रकाशिका–** भो मित्रात्मज मैत्रेय । संस्थां सन्निवेशम् ॥ २६ ॥

**तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम् ।**
**वद नः सर्गसंव्यूहं गर्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥**

**प्रकाशिका–** सरीसृपाः सर्पादयः सहस्रपादादयो वा सर्गसंव्यूहं सृष्टिविस्तरम् । गर्भस्वेदद्विजोद्भिदां गर्भात् स्वेदात् द्वाभ्यां गर्भाण्डाभ्यां च जाता गर्भस्वेदद्विजा भूमिमुद्भिद्य जाता उद्भिजस्तेषाम् ॥ २७ ॥

**गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययात्मनः ।**
**सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २८ ॥**

**प्रकाशिका–** गुणावतारैः सत्त्वादिगुणप्रवर्तकावतारैर्ब्रह्मविष्णुमहेश्वराख्यैः सर्गस्थित्यप्ययेष्वात्मा मनो यस्य स तथा तस्य । विश्वस्य विश्वं सृजतः । उदारविक्रममुत्कृष्टपराक्रमम् ॥ २८ ॥

**वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ॥ २९ ॥**

**प्रकाशिका–** रूपशीलस्वभावतो रूपतो लिङ्गतः शीलत आचारात्स्वभावतः शमादिधर्मेभ्यः । ॥ २९ ॥

**ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणम् ।**
**यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ ३० ॥**

**तात्पर्यम्– विकर्षणं विभागः ॥ ३० ॥ इति तृतीयतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥**

**प्रकाशिका–** वेदस्य चेत्येकवचनं समुदायापेक्षम् । विकर्षणमित्यस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ विकर्षणमिति । तथाच वेदानां शाखाभेदेन विभागमपि वेदेति मूलार्थ इति भावः । वितानानि विस्तारान् योगस्याष्टाङ्गयोगस्य पथो मार्गान् ॥ ३० ॥

**नैष्कर्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्स्मृतम् ।**
**पाषण्डपथवैषम्यं प्रतिलोमनिवेशनम् ॥ ३१ ॥**

**प्रकाशिका–** नैष्कर्म्यस्य मोक्षसाधनस्य सांख्यज्ञानस्य साधनं तन्त्रं शास्त्रम् । भगवत्स्मृतं भगवत्प्रणीतं पाषण्डपथवैषम्यं पाषण्डमार्गाद्वैलक्षण्यं मोक्षमार्गस्येति शेषः । पाषण्डिमार्गाद्वैषम्यं यस्मिन्प्रतिपादितं तत्तन्त्रमिति वा प्रतिलोमनिवेशनं ब्राह्मणादिकन्यानां क्षत्रियादिभिर्विवाहकरण-लक्षणम् ॥ ३१ ॥

**जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ।**
**धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः ॥ ३२ ॥**

**प्रकाशिका–** यावतीर्यावत्यः । तावतीरिति शेषः । गुणकर्मजाः सत्त्वादिगुणानुसारिकर्मजा अविरोधतः परस्पराविरोधनिमित्तानि साधनानि ॥ ३२ ॥

**वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक् ।**
**श्राद्धस्य च विधिं ब्रह्मन् पितॄणां सर्वमेव च ॥ ३३ ॥**

**प्रकाशिका–** वार्ताया वाणिज्यादिसेवनोपायस्य दण्डनीते राज्यपरिपालननीतेः । श्रुतस्य श्रुत्युक्त धर्मस्य च विधिं प्रकारम् ॥ ३३ ॥

**ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ।**
**दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम् ॥ ३४ ॥**

**प्रकाशिका–** ग्रहाः सूर्यादयो नक्षत्राण्यश्विन्यादीनि तारा ध्रुवादय एतेषां संस्थितिमिति बुद्ध्या विविक्तेनान्वयः । कालावयवानां परमाण्वादीनां संस्थितिं लक्षणम् । इष्टं यागादि पूर्तं तटाकादि-करणम् ॥ ३४ ॥

**प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि ।**
**येन वा भगवांस्तुष्येद् धर्मयोनिर्जनार्दनः ॥ ३५ ॥**

**प्रकाशिका–** धर्मयोनिर्धर्मप्रवर्तकः ॥ ३५ ॥

**सम्प्रसीदति वा येषामेतदाख्याहि मेऽनघ ।**
**अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ ३६ ॥**

**अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ।**
**तत्त्वानां भगवस्तेषां कतिधा प्रतिसंक्रमः ॥ ३७ ॥**

**प्रकाशिका–** प्रतिसङ्क्रमः प्रलयः ॥ ३७ ॥

**तत्रेमं क उपासीरन् क उ स्विदनुशेरते ।**
**पुरुषस्य च संस्थानं स्वरूपं वापरस्य च ।**
**ज्ञानं च नैगमं यत् तद् गुरुशिष्यप्रयोजनम् ॥ ३८ ॥**

**प्रकाशिका–** तत्र प्रलये इमं हरिम् । उ शब्दश्चार्थे । पुरुषस्य पूर्णषड्गुणस्य हरेः संस्थानं व्यक्तिरूपेणावस्थानम् । अपरस्यास्वतन्त्रतत्त्वस्य स्वरूपं च । नैगमं वेदजन्यम् । गुरुशिष्ययोः प्रयोजनं यस्मात् ॥ ३८ ॥

**निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ।**
**स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥**

**प्रकाशिका–** इह वेदे यानि सूरिभिः प्रोक्तानि तस्य ज्ञानस्य निमित्तानि तान्यपि ब्रूहि । ज्ञानं ज्ञानसाधनं भक्त्यादि । इदं चावश्यं वक्तव्यमेवेत्याशयेनाह ॥ स्वत इति । स्वत उपदेशाभावे । कुतो न कुतोऽपि ॥ ३९ ॥

**एतान् मे पृच्छतः प्रश्नान् हरेः कर्मविवित्सया ।**
**ब्रूहि मेऽन्धस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥**

**प्रकाशिका–** प्रश्नान् प्रश्नविषयानर्थान् । अन्धत्वमुपपादयति ॥ अजयेति । प्रकृत्या नष्टमाच्छादितं चक्षुर्ज्ञानं यस्य स तथा तस्य मे मित्रत्वादनिमित्तबन्धुत्वात् । सूर्यस्थानीयत्वादिति वा । यथाऽन्धस्य सूर्य उपकारकस्तथा मम त्वमिति भावः । अत्र मे प्रश्नान्मे मित्रत्वादित्यन्वयभेदान्न म इत्यस्य पौनरुक्त्यम् ॥ ४० ॥

**सर्वे वेदाश्च यज्ञाश्च तपोदानानि चानघ ।**
**जीवाभयप्रदानस्य न कुर्वीरन् कलामपि ॥ ४१ ॥**

**प्रकाशिका–** जीवाभयप्रदानस्य जीवानामभयं मोक्षो यस्मात्ज्ञानात्तत्प्रदानस्य यत्फलं तत्कलामपीति योज्यम् ॥ ४१ ॥

**श्रीशुक उवाच–**
**स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ।**
**प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाह ॥ ४२ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे अष्टमोऽध्यायः ।**

**प्रकाशिका–** कल्पो विकल्पः । प्रश्न इति यावत् । आपृष्टः पुराणविषयप्रश्नो यस्येत्यर्थः । भगवत्कथायामित्यनेन सर्वेऽपि प्रश्ना भगवद्विषया एवेति सूचयति । अत एव प्रवृद्धहर्षः प्रहसन्निव मन्दस्मितं कुर्वन् ॥ ४२ ॥ इति श्रीभागवतटिप्पण्यामष्टमोऽध्यायः ॥ ३-८ ॥

## अथ नवमोऽध्यायः ।

**मैत्रेय उवाच–**

**सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः ।**
**बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १ ॥**

**प्रकाशिका–** श्रद्धया श्रवणाय श्रोतारमभिनन्दति ॥ सत्सेवनीय इति । सतां सेवितुं योग्यः । बत अहो । यतो यस्मादिहास्मिन्वंशे बभूविथ जातोऽसि । कथं भूतः । भगवानेव प्रधानः सर्वकर्मसूद्देश्यो यस्य सः । अत्र हेतुरजितस्य हरेः कीर्तिलक्षणपुष्पमालां पदे पदे प्रतिपदं प्रतिपाद्यतया विद्यमानामभीक्ष्णं नूतनयसि । नवीनां करोषि यतोऽनुभूतामपि विशेषज्ञानायाननुभूतां वदसीति भावः ॥ १ ॥

**सोऽहं नृणां क्षुल्लसुखाय दुःखं महद् गतानां विरमाय तुभ्यम् ।**
**प्रवर्तये भागवतं पुराणं यदाह साक्षाद् भगवान् ऋषिभ्यः ॥ २ ॥**

**प्रकाशिका–** द्वेधा हि श्रीभागवतसंप्रदायप्रवृत्तिः । संक्षेपतः श्रीनारायणाद्ब्रह्मनारदादिद्वारेण । विस्तरस्तु शेषात्सनत्कुमारसांख्यायनादिद्वारेण । तत्र द्वितीये नारायणब्रह्मसंवादेन संक्षेपतश्चतुःश्लोक्या श्रीभागवतं निरूपितम् । तदेव ब्रह्मनारदसंवादेन किञ्चिद्विस्तरेणोक्तम् । तदेव शेषोक्तमतिविस्तरतस्त्वत्प्रश्नोत्तरत्वेन वक्ष्यामीत्याशयेनाह ॥ सोऽहमिति । यः कृष्णेन त्वदुपदेशायादिष्टो यस्त्वया प्रार्थित इति वा सोऽहं क्षुल्लसुखायाल्पसुखाय महद्दुःखं गतानां नृणां दुःखस्य विरमाय नाशाय नराणां प्रवर्तये त्वत्प्रश्नोत्तरत्वेन प्रारभे यत्पुराणम् ॥ २ ॥

**आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठसत्वम् ।**
**विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ ३ ॥**

**प्रकाशिका–** कोऽसौ भगवान् केभ्यश्च ऋषिभ्यः प्राह कथं च त्वया तत्प्राप्तमित्यपेक्षायामाह ॥ आसीनमित्यादिना । उर्व्यां पाताले लोकानां च त्रित्वविवक्षया पातलस्याप्युर्वीपदेन विवक्षितत्वात्

संकर्षणं शेषम् । अकुण्ठसत्त्वमप्रतिहतबलज्ञानरूपम् । अतः सङ्कर्षणात्परस्य परमात्मनस्तत्त्वं स्वरूपं विवित्सवो ज्ञातुकामाः । कुमारः सनत्कुमारो मुख्यो येषां ते तथा ॥ ३ ॥

**स्वमेव धिष्ण्यं बहुमानयन्तं यं वासुदेवाभिधमामनन्ति ।**
**प्रत्यक्धृताक्षाम्बुजकोषमीषदुन्मीलयन्तं विबुधोदयाय ॥ ४ ॥**

**तात्पर्यम्– 'आधार आश्रयो धिष्ण्यं निधानं चाभिधीयत' इत्यभिधानम् ॥ ४ ॥**

**प्रकाशिका–** आप्तत्वोपपादनाय तमेव विशिनष्टि ॥ स्वमेवेति त्रिभिः । अत्र धिष्ण्यशब्दस्य प्रकृतोपयुक्तमर्थमभिधानेनैव दर्शयति ॥ आधार इति । आधाराश्रयादिशब्दैरभिधीयत इत्यर्थः ॥ तथा चायं मूलार्थः ॥ यं वासुदेवाभिधं वासुदेव शब्दवाच्यम् । तेनात्यन्ताभिन्न इति यावत् । आमनन्ति वेदास्तं स्वं स्वीयं धिष्ण्यमाश्रयभूतं सङ्कर्षणाख्यं भगवन्तमेव बहुमानयन्तं बहु यथा स्यात्तथा पूजयन्तम् । पुनः कथं भूतम् । प्रत्यगन्तर्धृतं बाह्यव्यापारान्निवर्तितमित्यर्थः । निमीलितमिति यावत् । अक्षांबुजकोशं नेत्राख्यकमलमुकुलं विबुधानामुदयायाभ्युदयायेषदुन्मीलयन्तं विकसितं कुर्वाणम् ॥४॥

**स्वर्धुन्युदारैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ।**
**पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्हाः ॥ ५ ॥**

**प्रकाशिका–** यस्य यच्चरणोपधानं चरणावुपधीयेते यस्मिंस्तत् । चरणपीठायमानमिति यावत् । पद्ममहिराजकन्यां सप्रेमं प्रेमसहितं यथा स्यात्तथा नाना बलिभिर्बहुविधपूजासाधनैरर्चन्ति । किं कुर्वत्यः । स्वर्धुन्याः स्वर्गनद्या गङ्गाया उदस्योदकस्यारः प्राप्तिर्येषां तैः । गङ्गोदकस्नानेनार्द्रैरिति यावत् । स्वीयजटाकलापैः पद्ममुपस्पृशन्त्यः स्पृष्ट्वा नमंत्यः सत्यः । कथं भूताः । वरार्हा वरप्राप्तियोग्याः । अनेनोत्तमपतिप्राप्तये पूजादीति सूचयति ॥ ५ ॥

**मुहुर्गुणन्तो वचसानुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः ।**
**किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥**

**प्रकाशिका–** पुनः किं कुर्वत्यः । अस्य शेषस्य कृतानि कर्माणि तानि जानन्तीति तज्ज्ञा अनुरागेण भक्त्या स्खलन्ति पदानि यस्मिंस्तेन वचसा मुहुर्गृणन्त्यः सत्यः । तं सहस्रमेव साहस्रं किरीटिनां सहस्रे विद्यमाना ये मणिप्रवेका रत्नश्रेष्ठास्तैः प्रद्योतितं प्रकाशितमुद्दाममुत्कृष्टं फणानां सहस्रं यस्य स तथोक्तः । तमपृच्छन्निति पूर्वेणान्वयः ॥ ६ ॥

**प्रोक्तं किलैतद् भगवत्तमेन निवृत्तिधर्माभिरताय तेन ।**
**सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्गधृतव्रताय ॥ ७ ॥**

**सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ।**
**जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च ॥ ८ ॥**

**प्रकाशिका–** तेन संकर्षणेन निवृत्तधर्माभिरता येत्यादीनि चतुर्थ्यन्तानि तेषां पुराणश्रवणाधिकारोपपादनार्थानि । कर्तृविशेषणानि तु आप्तत्वोपपादनार्थानि । परंपराकथनं श्रोतुः श्रद्धातिशयजननाय । श्रूयते हि श्रद्धादीनां तत्त्वज्ञानहेतुत्वं श्रद्धावांल्लभते ज्ञानमिति । पारमंहस्ये धर्मे मुख्यः । अन्वितायानुगताय ॥ ७,८ ॥

**प्रोवाच मह्यं सदयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ।**
**सोऽहं तवैतत् कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय ॥ ९ ॥**

**प्रकाशिका–** पुलस्त्येनोक्तो वरेणाभिनन्दितः । अत्रेयमाख्यायिका । पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षसनाशाय यज्ञे प्रवृत्तो वसिष्ठवचनान्निवृत्तः । ततः पुलस्त्येन स्वसन्ततिरक्षणात्तुष्टेन वरोदत्तः पुराणवक्ता भविष्यसीत्येवं रूपा । तां सूचयितुं विशेषणम् ॥ ९ ॥

**उदप्लुतं विश्वमिदं तदासीद् यन्निद्रया मीलितदृङ् न्यमीलयत् ।**
**अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतावनीहः ॥ १० ॥**

**प्रकाशिका–** तत्र तावत्पाद्मकल्पमिमं शृण्वित्युक्तम् । पाद्मं मैत्रेयमुखेन दर्शयन् शुक आह ॥ उदप्लुतमिति । अनीह उपरतजगद्व्यापारः स्वात्मरतौ स्वस्मिन्नेव रमणे कृतक्षणो लब्धावसरोऽहीन्द्राख्ये तल्पे शय्यायामेकः सर्वावतारैरेकीभूतोऽधिशयानः सन् यद्यदाऽमीलितदृक् विनिद्रोऽपि न्यमीलयन्नेत्रे निमीलितवान् । तदेवं विश्वमुदप्लुतमुदे सत्यलोकपर्यन्तं प्राप्ते प्रलयजले प्लुतं मग्नमासीदित्यन्वयः ॥ १० ॥

**सोन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ।**
**उवास तस्मिन् सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः ॥ ११ ॥**

**प्रकाशिका–** अन्तःशरीरे स्वशरीरमध्येऽर्पितानि स्थापितानि भूतानां प्राणिनां स्थूलदेहानां नष्टत्वात्सूक्ष्माणि शरीराणि येन स तथा । कालात्मिकां कालाख्यां सहकारिशक्तिमुदीरयानो जनयन् । कथं भूते सलिले । स्वपदे स्वीये स्थाने । अनेन तस्य नारायणशब्दवाच्यत्वं दर्शयति । रुद्धवीर्योऽनाविर्भूतशक्तिः ॥ ११ ॥

**चतुर्युगानां च सहस्रमप्सु स्वपंस्तयोदीरितया स्वशक्त्या ।**
**कालाख्ययाऽसादितकर्मतन्त्रो लोकानपीमान् ददृशे स्वदेहे ॥ १२ ॥**

**प्रकाशिका–** स्वापावधिं दर्शयन् तस्मात्पुनः सृष्टिं वक्तुमाह ॥ चतुर्युगाणामिति । अत्र युग शब्दो महायुगपरः । उदीरितया तया जनितया पूर्वोक्तया स्वशक्त्या सहकारिभूतयाऽऽसादितकर्मतन्त्र उप-स्थापितादृष्टाख्यसाधनः । लोकान् जनान् । अपिशब्दः कालादिसहकारिदर्शनसमुच्चयार्थः ॥१२॥

**तस्यात्मसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसाऽतनीयान् ।**
**गुणेन कालानुगतेन विद्धः शुष्यंस्तदाऽभिद्यत नाभिदेशात् ॥ १३ ॥**

**तात्पर्यम्– 'उदकं वायुना शुष्कं भिन्नं पद्ममभूद्धरेरि'ति पाद्मे ॥ १३ ॥**

**प्रकाशिका–** आदौ पद्मोत्पत्तिप्रकारमाह ॥ तस्येति । तदा सृष्टिकाले प्राप्ते । तस्य नाभिदे-शादित्यन्वयः । कथं भूतस्य । आत्मनां जीवानां यानि सूक्ष्माणि शरीराणि तेष्वभिनिविष्टा स्थौल्यकरणायाभिनिवेशयुक्ता दृष्टिर्यस्य स तथा तस्य । अन्तर्गत उदरान्तर्गतोऽतनीयान् गर्भोदकरूपः स्थूलोऽर्थः । कालानुगतेन कालानुसारिणा रजसा गुणेनानुविद्धः क्षोभितः सन् शुष्यन्वायुना घनीभवन् । अभिद्यत पद्माकारेण निर्गतोऽभवदित्यर्थः । अत्रान्तर्गतोऽर्थः क इति न प्रतीयतेऽतस्तं प्रमाणेनैव दर्शयति ॥ उदकमिति । वायुना शुष्कं घनीभूतमित्यनेन मूले वायुनेत्यध्याहारं सूचयति । पद्मं सत् हरेर्नाभिदेशाद्भिन्नं निर्गतमभूदित्यन्वयः । तथा चान्तर्गतोऽर्थो गर्भोदकरूपो ग्राह्य इति भावः ॥ १३ ॥

**स पद्मकोषः सहसोदतिष्ठत् कालेन कर्मप्रतिबोधितेन ।**
**स्वरोचिषा तत् सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥**

**तात्पर्यम्– आत्मा विष्णुरस्य योनिः ॥ १४ ॥**

**प्रकाशिका–** उत्पन्नस्य पद्मस्याभिवृद्धिमाह ॥ स पद्मकोश इति । अत्रात्मयोनिरित्येतत्स्वस्य कारणमित्यन्यथाप्रतीतिवारणाय व्याचष्टे ॥ आत्मेति ॥ ततश्चायं मूलार्थः ॥ आत्मयोनिः श्रीविष्णुकारणकः स पद्मकोशः सहसा दृष्टकारणाभावेऽपि कर्मप्रतिबोधितेन कार्यजननाय जीवा-दृष्टैरुन्मुखीकृतेन कालेन निमित्तेनोदतिष्ठदभिवृद्धोभवत् ॥ १४ ॥

**तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत् सर्वगुणावभासम् ।**
**तस्मिन् स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदन्ति सोऽभूत् ॥ १५ ॥**

**तात्पर्यम्– 'पद्मसंस्थाद्धरेस्तत्र ब्रह्माऽजनिचतुर्मुख' इति च । सर्वगुणावभासं पृथिव्यात्मकम् । पृथिव्यां हि सर्वे शब्दादयो गुणा अवभासन्ते । 'तस्यासनविधानार्थं पृथिवी पद्ममुच्यत' इति मोक्षधर्मे । 'प्रधानवाचकस्त्वेकश्चानन्यः केवलः स्वयमि'ति ब्राह्मे ॥ १५ ॥**

**प्रकाशिका–** तत्सलिलं प्रलयजलम् । ब्रह्मणः पद्ममात्रजन्यत्वप्रसिद्धिमपाकर्तुं पद्मे विष्णुप्रवेशमाह ॥ तल्लोकपद्ममिति । अत्र विष्णोः पद्मे प्रवेश एवोच्यते न तस्माद्ब्रह्मणो जनिरतः पद्मस्थविष्णोरेव ब्रह्मणो जनिरत्र व्याख्येत्याशयेन तत्र प्रमाणं पठति ॥ पद्मसंस्थेति । अनेन तस्मिन्स्वयमिति पदद्वयं तस्मिन्पद्मे स्थितात्स्वयं हरेरिति व्याख्येयमिति सूचयति । तत्र पद्मे । अनेन तस्मिन्नित्यस्यावृत्तिं सूचयति । चतुर्मुखः सन् ब्रह्माजनीत्यर्थः । चतुर्मुख इत्यनेनोत्तरश्लोकतात्पर्यमुक्तम् । सर्वगुणावभासमित्यस्याभिप्रेतमर्थं दर्शयति ॥ सर्वगुणेति । सर्वगुणावभासा पृथिवी तदुपादानकत्वात्तदात्मकमित्यर्थः । सामानाधिकरण्यलब्धार्थप्रदर्शनाय पृथिव्यात्मकमित्युक्तम् । ननु सर्वगुणावभासशब्देन कथं पृथिवीग्रहणम् । रूढेरभावादित्यतो योगं सूचयति ॥ पृथिव्यामिति । हि यस्मात्सर्वे गुणाः शब्दादयोऽवभासन्ते तस्मात्सा सर्वगुणावभास शब्देनोच्यत इति शेषः । अनेन सर्वेषां गुणानां शब्दादीनामवभासोऽनुभवो यस्याः सा सर्वगुणावभासेति विग्रहं सूचयति । तदात्मकत्वात्पद्ममपि सर्वगुणावभासामित्युच्यत इति भावः । पद्मस्य पृथिव्यात्मकत्वे स्यादेतद्व्याख्यानं तदेव कुत इत्यतोऽत्रापि प्रमाणमाह ॥ तस्येति । तस्य ब्रह्मण आसनविधानार्थमासनं विधातुं पृथिवीरूपं पद्ममुच्यत इत्यर्थः । पद्मसंस्थहरेरित्यत्र मूले स्वयमित्येतद्धरिपरमिति सूचितम् । तत्र प्रमाणमाह ॥ प्रधानेति । तु शब्दोऽवधारणे । एक इत्यादि शब्दः प्रधानवाचक एवेत्यर्थः । तथा च हरेरपि प्रधानत्वात्तद्वाचकत्वं स्वयमित्यस्य युक्तमिति भावः ॥ तथाचायं मूलार्थः ॥ यस्य नाभेः पद्ममभूत्स एव विष्णुः सर्वगुणावभासमुक्तरीत्या पृथिव्यात्मकं तत्पूर्वोत्पन्नं लोकात्मकं पद्मं प्राविविशत्प्रकर्षेण विवेश । उ शब्दोऽत्र प्रमाणप्रसिद्धिद्योतकः । तस्मिन्पद्मेऽन्तर्यामितया स्थितात्स्वयं प्रधानात्तस्मिन्पद्मे वेदमयः सकलवेदद्रष्टा विधाता ब्रह्माभूत् । स कः यमत एव स्वयं स्वयंभुवं प्रवदन्ति । न तु स्वयं व्यक्तत्वेनेति ॥ १५ ॥

**तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः ।**
**परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥**

**प्रकाशिका–** स चास्मिन्कल्पे चतुर्मुखो जात इत्याह ॥ तस्यामिति ॥ च शब्दोऽवधारणे । अवस्थित एवेत्यन्वयः । लोकं जनं परिक्रमन् प्रदक्षिणं कुर्वन् । अनेन प्रदक्षिणतयैव मुखानि भेज इति सूचयति । व्योम्नि तत्तद्दिक्षु देशेषु लोकदर्शनाय विवृत्तनेत्रो विशेषेण सर्वदा विद्यमाननेत्रो

भवितुम् । अनुदिशं दिशमनु दक्षिणादिदिक्षु पूर्वजातेन मुखेन सह चत्वारि मुखानि भेजे । तत्र मुखव्यतिरेकेण नेत्रयोः सर्वदा वृत्त्यसंभवादित्यर्थः ॥ १६ ॥

**तस्माद् युगान्तश्वसनावघूर्णमहोर्मिचक्रात् सलिलाद् विरूढम् ।**
**अपाश्रितः कञ्जमु लोकतन्त्रं नात्मानमद्धाऽविददादिदेवः ॥ १७ ॥**

**प्रकाशिका–** एवं जातस्य चतुर्मुखस्य हर्यनुग्रहेणैवाविर्भूतहरिसाक्षात्कारादिमत्त्वं न स्वत इति वक्तुमादौ तावत्तस्य स्वजनकहरिसाक्षात्काराभावं दर्शयति ॥ तस्मादिति । तस्मात्सलिलात् । कथं भूतात् । युगान्तश्वसनः प्रलयवायुस्तेनावघूर्णं प्रकंपितं महतीनामूर्मीणां चक्रं मण्डलं यस्मिंस्तस्माद्विरूढमुद्गतं चञ्चलं वा लोकानां तन्त्रं लोकानां कारणं कञ्जमुपाश्रितः । उ एव नेत्यनेन संबध्यते । आत्मानं परमात्मानम् । अद्धा प्रत्यक्षम् । अद्धा प्रत्यक्षसत्ययोरित्यभिधानात् । नैवाविन्दत् ॥ १७ ॥

**क एष योऽसावहमब्जपृष्ठ एतत् कुतो वाऽब्जमनन्यदप्सु ।**
**अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सतानुभाव्यम् ॥ १८ ॥**

**तात्पर्यम्– सता ब्रह्मणा । 'स ब्रह्माऽचिन्तयत् कुतो नु पद्मं ब्रह्मणः स्यादिती'ति मैत्रायणश्रुतिः ॥ १८ ॥**

**प्रकाशिका–** तस्यां दशायां तस्य विचारेण हरेः परोक्षज्ञानं कथञ्चिज्जातमित्याह ॥ क एष इति । योऽसावहमब्जपृष्ट एषः कः किं जातिमान् । कस्माज्जात इति यावत् । एतदब्जं वाऽप्सु कुतो जातम् । अनेन मम पद्मस्य च कार्यत्वात्केनचित्कर्त्रा भाव्यमिति सामान्यसिद्धिरुक्ता भवति । यतोऽनन्यत्र विद्यतेऽन्यः कर्ता यस्य तत् । उपलक्षणं चैतत् । अहं चानन्यो मम पद्मस्य चान्यः कर्ता नास्त्यनुपलंभादिति भावः । अनेन प्रसक्तप्रतिषेधो दर्शितः । परिशेषसिद्धमर्थं दर्शयति ॥ अस्ति हीति । यत्रैतदधिष्ठितम् । यस्माज्जातमिति यावत् । तत्किञ्च लोकविलक्षणमिह जलेऽधस्तादस्ति । तेन तु निश्चयेन सता भाव्यम् । अन्यस्यासंभवात् । सदेव तदिति निश्चीयत इति भावः । अत्र सच्छब्दार्थं दर्शयति ॥ सतेति । अत्र हिशब्दसूचितं प्रमाणं दर्शयति ॥ स ब्रह्मेति । अचिन्त-यदुक्तरीत्या विचारितवान् नु निश्चयेन ब्रह्मणः परमात्मनः स्यादिति । ज्ञातवानिति शेषः ॥ १८ ॥

**स इत्थमुद् वीक्ष्य तदब्जनालनालीभिरन्तर्जलमाविवेश ।**
**नार्वाग्गतस्तत्खरनालनालीः स वै विचिन्वंस्तदविन्दताजः ॥ १९ ॥**

**प्रकाशिका–** एवं परिशेषेण स्वस्य पद्मस्य च कर्तारं परोक्षतो निश्चित्य तत्साक्षात्काराय बाह्यं यत्नं बहुकालं कुर्वन्नपि न तल्लब्धवानित्याह ॥ स इत्थमिति द्वाभ्याम् । तस्योदिति नामेति श्रुतेः । उत् ब्रह्म वीक्ष्य विचार्य तस्याब्जस्य नालस्य दण्डस्य नालीभिर्नाडीभिरन्तःस्थितछिद्रैस्तस्य खरनालस्य पद्मस्य नालीर्विचिन्वन्मृगयन् । तत्परब्रह्म नाविन्दत न चक्षुर्विषयं लब्धवानित्यर्थः ॥ १९ ॥

**तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत् सुमहांस्त्रिनेमिः ।**
**यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥**

**प्रकाशिका–** हे विदुर अपारेऽनवसाने प्रलयकालीने तमस्यात्मन स्वस्य सर्गो यस्मात्तं विचिन्वतो मार्गयतस्तिस्रो नेमयश्चातुर्मास्यलक्षणा यस्य स त्रिनेमिः संवत्सरात्मकः कालोऽजस्य हरेर्हेतिः सुदर्शनमिव स्थितास्त्रिनेमित्वादिसाम्यात्सुमहांस्त्रिनेमिः संवत्सरात्मकः काल आयुः । परिक्षिणोतीत्युक्त्या मनुष्यशतवर्षपर्यन्तमित्युक्तं भवति ॥ २० ॥

**ततो निवृत्याप्रतिलब्धकाष्ठः स्वधिष्ण्यमास्थाय पुनः स देवः ।**
**शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥**

**प्रकाशिका–** नैतद्दर्शनमस्मत्प्रयत्नसाध्यं किन्तु तत्प्रसादेनैवातस्तत्प्रसादाय तद्ध्यानादिकमेव मया कर्तव्यमिति निश्चित्य तद्ध्यानं कृतवानित्याह ॥ तत इति । ततो मार्गणादप्रतिलब्धाऽदृष्टा काष्ठा तारतम्यावधिरूपब्रह्मलक्षणा येन स तथा । स्वधिष्ण्यं पद्मं शनैः प्राणं कुंभके निरुध्य जितश्वासो विषयेभ्यो निवृत्तचित्तश्च भूत्वा स आरूढ आश्रितः समाधिलक्षणो योगो येन स तथा भूतः सन् न्यषीदतोपविवेश ॥ २१ ॥

**कालेन सोऽजः पुरुषायुषाभिप्रवृद्धयोगेन विरूढबोधः ।**
**स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्वम् ॥ २२ ॥**

**प्रकाशिका–** योगफलमाह ॥ कालेनेति । पुरुषायुषा संवत्सरशतेन कालेनावधिना स्वकारणमपश्यत् । कथं भूतः । अभिवृद्धः प्रतिदिनमभिवृद्धो योगो ध्यानादिरूपस्तेन विरूढो विशेषेणाविर्भूतो बोधः साक्षात्कारो यस्य स तथा । कथं भूतं तत् । स्वयं स्वयमेव प्रसन्नं सत् हृदयेऽन्तर्भान्तं साक्षात्कारविषयतां प्राप्तं यत्पूर्वं पद्मनाले निर्माणसमये नापश्यत्तदिदानीमपश्यत् ॥ २२ ॥

**मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ।**
**फणासहस्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥**

**प्रकाशिका–** यदपश्यत्तद्वर्णयति ॥ मृणालेति नवभिः । नवस्वप्यपश्यतेत्यस्यैवानुषङ्गः । फणानां सहस्रे आ सम्यग्युतानि संबद्धानि । सहजानीति यावत् । यानि मूर्धरत्नानि तेषां द्युभिः प्रभाभिर्हतं ध्वान्तं यस्य तत्तथा । तच्च तद्युगान्ततोयं च तस्मिन्विद्यमानो मृणालवद्गौरः श्वेतश्चायतश्च शेषस्य भोगो देहः स एव शय्या पर्यंकस्तस्मिन् शयानमेकं प्रधानम् ॥ २३ ॥

**प्रेक्षां क्षिपन्तं हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ।**
**रत्नोदधेरोषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥**

**प्रकाशिका–** नीलपर्वतसाम्येन वर्णयति ॥ प्रेक्षामिति । हरितोपलाद्रेरिन्द्रनीलपर्वतस्य प्रेक्षां शोभां क्षिपन्तं स्वशोभया निराकुर्वन्तम् । कथंभूतस्याद्रेः सन्ध्याकालीनाभ्रमेव नीवीवस्त्रं पीतांबरस्थानीयं यस्य । उरूणि बहूनि रुक्माणि सुवर्णानि किरीटस्थानीयानि मूर्धसु तत्स्थानीयेषु शृङ्गेषु यस्य । कौस्तुभादिस्थानीयै रत्नैरुदधिरिव तस्य तुलस्यादिरूपा ओषधयः सौमनस्यानि पुष्पसमूहाश्च तेषां वनस्रक् वनमाला यस्य वेणव एव भुजा दीर्घत्वसाम्येन हर्यङ्घ्रिस्थानीया यस्य । वृक्षा एवाङ्घ्रयः स्वाश्रयश्रमापहारित्वसाम्येन हर्यङ्घ्रिस्थानीया यस्य ॥ २४ ॥

**आयामतो विस्तरतः समानदेहेन लोकत्रयसंग्रहेण ।**
**विचित्रदिव्याभरणांशुकानां कृतश्रियोपाश्रितदिव्यवेषम् ॥ २५ ॥**

**प्रकाशिका–** आयामतो दैर्घ्येण विस्तरश्च समानेनानुरूपप्रमाणसहितेन लोकत्रयं सङ्गृण्हातीति लोकत्रयसङ्ग्रहस्तेन युक्तं विचित्राणि नानाविधानि दिव्यान्यपूर्वाण्याभरणान्यंशुकानि च तेषां कृता श्रीः शोभा यया शरीरशोभया कृतश्रीस्तयोपाश्रितः समाश्रितो दिव्य औत्पत्तिको वेषः सौदर्यं यस्य स तथा तम् ॥ २५ ॥

**पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुधाङ्घ्रिपद्मम् ।**
**प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥**

**तात्पर्यम्– भिन्नमन्येभ्यो विलक्षणम् ॥ २६ ॥**

**प्रकाशिका–** स्वकामाय स्वाभिलषितफलाय विविक्तमार्गैर्वेदविहितपाषण्डाद्विविक्तमार्गैरभ्यर्चतां पुंसां कामदुघाङ्घ्रिपद्मं कृपया प्रदर्शयन्तमित्यन्वयः । कथं भूतमङ्घ्रिपद्मम् । नखा एवेन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्नं तच्च तदङ्गुलिचारुपत्रं चाङ्गुलय एव चारूणि पत्राणि यस्य तत्तथा । अत्र भिन्नेत्यस्य विदारितार्थत्वप्रतीतिवारणाय प्रकृतोपयुक्तमर्थं दर्शयति ॥ भिन्नमिति । अनेन भिन्नेत्यस्य नाङ्गुलिविशेषणत्वमित्यपि सूचितम् ॥ २६ ॥

**मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन ।**
**शोणायितेनाधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥**

**प्रकाशिका–** मुखेन प्रत्यर्हयन्तं पूजकान्पूजयन्तं सन्मानयन्तमिव स्थितम् । लोकार्तिहर-स्मितेनेत्यादीनि मुखविशेषणानि । लोकार्तिहरं स्मितं यस्मिंस्तेन । परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेनाधरलक्षणविंबफलं दीप्त्या रक्तवदाचरितेन सुनसेन शोभननासयुक्तेन सु शोभना भ्रूर्यस्य तत् । सुभ्रूस्तेन सुभ्रवा । नपुंसकसुलुशब्दवदयं शब्दः ॥ २७ ॥

**कदम्बकिञ्जल्कपिशङ्गवाससा स्वलङ्कृतं मेखलया नितम्बे ।**
**हारेण चानन्तधनेन वत्स श्रीवत्सवक्षस्थलवल्लभेन ॥ २८ ॥**

**प्रकाशिका–** कदंबपुष्पस्य किञ्जल्कः केशस्तद्वत्पिशङ्गं पीतं यद्वासस्तेन मेखलया कांच्या च नितंबे स्वलङ्कृतः । हे वत्स । अनन्तधनेनानर्घ्येण श्रीवत्सयुक्तं वक्षस्थलं तस्य वल्लभेण प्रियेण तत्र । नित्यं विद्यमानेनेति यावत् । हारेण च स्वलङ्कृतम् ॥ २८ ॥

**परार्घ्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ।**
**अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्कम् ॥ २९ ॥**

**तात्पर्यम्– तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे'ति मोक्षधर्मे ॥ २९ ॥**

**प्रकाशिका–** अधुना चन्दनवृक्षसाम्येन हरिं वर्णयति ॥ परार्घ्येति । परार्घ्याणि श्रेष्ठानि केयूराण्यङ्गदानि तत्रत्या ये मणिप्रवेका रत्नश्रेष्ठास्तैः पर्यस्ता व्याप्ता दोर्दण्डा एव सहस्रमनन्तशाखा यस्य । चन्दनवृक्षोऽपि केयुरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति । अव्यक्तमप्रत्यक्षं मूलमधो-भागो यस्येति वृक्षपक्षे व्याख्यानम् । भगवत्पक्षे त्वव्यक्तस्य प्रधानस्य मूलं कारणमित्येव व्याख्येयम् । उपमा च शब्दसाम्यमात्रेणेत्याशयेन भगवतो व्यक्तकारणत्वे प्रमाणं पठति ॥ तस्मादिति । चतुर्दशभुवनाख्यानामङ्घ्रिपाणां वृक्षाणामिदं श्रेष्ठम् । अहीन्द्रस्य शेषस्य भोगैर्देहावयवैरधिवीतकल्कं संवेष्टितत्वचम् । चन्दनवृक्षोऽपि सर्पैर्वेष्टितो भवति ॥ २९ ॥

**चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ।**
**किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥**

**प्रकाशिका–** पर्वतसाम्यं प्रकारान्तरेण दर्शयति ॥ चराचरौक इति । भगवानेव महीध्रः । पर्वतस्तं चराचराणमोको निवासस्थानम् । पर्वतोऽपि तथा । अहीन्द्रस्य शेषस्य बन्धुः । पर्वतोऽप्यहीन्द्राणां

बन्धुः । सलिलेन प्रलयोदकेनोपगूढमावृतम् । पर्वतोऽपि निर्झरोदकैरावृतः । किरीटसहस्राण्येव हिरण्यशृंगाणि यस्य स तत्तथा । पर्वतोऽपि मेर्वादिस्तथा । यथा पर्वतस्य गर्भे क्वचिद्रत्नमाविर्भवति तथाऽऽविर्भवत्स्पष्टं दृश्यमान कौस्तुभरत्नं गर्भे शरीरप्रदेशविशेषे यस्य तम् ॥ ३० ॥

**निवीतमाम्नायमधुव्रताश्रयस्वकीर्तिमय्या वनमालया हरिम् ।**
**सूर्येन्दुवाय्वग्न्यगमत्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥**

**तात्पर्यम्– सूर्येन्दुवाय्वग्न्यादिभिस्त्रिधाम्नो विष्णोरगच्छद्भिः प्राधानिकैः । 'मुक्तवाय्वादिभिर्विष्णुं वृतं ब्रह्मा ददर्श ह । तदन्याभावतो नान्यदतस्तत्स्रष्टुमैच्छते'ति ब्रह्माण्डे ॥ ३१ ॥ इति तृतीयतात्पर्ये नवमोध्यायः ॥ ९ ॥**

**प्रकाशिका–** वनमालया निवीतं संवेषितम् । कथं भूतया स्वकीर्तिमय्या स्वकीर्तिरूपया शुभ्रतासाम्यात् । ननु वनमालायां मधुव्रतैः शोभा दृश्यते । कीर्तौ तु कथमित्यत उक्तम् ॥ आम्नायेति । आम्नाया एव मधुव्रतास्तैः श्रीः शोभा यस्याः सा तथा तया कीर्तिर्वेदैः शोभा प्रतिपाद्यतयैवेति ज्ञातव्यम् । पुष्पमय्यां वनमालाया औषधिसौमनस्य वनस्रज इति पूर्वमुक्तत्वादत्र कीर्तिरिव वनमालात्वेन वर्णितेति ध्येयम् । तथाच वेदप्रतिपाद्यशुद्धकीर्तियुक्त इत्युक्तं भवति । सूर्येन्द्वित्यादिकमन्योपलक्षकमित्याशयेन व्याख्याति ॥ सूर्येन्दुवाय्वग्न्यादिभिरिति । त्रिधामपदार्थं दर्शयन् आगमत्रिधामभिरित्यस्यार्थमाह ॥ त्रिधाम्न इति । अगच्छद्भिरित्यागमपदतात्पर्यकथनम् । सर्वदा तत्समीप एव तिष्ठद्भिरित्यर्थः । तथाच त्रिधाम्नो न विद्यते गमो गमनं येषां तेऽगमत्रिधामानस्तैरिति बहुव्रीहिः । अग्न्याहितादिवत्परनिपात इति भावः । प्राधनिकानामिदं विशेषणमिति दर्शयितुं प्राधनिकैरित्युक्तम् । प्रधनं सङ्ग्राम स्तत्प्रयोजनकैरित्यर्थः । ननु तदा ब्रह्माण्डान्तः कश्यपादिजातानां सूर्यादीनां नष्टत्वेनाविद्यमानत्वात्कथमेतदित्याशङ्कायामेते सूर्यादयो मुक्ता एव विवक्षिता नामुक्ता इति प्रमाणेनैव दर्शयति ॥ मुक्तेति । अत्र वायुर्भूताभिमानी प्रवहः । हेति प्रमाणप्रसिद्धिं दर्शयति । नन्वमुक्ता एवैते किं न स्युरित्यत आह ॥ तदन्येति । मुक्तेभ्योऽन्येषाममुक्तानामभावादन्यदमुक्तवाय्वादिकमत्र न विवक्षितमिति शेषः । अतोऽमुक्तानां वाय्वादीनां तदाभावादेव तदमुक्तं वाय्वादिकं स्रष्टुमैच्छद्ब्रह्मा । तथाच परिक्रमद्भिः रक्षणार्थं परितो धावद्भिः सूर्येन्दुवाय्वग्न्यादयश्च तेऽगमत्रिधामानश्च तैर्मुक्तैः प्राधनिकैर्निमित्तैरन्यैर्दुरासदं दुष्प्रापमिति मूलार्थ इति भावः ॥ ३१ ॥

**तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः श्वसनं वियच्च ।**
**ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥ ३२ ॥**

**प्रकाशिका–** तस्मिन्समये तज्जगन्निर्माणोपयुक्ताशेषपदार्थदर्शनं तस्य नाभूदित्याह ॥ तर्ह्येवेति । तर्हि तदा तस्य भगवतो नाभिसरस्युत्पन्ने सरोजे स्थितमात्मानं स्वम् । वियच्चेत्येतावदेव दर्शितः परं जगन्निर्माणसाधनं लोकानां विसर्गे सृष्टौ दृष्टिर्यस्य ॥ ३२ ॥

**स्वकर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ।**
**अस्तौद् विसर्गाभिमुखस्तमीशमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे नवमोऽध्यायः ।**

**प्रकाशिका–** भगवत्प्रसाद एवाशेषसाधनदर्शनोपाय इत्याशयेन तत्प्रसादाय स्तुतिमेव चकारेत्याह ॥ स्वकर्मबीजमिति । स्वकर्मबीजं स्वादृष्टव्यञ्जकं तमीशं रजसा रजोगुणेनोपरक्तः संबद्धः । स्वकार्ये प्रवर्तत इति यावत् । तदेवाह ॥ प्रजाः सृजन्निति । विसर्गाभिमुखो विविधसृष्ट्यभिमुखोऽव्यक्तवर्त्मानि न व्यक्तं वर्त्म मार्गो यस्य तस्मिन् भगवत्यभिनिवेशितात्मा सभ्यङ्निवेशितचित्तः ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ३-९ ॥

## अथ दशमोऽध्यायः ।

**ब्रह्मोवाच–**
**ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां**
**न ज्ञायते भगवतो गतिरित्यवद्यम् ।**
**नान्यत् त्वदस्ति भगवन्नपि तत्त्वशुद्धं**
**मायागुणव्यतिकराद् यदुरुर्विभासि ॥ १ ॥**

**तात्पर्यम्– स्वतो नास्ति तदधीनविद्यमानमप्यशुद्धम् । यच्च स्वनानात्वं तदपि स्थानभेदादसदेव भाति । 'एकोऽपि स्थाननानात्वान्नानेव हरिरीयते । सर्वान्तर्यामिणस्तस्य न भेदो विद्यते क्वचिदि'ति ब्रह्मवैवर्ते ॥ १ ॥**

**प्रकाशिका–** ब्रह्मणः स्तुतिप्रकारं कथयति कतिपयैः श्लोकैः । तत्रादौ तावद्भगवद्दर्शनेनात्मनः कृतार्थतामाविष्कुर्वन्नाह ॥ ज्ञातोऽसीति । अत्र द्वितीयार्धे त्वदन्यन्नास्ति यदप्यस्तीति प्रतिभाति तन्न शुद्धं तत् । तर्ह्यसतः कथं प्रतीतिरित्यत आह ॥ मायेति । मायागुणक्षोभात्त्वमेवोरुतया विभासीति व्याख्यानमसदिति भावेन विवक्षितं तात्पर्यं दर्शयति ॥ स्वत इति । स्वातन्त्र्येणेत्यर्थः । यथाऽनुते

प्रत्यक्षादिविरोधात् । स्वत इत्यध्याहृत्य योज्यमिति भावः । अपि तत्त्वशुद्धमित्यस्यार्थमाह ॥ तदधीनमिति । अनेन स्वतो नास्तीति विशिष्टनिषेधेन लब्धस्य तदधीनतया विद्यमानार्थस्य परामर्शकस्तच्छब्द इति दर्शयति । अशुद्धं सदोषं । नन्वेवं भगवद्रूपाणामपि स्थानभेदेन भेदस्य प्रतीयमानत्वाद्भगवदन्यत्वप्राप्त्या तदधीनत्वरूपास्वातन्त्र्यप्रसङ्ग इत्याशङ्कापरिहाराय प्राप्तस्य चतुर्थपादस्य तात्पर्यमाह ॥ यच्चेति । उरुरित्यस्य तात्पर्यम् ॥ स्वनानात्वमिति । मायागुणव्यतिकरादित्यस्य तात्पर्यम् ॥ स्थानभेदादिति । वि शब्दार्थः असदेवेति । यच्च स्थानभेदात्स्वनानात्वं भाति तदप्यसदेव भातीत्यन्वयः । अत्र प्रमाणसंवादमाह ॥ एकोऽपीति । स्वगतभेदशून्योऽपीत्यर्थः । ईयते ज्ञायते । हरेः स्वगतभेदशून्यत्वे युक्तिमाह ॥ सर्वान्तर्यामिण इति । क्वचिदपि रूपे । अनेन तत्तत्स्थानस्थितानां रूपाणां परस्परं हरेश्च भिन्नत्वे यत्सर्वान्तर्यामित्वं श्रुत्यादिसिद्धं हरिलक्षणं तदसंभवि स्यादिति युक्तिं सूचयति ॥ ततश्चायं श्लोकार्थः ॥ सुष्ठुचिरो बहुकालो यस्य ध्यानादिरूपप्रयत्नसाध्यप्रसादस्य तस्माज्ज्ञातोऽसि ननु अहो । नन्वव्यक्तमचलं शान्तमिति श्रुत्यादिभिर्भगवतोऽव्यक्तस्वभावत्वावगमात्कथं ज्ञातोऽसीत्युक्तमित्यत उक्तम् ॥ न ज्ञायत इति । भगवतो गतिः स्वरूपं सर्वथा न ज्ञायत इत्यादि श्रुत्यादि व्याख्यानमवद्यम निन्द्यम् । ध्यानादिना प्रसन्नस्येदानीं भगवतो मयैव ज्ञातत्वात् । अतो देहभाजां स्वप्रयत्नेन पिशाचादिवद्भगवान्न ज्ञायत इतीत्येव श्रुत्यादिकं व्याख्येयमिति भावः । ननु नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुत्याऽन्यस्य द्रष्टुः परमार्थतोऽभावात्सर्वथैवाव्यक्तः किं न स्यादित्यत उक्तम् । त्वत्त्वत्तोऽन्यत्स्वतो नास्तीति । तथाच नान्योऽतोस्ति द्रष्टेत्यादिश्रुतीनां स्वातन्त्र्येणान्यद्रष्टृभाव एवार्थो न सर्वथा द्रष्टृभाव इति भावः । नन्वेवं सर्वेऽपि ब्रह्मवत्कुतो न भगवन्तं पश्यन्तीत्यत उक्तम् ॥ अपि तत्त्वं शुद्धमिति । तु शब्दोऽवधारणे । तदपि तदधीनमपि द्रष्टृजातं अशुद्धमेव न ब्रह्मवच्छुद्धं रागादिदोषसहितं न भवत्येवेति यावत् । अतो न पश्यन्तीति भावः । नन्वेवं भगवदन्यस्य तदधीनत्वे भगवद्रूपाणामपि स्थानभेदेन भिन्नत्वावगमाद्भगवदन्यत्वे तदनधीनत्वप्रसङ्ग इत्यत उक्तम् ॥ मायेति । मायायाः प्रकृतेर्गुणाः सत्त्वादयस्तेषां व्यतिकरो विकारः । नानाविधं कार्यमिति यावत् । तस्मात्तद्रूपस्थानभेदादुरुस्तत्तत्प्रेरकतया नानारूपो यद्भासि तद्विभासि विगतार्थतयैव भासि । तज्ज्ञानविषयीभूतं नानात्वमसदेवातो न भगवद्रूपाणां तदधीनत्वरूपास्वातन्त्र्यप्रसङ्ग इति भावः ॥ १ ॥

**रूपं यदेतदवबोधरसोदयेन**
**शश्वन्निवृत्ततमसः सदनुग्रहाय ।**
**आदौ गृहीतमवतारशतैकबीजं**
**यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥**

**नातः परं परम यद् भवतः स्वरूप-**
**मानन्दमात्रमविकारमविद्धवर्चः ।**
**पश्यामि विश्वसृजमेकमविश्वमाद्यं**
**भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥**

**तात्पर्यम्– यन्नाभिपद्मभवनादहमाविरासम् । यच्चेदं भगवत्स्वरूपमानन्दमात्रं पश्यामि । यच्चाश्रितोऽस्मि अतः परं नास्ति । अतो न ज्ञायत इति अवद्यमत्युत्तमापेक्षया । अनादि गृहीतमेव नेदानीं गृह्यते । 'यत्तद्दिव्यं हरेरूपं क्षीरसागरमध्यगम् । ज्ञानानन्दैकमात्रं च न ततः परमं क्वचित् । अनादिनित्यादव्यक्तात्तस्माज्जज्ञे चतुर्मुख' इत्यध्यात्मे । भूतेन्द्रियाणामात्मकम् । यच्चाप्नोतीत्यादेः ॥ २,३ ॥**

**प्रकाशिका–** ननु यत्त्वया दृष्टं तत्सोपाधिकमेव । अर्वाचीनमुत्तमं तु ब्रह्मान्यदस्ति । तत्सर्वथाऽव्यक्तमेव किं न स्यादित्यत आह ॥ रूपमिति श्लोकद्वयेन । अत्र विवक्षितोद्देश्यविधेयभावस्य स्पष्टमभानात्तं दर्शयन्व्याख्याति ॥ यन्नाभीति । अत्र यद्यपि रूपं यदेतदित्यादिकमप्युद्देश्यम् । तथाऽपि नातः परमित्यत्र स्पष्टयुक्तिसूचकान्येव पदान्युद्देश्यतयाऽत्रोपात्तानि । ब्रह्मजनकत्वापरिच्छिन्नानन्दमात्रस्य स्वरूपत्वब्रह्माश्रयत्वानां परब्रह्मलिङ्गत्वादित्यवधेयम् । पश्यामीत्यन्वयप्रदर्शनेनाविकारमविद्धवर्च इत्येतयोरप्यनेनान्वय इति सूचयति । यच्चाश्रितोऽस्मीत्यनेन यच्छब्दस्यानुवृत्तिः सूचिता । नातः परमित्यस्यार्थः ॥ ततःपरमुत्तमं नास्तीति । कथमनेनोक्तशङ्कापरिहार इत्यतस्तं प्रकारं दर्शयति ॥ अत इति । एतदपेक्षयोत्तमस्य सर्वथाऽव्यक्तस्यान्यस्याभावान्न ज्ञायत इत्यवद्यमित्यनेन यत्स्वप्रसादात्ज्ञेयत्वमुक्तं तदुत्तमं यत्परं ब्रह्म तदपेक्षयैवेति सिध्यति नार्वाचीनसोपाधिकापेक्षयेत्यर्थः । अत्युत्तमापेक्षयेतिपाठेऽपीतिशब्दाध्याहारेणेत्थमेव व्याख्यानं द्रष्टव्यम् । नन्वेवमादौ गृहीतमिति तस्य सादित्वोक्तिरनुपपन्नेत्यतस्तस्यार्थमाह ॥ अनादिगृहीतमेवेति । गृह्यते चेत्यन्वयो व्यक्तीक्रियत इत्यर्थः । तथाचादावनाद्यनन्तकाले गृहीतमेवादावादिकाले गृहीतमिति मूलार्थ इति भावः । उक्तार्थे प्रमाणसंवादं दर्शयति ॥ यत्तदिति । क्षीरसागरमध्यगमित्यनेनावतारशतैकबीजमित्येतल्लब्धार्थो दर्शितः श्वेतद्वीपगतस्यैव नानावतारबीजत्वात् । शश्वन्निवृत्ततमस इत्यादिविशेषणतात्पर्यप्रदर्शनाय दिव्यमित्युक्तम् । आनन्दमात्रमित्यत्रानन्दग्रहणमुपलक्षणमित्यभिप्रेत्योक्तम् ॥ सज्ज्ञानानन्दैकमात्रमिति । सतौ ज्ञानानन्दावेकौ मुख्यौ येषां बलादीनां ते तथा । तन्मात्रं केवलं तदात्मकमित्यर्थः । परममुत्तमम् । अनेनातःपरत्मित्येतदुक्तार्थम् । क्वचिद्देशे काले च । आदौ गृहीतमित्यस्य तात्पर्यम् ॥ अनादिनित्यादिति । तथाच मूले नित्यत्वमपि ग्राह्यमिति भावः ।

अद इत्यस्य तात्पर्यम् ॥ अव्यक्तादिति । तस्माज्जज्ञ इत्यनेन यन्नाभिपद्मेत्यादिकमुक्ततात्पर्यम् । ननु तथाऽपि भूतेन्द्रियात्मकमित्यनेन तस्य भूतेन्द्रियस्वरूपत्वकथनात्कथमुत्तमत्वमित्यतस्तस्यापि विवक्षितमर्थं दर्शयति ॥ भूतेन्द्रियाणामिति । आत्मकं व्यापकमादातृ संहर्तृ वा । आत्मशब्दस्य व्याप्त्याद्यर्थत्वे प्रमाणं दर्शयति ॥ यच्चेति । यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यत इति समग्रवाक्यप्रदर्शनायादिशब्दः । इत्यादेर्वाक्यादिति शेषः । ततश्चायं श्लोकद्वयार्थः ॥ अवबोधरसोदयेन ज्ञानश्रेष्ठाविर्भावेन शश्वत्सदा निवृत्तं तमोऽज्ञानं यस्य स तथा तस्य तव सतां मदादीनामनुग्रहायादावनाद्यनन्तकाले गृहीतं व्यक्तीकृतम् । यच्चावताराणां मत्स्यादीनां शतस्य मूलं बीजम् । यच्च नाभौ स्थितात्पद्माख्यभवनादहमाविरासम् । जातोऽस्मि । यच्च भवतः । स्वरूपं न जीवदेहवद्भिन्नं न । कुतः । आनन्दमात्रं केवलज्ञानानन्दाद्यात्मकमत एवाविकारमविद्धमतिबद्धं वर्चः प्रकाशो यस्य तत्पश्यामि । अनेनैव भूते मदीयं प्रत्यक्षमेव प्रमाणमिति दर्शयति । यच्च विश्वसृजं विश्वस्य स्रष्टृ । एकं स्रष्ट्रन्तररहितम् । अविश्वं प्रपञ्चविलक्षणमाद्यं सर्वस्यादिभूतं भूतेन्द्रियाणामात्मकमादातृ संहर्तृ वा अदः पुरुषप्रयत्नादव्यक्तं ते तव यदेतद्रूपमुपाश्रितोऽस्मि । हे परम सर्वोत्तम । अत एतस्मात्परमुत्तमं निरुपाधिकं नास्ति । अत इदमेव निरुपाधिकमुत्तमम् । इदं चाहमुक्तरूपं पश्यामि । अतो यन्न ज्ञायते भवतो गतिरित्यवद्यमित्यनेन स्वप्रसादात्ज्ञेयत्वमुक्तं तन्निरुपाधिकस्योत्तमस्यैव सिद्ध्यतीति ॥ २,३ ॥

**यद् वा इदं भुवनमङ्गलमङ्गलं यद्**
**ध्यानात्मनो दर्शितं त उपासकानाम् ।**
**तस्मै नमो भगवतेऽनुविधेम तुभ्यं**
**योऽनादृतो निरयभाग्भिरसत्प्रसङ्गैः ॥ ४ ॥**

**प्रकाशिका–** एतादृशरूपं दर्शितवतस्तव नमस्कारकरणमेव प्रतिक्रिया नान्यदित्याशयेनाह ॥ यद्वा इति । हे भुवनमङ्गल । ध्यानात्मनो ध्यानानुगुणरूपस्य ते तवोपासकानामस्माकं मङ्गलाय यदिदं रूपं दर्शितं तस्मै तद्रूपात्मने भगवते नमोऽनुविधेम योग्यतामनुसृत्य कुर्मः । तर्हि किमिति केचिन्मां नाद्रियन्त इत्यत उक्तम् ॥ यो नादृत इति । असत्स्वमङ्गलेषु विषयेषु प्रकर्षेण सङ्गः स्नेहो येषां ते तथा तैरत एव निरयभाग्भिर्विषयवैराग्यशून्यास्य इति भावः ॥ ४ ॥

**ये तु त्वदीयचरणाम्बुजकोशगन्धं**
**जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।**
**भक्त्या गृहीतचरणः परया च तेषां**
**नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥ ५ ॥**

**तात्पर्यम्–** हृदि व्यक्तं तु यद्रूपं हरेर्गन्धः स उच्यते । उत्तमानां तु पादेन सर्वं रूपं तु भण्यते । गन्धगन्धवतोर्यस्मान्न भेदः क्वचिनेष्यत' इति ब्रह्मतर्के ॥ ५ ॥

**प्रकाशिका–** आदरं कुर्वतां तु नैवमित्याह ॥ ये त्विति । तु शब्दः पूर्वेभ्यो विशेषसूचकः । असत्प्रसङ्गा न भवन्तीत्यर्थः । श्रुतिं गुरुमुखाद्वेदोक्तप्रकारेण श्रवणं तल्लक्षणेन वा तेन कर्णविवरैर्नीतं प्रापितं त्वदीयचरणांबुजकोशगन्धं जिघ्रन्ति । अपरोक्षीकृत्यास्वादयन्ति । हे नाथ । तेषां स्वपुंसां हृदयांबुरुहान्नापैषि नापयासि । तत्र निमित्तमाह ॥ भक्त्येति । च शब्दो हेत्वर्थः । यस्मात्तु परया भक्त्या गृहीतचरणो भक्तिलक्षणदृढपाशेन बद्धपाद इत्यर्थः । अत्र गन्धशब्दस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ हृदीति । तुशब्दस्तत्तदुपास्यगुणविशिष्टमिति विशेषणार्थः । तथाच त्वदीयचरणांबुजकोशं त्वदीयश्चरणः स्वरूपम् । उत्तमानां स्वरूपं तु पादशब्देन भण्यत इति वचनात् । तल्लक्षणो योंऽबुजकोश उदकान्तःस्थत्वसाम्यात् । तस्य यो गन्धोंऽशः । गन्धो लेशो विनिर्दिष्ट इति वचनात् । हृदि व्यक्तं रूपमिति यावत् । तं ये जिघ्रन्तीति मूलं योज्यमिति भावः । नन्वेवं गन्धशब्दगृहीतस्य हृदि व्यक्तरूपस्य हर्येकदेशत्वमेव प्राप्तं न हरिस्वरूपत्वम् । अतः कथं हरे रूपं गन्ध इत्युक्तमित्यत आह ॥ गन्धगन्धवतोरिति । अंशांशिनोरित्यर्थः । क्वचन कस्मिन्नपि भगवद्रूपे इष्यते । प्रामाणिकैरिति शेषः । तथाच यस्माद्गन्धगन्धवतोर्न भेदस्तस्माद्धरे रूपं गन्ध इत्युक्तिरुपपन्नेति योजना द्रष्टव्या ॥ ५ ॥

**तावद् भयं द्रविणगेहसुहृन्निमित्तं**
**शोकः स्पृहा परिभवो विपुलश्च लोभः ।**
**तावन्ममेत्यसदवग्रह आर्तिमूलं**
**यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥**

**प्रकाशिका–** भक्तिपाशेन बद्धचरणस्य भगवतोऽपगमाभावेऽपि किं फलमित्यत आह ॥ तावदिति । द्रविणादौ विद्यमाने भयं गते शोक; पुनः स्पृहा ततः परिभवस्तथा विपुलो लोभः पुनः कथञ्चित्प्राप्ते ममेत्यसदाग्रहः । आर्तिमूलं भयशोकादेः कारणं न प्रवृणीत न सर्वदा भक्तिपूर्वकमाश्रयेत् ॥ ६ ॥

**दैवेन ते हतधियो भवतः प्रसङ्गात्**
**सर्वाशुभोपशमनाद् विमुखेन्द्रिया ये ।**
**कुर्वन्ति कामसुखलेशलवाय दीना**
**लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७ ॥**

**प्रकाशिका–** शोकाद्यशुभनाशार्थं हरिचरणाश्रयणमेव सर्वदा मुमुक्षुभिः कार्यमित्याशयेन तदभावे निन्दारूपार्थवादमाह ॥ दैवेनेति । दैवेन हरिणा हतधियो नष्टमतयः प्रसङ्गाच्छ्रवणादिरूपात्सुखलेशलवायाल्पादप्यल्पाय लोभः सद्व्ययानिच्छुत्वम् । अकुशलान्यक्षेमकराणि ॥ ७ ॥

**क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः**
**शीतोष्णवातवर्षैरितरेतराच्च ।**
**कामाग्निनाऽच्युत रुषा च सुदुर्भरेण**
**संपश्यतो मन उरुक्रम सीदते मे ॥ ८ ॥**

प्रकाशिका– क्षुत्तृट् च त्रिधातवश्च वातपित्तश्लेष्माणस्तैराध्यात्मिकैरित्यर्थः । शीतोष्णवातवर्षैराधिदैविकैरितरेतरादाधिभौतिकैः । हे अच्युत । रुषा क्रोधेन च सुदुर्भरेण सुदुःसहेन कामाग्निना च मुहुरर्द्यमानाः पीड्यमाना इमाः प्रजाः संपश्यतो मे मनः । भो उरुक्रम । सीदते मत्सृष्टाः प्रजा एवं जाता इति खेदयुक्तं भवतीत्यर्थः ॥ ८ ॥

**यावत् पृथक्त्वमयमात्मन इन्द्रियार्थं**
**मायाबलं भगवतो जन ईश पश्येत् ।**
**तावच्च संसृतिरसौ प्रतिसङ्क्रमेत**
**व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥ ९ ॥**

**अध्याहृतार्थकरणा निशि निःशयाना**
**नानामनोरथधियः क्षणभग्ननिद्राः ।**
**दैवाद्धतार्थरचना ऋषयोऽपि देव**
**युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥ १० ॥**

**तात्पर्यम्–** मायाबलं भगवदिच्छाबलम् । 'ज्ञेयत्वं दुर्घटस्यापि घटनाधिकशक्तिता । अभेद ईश्वरेणापि सृष्ट्यादावन्तरङ्गता । उच्येत यस्याः सा मया हरेरिच्छाऽथवा बलम् । भगवत्तन्त्रता यस्यास्तद्भार्यात्वं सुरूपता । उच्येत माया सा तु श्रीर्दोषयुक्ता जडा स्मृता । परिणामिनी च यस्यास्तु दोषाश्चेतनता यथा । शैवली नाम सा माया जगद्बन्धात्मिका सदे'ति ब्रह्मतर्के । 'ध्याये मंस्ये तथा पश्ये शृणोमीति विभक्तता । जीवस्य तु हरेरिच्छाबलादिन्द्रियभुक्तय' इति षाड्गुण्ये । इन्द्रियाणां भोगार्थम् । व्यर्थापि यज्ञादिक्रियार्था ॥ ९ ॥

**अर्थैरध्याहृतानि करणानि येषाम् । 'अज्ञानं तु निशा प्रोक्ता दिवा ज्ञानमुदीर्यत' इति स्कान्दे ॥ १० ॥**

**प्रकाशिका–** श्रवणादिरूपभगवत्प्रसङ्गस्य शोकस्पृहादिरूपसंसारनिवतर्कत्वं प्रपञ्चयन्नन्वयव्यतिरेकौ क्रमेणाह ॥ यावदिति श्लोकद्वयेन । अत्र मायाशब्दस्यानिर्वाच्याविद्यापरत्वप्रतीतिनिरासायार्थमाह ॥ मायाबलमिति । परपक्षे बलशब्दास्वारस्यं नेति दर्शयितुं बलशब्दग्रहणम् । अत्र मायाशब्दस्य भगवदिच्छापरत्वमेव वाच्यम् । पश्येदिति मोक्षार्थं ज्ञेयत्वस्योक्तत्वात्तस्य च भगवदिच्छालिङ्गत्वादित्याशयेन मायाशब्दार्थनिर्णायकानि लिङ्गानि प्रमाणेनैव दर्शयति ॥ ज्ञेयत्वमिति । मोक्षार्थं ज्ञेयत्वमित्यर्थः । तु शब्दोऽवधारणे । श्रीरेवेत्यन्वयः । दोषयुक्ता परिणामिनी च मायोच्यते सा जडा । जडप्रकृतिरूपा स्मृता । यस्यास्तु मायाया दोषास्तथा चेतनतोच्येत सा माया शैवली नामा स्मृता । तस्याः स्वरूपमाह ॥ जगद्बन्धात्मिकेति । बद्ध्यतेऽनयेति बन्धशब्दः करणसाधनः । सदेति मध्यमजीवाभिप्रायेण । एवं मायाशब्दार्थमुक्त्वेदानीं पृथक्त्वमयमात्मन इन्द्रियार्थं मायाबलमित्येतावद्वाक्यं प्रमाणेनैव व्याख्याति ॥ ध्यायत इति । इतिशब्दः प्रभृत्यर्थः । विभक्तता पृथक्त्वम् । पृथक् शब्देन तत्तदिन्द्रियव्यापारकर्तृत्वानुसन्धानमेवात्र विवक्षितमित्यर्थः । आत्मन इत्यस्यार्थः ॥ जीवस्येति । तुशब्दोऽवधारणे । हरेरिच्छाबलादेवेति संबन्धः । अनेन भगवतो मायाबलमित्येतद्विवृतम् । इन्द्रियार्थमित्यस्य व्याख्यानम् इन्द्रियभुक्तय इति । इन्द्रियैर्विषयभोगायेत्यर्थः । कथमिदं व्याख्यानमिन्द्रियार्थमित्यनेन लब्धमित्यपेक्षायामाह ॥ इन्द्रियाणामिति । अनेन मध्यमपदलोपी समास इति सूचयति । व्यर्थाऽपि क्रियार्थेति व्याहतम् । अतो व्याख्याति ॥ व्यर्थाऽपीति । तथाच व्यर्थाऽप्यात्यन्तिकसुखरूपप्रयोजनशून्याऽपि यज्ञादि क्रियाणामर्थः फलं यस्यां सा तथोक्तेत्यर्थः । अध्याहृतार्थकरणा इत्येतदप्रतीत्या व्याख्याति ॥ अर्थैरिति । तथा चाध्याहृतार्थेत्यत्रार्थपदस्य परनिपात इति भावः । निशि निःशयाना इत्यत्र निट् शब्दस्य न रात्रिपरत्वं निःशयाना क्षणभङ्गनिद्रा इत्यनयोर्विरोधापत्तेरतोऽत्राभिमतनिट्शब्दार्थं प्रमाणेनैव दर्शयति ॥ अज्ञानमिति । निशाशब्दो निट्शब्दपर्यायः । अतो नासङ्गतिरिति ध्येयम् । एवं च निशि अज्ञाने नितरां बद्धा इति मूलार्थ इति भावः ॥ ततश्चायं श्लोकद्वयार्थः ॥ जनः सज्जनो यावद्यदाऽऽत्मनः स्वस्येन्द्रियार्थमिन्द्रियाणां विषयभोगार्थमिदं पृथक्त्वं तत्तदिन्द्रियव्यापारकर्तृत्वानुसन्धानं भगवतो मायाबलं मायाया इच्छाया बलं प्रापकं यस्येति विग्रहेणेच्छाबलं प्राप्तम् । हे ईश । पश्येत् । श्रवणादिनेति शेषः । तावच्च तदैव व्यर्थाऽप्यात्यन्तिकसुखरहिताऽपि यज्ञादिक्रियाणामर्थः स्वर्गादिरूपं फलं यस्यां सा दुःखनिवहं दुःखपरंपरां वहत्येषा संसृतिः प्रतिसंक्रमेत विनाशं गच्छेत् ॥ ९ ॥

**प्रकाशिका–** नानामनोरथधियो यतोऽत एव क्षणभङ्गयुक्तनिद्रा निद्रातुमप्यवसरस्तेषां नास्तीति भावः । दैवाद्दैवेन हरिणा हताः सर्वतः प्रतिहता अर्थरचना अर्थार्थोद्यमा येषां ते तथा । ऋषयोऽपि ऋषिकुलप्रसूता अपि युष्मत्प्रसङ्गविमुखाः श्रवणादिरूपयुष्मत्सेवाशून्याः । इह जीवलोके ॥ १० ॥

**त्वद्भावयोगपरिभावितहृत्सरोजा**
**ये सच्छ्रुतेक्षितपथा ननु नाथ पुंसाम् ।**
**यद् यद् धिया त उरुगाय विभावयन्ति**
**तत् तद् बपुः प्रणयसे तदनुग्रहाय ॥ ११ ॥**

**तात्पर्यम्– तत्तद्वपुस्तेषां प्रणयसे । 'यादृशोभावितस्त्वीशस्तादृशो जीव आभवेदि'ति तन्त्र-सारे । 'तं यथा यथोपासते तदेव भवती'ति च ॥ ११ ॥**

**प्रकाशिका–** न केवलं यत्प्रसंगरूपश्रवणादेः संसाररूपानिष्टनिवृत्तिरेव फलं किं त्विष्टप्राप्तिर-पीत्याह ॥ त्वद्भावेति । हे पुंसां नाथ पुरुषोत्तम । ये सत्श्रुतेक्षितपथाः सत उत्तमादाचार्यात् श्रुतेन शास्त्रश्रवणेनेक्षितो ज्ञातः पन्था विष्णुभक्त्यादिलक्षणो मोक्षमार्गो यैस्ते तथोक्ताः । अत एव त्वद्भावयोगेन त्वद्भक्तिलक्षणोपायेन परिभावितमधिवासितं हृत्सरोजं मनःकमलं येषां ते तथा । हे उरुगाय । ते पुरुषास्ते तव यद्यद्वपुर्यद्यद्गुणविशिष्टं रूपं धिया विभायन्ति ध्यायन्ति तत्तद्वपुः प्रणयसे । नन्वत्र तत्तद्वपुः प्रणयस इत्यत्रापेक्षितं पूरयति ॥ तद्वपुस्तेषामिति । तथाच तेषां तत्तद्वपुस्तत्तत्सदृशं वपुः स्वरूपदेहं प्रणयसे प्रकटयसीति मूलार्थ इति भावः । अत्र नन्वित्यनेन सूचितं प्रमाणं दर्शयति ॥ यादृश इति । निरवकाशैस्तत्प्रमाणानुसारेण श्रुतिरपि व्याख्यायेत्याशयेन तां पठति ॥ तं यथेति । यथा यथा यद्गुणविशिष्टत्वेन तदेव तत्सदृशमेव रूपं तेषां मुक्तौ भवतीत्यर्थः । इति च श्रुतिरिति शेषः ॥ ११ ॥

**नातिप्रसीदसि ततोपचितोपचारै-**
**राराधितः सुरगणैर्हृदि बद्धकामैः ।**
**यः सर्वभूतदययाऽसदलभ्ययैको**
**नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥**

**पुंसामतो विविधकर्मभिरध्वराद्यै-**
**र्दानेन चोग्रतपसा व्रतचर्यया च ।**

**नाराधनं भगवतस्तव सत्क्रियार्थो**
**धर्मोऽर्पितः कर्हिचित् क्रियते न यत्र ॥ १३ ॥**

**तात्पर्यम्–** सर्वभूतदयया सुरगणैर्हृद्याराधितस्त्वं बद्धकामैर्जनैरुपचितोपचारैर्नातिप्रसीदसि । 'आराधितो यो ब्रह्माद्यैर्भक्तिज्ञानदयादिभिः । किं तस्य कामुकजनैः कृतया परिचर्यये'ति सत्यसंहितायाम् ॥ १२ ॥

**प्रकाशिका–** एवं भगवत्प्रसङ्गस्य संपूर्णमोक्षफलत्वमुक्त्वेदानीं तत्र निष्कामकत्वरूपं तदर्पणरूपं चेत्थंभावं क्रमेणाह ॥ नातिप्रसीदसीति श्लोकद्वयेन । अत्र सुरगणैर्हृदिबद्धकामैराराधित इति यथाश्रुतान्वये योग्यताभावमालोच्य योग्यमन्वयं दर्शयति ॥ सर्वभूतदययेति श्लोकद्वयेन । अत्र सुरगणैर्हृदिबद्धकामैराराधित इति यथाश्रुतान्वये योग्यताभावमालोच्य योग्यमन्वयं दर्शयति ॥ सर्वभूतदययेति । मध्यमपुरुषप्रयोगात्त्वमित्युक्तम् । बद्धकामैरित्यस्य विशेष्यं जनैरित्येतदध्याहृतम् । उपचितैः संपादितैरुपचारैः पुष्पादिभिरनाराधित इति वर्तते । नातिप्रसीदसि तदभीष्टफलदानायाल्पमात्रप्रसादयुक्तोऽपि न मुक्तिजनकात्यर्थप्रसादयुक्तो भवसीत्यर्थः । अत्र सर्वभूतदययेत्यादिकं हृदिबद्धकामैराराधितो नातिप्रसीदसीत्यत्र हेतुतया योज्यम् । दयापदश्च भक्तिज्ञानादेरुपलक्षकमित्याशयेन प्रमाणं पठति ॥ आराधित इति । ॥ ततश्चायं श्लोकद्वयार्थः । अन्तरात्माऽन्तर्नियामकः सन् अत एव सुहृन्नानाजनेषु नानाविधप्राणिष्ववहितः स्थितो यस्त्वम् । अनेन सर्वभूतदयाया विष्ण्वाराधनत्वमुपपादितमिति ज्ञातव्यम् । असद्भिरसुरैरलभ्यया लब्धुमशक्यया सर्वभूतदयया भक्तिज्ञानादिभिश्च सुरगणैर्हृद्याराधितो यतोऽतो हृदिबद्धकामैर्जनैस्तथा तत्तत्कामानुसारेणोपचितैरुपचारैराराधितो नातिप्रसीदसि सुरगणकृतसर्वभूतदयादिगुणपूर्वकनिरुपाधिकाराधनापेक्षयाऽस्याल्पत्वादिति भावः । तथाचाराधने कामनापरित्याग आवश्यक इति हृदयम् । यतः सकामानामत्यर्थप्रसादो न भवत्यतः पुंसामधिकारिणां विविधकर्मभिरित्युक्तमेव विवृणोति ॥ अध्वराद्यैरिति । भगवतस्तवाराधनं न भवति तदाराधनं त्वत्प्रीतिजनकं न भवतीति यावत् । कदा । यत्र यर्हि सत्क्रियार्थः सत्यव्रताः क्रियाश्चाध्वराद्यास्तासामर्थोऽवान्तरप्रयोजनरूपो धर्मः कर्हिचित्कदाचिदपि । आदौ मध्येऽन्तेऽपि वा तवार्पितो न भवति तर्हीत्यर्थः । अतोऽर्पणमावश्यकमिति भावः ॥ १२, १३ ॥

**शश्वत् स्वरूपमहसैव निपीतभेद-**
**मोहाय बोधधिषणाय नमः परस्मै ।**
**विश्वोदयस्थितिलयेषु निमित्तलीला-**
**रामाय ते नम इदं चकृमेश्वराय ॥ १४ ॥**

**तात्पर्यम्–** **'ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता । भेदस्तस्यावतारेषु जीवस्येशत्वमेव च । तथा जीवत्वमीशस्य जडाभेदस्तयोरपि । भेदमोह इति प्रोक्तः स सदा न हरौ क्वचित् । अन्येषां तत्प्रसादेन शनैर्याति सतामपी'ति स्कान्दे ॥ १४ ॥**

**प्रकाशिका–** पुनः भगवत्सेवायामित्थं भावान्तरं दर्शयंस्तन्नमति ॥ शश्वदिति । निपीतभेद-मोहायेत्यस्य निरस्तसकलभेदभ्रमायेत्यन्यथाप्रतीतिवारणाय भेदमोहशब्दस्य विवक्षितमर्थं दर्शयति ॥ ईशस्येति । ईशतेत्यादावपि यथाज्ञानमेव ग्राह्यम् । एवशब्दस्य नेत्यनेन संबन्धः । तयोर्जीवेशयो-र्जडाभेदोऽपि भेदमोह इति प्रोक्त इति । अधिष्ठानतत्त्वापेक्षया विपरीताकारो भेद इत्युच्यते । तद्विषयको मोह इति व्याख्यानादिति भावः । सदेत्यनेन शश्वदित्येतदुक्तार्थम् । अन्येषामपि सतामि-त्यन्वयः । शनैस्तत्त्वज्ञानोत्कर्षानुसारेण । याति नश्यति । एतेन बोधधिषणायेत्येतदुक्ततात्पर्यम् । अन्येषामपि सतां मोहनिवर्तकबोधजनिका धिषणा बुद्धिर्यस्मादिति व्याख्यानात् । अनेन भगवदाराधकस्यैतादृशभेदमोहराहित्यमावश्यकमिति सूचयति । तथाच शश्वत्सदा स्वरूपमहसैव स्वरूपभूतज्ञानेनैव न तु परोपदेशोत्पन्नेनेत्यर्थः । निपीतः सम्यक् निराकृतः । उक्तभेदमोहो यस्य तस्मै । अन्येषामप्युक्तभेदमोहनिवर्तकबोधबुद्धिजनकायात एव परस्मा इति मूलार्थ इति भावः । निपीतभेदमोहायेत्यनेनेशस्य पूर्णत्वमुक्तम् । तदयुक्तम् । यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वादित्याशङ्कां परिहरन् ममेदं त्वद्दर्शनं पूर्वकृतनमनादिसुकृतफलमित्याशयेनाह ॥ विश्वेति । निमित्तभूता लीला क्रीडा तस्या आरामायाश्रयाय लीलैव आसम्यक् रामो रमणं यस्येति वा । इदं दर्शनमुद्दिश्य पूर्वं नमश्चकृम । इदमुक्तानुसन्धानपूर्वकं नम इति वा ॥ १४ ॥

**यस्यावतारगुणकर्मविडम्बनानिनामानि**
**येऽसुविगमे विवशा गृणन्ति ।**
**ते नैकजन्मशमलं सहसैव हित्वा**
**संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥**

**तात्पर्यम्–** **भक्तिविवशाः । 'ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः । तेऽपि मुक्तिं व्रजन्त्याशु किमु तद्ध्यायिनः सदे'ति व्योमसंहितायाम् ॥ १५ ॥**

**प्रकाशिका–** भगवद्ध्यानादिरूपाराधनस्य मोक्षहेतुत्वं कैमुत्येनापि दर्शयन्नहमपि तं ध्याया-मीत्याह ॥ यस्यावतारेति । अत्र विवशानां नामोच्चारणमात्रेण कथं मुक्तिरित्यतो व्याख्याति ॥

भक्तिविवशा इति । तथा च नात्र विवशशब्देन विषयपरवशा गृह्यन्ते येन मुक्त्यनुपपत्तिः किन्तु हरिभक्त्या परवश एव । तेषां च नामोच्चारणमात्रेण मुक्तिर्नानुपपन्नेति भावः । अत्र प्रमाणमाह ॥ ये भक्त्येति । मात्रशब्दः कात्स्न्यार्थः । एकशब्दः केवलशब्दार्थः । तथाचावतारगुणकर्मप्रतिपादकसर्वनाम्नां केवलं जल्पका उच्चारयितार इत्यर्थः । अनेनावतारगुणकर्मविडम्बनानि नामानि ये केवलं गृणन्ति ते ऋतं संयान्ति इत्येतदुक्तार्थम् । सदा ध्यायिनः किमुतेत्यनेन मूलेऽपीदमध्याहार्यमिति सूचयति ॥ तथाचायमर्थः ॥ यस्य विष्णोरवतारगुणकर्मविडम्बनमनुकरणं येषु तानि । तत्प्रतिपादकानीति यावत् । तत्रावतारविडम्बनानि वासुदेवो दाशरथिरित्यादीनि । सर्वज्ञः सर्वेश्वर इत्यादीनि गुणविडम्बनानि । कंसारिः राक्षसारिरित्यादीनि कर्मविडम्बनानि । नामानि येऽसुविगमे प्राणनिर्गमनकाले । चरममरण इति यावत् । विवशा भक्तिपरवशा गृणन्ति अर्थानुसन्धानपूर्वकमुच्चारयन्ति । तेऽप्यनेकजन्मसंपादितं शमलं प्रारब्धपापं हित्वा देहे वा सूर्यमण्डले विधूय सर्वपापानीति वचनात् । सहसैव शीघ्रमेव वायुनैवेति वा विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरमिति वचनात् । अपावृतमपगतावरणं यथा स्यात्तथा ऋतं ज्ञानपूर्णं परं ब्रह्म संयान्ति प्राप्नुवन्ति । किमुत सदा स्वयोग्यगुणोपसंहारपूर्वकं तद्ध्यायिनः । अतस्तमजमहं प्रपद्ये । मनसेति शेषः । सदा ध्यायामीति यावत् ॥ १५ ॥

**यो वा अहं च गिरिशश्च विभुः स्वयं च**
**स्थित्युद्भवप्रलयहेतव आत्ममूलाः ।**
**भूत्वा त्रिपाद् ववृध एक उरुप्ररोह-**
**स्तस्मै नमो भगवते भुवनद्रुमाय ॥ १६ ॥**

**तात्पर्यम्– 'ब्रह्मादिभावो विष्णोस्तु तन्नियामकता भवेत् । मत्स्यादिता तत्स्वभावो नान्यथा क्वचिदिष्यत' इति वामने । 'अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरिस्त्रिपादि'ति च ॥ १६ ॥**

**प्रकाशिका–** विश्वस्योद्भवकर्ता भवान् प्रलयकर्ता शिवः प्रसिद्धः । अतः कथं विष्णोर्विश्वोद्भवादिनिमित्तलीलारामत्वमुक्तमित्याशङ्कां परिहरन्पुनः प्रणमति ॥ यो वा इति । अत्र विष्णुवदेव हरेर्ब्रह्मरुद्रभावः प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ ब्रह्मादिभाव इति । आदि पदेन रुद्रादिग्रहणं यत्रोच्यते तत्र तन्नियामकता ब्रह्मादिनियामकता विवक्षिता भवेत् । यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति वचनात् । मत्स्यादिभावो यत्रोच्यते । तत्र स्वभावस्तु स्वतादात्म्यमेवार्थतयेष्यते क्वचित् । वेदे वैदिकेऽपि वा नान्यथेष्यते । ब्रह्मादावपि मत्स्यादिवदभेदोऽर्थतया नेष्यत इत्यर्थः । त्रिपादित्यस्य त्रयो ब्रह्मादयः पादा स्कन्धा यस्येति व्याख्यानं प्रमाणविरुद्धमित्याशयेन

प्रमाणेनैव तस्यार्थं दर्शयति ॥ अनन्तासनेति । त्रिपादित्युच्यत इति शेषः । तथाचात्र त्रिपाच्छब्दः स्थानत्रयगतस्वरूपांशपर इति भावः ॥ तथाचायं श्लोकार्थः ॥ यस्त्रिपादनन्तासनादि-स्थानत्रयगतस्वरूपांशत्रयवान्हरिरेकोऽप्युरवः परोहाः शाखोपशाखास्थानीयास्तत्तत्कार्यनियामका-नन्तांशा यस्य सः । तथा भूतः सन् ववृधे । तस्मै भुवनव्याप्तध्रुवाय नमः । किं कृत्वा ववृधे । आत्मा स्वयमेव मूलस्थानीयो येषां ते तथा स्थित्युद्भवप्रलयहेतवः । अहं मय्याविष्टो मन्नियामको मन्नामा गिरिशश्च यो गिरिशाविष्टस्तन्नियामकस्तन्नामा स्वयं साक्षादेव विभुर्विष्णुश्चेत्येते भूत्वाऽवतीर्य । वै शब्दः प्रमाणप्रसिद्धिद्योतकः ॥ १६ ॥

**लोको विकर्मनिरतः कुशले प्रमत्तः**
**कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।**
**यस्तावदस्य बलवानिह जीविताशां**
**सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥**

**तात्पर्यम्– 'नित्यज्ञानदृशा नित्यं लवकालमपीश्वरः । पश्येत्तात्कालिकं चैव तस्मादनिमिषो हरिः । कालस्यानिमिषत्वं च लवादेर्नित्यवीक्षणादि'ति तन्त्रसारे ॥ १७ ॥**

**प्रकाशिका–** भगवदाराधकस्य मुमुक्षोर्निषिद्धत्यागेन विहितानुष्ठानेन चावश्यं भाव्यमिति विपक्षे बाधकप्रदर्शनमुखेनोपपादयन् कालप्रवर्तकमनिमिषनामकं भगवन्तं प्रणमति ॥ लोक इति । अयं लोको विकर्मणि निषिद्धे कर्मणि नितरां रतः स्वे स्वीये स्ववर्णाश्रमविहिते भवतोऽर्चनं यस्मिंस्त्वदुदिते दत्तकपिलव्यासादिरूपेण त्वयैव कर्तव्यतया प्रतिपादिते कुशले क्षेमकारिणि कर्मणि प्रमत्तः । अदत्तचित्तो यदा वर्तते तावत्तदा यो बलवान्केनापि निवर्तयितुमशक्योऽस्य जनस्येह लोके जीविताशां सद्यः कालक्षेपमन्तरेण छिनत्ति । वृथा तदीयं जन्म भवतीति यावत् । अतो यावदायुर्निषिद्धं त्याज्यं विहितं चानुष्ठेयमिति भावः । अत्रापि निमिषपदेन काल एवोच्यत इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव तत्पदार्थमाह ॥ नित्यज्ञानेति । इन्द्रियाभावात्कथं पश्यतीत्याशङ्कापरिहाराय नित्यज्ञानदृशेत्युक्तम् । नित्यं यथा स्यात्तथा । तात्कालिकं लवकालस्थितं वस्त्वित्यर्थः । तस्मादेवेत्यन्वयः । ननु कालोऽपि क्वचिदनिमिषेत्युच्यते तत्र किं निमित्तमित्य-पेक्षायामाह ॥ कालस्येति । अनिमिषत्वमनिमिषशब्दवाच्यत्वम् । लवादेः कालस्य नित्यवी-क्षणान्नित्यवीक्षणत्वान्निमित्तादित्यर्थः । अत्र निमिषशब्दः कादाचित्कसूक्ष्मनिरीक्षणपरः । तथाच न विद्यते निमिषो यस्येत्यत्रान्यपदार्थतया कर्तृग्रहणे नित्यनिरीक्षता भगवान्वाच्यः । कर्मग्रहणे तेन नित्यं निरीक्ष्यमाणो लवादिः कालो लभ्यत एवेति भावः । अनेन हरेरनिमिषशब्दवाच्यत्वं लवादिकालान्तर्गतस्यैवेति सूचयति ॥ १७ ॥

**यस्माद् बिभेम्यहमपि द्विपरार्धधिष्ण्य-**
**मध्यासितः सकललोकनमस्कृतं यत् ।**
**तेपे तपो बहुतपोऽवरुरुत्समान-**
**स्तस्मै नमो भगवते विसखाय तुभ्यम् ॥ १८ ॥**

**प्रकाशिका–** ननु भगवतो न लोकमारकत्वम् । तस्य द्वा सुपर्णेत्यादिश्रुत्या लोकसखत्वाव-गमादित्याशङ्कां परिहरन्पुनः प्रणमति ॥ यस्मादिति । अहमपि सर्वाधिकार्युत्तमोऽपि यस्मादनिमिषा-द्बिभेमि तस्मान्मरणं भविष्यतीति जानामीत्यर्थः । अपि शब्दसूचितं स्वस्योत्तमत्वमुपपादयितुमुक्तम् ॥ द्विपरार्धेति । द्वयोः परार्धयोः संबन्धि द्विपरार्ध्यं तच्च तद्धिष्ण्यं स्थानं सत्यलोकाख्यम् । ब्रह्मशतवर्षकालावस्थायि तु पुरुषस्थानं सत्याख्यं लोकमिति वा । अधि शीङ्स्थासां कर्मेति । आधारस्य कर्मसंज्ञा । अनेन बहुतरायुष्यवत्वेन स्वस्योत्तमत्वमुपपादितम् । प्रकारान्तरेणाप्यु-त्तमत्वमुपपादयितुमुक्तम् ॥ सकलेति । तथाच सकललोकवन्द्यपदभोक्तृत्वान्ममोत्तमत्वमिति भावः । किमेतावान् कालो वृथा नीतो नेत्याह ॥ तेपे तप इति । तपः संतापात्मकालोचनं वा तेपे तप्तवान् । किमिच्छन् । बहुतपः स्वयोग्यवृद्धिमुपेतं ज्ञानमवरुरुत्समानः प्राप्तुमिच्छन् विगतः सखा तत्कृत-मरणशून्यो यस्य स तथोक्तस्तस्मै । एवं सर्वोत्तमोऽप्यहं तत्कृतमरणरहितो न भवामि किमुतेतर इति भावः । श्रुतिस्तु कर्मानुसारेणान्नदानादिना रक्षकत्वाभिप्रायेणेति भावः ॥ १८ ॥

**तिर्यङ्मनुष्यविबुधादिषु जीवयोनि-**
**ष्वात्मेच्छयाऽत्मकृतसेतुपरीप्सया यः ।**
**रेमेऽनिरस्तरतिरप्युपलब्धकाष्ठ-**
**स्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥**

**तात्पर्यम्– अनिरस्तरतिर्नित्यरतिः ॥ १९ ॥**

**प्रकाशिका–** ननु तवापि मारकत्वेन यत्सर्वपुरुषोत्तमत्वं हरेरुक्तं तदयुक्तम् । तस्य तिर्यगादि-योनिषु जननेन विषयभोगेन चेतरसाधारणत्वादित्याशङ्कां परिहरन्पुनः प्रणमति ॥ तिर्यगिति । अत्र निरस्तरतिरपि रेमे इति व्याख्याने व्याहतिमालोच्याभिमतं छेदं दर्शयन्व्याख्याति ॥ अनिरस्तेति नित्यरतिरिति । ध्वंसाप्रतियोगित्वोक्त्या नित्यत्वस्यैव लाभादिति भावः ॥ ततश्चायमर्थः । तिर्यङ्म-नुष्यादिजीवयोनिषु तन्मध्ये आत्मेच्छया न तु कर्मणा । अवतीर्येति शेषः । प्रयोजनमाह ॥ कृतेति । स्वकृतमर्यादापालनेच्छयाऽनिरस्तरतिः । नित्यरतिरपि रेमे विषयान् बुभुजे । ननु नित्यरतित्वमेव कुत

इत्यत उक्तम् ॥ उपलब्धकाष्ठ इति । श्रुत्यादिभिरुपलब्धः । आनन्दतारतम्यस्य काष्ठावधिर-परिच्छिन्नानन्दो यस्य स तथोक्तः । अत एव पुरुषोत्तमाय । तथाच नेतरपुरुषसाधारणत्वमिति भावः ॥ १९ ॥

**योऽविद्ययानुपहतोऽपि दशार्धवृत्त्या**
**निद्रामुवाह जठरीकृतलोकयात्रः ।**
**अन्तर्जलेऽहिकशिपुस्पर्शानुकूलं**
**भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ॥ २० ॥**

**प्रकाशिका–** नन्वेवं कथं तस्याविद्याकार्यभूता निद्रेत्यतः साऽपि लोकनिद्रा विलक्षणैवेत्याह ॥ यो विद्ययैवेति । दशार्धाः पञ्चवृत्तयो यस्याः सा तया पञ्च पर्ववृत्त्येत्यर्थः । अनुपहतोऽप्यनभि-भूतोऽपि यो निद्रामुवाह तस्मै नम इत्युत्तरेणान्वयः । जठरीकृतोदरेऽर्पिता लोकयात्रा लोकस्थितिर्येन भीमा भयङ्कर्य ऊर्मीणां मालाः पंक्तयोऽस्य सन्तीति भीमोर्मिमाली तस्मिन् जलेऽन्तर्मध्येऽहिः शेषः एव कशिपुस्तस्याः स्पर्शोऽनुकूलो यथास्यात्तथेति । क्रियाविशेषणमेतत् । नेयं निद्रा स्वार्था किन्तु परार्थेत्याशयेनाह ॥ जनस्येति । स्वनिद्रासमये जनानामपि सुप्तिं प्रदाय तत्स्वरूपं सुखानुभवं प्रापयन्नित्यर्थः । भगवन्निद्राया लोकनिद्राया वैलक्षण्योपपादनायैतानि विशेषणानि । न हि लोके निद्राणोऽविद्ययाऽनुपहतो नापि जठरीकृतलोको न वाऽन्तर्जलेऽहिशरीरे वा निद्राति नापि परेषां सुखार्थमिति ॥ २० ॥

**यन्नाभिपद्मभवनादहमासमद्य**
**लोकत्रयोपकरणो यदनुग्रहेण ।**
**तस्मै नमस्त उदरस्थभवाय योग-**
**निद्रावसानविकसन्नलिनेक्षणाय ॥ २१ ॥**

**प्रकाशिका–** यो वाऽहं च गिरिशश्चेत्यत्र यत्स्वस्य गिरिशस्य च न साक्षाद्भवदवतारत्व-मित्यभिप्रेतं तदुपपादयन्पुनः प्रणमति ॥ यन्नाभीति । लोकत्रयमुपकरणं हरिपूजासाधनं यस्य स तथा । लोकत्रयस्य सृष्ट्यादिनोपकरोतीति वा । लोकत्रयोपकारक इति यावत् । एतादृशोऽहं यदनुग्रहेणासम् । अतो न मम साक्षादवतारत्वमिति भावः । नापि रुद्रस्येत्याह ॥ उदरस्थभवायेति । उदरस्थो भवो रुद्रो यस्य तस्मै । पूर्वकल्पान्ते विनष्ट इदानीमुदर एव तिष्ठति नाहमिव बहिरुत्पन्नः स कथं साक्षादवतारः स्यादिति भावः । निद्रामुवाहेत्युक्तनिद्रां विवृण्वन् अनुग्रहसूचकं विशेषणमाह ॥

योगनिद्रेति । स्वात्मध्यानाय चक्षुर्निमीलनं योगनिद्रेत्युच्यते । तदवसाने विकसती नलिनवदीक्षणे यस्य तथा तस्मै ॥ २१ ॥

**सोऽयं समस्तजगतां सुहृदेक आत्मा**
**सत्त्वेन यन्मृडयते भगवान् भगेन ।**
**तेनैव मे दृशमनुस्पृशताद् यथाऽहं**
**स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥ २२ ॥**

**प्रकाशिका–** एवं स्तुत्वेदानीं स्वाभीष्टं प्रार्थयते ॥ सोयमिति चतुर्भिः । नान्यः प्रार्थनीयोऽस्तीत्याशयेनाह ॥ एक एव समस्तजगतां सुहृदात्मोत्कृष्ट इति । यद्येन सत्त्वेन गुणेन पराक्रमेण वा भागेनैश्वर्येण च मृड्यते रक्षति । विश्वमिति शेषः । अनुस्पृशताद्ददातु । स्पृश दान इति धातोः । दृशं विशिनष्टि ॥ यथेति । यथेत्यर्थः । यतःप्रणतप्रियोऽसौ । अहं च प्रणत इति भावः ॥ २२ ॥

**एष प्रपन्नवरदो रमयाऽत्मशक्त्या**
**यद् यत् करिष्यति गृहीतगुणावतारः ।**
**तस्मिन् स्वविक्रम इदं सृजतोऽपि चेतो**
**युञ्जीत कर्मशमलं च यथा विजह्याम् ॥ २३ ॥**

**तात्पर्यम्– 'स्वसामर्थ्यात्स्वकर्माणि रमया सह केशवः । कुरुते स्वयमेवैष कानिचित्पुरुषोत्तम' इति नारदीये ॥ २३ ॥**

**प्रकाशिका–** आत्मशक्त्येत्यत्र शक्तिशब्दस्य भार्यार्थत्वे वैय्यर्थम् । रमया सहेति व्याख्याने हरेरस्वातन्त्र्यं च प्रतीयतेऽतोत्र विवक्षितं व्याख्यानं प्रमाणेनैव दर्शयति ॥ स्वसामर्थ्यादिति । आत्मशक्त्येत्यस्य तात्पर्यमिदम् । तथाच यानि कर्माणि रमया सह कुरुते तान्यपि स्वसामर्थ्यादेव कुरुत इत्यर्थः । तत्र रमासाहित्यं तदनुग्रहार्थमेवेति भावः । कुत इत्यतः । यत एषः स्वयमेव रमां विहायैव कानिचित्कुरुते । अन्यथा तन्न स्यादिति भावः । किञ्चायं क्षराक्षरपुरुषोत्तमः । अतः स्वाधीनरमायामपेक्षायामपि न स्वातन्त्र्यहानिरिति भावः ॥ ततश्चायं श्लोकार्थः ॥ रमया सहात्मशक्त्या स्वसामर्थ्ये स्थित्याद्यर्थं गृहीता ये सत्त्वादयो गुणास्तत्प्रवर्तका विष्ण्वाद्यवतारा यस्य स तथोक्तः । स्वस्मिन्स्वविक्रमे स्वपराक्रमरूपे जगत्पालनसर्जनसंहरणादिरूपव्यापारे । इदं जगत्सृजतोऽपि तदाज्ञया नानाविधं जगत्सर्जनव्यापारमग्नस्यापि मे चेतः स एव युञ्जीत प्रवर्तयतु । जगत्सृष्ट्यादिव्यापारकरणेन मम हरिपराक्रमविषये स्मृतिलोपो यथा मा भूत्तथा करोत्विति भावः ।

यत एषः प्रपन्नवरदोऽहं च प्रपन्नो यथा येन कर्ममोक्षविलम्बे कारणं शमलं च तामसदैत्यादि-सृष्ट्यादिप्राप्तं पापं च विजह्यां त्यक्ष्यामि ॥ २३ ॥

**नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो**
**विज्ञानशक्तिरहमासमनन्तशक्तेः ।**
**रूपं विचित्रमिदमस्य विवृण्वतो मे**
**मा रीरिषीष्ट निगमस्य गिरां विसर्गः ॥ २४ ॥**

**प्रकाशिका–** इहांभसि सतोऽनन्तशक्तेर्यस्य पुंसो नाभिह्रदाद्विज्ञाने शक्तिर्यस्य महत्तत्त्वस्य तदभिमान्यहमासम् । अस्य रूपं प्रतिमास्थानीयमिदं विश्वं विवृण्वतो विस्तरेण कुर्वतो मे निगमस्य वेदस्यावयवभूतानां गिरां वाक्यानां पदानां च विसर्गो विशिष्टमुच्चारणं व्याख्यानं वा मारीरिषीष्ट मा लुप्यतामित्यर्थः । अनन्तशक्तिरयम् । अहं च तत्पुत्रो विज्ञानशक्तिरतस्तत्प्रसादेनान्यत्र व्यापृतस्य मम वेदव्याख्यानादिलोपो मा भूदिति भावः ॥ २४ ॥

**सोऽसावदभ्रकरुणो भगवान् विवृद्ध-**
**प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।**
**उत्थाय विश्वविजयाय मनोविषादं**
**माध्व्या गिराऽपनयतात् पुरुषः पुराणः ॥ २५ ॥**

**प्रकाशिका–** अदभ्रकरणोऽनल्पकृपो विजृंभन्विजृंभयन्विश्वस्य विजयायोद्भवोपकारायास्मदनु-ग्रहाय चोत्थाय । अस्मन्मानसविषादपरिहाराय समीचीनां वाचं ब्रवीत्वित्याशयः ॥ २५ ॥

**मैत्रेय उवाच–**
**स्वसम्भवं निशाम्यैवं तपोविद्यासमाधिभिः ।**
**यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥**

**प्रकाशिका–** स्वस्य संभवो यस्मात्तं स्वपितरं निशम्य दृष्ट्वा तप आलोचनं विद्या निष्ठा समाधिर्ध्यानं प्रकृतकार्यविषये यावन्मनोवाचस्तावत्स्तुत्वा खिन्नवदलंबुद्धिरहितवत् । अनेन तस्य पुनरपि स्तोतुमिच्छां सूचयति ॥ २६ ॥

**अथाभिप्रेतमालक्ष्य ब्रह्मणो मधुसूदनः ।**
**विषण्णचेतसस्तेन कल्पव्यतिकराम्भसा ॥ २७ ॥**

**प्रकाशिका–** कल्पव्यतिकरः प्रलयस्तदंभसा ॥ २७ ॥

**लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः ।**
**तमाहागाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥**

**तात्पर्यम्– 'आत्मशब्दस्य मुख्यार्थो विष्णुरेकः सनातनः । सन्देहदेहमनसो बुद्धिजीवाः स्वयं तथा । ब्रह्माप्यमुख्याः क्रमश उत्कर्षो ह्यात्मता भवेदि'ति प्रकाशसंहितायाम् ॥ २८ ॥**

**प्रकाशिका–** आत्मनः स्वस्य लोकानां संस्थानस्यावयवसंनिवेशविशेषस्य विज्ञाने परिखिद्यतोऽलंबुद्धिमकुर्वतो ब्रह्मणोऽभिप्रेतमित्यन्वयः । आलक्ष्य दृष्ट्वा । कश्मलं मनोविषादमित्यनेन तद्विषादस्य गतत्वान्न तत्र वचनापेक्षेति सूचयति । आत्मन इत्यात्मशब्दस्य स्ववाचकत्वं जगतां सुहृदेक आत्मेति पूर्वं विष्णुवाचकत्वं तत आत्मनि योगेनेत्यग्रे देहवाचकत्वं जीववाचकत्वं चाभिप्रेतम् । तत्र सर्वत्र किमात्मशब्दप्रवृत्तिः साम्येनैवेत्याशङ्कां प्रमाणेनैव परिहरति ॥ आत्मशब्दस्येति । सन्देहो मध्यदेहः । लिङ्गानुशासने व्यचकुस्यैव सान्तस्य नपुंसकत्वविधानात् । समस्तोऽयं मनःशब्दो बव्हच्क् इति न नपुंसक इति ज्ञेयम् । बुद्धिजीवा इत्यत्र बहुवचनं जातौ । स्वयं स्वो विष्णुरेव मुख्यार्थ इत्यत्र निमित्तमाह ॥ उत्कर्षो हीति । व्याप्तिरित्यर्थः । आत्मताऽऽत्मशब्दप्रवृत्तिनिमित्तम् । आङ् पूर्वात्तनोतेर्डमन् प्रत्यये आत्मेत्यस्य निष्पन्नत्वादिति भावः ॥ २८ ॥

**भगवान् उवाच–**
**मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह ।**
**तन्मया चोदितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥**

**तात्पर्यम्– प्रार्थनमपि मत्प्रेरणमेव ॥ २९ ॥**

**प्रकाशिका–** मूले हे वेदगर्भ वेदप्रतिपाद्य । तन्द्रीं विषादकृतमालस्यं मागाः । तेनैव मे दर्शमनुस्पृशतादित्यादिरूपं यत्प्रार्थनं त्वया पूर्वं कृतं तत्रापि न तव स्वातन्त्र्यमस्तीत्याह । तन्मयेति । यज्ज्ञानं भवान्प्रार्थयते मया चोदितमित्यन्यथाप्रतीतिवारणाय तात्पर्यमाह ॥ प्रार्थनमपीति । हि इत्यस्यार्थः ॥ अपीति । मम प्रेरणा यस्य तन्मत्प्रेरणं मत्प्रेरणाजन्य इत्यर्थः । तत्रापि भवान्न स्वतन्त्र इत्यर्थः ॥ ततश्चायमर्थः ॥ भवानग्रे पूर्वं मां प्रार्थयते यत्वत्कर्तृकं प्रार्थनं यदित्यर्थः । तद्धि तदपि मया चोदितं मत्प्रेरणाजन्य इत्यर्थः । तत्रापि भवान्न स्वतन्त्र इति भावः ॥ २९ ॥

**भूयश्च तप आतिष्ठ विद्यां चैव मदाश्रयाम् ।**
**ताभ्यामन्तर्हृदि ब्रह्मन् लोकान् द्रक्ष्यस्यपावृतान् ॥ ३० ॥**

**तात्पर्यम्– 'तप आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्तिते'ति कपिलसंहितायाम् ॥ ३० ॥**

**प्रकाशिका–** इदानीं प्रार्थितज्ञानस्य साधनमुपदिशति ॥ भूयश्चेति । अत्र तपोविद्या शब्दयोर्विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ तप आलोचनमिति । निष्ठा श्रद्धा । मदाश्रयामेवेति संबन्धः ॥ ३० ॥

**तत आत्मनि योगेन भक्तियुक्तः समाहितः ।**
**द्रष्टासि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनि ॥ ३१ ॥**

**तात्पर्यम्– 'देहेदेहे हरिस्तस्मिंल्लोकाः सर्वे प्रतिष्ठिताः । अङ्गुष्ठमात्रेऽपि परे परशक्तिर्यतो विभुरि'ति च । आत्मनि स्थिते मयि ॥ ३१ ॥**

**प्रकाशिका–** लोकदर्शनमेव विशिनष्टि ॥ तत इति । ततस्तेन योगेन ध्यानेन समाहितो यथावस्थितज्ञानः सन् आत्मनि सर्वदेहेषु ततमङ्गुष्ठमात्ररूपेण व्याप्तं मां द्रष्टासि द्रक्ष्यसि । आत्मनि जीवे स्थिते मयि लोकान्द्रष्टाऽसीत्यन्वयः । अत्र देहान्तर्गतेऽङ्गुष्ठमात्रे हरौ कथं लोकावस्थान-मित्याशङ्कां प्रमाणेनैव परिहरति ॥ देहे देह इति । अनेनात्मनीत्येकवचनं समुदायापेक्षमिति सूचयति । परशक्तिरघटितघटकशक्तिः । अङ्गुष्ठमात्रोऽप्यघटितघटकशक्त्या विभुर्व्याप्तो यत इत्यर्थः । आत्मनि मयीति सामानाधिकरण्येनाभेदप्रतीतिवारणायापेक्षितमध्याहृत्य योजनां दर्शयति ॥ आत्मनीति । तथा चात्मनि जीवे स्थितेऽपि मयीत्यर्थः । ततश्च पुनरालोचने कृते सर्वदेहस्थिते सर्वजीवस्थिते च मयि लोकान्द्रष्टाऽसीति भावः ॥ ३१ ॥

**यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम् ।**
**प्रतिचक्षीत मां लोको जह्यात् तर्ह्येव कश्मलम् ॥ ३२ ॥**

प्रकाशिका– एवंविधत्वद्दर्शनेनापि किं फलमित्यत आह ॥ यदा त्विति । तु शब्दो लोकाधारत्वरूपविशेषणार्थः । सर्वभूतेषु देहेषु जीवेषु च प्रतिचक्षीत पश्येत् । तर्ह्येव तदानीमेव कश्मलं बाह्यमनोगतं विषादम् ॥ ३२ ॥

**यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।**
**स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥ ३३ ॥**

**तात्पर्यम्–** स्वरूपेण मयोपेतं हृदिस्थं जीवरूपं हि परमेश्वरसहितं भवति । 'त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदि स्थिते । दृष्ट्वात्मभावं तं चापि हरिपादाब्जसंस्थितम् । यदा पश्यत्यापरोक्ष्यात्तदा मुक्तिं व्रजत्यसावि'ति दत्तात्रेययोगे ॥ ३३ ॥

**प्रकाशिका–** न केवलमुक्तविधमज्ञानेनैव पूर्यते । किन्तु स्वस्वरूपज्ञानमपि जीवस्य पुरुषार्थतयाऽपेक्षितमित्याह ॥ यदा रहितमिति । अत्र स्वरूपेण मयोपेतमित्येतदनूद्याभेदप्रतीतिवारणाय स्वरूपेणेत्यस्यार्थं सूचयन्मयोपेतमित्येतदुपपादयति ॥ स्वरूपेणेति । हृत्स्थं जीवरूपमित्यनेन स्वरूपशब्दार्थो दर्शितः । दक्षिणाक्ष्यादिस्थितजीवरूपव्यावृत्तये हृदिस्थितमित्युक्तम् । हि शब्दः श्रुत्यादिप्रसिद्धिद्योतकः । भवतीत्यनन्तरमतो मयोपेतमित्येतदुपपन्नमिति शेषः । ततः स्वरूपेणेत्येतन्न मयेत्यस्य विशेषणं येनाभेदःस्यात् । किन्तु स्वरूपेण हृदिस्थितस्वसमग्ररूपेणैवात्मानं स्वं मयोपेतं हृदिस्थितं मत्समीपस्थं पश्यन्निति मूलं व्याख्येयमिति सूचयति । अप्रतिपत्तिविप्रतिपत्ति- निरासाय समग्रश्लोकं प्रमाणेनैव व्याख्याति ॥ त्यक्त्वेति । देहादावात्मभावमात्मत्वाभिमानम् । अनेन भूतेन्द्रियगुणाशयैरित्येतदुक्तार्थम् । आत्मभावं जीवभावं चेति चशब्दान्वयः । अनेन स्वरूपेण स्वधर्मेण जीवत्वेनात्मानं हृदिस्थितं स्वं पश्यन्नित्यपि मूलयोजनां सूचयति । तमपि हृदिस्थितं जीवमपि । हरिपादाब्जसंस्थितमित्यनेन स्वरूपेणेत्येतदुक्तरीत्या मयोपेतमित्यनेनापि संबध्यत इति सूचयति । स्वाराज्यमृच्छतीत्यस्यार्थः ॥ मुक्तिं व्रजतीति ॥ ततश्चायं श्लोकार्थः ॥ लोकोऽधिकारी जनो यदा भूतानि पञ्च इन्द्रियाणि दश गुणाः शब्दाद्या आशयो जडान्तःकरणम् । एतै रहितमेतदात्मके देहे परित्यक्तात्मभावमात्मानं स्वं स्वरूपेण हृदिस्थितस्वसमग्ररूपेणैव मयोपेतं हृदिस्थितं मत्समीपस्थं पश्यन्वर्तते । आत्मानं हृदिस्थितं स्वरूपेण स्वधर्मेण जीवत्वेन पश्यन्निति वा तदा स्वाराज्यं स्वरागविषयं मोक्षमृच्छति गच्छतीति ॥ ३३ ॥

**नानाकर्मविपाकेन प्रजा बह्वीः सिसृक्षतः ।**
**नात्मावसीदत्यस्मिंस्ते वर्षीयान् मदनुग्रहः ॥ ३४ ॥**

**प्रकाशिका–** इदानीं तस्मिन्स्वविक्रम इदं सृजतेऽपीति यत्प्रार्थितं तद्ददातीत्याह ॥ नानेति । नानाविधकर्मफलभूतेनादृष्टेनात्मबुद्धिरस्मिन्मदीयसृष्ट्यादिकर्मणि नावसीदति नापगता भविष्यति । यतो वृषीयान्वृषतरः । अत्यधिकोऽस्तीति शेषः ॥ ३४ ॥

**ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ।**
**यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥**

प्रकाशिका– अनुग्रहमेव दर्शयति ॥ ऋषिमिति चतुर्भिः । ऋषिस्त्रिकालदर्शी स्यादिति वचनात्सर्वज्ञम् । आदौ भवमाद्यं यस्मान्मयि मद्विषये नितरां बद्धम् । त्वयाऽहं सम्यग्ज्ञात इत्यर्थः ॥३५॥

**ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ।**
**यन्मां त्वं मन्यसे युक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥**

**तात्पर्यम्– भूतेन्द्रियमनोबुद्धित्रिगुणादिषु सर्वशः । युक्तं नियामकतया पश्यञ्जानाति केशवमि'ति च ॥ ३६ ॥**

**प्रकाशिका–** एतदेव प्रपञ्चयति ॥ ज्ञात इति । ज्ञातः साक्षात्कृतो यद्यस्मान्मन्यसे ध्यायसि । अत्र भुतेन्द्रियगुणात्मयुक्तजीवसाधारणं भगवति बाधितमतः प्रमाणेनैव तद्युक्तत्वं दर्शयति ॥ भूतेन्द्रियेति । मनोबुद्धिरित्यात्मशब्दस्यार्थद्वयमुक्तम् । गुणशब्दार्थकथनम् ॥ त्रिगुणादिष्विति । आदिपदेन शब्दाद्या ग्राह्याः । युक्तं संबद्धम् । स्थितमिति यावत् । पश्यन्मनसा ध्यायन् जानाति पश्यति । तथाच भूतेन्द्रियगुणात्मभिर्भूतेन्द्रियगुणमनोबुद्धिभिर्नियम्यैर्युक्तम् । तत्र नियामकतया स्थितमिति मूलं व्याख्येयमिति भावः ॥ ३६ ॥

**तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितो बहिः ।**
**नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥ ३७ ॥**

**प्रकाशिका–** इदानीं तव मद्दर्शनमपि मदनुगृहेणैवेत्याह ॥ तुभ्यमिति । विचिकित्सायां दिदृक्षायां तन्निमित्तमनोविषादे सतीति यावत् । आत्मा देहो बहिः स्थितः । सलिले प्रलयजले पुष्करस्य कमलस्य नालेन नालनाडीद्वारेण पुष्करस्य मूलकारणभूतं मां विचिन्वतो मृगयतस्तव मद्विचिकित्सायामित्यन्वयः ॥ ३७ ॥

**यच्चकर्थ मम स्तोत्रं मत्कथाभ्युदयाङ्कितम् ।**
**यद् वा तपसि निष्ठा च स एष मदनुग्रहः ॥ ३८ ॥**

**प्रकाशिका–** स्तोत्रकरणमपि मदनुग्रहेणैवेत्याह ॥ यच्चकर्थेति । मत्कथाभ्युदयाङ्कितं मत्प्रतिपादकवाक्यप्रबन्धोत्कर्षयुक्तं मदनुग्रहो ममानुग्रहो यस्य स मदनुग्रहसाध्य इत्यर्थः ॥ ३८ ॥

**प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया ।**
**यदस्तौषीद् गुणमयं निर्गुणं माऽनुवर्णयन् ॥ ३९ ॥**

**तात्पर्यम्–** **'सार्वज्ञादिगुणैर्युक्तं सत्वादिगुणवर्जितम् । यो जानाति हरिं तस्य प्रीतो भवति केशव' इति व्योमसंहितायाम् । 'आधिकारिकदेवानां स्वाधिकाराधिकामनम् । भवति प्रीतये विष्णोर्भक्त्याद्यैरपि यत्सदे'ति च ॥ ३९ ॥**

**प्रकाशिका–** इदानीं स्तोत्रफलं व्यञ्जयन् तमभिनन्दति ॥ पीतोऽहमिति । विजयेच्छया सृष्टीच्छया। गुणमयं निर्गुणमिति पदयोर्व्याहतिपरिहारार्थं दर्शयितुं समाख्याप्रमाणं दर्शयति ॥ सार्वज्ञादीति । अनेन गुणमयमित्येतदुक्तार्थम् । निर्गुणमित्यस्य व्याख्यानम् ॥ सत्त्वादीति । तथाच गुणमयं सार्वज्ञादिगुणपरिपूर्णं मां निर्गुणं सत्त्वादिगुणशून्यम् । अनुवर्णयन्प्रतिप्रादयन् यस्मादस्तौषीद्भगवांस्तेनाहं प्रीतोऽस्मि । मत्प्रीत्या च ते भद्रं कल्याणमस्त्वित्यर्थः । अत्र विजयेच्छयाऽस्तौषीदिति ब्रह्मकृतस्तोत्रस्य कामनया कृतत्वमुच्यते । तदुत्तमाधिकारिणां निषिद्धम् । अतोऽत्रोपपत्तिं प्रमाणेनैव दर्शयति ॥ आधिकारिकेति । स्वाधिकारमभि तत्संबन्धि यदस्ति तत्कामनमित्यर्थः । तेन लोकानां विजयेच्छयेत्यत्रेदं नासङ्गतमिति ध्येयम् । सदा भक्त्यादेरपि यत्कामनं तदपि विष्णोः प्रीतये भवतीत्यर्थः । तथाच ब्रह्मणो लोकसृष्टिव्यापारस्यापि स्वाधिकारसंबन्धित्वात्तत्कामनस्य हरिप्रीतिसाधनत्वान्न तस्य निषिद्धत्वमिति भावः ॥ ३९ ॥

**य एतेन पुमान् नित्यं स्तुत्वा स्तोत्रेण मां भजेत् ।**
**तस्याहं सम्प्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥**

**प्रकाशिका–** त्वत्कृतस्तोत्रेण यो मां भजते तस्यापि प्रसन्नो भवामि किमु तुभ्यमित्याशयेनाह ॥ य इति । सर्वकामवरेश्वरः । सर्वकामितवराणां दाने समर्थः ॥ ४० ॥

**पूर्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना ।**
**राज्यं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥**

**तात्पर्यम्–** **निःश्रेयसं राज्यम् । मोक्षेऽपि रञ्जनीया मत्प्रीतिरेव । 'मुक्तस्यापि हरेः प्रीतिः सर्वतोऽप्यनुरज्यत' इति वामने ॥ ४१ ॥**

**प्रकाशिका–** प्रीतोऽहमिति प्रीतिरेव फलत्वेनोक्ता तयाऽपि किं प्रयोजनमित्याकांक्षायामुत्तमाधिकारिणां मत्प्रीतिरेव परमपुरुषार्थरूपा । अतः सर्वकामिभिः सैवाशास्या मोक्षोऽपि तदर्थमेवाशास्य इत्याशयेनाह ॥ पूर्तेनेति । अत्र प्रीतेर्निःश्रेयसत्त्वं राज्यत्वं च कथमित्यतस्तदभिप्रायमाह ॥ निःश्रेयसमिति । तथाच सप्तसु प्रथमेति सूत्रान्निःश्रेयसमिति प्रथमा सप्तम्यर्थे । राज्यशब्दोऽपि न रूढ्या देशपरः किन्तु योगेन रञ्जनीयार्थकः । रञ्ज राग इति धातोः । अतः पुंसामुत्तमाधिकारिणां निःश्रेयसे मोक्षेऽपि मत्प्रीतिरेव पूर्तादिभी राज्यम् । लिङ्गव्यत्ययेन रञ्जनीया एष्टव्या । मोक्षस्तु

तदर्थमेवेति तत्त्वविदां मतम् । अतत्त्वविदां तु पूर्तादिना स्वर्गादिकमेव राज्यमिति मतमिति मूलार्थ इति भावः । अत्र प्रमाणसंवादमाह ॥ मुक्तस्यापीति । कर्तरि षष्ठी । मुक्तेनाप्युत्तमाधिकारिणा सर्वतः पूर्तादितो हरेः प्रीतिरेवानुरज्यते योग्यतानुसारेणेष्यत इत्यर्थः ॥ ४१ ॥

**अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि ।**
**अतो मयि रतिं कुर्याद् देहादिर्यत्कृते प्रियः ॥ ४२ ॥**

**तात्पर्यम्– 'सर्वतोऽपि प्रियो ह्यात्मा तस्यापि प्रियतां हरिः । आपादयति । यत्तस्मात्स्वात्मनोऽपि प्रियो हरिरि'ति ब्रह्मवैवर्ते ॥ ४२ ॥ इति तृतीय तात्पर्ये दशमोऽध्यायः ॥ १० ॥**

**प्रकाशिका–** एतादृशमत्प्रीतौ मद्भक्तिरेव साधनमित्याशयेन तां विधत्ते ॥ अहमिति । अत्र प्रेयसामप्यात्मनां प्रेष्ट इति स्वात्मापेक्षया हरेरतिशयेन प्रीतिविषयत्वमुच्यते । तत्कथमित्यपेक्षायां तदुपपादकं प्रमाणमेव पठति ॥ सर्वतोऽपीति । सर्वतो देहादेः । आत्मा जीवः । हि शब्दोऽत्रानुभवप्रसिद्धिद्योतकः । अनेन देहादिर्यत्कृते प्रिय इत्येतदुक्तार्थम् । प्रियो हरिरुच्यत इति शेषः । ततश्च हे धातश्चतुर्मुख । अहं देहादिर्यत्कृते येषामर्थे प्रियस्तेषां प्रेयसामपि देहाद्यपेक्षयाऽतिशयेन प्रियाणामप्यात्मनां जीवानां श्रेष्ठः सन् प्रियत्वापादकत्वेनातिशयेन प्रीतिविषयः सन् आत्माऽन्तर्यामी भवामि यतोऽतो मयि रतिं कुर्यादिति मूलार्थ इति भावः ॥ ४२ ॥

**सर्ववेदमयेनेमा आत्मनात्मात्मयोगिना ।**
**प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥**

**प्रकाशिका–** इदानीं सृष्टिकर्मणि तं नियोजयति ॥ सर्ववेदेति । सर्ववेदार्थविषयकेनात्मयोगिनाऽऽत्मानां जीवानामात्मा स्वामी यस्तद्विषयकध्यानादिरूपयोगवताऽऽत्मना मनसा इमा देवऋष्यादिरूपा या इदानीं मय्यनुशेरते ताः प्रजा यथापूर्वं पूर्वकल्पे यथाऽभूवन् तथा विचार्य सृज । वेदार्थानुसारेणैव नामरूपात्मकं प्रपञ्चं सृजेत्यर्थः । च शब्देन तदाश्रयान् भूरादिलोकांश्च सृजेति ग्राह्यम् ॥ ४३ ॥

**मैत्रेय उवाच–**

**तस्मा एवं जगत्स्रष्टा प्रधानपुरुषेश्वरः ।**
**व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे दशमोऽध्यायः ।**

**प्रकाशिका–** प्रधानपुरुषयोः प्रकृतिब्रह्मणोरीश्वरः । व्यज्य व्यक्तीकृत्य ॥ ४४ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ३-१० ॥

## अथ एकादशोऽध्यायः ।

**विदुर उवाच–**

**अन्तर्हिते भगवति ब्रह्मा लोकपितामहः ।**
**प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥**

**ये च मे भगवन् पृष्टास्त्वय्यर्था बहुवित्तम ।**
**तान् वदस्वानुपूर्व्येण छिन्धिः नः सर्वसंशयान् ॥ २ ॥**

**प्रकाशिका–** मे मया त्वयि वक्तृतयोपस्थिते सति वदस्व वद ॥ २ ॥

**शुक उवाच–**

**एवं सञ्चोदितस्तेन क्षत्त्रा कौषारवो मुनिः ।**
**प्रीतः प्रत्याह तान् प्रश्नान् हृदिस्थानथ भार्गव ॥ ३ ॥**

**प्रकाशिका–** सञ्चोदितः प्रार्थितो हृदिस्थान्स्वहृदि विद्यमानान् । अविस्मृतानिति यावत् । भो भार्गव शौनक ॥ ३ ॥

**मैत्रेय उवाच–**

**विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ।**
**आत्मन्यात्मानमावेश्य यथाऽह भगवानजः ॥ ४ ॥**

**तात्पर्यम्– आत्मनि परमेश्वरे मन आवेश्य ॥ ४ ॥**

**प्रकाशिका–** आत्मन्यात्मानमित्यात्मशब्दद्वयस्यात्माश्रयत्वपरिहारायार्थभेदं दर्शयति ॥ आत्मनीति । आत्मानमित्यस्यार्थः ॥ मन इति । अन्यथाऽवेश्येति क्रियाऽऽनुपपन्नेति दर्शयितुमावेश्येत्येस्यानुवादः ॥ ४ ॥

**तद् विलोक्याब्जसंभूतो वायुना यदधिष्ठितम् ।**
**पद्ममम्भश्च तत्कालकृतवीर्येण कम्पितम् ॥ ५ ॥**

**प्रकाशिका–** यस्त्वेनाधिष्ठितं तत्पद्मम्भश्च विलोक्य । कथं भूतम् । स चासौ कालश्च तत्कालः प्रलयकालस्तेन कृतं वीर्यं पराक्रमो यस्य स तथोक्तः । तेन वायुना कंपितम् ॥ ५ ॥

**तपसा ह्येधमानेन विद्यया चात्मसंस्थया ।**
**विवृद्धविज्ञानबलो न्यपाद् वायुं सहाम्भसा ॥ ६ ॥**

**प्रकाशिका–** विवृद्धे विज्ञानबले यस्य स तथोक्तः । न्यपात्पीतवान् ॥ ६ ॥

**तद् विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितः ।**
**अनेन लोकान् प्राग्लीनान् कल्पितास्मीत्यचिन्तयत् ॥ ७ ॥**

**प्रकाशिका–** कल्पितास्मि सृक्ष्म्यामि ॥ ७ ॥

**पद्मकोशं तदाविश्य भगवान् कर्मचोदितः ।**
**एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्य द्विसप्तधा ॥ ८ ॥**

**प्रकाशिका–** भगवान् ब्रह्मा कर्मणा लोकजनकादृष्टेन चोदितः प्रेरितः कर्मणि जगत्सर्जनरूपे चोदितो हरिणेति वा । एकं पद्ममुरुधाऽनेकप्रकारेण व्यभांक्षीद्विबभाज । उरुधेत्युक्तमेव विवृणोति ॥ त्रिधेति । त्रिधा भूम्यन्तरिक्षस्वर्गात्मना भाव्य कृत्वा द्विसप्तधा चतुर्दशभुवनात्मना । व्यभांक्षीदित्यनुवर्तते । चतुर्दशभुवनात्मना विभागपक्षे सप्तलोकस्योपचयमात्रमिति द्रष्टव्यम् ॥ ८ ॥

**एतावान् जीवलोकस्य संस्थाभेदः समासतः ।**
**धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठिनः ॥ ९ ॥**

**तात्पर्यम्– अनिमित्तस्य ब्रह्मार्पणबुद्ध्या कृतस्य । 'अ इति ब्रह्मे'ति श्रुतेः ॥ ९ ॥**

**प्रकाशिका–** एवमेव विभागे हेतुमाह ॥ एतावानिति । जीवलोकस्य जीवावस्थानयोग्यलोकस्य संस्थाभेदः स्थितिविशेष एतावान् एतावानेव । अत एवमेव विभागः कृत इति भावः । वैकुण्ठं ब्रह्माण्डबाह्यदेशं च व्यावर्तयितुं समासत इत्युक्तम् । नन्वन्यैः कर्तुमशक्योऽयं लोकविभागः । कथमनेनैव कृत इत्याशङ्कायां तदीयपूर्वार्जितपुण्यफलरूपोऽयमित्याह ॥ धर्मस्येति । अत्रानिमित्तस्येत्यस्य न विद्यते निमित्तं यस्येति व्याख्यानवारणायार्थमाह ॥ अनिमित्तस्येति । तथा च अः परब्रह्म निमित्तमुद्देश्यं यस्यति विग्रहलब्धार्थकथनमेतत् । अस्य शब्दस्य ब्रह्मवाचकत्वे स्यादिदं तदेव कुत इत्यत आह ॥ अ इति । श्रुतेरशब्दो ब्रह्मवाचीत्यवगम्यत इति शेषः । निषेधार्थत्वं तु बाधितम् । लोकानां विजयेच्छयेत्युद्देश्यस्योक्तत्वादिति भावः ॥ ९ ॥

विदुर उवाच–

यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ।
कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ॥ १० ॥

**तात्पर्यम्–** लक्षणं लक्ष्यमात्मा च स्वरूपमिति कथ्यत' इत्यभिधानम् ॥ १० ॥

**प्रकाशिका–** यदात्थेति । अत्र लक्षणशब्दस्य स्वरूपार्थत्वमेव नासाधारणधर्मत्वमित्याशयेन तस्य स्वरूपार्थत्वेऽभिधानमाह ॥ लक्षणमिति । स्वरूपं लक्षणं लक्ष्यमात्मेति शब्दैः कथ्यत इत्यर्थः । तथा च ब्रह्मरुद्रविष्णुसंज्ञानि सकलनियामकानि वा रूपाणि यस्य तस्य यत्कालाख्यं स्वरूपमहं च गिरिशश्च विभुः स्वयं चेति उरुप्ररोह इति च बहुरूपत्वेनोक्तस्यैव निमिषायेत्यनिमिषशब्देन ब्रह्मस्तुतिकथनव्याजेनान्तानि बहूनि रूपाणि तत्कालाख्यं स्वरूपं च यथा यथावद्वर्णयति मूलार्थ इति भावः ॥ १० ॥

मैत्रेय उवाच–

गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥ ११ ॥

**तात्पर्यम्–** गुणव्यतिकरमाकरोति तद्द्रष्टा । अप्रतिष्ठितोऽन्यत्र । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नी'ति श्रुतिः । तदुपादानम् । गुणव्यतिकरोपादानकर्तारम् । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य । ब्रह्मविष्णुमहेश्वर इति त्रीणि रूपाण्यात्मना सृष्टानि ॥ ११ ॥

**प्रकाशिका–** तत्र तावदुक्तविधानि हरेर्बहूनि रूपाणि कालाख्यं च रूपं दर्शयन् अण्डबाह्याभ्यन्तरसृष्टिं निरूपयत्यस्मिन्नध्याये । तत्रादौ तावत्सृष्ट्याद्यर्थं गुणोपादानकर्तॄणि त्रीणि रूपाणि भगवता प्रकटीकृतानीत्याह ॥ गुणेति । तत्र गुणव्यतिकराकार इत्यस्याप्रतिपत्तिविप्रतिपत्तिनिरासाय विवक्षितमर्थं दर्शयति ॥ गुणव्यतिकरेति । गुणव्यतिकरं गुणवैषम्यम् । सृष्टिरिति यावत् । आ सम्यक्करोतीति गुणव्यतिकराकार इति शेषः । नन्वत्र सृष्टेः पूर्वं विद्यमानस्य पुरुषस्य स्थितिरुच्यते । तस्य कथं करोतीति कर्तृत्वमुक्तमित्यतस्तात्पर्यं दर्शयति ॥ तद्द्रष्टेति । अत्र करणं नाम तद्विषयकं सम्यग्दर्शनमेव विवक्षितम् । तेन भाविगुणव्यतिकरोपादानतया गुणत्रयद्रष्टेत्येवार्थ इत्यर्थः । अनेन तां नारायणः पर्यपश्यदिति श्रुतिरप्यनुसृतेति ज्ञातव्यम् । मूले निर्विशेषो विशिष्यत इति विशेषः । स्वापेक्षया विशिष्टरहितो निर्विकार इति वा । अप्रतिष्ठित इत्यस्यासंभवपरिहारायापेक्षिताध्याहारं दर्शयति ॥ अप्रतिष्ठितोऽन्यत्रेति । स्वस्मिन्नेव प्रतिष्ठित इत्यर्थः । अत्र श्रुतिसंमतिमाह ॥ स भगव

इति । भो भगवः । स परमात्मा कस्मिन्नाश्रित इति प्रश्ने स्वे महिम्नीत्युत्तरमित्यर्थः । अत्र स्व इत्येव वक्तव्ये महिम्नीति वचनमेकस्यैवाश्रयत्वमाश्रितत्वं चोपपादयितुं श्रुतेः स्वाश्रितत्वम् । अवगम्यत इति शेषः । तदुपादानमित्यस्य गुणव्यतिकरस्योपादानकारणमित्यन्यथाप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ तदुपादानमिति । गुणव्यतिकरपदं स्थितिप्रलययोरप्युपलक्षकम् । तथा तद्गुणव्यतिकरादिकमुपादत्ते उद्देश्यं करोतीति तदुपादानस्तमिति मूलार्थ इति भावः । एतदेव दर्शयन् वाक्यार्थमाह ॥ सृष्ट्याद्यर्थत्वेनेति । गुणव्यतिकरशब्दार्थः ॥ सृष्टीति । तस्योपलक्षकत्वम् । आदीति स्थितिप्रलयोक्तिः । अर्थत्वेनेत्यनेन तदुपपादनं तदुद्देश्यकरणमिति सूचयति । तस्य पुरुषस्य रूपाणि । अनेनात्मानमित्यात्मशब्दः स्वरूपपरः । समुदायापेक्षायामेकवचनामित्युक्तं भवति । आत्मना स्वेन सृज्यसर्जकरूपयोरभेदसूचनायेदम् । अन्यथा पुरुषेणेत्येव वक्तव्यम् । सृष्टानि व्यक्तीकृतानि । इत्यर्थ इति शेषः ॥ ११ ॥

**विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ।**
**ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥**

**तात्पर्यम्– ब्रह्म निर्मातृकम् । मायया सामर्थ्येन । तत्र यत्संहर्तीश्वराख्यं रूपं तत्कालाख्यम् । कल छेदन इति धातोः । 'अथ त्रयी वाव प्रकृतिः सत्त्वं रजस्तम इति तां नारायणः पर्यपश्यदनन्यप्रतिष्ठः तं वा एतमाहुः पुरुष इति पूर्णो ह्येष भवति स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्वस्य रजसो ब्रह्मेशो नाम तमसः स आविवेश । ब्रह्मा ब्रह्माणं नाम चतुर्मुखं ईश ईशानं नाम पञ्चमुखं यो वा ईश ईशानमाविवेश तं वा एनं काल इत्याचक्षते काल इत्याचक्षत' इति सौकरायणश्रुतिः ॥ १२ ॥**

**प्रकाशिका–** सृष्ट्याद्यर्थत्वेनेत्युक्तम् । तत्र किं रूपं कस्य कर्तृ इत्यपेक्षायां तदेव विविच्य दर्शयति ॥ विश्वमिति । अत्र ब्रह्मतन्मात्रमित्यस्य ब्रह्मैव केवलमित्यन्यथाप्रतीतिनिरासाय तात्पर्यमाह ॥ ब्रह्मेति । ब्रह्मा ब्रह्मान्तर्गतो ब्रह्मनामा पुरुषो निर्माता जनको यस्य तदित्यर्थः । अनेन ब्रह्मणा ब्रह्मान्तर्गतेन ब्रह्मनामकेन पुरुषेण मात्रं निर्मितमिति मूलव्याख्यानं सूचयति । माययेत्यस्याविद्यापरत्वप्रतीतिवारणायार्थमाह ॥ माययेति । तथाच विष्णुरूपस्य पुरुषस्य मायया सामर्थ्येन स्थितं सम्यक् स्थितिमत्पालितमिति मूलार्थ इति भावः । ईश्वरेण रुद्राविष्टेनेश्वरनामकेन रूपेण परिच्छिन्नं परितो नाशितं संहृतमित्यर्थः । अत्रेश्वरस्य कालेनेति विशेषणेऽभिप्रायमाह ॥ तत्रेति । रूपत्रयमध्ये कालाख्यमिति दर्शयितुं कालेनेति विशेषणमुक्तमिति भावः । तथाच कालाख्यं लक्षणं वर्णयेति यत्प्रार्थितं तस्यापीदमुत्तरमिति दर्शयितुं कालेनेत्युक्तमिति भावः । रुद्रदेहान्तर्गत-

त्वादव्यक्तमूर्तिनेत्युक्तम् । संहर्तृरूपस्य कालाख्यता कुत इत्यत आह ॥ कलछेदन इति। धातोर्धातुव्याख्यानात् । गुणव्यतिकराकार इत्यादिनोक्तार्थे श्रुतिसंवादं दर्शयति ॥ अथेति । गुणानां गुणकार्याणां सृष्ट्यादीनामुपादानाय तल्लक्षणप्रयोजनायेत्यर्थः । सत्त्वादिशब्दा अपि तत्कार्यस्थित्यादिपराः । ननु सृष्टिसंहारयोः कर्तृत्वेन चतुर्मुखपञ्चमुखयोरेव प्रसिद्धत्वात्कथं विष्णुरूपयोस्तदुच्यत इत्यतस्तयोस्तत्प्रसिद्धौ निमित्तमाह ॥ स आविवेशेत्यादिना । ब्रह्मा ब्रह्मनामा विष्णुरीश ईशनामा सः । अत्र पर्यपश्यदित्यन्तेन गुणव्यतिकराकार इत्येतदुक्तार्थम् । अनन्यप्रतिष्ठ इत्यनेन अप्रतिष्ठित इत्येतत् पूर्णो हीत्यादिना पुरुष इत्येतत् । स त्रेधा बभूवेत्यनेनात्मानं लीलयासृजदित्येतत् । एषां गुणानामुपादानायेत्यनेन तदुपादानमित्येतत् । विष्णुर्वाव सत्त्वस्येत्यनेन संस्थितं विष्णुमाययेत्येतत् । रजसो ब्रह्मेत्यात्मा ब्रह्म तन्मात्रमित्येतत् । ईशानो नाम तमस इत्यनेनेश्वरेण परिच्छिन्नमित्येतत् व्याख्यातमिति ज्ञातव्यम् । यो वा इत्यादिना कालेनेत्येतदुक्ततात्पर्यम् ॥ १२ ॥

**यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम् ।**
**सर्गो नवविधस्तस्य प्राकृतो वैकृतश्च यः ॥ १३ ॥**

**तात्पर्यम्– सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च । देवऋषिप्रभृतयो लोका भूरादयस्तथा । अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः । जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथञ्चन । ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते । देवैर्ब्रह्मादिभिः शप्ता ऋषिभिर्मानुषादिभिः । सेतिहासैस्तथा वेदैः सर्वे यान्त्यधरं तमः । सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः । अन्यसाम्यविदो विष्णोर्विष्णुद्वेष्टार एव च । सर्वे यान्ति तमो घोरं न चैषामुत्थितिः क्वचिदि'ति स्कान्दे ॥ १३ ॥**

**प्रकाशिका–** ननु विश्वस्य दृश्यत्वेन मिथ्यात्वावगमात्कथं विष्णुपाल्यत्वादिकमुच्यते इत्यत आह ॥ यथेदानीमिति । अग्रे पूर्वमीदृशमीदृशमेवेति श्रुत्यादिभिरवगतम् । तथाचानाद्यनन्तकालेष्वेकप्रकारत्वस्य श्रुत्यादिसिद्धत्वान्मिथ्यात्वानुमानं बाधितविषयमिति भावः । अत्र प्रमाणसंमतिं दर्शयति ॥ सृष्टिश्चेति । अनेन मूलगतैतच्छब्दार्थो दर्शितः । एवकाररूपस्यानाद्यनन्तकालीना एवैकप्रकारत एवेति संबन्धः । तृतीयस्यैवकारस्य सत्य एवेति । कथञ्चन केनापि प्रमाणेन । इदानीमग्रे पश्चादिति पदत्रयतात्पर्यमनाद्यनन्तकालीना इत्यनेनोक्तम् । ईदृशमित्यस्य तात्पर्यम् ॥ सर्वदैकप्रकारत इति । श्रुत्यादिभिरवगम्यते यतोऽत इति शेषः । अत एव सेतिहासैस्तथा वेदैरिति वक्ष्यति । विपक्षे बाधकमाह ॥ ये त्वेतदिति । सेतिहासैर्वेदैरिति तदभिमानिभिरित्यर्थः । अन्यथा मिथ्यात्वेन । अनेन मूलेऽपि विपक्षबाधककथनाय तम इत्यन्तं वाक्यमध्याहार्यमिति सूचयति । ये

त्वेतदन्यथा ब्रूयुरित्यध्याहृतस्य विपक्षे बाधकवाक्यस्यार्थान्तरमाह ॥ सर्वब्रह्मत्वेत्यादिना । विष्णुद्वेष्टारो विष्णोरप्यधिकोऽस्तीति ज्ञातारः । तम एवेति संबन्धः । अनेनैतज्जीवजडात्मकं विश्व-मीदृशं ब्रह्मभिन्नमेव । एतद्विष्णुरूपमीदृशं समाभ्यधिकशून्यमित्यपि पूर्ववाक्ययोजनां सूचयति । एवं बहुरूपस्येत्यनेन पृष्टानि त्रीणि रूपाण्युक्त्वेदानीं सकलकार्यान्तर्गतानि बहूनि रूपाणि वक्तुं सप्रभेदं सर्गमाह ॥ सर्ग इति । तस्य विश्वस्य यः प्राकृतो वैकृतश्च सर्गः स नवविध इत्यन्वयः ॥ १३ ॥

**कालद्रव्यगुणैरस्य त्रिविधः प्रतिसङ्क्रमः ।**
**आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥**

**तात्पर्यम्– 'तामसस्य पदार्थस्य सत्वं हि लयकारणम् । सात्विकस्य तमश्चैव तयोरपि रजः क्वचित् । गुणतोऽयं लयः प्रोक्तो द्रव्यतस्तु विरोधिना । कालतः कालसंख्याको लयः सर्वस्य वस्तुन' इति ब्रह्मतर्के । तमसो रजस्तु द्विगुणं रजसः सत्वमेव च । परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः । तत्र सत्वं केवलं स्याद्रजस्यपि शताधिकम् । सत्वं रजःशतांशं तु तमस्तत्र प्रकीर्तितम् । तमस्यपि तथा सत्वं तमसस्तु दशोत्तरम् । तद्दशांशेन तु रजो मूलजं यद्रजस्तु तत् । विलये दशांशतः सत्व एकांशेन तमस्यपि । मिश्रितं भवति ह्येतां साम्यावस्थां विदुर्बुधाः । यदा तु तद्रजः सर्वं तमसा सह सङ्गतम् । तदा त्वाहुर्महत्तत्त्वं तच्चतुर्भागसम्भवम् । तत्र त्रिभागो रजस एकोंऽशस्तमसस्तथा । तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् । तदेव केवलं सत्वमितरापेक्षया भवेत् । श्रीर्मूलसत्वं विज्ञेया भूर्मूलं रज उच्यते । मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका । गुणेभ्यो गुणमूलाच्च योऽतीतः स जनार्दनः । यद्रजो मूलरजसि मूले तमसि यद्रजः । तमश्च मूले तमसि महत्तत्त्वं तदात्मकम् । दशांशास्तत्र सत्वं स्युरेकांशो रज एव तु । तद्दशांशं तमो ज्ञेयम् ॥ १४ ॥**

**प्रकाशिका–** कालनामकेन रुद्रेण क्रियमाणसंहारोऽपि त्रिविध इति प्रसङ्गादाह ॥ कालेति । अस्य विश्वस्य प्रतिसङ्क्रमः प्रलयः । अत्र कालादिभिर्जायमानं प्रलयं प्रमाणेनैव दर्शयति ॥ तामसस्येति । तामसस्य पदार्थस्य दुःखमोहादेः सत्त्वम् । अभिवृद्धमिति शेषः । हीत्यनेन तत्र प्रमाणप्रसिद्धिं द्योतयति । सात्विकस्य पदार्थस्य ज्ञानसुखादेरभिवृद्धं तम एव लयकारण-मित्यस्यानुकर्षणार्थश्चकारः । तयोस्तामससात्विकपदार्थयोरभिवृद्धं रजो लयकारणम् । विरोधि नाम लोकेनान्धकारस्य पित्तेन श्लेष्मादेश्च जायमानो लयो द्रव्यजः प्रोक्तः । कालसंख्याको मनुष्याणां वर्षशतमायुष्यमित्यादिरूपः । सर्वस्य वस्तुनः स्थावरजङ्गमात्मकचेतनाचेतनरूपस्य । तत्रादौ तावत्प्राकृतसर्गविभागमाह ॥ आद्यस्त्विति । अत्र गुणवैषम्यशब्दार्थप्रदर्शनाय तदपेक्षितं गुणसाम्यं

निरूपयितुमादौ तावद्राशीकृतगुणानां स्थितिं दर्शयति ॥ तमस इत्यादिना । अवधारणार्थस्य तुशब्दस्य द्विगुणमेवेति संबन्धः । चशब्दो द्विगुणमित्यस्यानुकर्षणार्थः । सत्त्वं रजसो द्विगुणमेव । प्रकृतिजा इत्यनेन कार्यभूतानामेवेयं स्थितिर्नापरिच्छिन्नप्रकृतिरूपाणामिति सूचयति । एवं परिमाण-मुक्त्वा तेषां स्वरूपाण्याह ॥ तत्रेति । तेषु मध्ये केवलं गुणान्तरामिश्रितम् । अपिशब्दौ परस्परगुणान्तरमिश्रितत्वसमुच्चयार्थौ । तु शब्दोऽवधारणे । शतांशमेव दशोत्तरमेवेत्याद्ययोः संबन्धः। शताधिकम् । रजोभागापेक्षयेति शेषः । रजः शतांशरजसः शतभागमध्ये य एको भागस्तत्प-रिमितमित्यर्थः । तत्र रजसि । दशोत्तरं दशगुणितं प्रकीर्तितमिति संबन्धः । तमसि राशीकृते । तथाशब्द उपमायाम् । तद्दशांशेन तमसो यो दशमोंऽशस्तत्परिमितमित्यर्थः । प्रकीर्तितमित्यनुवर्तते । रजोराशितमोराश्योः सत्त्वगुणस्याधिक्येऽपीतरगुणयोर्मध्ये यस्य यत्राधिक्यं स राशिस्तन्नामाऽभि-धीयत इति ज्ञातव्यम् । इदानीं साम्यावस्थामाह ॥ मूलजमिति । अत्रोत्तरत्र च मूलशब्द उपादानत्वेन राशीकृतगुणपरः । तथाच मूलजं राशीकृतगुणजन्यं यन्महत्तत्त्वान्तर्गतं रजस्तदित्यर्थः । विलये विशिष्टलये महाप्रलये प्राप्ते सति दशांशतो दशभागैः सत्त्वे राशीकृते मिश्रितं भवति । एकेनांशेन तमसि तमोराशौ मिश्रितं भवति । अन्येनैकेन भागेन रजोराशौ मिश्रितं भवतीत्यपि ग्राह्यम् । ततश्च महत्तत्त्वस्य गुणत्रये लय उक्तो भवतीति ज्ञातव्यम् । हि यस्मादेवं तस्मादेतां प्रलयावस्थां साम्यावस्थां विदुर्ज्ञातवन्तः । महत्तत्त्वप्रलयानन्तरं सत्त्वराशेरपि रजोमिश्रितत्वप्राप्त्या त्रयाणामपि गुणानां गुणान्तरमिश्रितत्वेन साम्यात् । नन्वेवं राशीकृतगुणत्रयनाशानन्तरं प्रलयस्य कथं गुणसा-म्यावस्थात्वमिति वाच्यम् । महदादीनामिव गुणत्रयाणामप्युपादानभूतसूक्ष्मरूपसत्वेन तदपि तेषां सूक्ष्मरूपेण मिश्रितत्वेनैवावस्थानमित्याशयादित्यर्थः । तदाऽपि गुणानां मिश्रितत्वेनैवाव-स्थानमित्याशयात् । कथमन्यथा सत्त्वं केवलं स्यादिति सृष्ट्युपक्रमे सत्त्वस्यैव केवलत्वोक्तिः । इदानीं गुणवैषम्यमाह ॥ यदा त्विति । यदा सृष्टिकाले । तु शब्दस्तस्य गुणत्रयसृष्ट्यनन्तरत्वद्योतकः। तद्रजः सर्वं यत्पूर्वं प्रलये दशभागैः सत्त्व एकेन भागेन तमस्यन्येनैकेन भागेन रजसि प्रविष्टं तद्द्वादशभागात्मकं सर्वं रजः सृष्टिकाले एकादशभागैः रजोराशावेकेन भागेन तमोराशौ प्रविष्टं सत् तमसा तमोराशिस्थेन तमोभागेन सह सङ्गतं भवति । तदा । तु शब्द उक्तरीत्या महत्तत्त्वारंभक-रजोभागानां तमोभागस्य च सृष्टिकाले रजस्तमोराश्यन्तर्गतत्वरूपविशेषसूचकः । तयो रजस्तमसो-श्चतुर्भिर्भागैः संभव उत्पत्तिर्यस्य स तथा । महत्तत्त्वमुत्पन्नमित्याहुर्ज्ञानिनः । चतुर्भागसंभवमित्युक्तमेव विवृणोति ॥ तत्रेति । तत्र महत्तत्त्वे । त्रिभाग इत्युक्तवचनं समुदायपरम् । महत्तत्त्वस्य चत्वारोभा-गास्तेषु रजसस्त्रय एकस्तमस इति विवेकः । रजोभागेषु बहुतरं सत्त्वमप्यस्तीति वक्ष्यमाणत्वान्न तत्र सत्त्वाभावशङ्केति ध्येयम् । तन्महत्तत्त्वं ब्रह्मणो रूपम् । अभिमन्यमानतया देहस्थानीयम् । तदेव महत्तत्त्वं विषमसङ्ख्यागुणात्मकभागवत्त्वाद्गुणवैषम्यनामकमाहुः । इदमुपलक्षणम् । सृष्टिकाले

राशीकृतगुणत्रयमपि सत्त्वगुणस्य केवलत्वेनेतरयोर्मिश्रत्वेन गुणानां वैषम्यात् । गुणवैषम्यनामकमित्यपि ग्राह्यम् । नन्वेवं ब्रह्मदेहस्य शुद्धसात्विकत्वप्रसिद्धिः कथमित्यत आह ।। तदेवेति । तदेवोक्तरीत्या चतुर्भागसंभवमेव । सत्त्वमित्युच्यत इति शेषः । यतोऽहङ्काराद्यपेक्षयाऽत्र सत्त्वं केवलमधिकं भवेत् । अत इत्यर्थः । तथाचात्र सत्त्वस्य प्राचुर्यात्तथा प्रसिद्धिरित्युक्तं भवति । तत्र त्रिभागो रजस इत्युक्तस्यापि विवरणं यद्रजसो मूलरजसीत्यादिना कर्तुं मूलसत्त्वादिशब्दार्थास्तावदाह ।। श्रीर्मूलसत्त्वमिति । मूलसत्त्वमित्यादिशब्दैः श्रीभूदुर्गा एव वाच्याः । तदभिमन्यमानत्वाद्गुणा अपि त्रीणि मूलान्यंशा यस्याः प्रकृतेः सा त्रिमूलिका तन्नाम्नी महालक्ष्मीरित्यर्थः । ननु किमस्वतन्त्रलक्ष्म्यादिनिरूपणेन मोक्षानुपयोगादित्याशङ्कायामाह ।। गुणेभ्य इति । सत्त्वादिगुणेभ्य इत्यर्थः । गुणमूलाश्रितप्रकृतेः । तथाचास्वतन्त्रलक्ष्म्यादिनिरूपणस्य हरिसर्वोत्तमज्ञानार्थत्वान्न मोक्षानुपयोगस्तन्निरूपणस्येति भावः । इदानीं तत्र त्रिभाग इत्युक्तं विवृणोति ।। यद्रज इति । मूलरजसि तन्नामकभूम्यभिमन्यमाने राशीकृते रजसि विद्यमानं यद्रज एकादशभागात्मकं मूले तमसि तन्नामिकदुर्गाभिमन्यमाने राशीकृते तमसि विद्यमानं यद्रजो मूले तमसि उक्तरीत्या राशीकृते तमसि विद्यमानं यत्तमस्तदात्मकं तदुपादानम् । इदमुक्तं भवति । महत्तत्त्वे हि चत्वारो भागा उक्तास्तेषु यस्तमोभागः स तमोराशिस्थतमोगुणोपादानकः । त्रिषु रजोभागेष्वेकस्तमोराशिस्थरजोगुणोपादनकः । भागद्वयं रजोराशिस्थरजोगुणोपादानकम् । तत्राप्येको भागो यः पूर्वं प्रलये सत्त्वराशौ प्रविष्टः पुनः सृष्टिकाले रजोराशिस्थिततया पूर्वमुक्तः स एवेति ज्ञातव्यमिति । नन्वेवं महत्तत्त्वस्य शुद्धसात्विकत्वप्रसिद्धिः कथमित्याशङ्कायां यत्तदेव केवलं सत्त्वमित्युक्तं तद्विवृणोति ।। दशांशा इति । तत्र महत्तत्त्वे सत्त्वं सत्त्वस्य रजो रजस एकोंऽश इति सत्त्वापेक्षयैकोंऽश इयर्त्थः । तथा च महत्तत्त्वे एकं तमस्तद्दशांशाधिकं सत्त्वमित्युक्तं भवति । तथा चात्मनः परमात्मनः सकाशाद्यद्गुणवैषम्यं जनकीभूतानां गुणानां न्यूनाधिकभावेन वैषम्यं यस्मात्तद्गुणवैषम्यनामकं तत्त्वं जायते स महतो महत्तत्त्वस्य सर्गः स एव प्राकृतेषु सर्गेष्वाद्य इति मूलार्थ इति ध्येयम् ।। १४ ।।

**द्वितीयस्त्वहमस्तत्र द्रव्यज्ञानक्रियादयः ।**
**भूतसर्गस्तृतीयस्तु तन्मात्रद्रव्यशक्तिमान् ।। १५ ।।**

**तात्पर्यम्– अहङ्कारस्तदात्मकः । स रुद्रस्तामसो ज्ञेयो विरिञ्चापेक्षयैव तु । इतरापेक्षया सत्त्वं सत्वाद्यास्तद्रुदस्य च । तत्तमोंऽशात्सात्विकांशो मन आद्याः प्रकीर्तिताः । रजसोंशस्त्विन्द्रियाणि तमसोंऽशश्च खादय'** इत्यादि तत्त्वविवेके । भूतानि द्रव्यशक्तीनि भूतेषु द्रवणं यतः । तथा **तन्मात्रशक्तीनि** शब्दाद्यात्मकता यतः । **क्रियाशक्तीनि** वागाद्यानीन्द्रियाणीतराणि तु । **ज्ञानशक्तीनि मनसा देवाश्च ज्ञानशक्तयः । एतेषां मूलभूतत्वादहङ्कारस्त्रिशक्तिमान् । मानुषापेक्षया**

**देवाः सात्विकाः परिकीर्तिताः । तत्रापि सात्विकाः प्रोक्तास्तात्विका यास्तु देवताः । तत्रापि सात्विको रुद्रस्तत्रापि तु चतुर्मुखः । अविकारौ ब्रह्मरुद्रौ देहभेदादिसम्भवे । विकारवन्त इन्द्राद्यास्तस्माद्वैकारिका मताः । त एवेन्द्रियरूपेण यतस्त्वतिविकारिणः । ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामकाः । अविकारित्वयोग्यत्वं निवृत्तं हीन्द्रियेषु तु । वैकारिकत्वनामापि ततस्तेषां न विद्यते । यथा विप्रकुले मूर्खो मूर्ख इत्यभिधीयते । विद्यायोग्यस्वतः शूद्रो न मूर्खो मूर्ख एव सन् । तामसानि हि भूतानि किञ्चिद्व्यवहितत्वतः । ज्ञानस्य सुष्ठुज्ञत्वेऽपि पूर्णज्ञानो हरिः स्वयमि'ति च ॥ १५ ॥**

**प्रकाशिका–** द्वितीयसर्गमाह ॥ द्वितीयस्त्विति । अत्रोपादानानुक्तेस्तदुक्तिपूर्वकं व्याख्याति ॥ अहङ्कार इति । तदात्मको महत्तत्त्वान्तर्गततमोभागोपादानकः । अहङ्कार इत्यनेनाहमित्येतदुक्तार्थम् । तदभिमानिनं दर्शयति ॥ स रुद्र इति । सोऽहङ्कारो रुद्रो रुद्राभिमन्यमानः । नन्वेवं रुद्रस्य तामसत्वप्रसिद्धकार्यम् । अत्र तु किञ्चित्कार्यं दृश्यते । अतस्तदपेक्षयैव तामसत्वप्रसिद्ध्यर्थः कथमित्यत आह ॥ तामस इति । विरिञ्चे न सर्वथा तमः । तुशब्दस्य सत्त्वमित्यनेन संबन्धः । कुत इत्यत आह ॥ इतरेति । इन्द्राद्यपेक्षयाऽहङ्कारे सत्त्वं तु विशेषेणास्ति यतोऽत इत्यर्थः । तत्कथमित्यत आह ॥ सत्त्वाद्या इति । तद्वन्महत्तत्त्ववत् । अस्य चाहङ्कारस्यापि । तारतम्येन सन्तीति शेषः । भूतसर्गइत्यारभ्य यन्मयं मन इत्यन्तेन तृतीयादितत्त्वेनोक्तानां सर्गाणां न परस्परं कार्यकारणभावः । किं त्वहङ्कारगततमोंऽशजन्यत्वमेवेत्याह ॥ तत्तमोंऽशादिति । तस्याहङ्कारतत्त्वस्य तमोंऽशादित्यर्थः । पुनः सात्विकादिरूपेण त्रिधा विभक्तान्मन आदीनि जातानीति शेषः । एतदेव विविच्याह ॥ सात्विकोंऽश इति । आद्यग्रहणेन देवदेहा गृह्यन्ते । मनआद्या अहङ्कारस्थतमोंऽशीयसात्विकांशोपादानका इत्यर्थः । एवमग्रेऽपि । चार्थात्तुशब्दाद्बुद्धिप्राणयोः समुच्चयः । चशब्दाच्छब्दादितन्मात्राणां ग्रहणम् । यद्यपि मूले मनोऽन्ते उक्तं तथाऽपि भूतादिसर्गाणामप्युत्तरोत्तरोत्तमत्वमिति ज्ञापनायात्र सात्विकस्य मनआदेः प्रथममुक्तिः । भूतसर्ग इत्यारभ्य मन इत्यन्तस्य तात्पर्यं प्रमाणेनैवाह ॥ भूतानीति । मूले तन्मात्रद्रव्यशक्तिमानिति भूतसर्गस्य द्रव्यशक्तिमत्वं तन्मात्रशक्तिमत्वं च यदुक्तं तदुपपादयति ॥ भूतानीति । भूतानि द्रव्यशक्तीनि द्रव्यशक्तिमन्तीत्युच्यन्ते । कुतः । यतो भूतेषु पृथिव्यादिषु विषयेषु द्रवणं धावनम् । लोकानां भवतीति शेषः । तथा च लोककर्तृकद्रवणविषयत्वं यत इत्यर्थः । यथोक्तम् । द्रव्यं तु द्रवणप्राप्यं द्वयोर्विवदमानयोः । पूर्वं वेगाभिसंबन्धादाकाशस्तु प्रदेशत इति । तथाशब्दः समुच्चये । भूतानि तन्मात्रशक्तीनीत्युच्यन्ते यतस्तेषां शब्दाद्यात्मकता मीयन्त इति मात्राः शब्दाद्यास्तदात्मकता तत्परिणामरूपता यत इत्यर्थः । ज्ञानक्रियात्मक इतीन्द्रियाणां ज्ञानक्रियाभेद उच्यत इति भाति । अतस्तद्विवक्षितमर्थं दर्शयति ॥

क्रियाशक्तीनिति । वागाद्यानि कर्मेन्द्रियाणि क्रियाजननशक्तीनि । अतः क्रियात्मकानीत्युच्यन्ते । इतराणि चक्षुरादीन्द्रियाणि । तु शब्दो हेत्वर्थः । ज्ञानजननशक्तीनीत्युच्यन्त इत्यर्थः । वैकारिको देवसर्ग इत्यर्धस्य विवक्षितमर्थं दर्शयति ॥ मनसेति । यन्मयं मन इत्यस्य तात्पर्यम् ॥ मनसा सहेति । देवसर्ग इत्यस्यार्थः ॥ देवा इति । इन्द्रियाभिमानिनो देवा इत्यर्थः । ज्ञानशक्तय इत्यनेन ज्ञानक्रियात्मकइत्यस्यात्राप्यनुवृत्तिमभिप्रेत्य तत्तात्पर्यमुक्तमित्यवगन्तव्यम् ॥ ज्ञानशक्तयश्चेति । चशब्देन क्रियाशक्तय इत्यपि ग्राह्यम् । इदानीं द्रव्यज्ञानक्रियादय इति यत्पूर्वमहङ्कारस्वरूपमुक्तं तत्तात्पर्यमाह ॥ एतेषामिति । भूतेन्द्रियदेवानामित्यर्थः । त्रयाणां भूतेन्द्रियदेवानां याः शक्तयस्तद्वानित्यर्थः । सात्त्विकोंऽश इति देवानां यत्सात्विकत्वमुक्तं तदस्मदाद्यपेक्षयाऽधिकं तारतम्योपेतं चेत्याह ॥ मानुषापेक्षयेत्यादिना । देवा अतात्विकाद्याः सात्विकाः । आधिक्येनेति शेषः । तत्रापि देवेष्वपि । तु शब्दोऽवधारणे । ता एवेति संबन्धः । तत्रापि चेति चशब्दः सात्विक इत्यनुकर्षणार्थः । ननु ब्रह्मरुद्रगरुडान्विहायेन्द्रियाभिमानिनामिन्द्रादीनामेव वैकारिकशब्दवाच्यत्वे किं निमित्तमित्येपक्षायामाह ॥ अविकाराविति । ब्रह्मरुद्रपदाभ्यां गरुडोऽप्युपलक्ष्यः । देहभेदेन देहविशेषेण । आदिपदादभिमानिरूपेणापि संभव इत्यर्थः । अस्य पूर्वेणोत्तरेण च संबन्धः । वैकारिका वैकारिकशब्दवाच्याः । नन्वेतेषामेव पुनस्तैजसाहङ्कारकार्येन्द्रियाभिमानितया पुनरुत्पत्तौ विकारातिशयप्राप्त्या वैकारिकानामेव स्यान्न तैजसानामेवेत्यत आह ॥ त एवेति । ये देहविशेष-संबन्धेन पूर्वं वैकारिकाहङ्कारादुत्पन्ना वैकारिकनामान इन्द्राद्याः । इन्द्रियरूपेणेन्द्रियाभिमानि-रूपेण। यतोऽतिविकारिणस्तस्मात् । न वैकारिकनामान इति शेषः । तुशब्दोऽवधारणे । तैजसनामका एवेति संबन्ध्यते । तत्र निमित्तदर्शनाय यतो ज्ञानमात्रगुणोद्रिक्ता इत्युक्तम् । इन्द्रियैः सह तदभिमानिरूपैर्जननेऽपि न पूर्वज्ञानविलोपस्तेषामतस्ते तैजसनामका एवेत्यर्थः । नन्वतिविका-रित्वे सुतरां वैकारिकनाम स्यादित्यत आह ॥ अविकारित्वेति । स्यादेवं यदि विकारवत्वं विकार शब्दवाच्यत्वे निमित्तं स्यान्न चैवम् । किं त्वविकारित्वयोग्यतानिवृत्तिजनकोत्पत्तिमत्वम् । तच्च पूर्वमविकारिणां देहभेदेन जातानामेव देवानामस्ति । अनयोत्पत्त्या तेषु अविकारित्वयोग्यताया निवृत्तत्वात् । न पुनरिन्द्रियाभिमानितयोत्पन्नानाम् । तेषामविकारित्वयोग्यतायाः पूर्वोत्पत्त्यैव निवृत्तत्वेनानयोत्पत्त्या निवृत्त्यभावात् । अतस्त एव वैकारिकनामान इत्यर्थः । अत्र दृष्टान्तमाह ॥ यथेति । विप्रकुलजात इति शेषः । मूर्खो ज्ञानाभाववान् । विद्यायोग्यत्वतो विद्यायोग्यता-निवृत्तिजनकोत्पत्तिमत्वतो मूर्खः सन्नपि शूद्रो मूर्खो नैवोच्यत इत्यर्थः । तथा च यथा न ज्ञानाभावमात्रं मूर्खशब्दप्रवृत्तौ निमित्तं किन्तु विद्यायोग्यतानिवृत्तिजनकोत्पत्तिमत्वविशिष्टं तच्च न शूद्रे इति । अतो न तत्र मूर्खशब्दप्रवृत्तिस्तथैवेति भावः । ननु यदि ज्ञानमात्रगुणो-द्रेकेणेन्द्रियाभिमानितयोत्पन्नानां देवानां तैजसनामवत्वं तर्हि भूताभिमानितयोत्पन्नानामपि तेषां

तैजसनामवत्वं स्यात्तेषामपि ज्ञानोद्रेकस्य सत्त्वादित्यत आह ॥ तामसानीति । भूतानि भूताभिमानि देवास्तामसानि तामसानीत्येवोच्यन्ते । न तैजसानीति । हि शब्दः प्रमाणप्रसिद्ध्यर्थः । तेषां सुष्टुज्ञत्वेऽपि ज्ञानस्य किञ्चिद्व्यवहितत्त्वतः पूर्ववदुद्रेकाभावादित्यर्थः । ननु देवांशानामेषां कथं ज्ञानोद्रेकाभाव इत्यत आह ॥ पूर्णज्ञान इति । हरिः स्वयं स्वयमेक एव सर्वत्र पूर्णज्ञानो नान्य इत्यर्थः ॥ ततश्चायं श्लोकद्वयस्यार्थः ॥ अहमोऽहङ्कारस्य । सर्ग इत्यनुवर्तते । तुशब्दः स रुद्रस्तामसो ज्ञेयो विरिञ्चापेक्षयैवेत्यादिनोक्तविशेषसूचकः । तत्स्वरूपमाह ॥ तत्रेति । तत्राहङ्कारे द्रव्याणि भूतानि । ज्ञानक्रियाशब्दाभ्यां तदर्थानीन्द्रियाणि ग्राह्याणि । आदिपदेन देवदेहा गृह्यन्ते । द्रव्यादिशब्दास्तज्जनकशक्तिपराः । सन्तीति शेषः । तथा चाहङ्कारो भूतेन्द्रियदेवदेहजनक-शक्तिमानित्युक्तं भवति ॥ तृतीयस्त्विति । तुशब्दस्तामसत्वरूपविशेषसूचकः । भूतसर्गस्य स्वरूपमाह ॥ तन्मात्रेति । तन्मात्रशब्देन शब्दादयो ग्राह्याः । तच्छक्तिमत्वं तत्परिणतत्वमेव । द्रव्यशक्तिमत्वं च द्रवणप्राप्यत्वम् ॥ १५ ॥

**चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ।**
**वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥**

**प्रकाशिका–** ऐन्द्रियसर्गस्य स्वरूपमाह ॥ यस्त्विति । अत्र तुशब्दो राजसत्वादिविशेषसूचकः । ज्ञानक्रियात्मकस्तदुभयजनकशक्तिमानित्यर्थः । वैकारिको वैकारिकाहङ्कारकार्योऽत एव वैकारि-कनामा देवसर्ग इन्द्रियाभिमानिदेवतादेहसर्ग इत्यर्थः । यन्मयं वैकारिकाहङ्कारजन्यम् ॥ १६ ॥

**षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः ।**
**षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥ १७ ॥**

**तात्पर्यम्–** अबुद्धिपूर्वमिव तु ब्रह्मणो हरिबुद्धितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः । तामसानां तु भूतानां सहस्रं सत्वभागिनाम् । शतांशरजसामेकतमसां सर्ववेदिनाम् । केवल-स्तामसो योंऽशः साऽविद्या पञ्चपर्विका । जाताऽतिकृष्णा तद्देहात् दैत्यरक्षःपिशाचकाः । यद्रजो भौतिकं तेन मानुषाणां सदा जनिः । तमोगूढेन रजसा त्वितरस्थास्नुचारिणाम् ।

भौतिकेन तु सत्वेन गूढं ब्रह्मण आण्डजम् । रूपं तत्रापि तु तमः शतांशेन प्रकीर्तितम् । तज्जो रुद्रस्ततस्त्वेवमिन्द्रादीनां पुनर्जनिः । गूहितं भूतरजसा तत्सत्वं मानुषा यदा । देवा एवं गुणास्त्वेते सर्वं व्याप्य व्यवस्थिताः । गुणातीतं च यद्रूपं ब्रह्मादीनां सुखात्मकम् । चिद्रूपं तच्च सत्वस्यैवोत्कर्षो यत्र विद्यते । तच्चोत्कृष्टं तमो यत्र हीनं तत्र स्वभावतः । उपगूहने तु नैवास्ति

**विशेषो नित्यचिन्मये । प्रकृतेर्गुणरूपाया मूलिकायाश्च न क्वचित् । विशेषः परमे तत्त्वे वासुदेवे कुतः पुनरि'ति च ॥**

**अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः । तदुपादानकः सर्गः प्राकृतः परिपठ्यते । अण्डं तु विकृतं ज्ञेयं तज्जो वैकृत उच्यते ॥ पञ्चपर्वा त्वविद्या तु भूतेभ्यो हरिणा पुरा । उद्धृत्य ब्रह्मणि क्षिप्ता सा पुनस्तेन निःसृता ॥ तत्स्रष्टृत्वज्ञापनाय तस्मात्सा प्राकृता मते'ति च ॥ १७ ॥**

**प्रकाशिका–** षष्ठस्त्वित्यत्र तुशब्दो भूतानुस्यूततमोभागजन्यत्वरूपविशेषं सूचयति । तमसोऽविद्यायाः । द्वितीयस्तुशब्दोऽवधारणे । प्रभोर्ब्रह्मणोऽबुद्धिकृत एवेति संबध्यते । इमे प्राकृताः सर्गाः । मया ते कथिता इति शेषः । मे मत्तः । अत्र तमस इत्यस्य तमोगुणस्येति । अबुद्धिकृत इत्यस्य च सर्वथा ज्ञानपूर्वकत्वाभाव इति चान्यथाप्रतीतिवारणाय प्रमाणेनैव तात्पर्यमाह ॥ अबुद्धिपूर्वमिवेति । यद्बुद्धिपूर्वकं न भवति श्वासादिकं तद्वदित्यर्थः । तुशब्दार्थकथनम् ॥ इवेति । तुशब्दोऽवधारणे । एवमेव व्याख्यानमित्यर्थः । कुत इत्यत आह ॥ हरिबुद्धित इति । हरिबुद्धित्वत इत्यर्थः । तदा ब्रह्मणो हरिज्ञानवत्वेन सर्वथा ज्ञानपूर्वकत्वाभावस्य बाधितत्वादिति भावः । सर्वदा ब्रह्मणो हरिबुद्धित्वेऽपि तदा पापभीत्या विशेषस्तद्बुद्धित्वमिति ध्येयम् । अनेन अः परब्रह्म तस्मिन्या बुद्धिस्तया कृत इति मूलस्य व्याख्यानान्तरं सूचितमिति ध्येयम् । तमः शब्दार्थकथनम् ॥ अविद्येति । साऽपि नाभावरूपेत्याह ॥ पञ्चपर्वेति । तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति पञ्चपर्वणि वृत्तयो यस्याः सैषा प्रमाणप्रसिद्धा । प्रभोरित्यस्य तात्पर्यम् ॥ महात्मन इति । सर्वज्ञस्येत्यर्थः । एवं मूले तमस इत्यस्याविद्यापरत्वं षष्ठ्यन्तत्त्वं चाभिप्रेत्य व्याख्यातमिदानीं तस्याविद्योपादानतमोगुणपरत्वं पञ्चम्यन्तत्वं चाभिप्रेत्याविद्योपादानभूतं तमोगुणं वक्तुमाह ॥ तामसानां त्विति । तुशब्दोऽहङ्कारगततमोंऽशजन्यत्वेन तामसत्वमिति विशेषसूचनाय । सहस्रं तमोभागापेक्षया सहस्रसङ्ख्याका ये सत्त्वभागास्तद्वतामित्यर्थः । अलुक्समासोऽयम् । तमोभागापेक्षया शतांशरजसामित्यर्थः । एकतमसामेकांशतमसामित्यर्थः । ततश्च भूतेष्वेकं तमस्तच्छतांशाधिकं रजस्तमःसहस्रांशाधिकं सत्त्वमित्युक्तं भवति । अत एव तदभिमानिनः सर्वज्ञा इत्याह ॥ सर्ववेदिनामिति । पूर्वमपि सुष्टुज्ञत्वेऽपीत्युक्तम् । इदानीमविद्योपादानभूतं तमोगुणं दर्शयति ॥ केवल इति । भूतगतसत्त्वरजोभ्यामविमिश्र इत्यर्थः । तद्देहात्तदभिमानिदेहात् । एवमविद्याया भौतिकतमोगुणजन्यत्वकथनप्रसङ्गात् । अस्मिन्नध्याये या देवदानवमानवादिचराचरसृष्टिरुच्यते सा सर्वाऽपि भौतिकसत्त्वादिगुणजन्यैवेति दर्शयितुमादौ तावन्मानुषाणां भौतिककेवलरजोजन्यत्वमाह ॥ यद्रज इति । भौतिकं भूतानुस्यूतं सदा नियमेन तमोगूढेन तमसा गूहितवीर्येण । रजसा भौतिकेन । तुशब्द एवार्थः । तमोगूढेनेत्यनेन संबध्यते । मानुषेतरे ये स्थास्नुचारिणः स्थावरजङ्गमाश्च तेषामित्यर्थः ।

सत्त्वेन तु सत्त्वेनैव गूढं गूहितवीर्यं यद्रजोऽस्य भौतिकम् । तेनेति वर्तते । आण्डजमण्डान्तर्जायमानं रूपं शरीरम् । जायत इति शेषः । तत्रापि ब्रह्मदेहेऽपि रजोगुणापेक्षया शतांशेन तमः । तस्य स्वकार्याक्षमत्वद्योतनाय तुशब्दः । ततस्तु ब्रह्मदेहान्तर्गतसत्त्वरूपगूहिततमोभागादेव । एवं रुद्रदेहवत्पुनर्जनिर्ब्रह्माण्डान्तरुत्पत्तिरित्यर्थः । देवा यदा मानुषा भवन्ति तदा कथमित्यत आह ॥ गूहितमिति । देवा यदा मानुषा भवन्ति तदा तत्सत्त्वं भौतिकं सत्त्वं भौतिकेन रजसा गूहितमाच्छादितवीर्यम् । भवतीति शेषः । उपसंहरति ॥ एवमिति । तुशब्दोऽवधारणार्थः । व्याप्यैवेति संबध्यते । नन्वेवं ब्रह्मादीनां गुणत्रयबद्धत्वाविशेषात्तेषां स्वरूपेषु तारतम्यं कथं ज्ञेयमित्यत आह ॥ गुणातीतं चेति । द्वितीयचशब्दस्य चिद्रूपं चेत्यन्वयः । स्वभावतः सत्त्वस्य सत्त्वगुणकार्यस्य ज्ञानादेः । उत्कृष्टमिति ज्ञेयमिति शेषः । स्वभावतस्तमस्तत्कार्यं द्वेषादिकं यत्रोत्कृष्टं तत्र तच्चैतन्यं हीनमिति ज्ञेयम् । एवं यत्र रजोगुणकार्यमधिकं तन्मध्यममिति ज्ञेयमित्यपि ग्राह्यम् । नन्वेवं देवा एव यदा मानुषा भवन्ति तदा सत्त्वस्य रजसा गूहितत्वात्तत्स्वरूपे चिन्मये मूलरूप इवोत्कर्षो न स्यादित्यत आह ॥ उपगूहन इति । सत्वादिगुणानां मध्ये एकस्यान्येनोपगूहने आच्छादने कृतेऽपि । किं त्वनित्यदेह एवेति तु शब्दार्थः । उपगूहनसमयेऽपि तत्स्वरूपं यथास्थितमेव नित्यत्वात् । किन्तु तदा ज्ञापकाभावात्तदुत्कर्षो न ज्ञातुं शक्यत इति भावः । नन्वेवं सत्त्वादिसंबन्धस्यैवोत्कर्षादिज्ञापकत्वे सत्त्वाद्यभिमानिनीनां श्रीभूदुर्गाणां मूलप्रकृत्याभिमानिन्या लक्ष्म्याश्च सत्त्वादिसंबन्धेन परस्परनीचोच्चतादिरूपविशेषः स्यादित्यत आह ॥ प्रकृतेरिति । महा-लक्ष्म्या इत्यर्थः । गुणरूपाया गुणाभिमानिन्या मूलिकाया मूलप्रकृत्यभिमानिन्याः क्वचित्कुत्राप्यवतार इत्यर्थः । गुणरूपाया मूलिकाया इति गुणात्मकदेहाभावोपपादनायोक्तम् । तथा च गुणसंबन्धमात्रं न नीचतादिहेतुः किन्तु गुणात्मकदेहवत्वम् । तच्च न प्रकृतौ तद्रूपेषु चेति भावः । अनयैव रीत्या गुणत्रयोपादानकर्तरि विष्ण्वादिरूपे हरावपि व्यभिचारपरिहारायाह ॥ परम इति । परमे तत्त्व इति गुणात्मकदेहाभावोपपादनाय । ननु षडिमे प्राकृताः सर्गा इत्यत्रोक्तः प्राकृतवैकृतविभागोऽनुपपन्नः । वैकृतानामपि प्रकृतिसंबन्धित्वेन प्राकृतत्वात् । प्राकृतानामपि विकारित्वेन वैकृतत्वादित्याशङ्कायाम-सङ्कीर्णं प्राकृतवैकृतशब्दार्थं प्रमाणेनैव दर्शयति ॥ अव्यक्ताद्या इति । तस्मिन् जात इति तज्जः । तथा च ब्रह्माण्डाद्ब्राह्मसर्गः प्राकृतस्तदन्तर्जायमानः सर्गो वैकृतः । अण्डसर्गोऽपि प्राकृत एवोक्तलक्षण-त्वादित्यवधेयम् । ननु पञ्चपर्वाविद्यासर्गः कथं प्राकृतत्वेनोक्तः । तस्य ब्रह्माण्डान्तर्ब्रह्मणा सृष्टत्वेन वैकृतत्वस्यैवौचित्यादित्याशङ्कां प्रमाणशेषेणापाकरोति ॥ पञ्चपर्वेति । अवधारणार्थस्य तु शब्दद्वयस्य भूतेभ्य एवेति हरिणैवेति च संबन्धः । उद्धृत्योत्पाद्य । तत्सृष्टत्वज्ञापनाय ब्रह्मणि ब्रह्माण्डान्तर्गते ब्रह्मदेहे क्षिप्ता स्थापिता । तस्मादण्डाद्बहिर्भूतेभ्यः पूर्वमुत्पन्नत्वादित्यर्थः । प्राकृतेत्यत्र ङीबभावश्छान्दसः ॥ १७ ॥

**रजोभाजो भगवतो लीलेयं हरिमेधसः ।**
**सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥ १८ ॥**

**तात्पर्यम्– एते गुणा हरेः सम्यक्स्वातन्त्र्यविषयाः सदा । स्वतन्त्राः प्रकृतेश्चापि ब्रह्मणोऽन्येषु तु क्रमात् । देवेष्वेव तदन्येषु परतन्त्रा हि ते मता' इति च ॥ १८ ॥**

**प्रकाशिका–** ननु सर्वकामपूर्णस्य हरे रजआदिभिः सृष्ट्यादिकरणेन किं प्रयोजनमित्याशङ्कायामाह ॥ रजोभाज इति । रजःपदमितरयोरुपलक्षकम् । इयं सृष्ट्यादिरूपा । हरिवत्सूर्यवत् । तमःसंबन्धशून्या मेधा यस्य स तथा तस्याविद्यास्रष्टृत्वेऽपि न तत्संबन्धस्तस्येति सूचनायेदम् । तथा च स्वभावोऽयं हरेरतो न प्रयोजनाय सृष्टिरिति भावः । अत्र रजआदिगुणभाक्त्वं तद्बद्धत्वमिति प्रतितिवारणाय विवक्षितं गुणभाक्त्वं प्रमाणेनैवाह ॥ एते गुणा इति । सम्यक् परममुख्यतः स्वातन्त्र्यं यथेष्टविनियोगः । तथाच हरेर्गुणभाक्त्वं तन्नियोजकत्वरूपमेवात्र विवक्षितमिति भावः । नन्वेवं ग्रन्थान्तरविरोधः । रमाया ब्रह्मणो देवानां च स्वातन्त्र्यविषयतया गुणानां तत्र तत्रोक्तत्वादित्यत आह ॥ स्वतन्त्रा इति । स्वतन्त्राः स्वातन्त्र्यविषयाः । ब्रह्मणोऽपीत्यन्वयः । अन्येषु देवेष्विति सप्तम्यौ षष्ठ्यर्थे । तुशब्दोऽप्यर्थः । अन्येषां देवानामप्यमुख्यत्वक्रमादेव स्वतन्त्रता मता । कुतः । हि यस्मात्तदन्येषु भगवदन्येषु रमादिषु ते गुणाः परतन्त्रा हर्यधीना मताः प्रमितास्तस्मादित्यर्थः । तथा चामुख्यास्वातन्त्र्यविषयत्वमेव तत्राभिप्रेतं न मुख्यमतो न विरोध इति भावः । अमुख्यतार्थमपि तारतम्यसूचनाय क्रमादित्युक्तम् । यथा तस्थुषां स्थावराणां मुख्यः सर्गो मुख्यः स्रोतः संज्ञः सर्गः स सप्तमः । स च षड्विधः । वक्ष्यमाणरीत्या स्थावराणां मुख्यस्रोतस्त्वात्तत्संबन्धिसर्गोऽपि मुख्यः स्रोतसंज्ञ इति ज्ञातव्यम् ॥ १८ ॥

**वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः ।**
**उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशोषिणः ॥ १९ ॥**

**तात्पर्यम्– स्थास्नुभिर्नियमान्मुख्या स्थितेर्गतिरवाप्यते । प्रायः परोपकर्तृत्वात्ते मुख्यस्रोतसः स्मृताः । नाधो नोर्ध्वं तिरश्चां तु पुनस्तत्रैव यज्जनि ॥ यत्रोपयोगं च सतामुपकारं विनापि च । तिर्यक्स्रोतस इत्येव प्रोच्यन्ते ज्ञानिभिस्ततः ॥ प्रायोधोगमनं यस्मात्प्रयत्नेन विना भवेत् । अर्वाक्स्रोतस इत्येव मानुषाः परिकीर्तिताः । नियमादूर्ध्वगन्तारो देवा मोक्षैकभागिनः । ऊर्ध्वस्रोतस इत्येव तस्मात्ते परिकीर्तिता' इति ब्राह्मे ।**

**तिरश्चां स्थावराणां च बुद्धिपूर्वप्रवर्तिनाम् । असुराणां रक्षसां वापि पिशाचानां तथैव च । अर्वाक्स्रोतस्त्वमुद्दिष्टं नियमादसुरादिनामि'ति च । मुख्यस्रोतस इत्यस्वयं उत्स्रोतस इति ।**

**'ऊर्ध्व इत्येव यैस्तूच्चतम एवाभिधीयते । ऊर्ध्वस्रोतस एतस्माद्देवा एव न तत्परे । उच्छब्द उच्चमात्रेऽपि तस्मात्स्थास्नुषु भण्यत इति' च ।**

**तिरश्चीनाः स्थावराश्च अन्तःस्पर्श इतीरिताः । यत्प्रत्यक्षानुमानाभ्यां हृद्गज्ञानं न शास्त्रत' इति पाद्मे । यदप्रयत्नाद्धृदयङ्गमं तदेव जानन्ति नो शास्त्रयुक्तिभ्यामित्यर्थः ॥ १९ ॥**

**प्रकाशिका–** षड्विधत्वमेवाह ॥ वनस्पतीति । ये पुष्पं विना फलन्ति पनसादयस्ते वनस्पतयः । ओषधयः फलपाकान्ता व्रीह्यादयः । लताः परारोहणापेक्षाः । त्वक्सारा वेण्वादयः । वीरुधः काण्डरुहाणि गुल्मानि । ये पुष्पैः फलन्ति चूतादयस्ते द्रुमाः । उदुत्कृष्टं स्रोतो गम्यं येषां त उत्स्रोतसो मुख्यस्थानगन्तारः । तमःप्राया अज्ञानप्रचुराः । कल्पवृक्षादिव्यावृत्त्यर्थं प्रायःशब्दः । विशोषिणो जलाभावे शोषवन्तः । अत्र स्थावराणामुत्स्रोतस्त्वमुक्तम् । अर्वाक्स्रोतस्तु नवम इति मनुष्याणां अर्वाक्स्रोतस्त्वं वक्ष्यति । इदमुपलक्षणम् । वक्ष्यमाणानां तिरश्चां तिर्यक्स्रोतस्त्वम् । अर्वाक्स्रोतस्त्वस्य वक्ष्यमाणत्वात् देवानामूर्ध्वस्रोतस्त्वं च ग्राह्यमित्याशयेन स्थावरादिजीवानां मुख्यस्रोतस्त्वादिविभागं तेषु तच्छब्दनिर्वचनं च प्रमाणेनैवाह ॥ स्थास्नुभिरित्यादिना । परोपकर्तृत्वादिति पञ्चमी तृतीयार्थे । देवानामूर्ध्वस्रोतस्त्वं च । ततश्च यतः स्थास्नुभिः प्रायः परोपकर्तृत्वेन स्थितेर्नियमान्मुख्या गतिरेवाप्यते ततस्ते मुख्यस्रोतसस्तच्छब्दवाच्या इत्यर्थः । मुख्यं स्रोतोगम्यं येषां ते तथेति निर्वचनमनेन सूचयति । परोपकारशून्यस्थावराणां नात्रान्तर्भाव इति दर्शयितुं प्राय इत्युक्तम् । तिरश्चां गमनमिति शेषः । तुशब्दो बुद्धिपूर्वप्रवृत्तिमत्वाभावरूपविशेष-सूचकः । तथात्वे तत्रैव भूम्यामेव यद्यस्मात् । ननु यज्ञेषु पशुत्वेनोपयुक्तानां वहनादिना सज्जनोपकर्तॄणां चाश्वादीनां श्रुत्यादिषूर्ध्वश्रवणात्कथं नोर्ध्वगमनमित्युक्तमित्यत आह ॥ यज्ञोपयोगमिति । उपकारमपीत्यन्वयः । प्रयत्नेन विना हर्याराधनरूपप्रयत्नाभाव इत्यर्थः । हर्याराधन-शून्यानामपि मनुष्याणमुत्कटपापेनेहैव जन्मदर्शनात्प्राय इत्युक्तम् । नियमादिति श्लोके यस्यादित्यस्यानुवृत्तिः । मोक्षैकभागिन इति हेतुगर्भविशेषणम् । नन्वेमपि बुद्धिपूर्वं पापे प्रवर्तमानानां तिरश्चां तथाविधानां स्थावराणामसुरादीनां च न सङ्ग्रह इत्याशङ्कायां तेषामप्युक्तान्तर्भावं प्रमाणेनैव दर्शयति ॥ तिरश्चामिति । बुद्धिपूर्वप्रवृत्तीनाम् । पाप इति शेषः । अर्वाक् स्रोतस्त्वमेवो-दिष्टमित्यन्वयः । नन्वेवमसुरादीनां मनुष्यादिभ्यो विशेष इत्यत आह ॥ नियमादिति । असुरादी-नाम् । तथाच मानुषादीनां बुद्धिपूर्वं पापे प्रवृत्तिनिबन्धनम् । अर्वाक्स्रोतस्त्वं कादाचित्कम् । असुरादीनां तु स्वभावनिबन्धनं सार्वकालिकमिति विशेषोऽनेन सूचितमिति ध्येयम् । ननु स्थावराणां कथमुत्स्रोतस इति संज्ञा मूले उक्ता । प्रमाणे तेषां मुख्यस्रोतस इति संज्ञाया उक्तत्वात् । मुख्यसर्ग इति मूलेऽपि तेषां मुख्यस्रोतस्त्वस्य सूचितत्वादित्यत आह ॥ मुख्यस्रोतस इत्यस्येति । तथा च

प्रमाणे यन्मुख्यस्रोतस इत्युक्तं यच्च पूर्वं मुख्यस्रोतस इति सूचितं तस्यैवोत्स्रोतस इत्यनेनार्थः कथ्यते। न पुनरिदमर्थान्तरवाचिनामान्तरमित्यर्थः । उत्कृष्टार्थकोच्छब्दस्य मुख्यशब्दस्य च पर्यायत्वादिति भावः । नन्वेवमुत्स्रोतेभ्यः स्थावरेभ्यो देवानामूर्ध्वस्रोतसां विशेषा न स्यात् । उदूर्ध्वशब्दयोः पर्यायत्वादित्याशङ्कां प्रमाणेन परिहरति ॥ ऊर्ध्व इत्येवेति । य एवोच्चतमः स एवोर्ध्व इत्यभिधीयत इत्यन्वयः । तथाच यस्मादूर्ध्वशब्द उच्चतमवस्तुवाचकस्तत्समभिव्याहृतउत्स्रोतःशब्द उच्चतमगम्यवद्वाचकः । देवाश्च तादृशाः । एतस्माद्देवा एवोर्ध्वस्रोतसस्तच्छब्दवाच्या इत्यर्थः । उच्चमात्रेऽपि सर्वस्मिन्नप्युच्चे वस्तुनि । वर्तत इति शेषः । तथाच तत्समभिव्याहृत उत्स्रोतशब्दः स्थास्नुषु व्यवह्रीयत इत्यर्थः । अन्तस्पर्शा इत्यस्य तात्पर्यं प्रमाणेनैव दर्शयति ॥ तिरश्चीना इति । तिरश्चीना इत्येनेनेदं तिरश्चामपि साधारणमिति सूचयति । अत एव मूले तिरश्चां हृद्यवेदिन इत्यन्तस्पर्शपदसमानार्थं विशेषणमुक्तम् । अनुमानग्रहणं काचित्काभिप्रायेण । हृद्गतस्य ज्ञानमिति विग्रहः । न शास्त्रगा इति पाठे न शास्त्रेणावगच्छन्तीत्यर्थः । यतः प्रत्यक्षानुमानाभ्यामित्यत्रानुमान पदेन मीमांसारूपानुमानस्यापि ग्रहणे बाधः । हृद्गतस्य ज्ञानमित्युक्त्या च न बाह्यविषयकं ज्ञानमिति प्रतीयतेऽतः प्रमाणेनोत्तरार्धतात्पर्यं स्वयमाह ॥ यदप्रयत्नादित्यादिना । यद्धृदयंगमं मनोहरम् । इष्टानिष्टप्राप्तिनिवृत्तितत्साधनरूपं तदेवाप्रयत्नाप्रत्यक्षेण तत्तुल्येन झडिति व्याप्त्यादिज्ञानसापेक्षेण लिङ्गज्ञानेन वा जानन्ति न शास्त्रमीमांसाभ्यामित्यर्थः । तथोदाहृतप्रमाणेऽनुमापदं झडिति जायमानानुमापरम् । शास्त्रपदं मीमांसारूपयुक्त्युपलक्षकम् । हृद्गतशब्दश्च हृदयङ्गमवाचीत्युक्तं भवति। ततश्चान्तःस्थं हृदयङ्गमं स्पृशन्ति झडिति जानन्तीत्यन्तस्पर्शा इति मूलं व्याख्येयमिति भावः ॥ १९ ॥

**तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ।**
**अविदो भूरितमसो घ्राणज्ञा हृद्विवेदिनः ॥ २० ॥**

**प्रकाशिका–** मूले तिरश्चामित्यस्य तिर्यक्स्रोतसामित्यर्थः । तेषां लक्षणमाह ॥ अविद इति । अविदः शास्त्रयुक्तिजनितज्ञानशून्याः । तत्र हेतुर्भूरितमस इति । तमोगुणप्रचुरा यत इत्यर्थः । घ्राणेनैव स्वेष्टमर्थं जानन्तीति घ्राणज्ञाः । हृद्यस्य हृदयङ्गमस्य वेदो वेदनं येषामस्तीति हृद्यवेदिनः । अन्तस्पर्शा इति यावत् । अत्र घ्राणज्ञा इत्येतदेव लक्षणमतिव्याप्त्याद्यभावात् । इतराणि स्वरूप-कथनपराणीति ज्ञातव्यम् । विंशतिपर्यायो विंशच्छब्दः ॥ २० ॥

**गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ।**
**द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ २१ ॥**

खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ।
एते चैकशफाः क्षत्तः श्रुणु पञ्चनखान् पशून् ॥ २२ ॥

श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्यकौ ।
सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥

कङ्कगृध्रबकश्येना भासवल्लूरबर्हिणः ।
हंससारसचक्राह्वकाकोलूकादयः स्वगाः ॥ २४ ॥

तात्पर्यम्– अष्टाविंशद्विशेषेण यज्ञेषूपकृतं यतः । तिरश्चां तावदेतस्माद्गण्यन्ते शास्त्रवेदिभिः ।

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः । अव्युष्ट्रौ च खराश्वौ च तथैवाश्वतरोऽपरः । गौरश्च शरभश्चैव चमरी श्वसृगालकौ । वृको व्याघ्रश्च मार्जारो हरिश्च शशशल्यकौ । कपिर्गजश्च गोधाद्या जलजाः पक्षिणस्तथे'ति ब्रह्माण्डे । कूर्मो जलजत्वेनाष्टाविंशत्स्वन्तर्भूतोऽपि पञ्चनखत्वप्रदर्शनार्थं पृथगुक्तः । 'तत्तदाकारसंयुक्तान्सृज्यान्स्रष्टारमेव च । यः सदा संस्मरेद्योगी न स भूतोऽभिजायत' इति स्कान्दवचनात्प्रसिद्धानामपि द्विशफादीनां स्मरणविधानार्थमुक्तिः । 'उच्यते सुप्रसिद्धं च स्मरणार्थं च कुत्रचित् । अप्रसिद्धज्ञापनार्थं द्विधा शास्त्रवचः स्मृतमि'ति षाड्गुण्ये । 'वल्लूरो नृत्तपक्षी च सललूकश्च कथ्यत' इत्यभिधाने ।

'अष्टाविंशत्प्रधानास्तु तिरश्चां यास्तु जातयः । यो यस्य सदृशस्त्वन्यः स तत्रान्तर्गतो भवेत् । जलजान्तर्गताः सर्पाः कीटाद्या याश्च जातयः । तेषां जलप्रधानत्वाच्छरीरस्य तु सर्वश' इति सत्यसंहितायाम् ॥ २१ ॥

प्रकाशिका– अष्टाविंशतिभेदानेवाह ॥ गौरज इत्यादिना । अत्र कृष्णरुरुगौरा मृगविशेषाः । ननु तिरश्चां बहुविधत्वात्कथमष्टाविंशतिविधत्वोक्ति- रित्यतस्तदुक्तेः प्रयोजनं प्रमाणेनैवाह ॥ अष्टाविंश-दिति । उपकृतमुपयुक्तम् । तावदष्टाविंशतिसंख्योपेतं भण्यते गण्यत इत्यर्थः । ननु गौरज इत्यादिनाऽष्टाविंशत्यधिकानामपि ग्रहणात्कथमष्टाविंशतिविधत्वमित्यतोऽत्र विवक्षितमभिप्रायं प्रमा-णेनैवाह ॥ गौरज इति । अत्र जलजाः पक्षिण इत्यनेन विधाद्वयमुक्तमिति ज्ञेयम् । तथाच गवादि-गोधान्तैः कूर्मं विना षड्विंशतिविधोक्ता जलजत्वेनैकीकृतैर्मकरादिभिः सप्तविंशतित्वं पक्षित्वे-नैकीकृतैः कङ्कादिभिरष्टाविंशतित्वम् । अतो मूले नाधिक्यमिति भावः । ननु मकरादय इत्यनेनैव जलजत्वेन कूर्मस्यापि सङ्ग्रहसंभवात्स किमर्थं पृथगुक्त इत्यत आह ॥ कूर्म इति । पृथगुक्तः कपिर्गजः कूर्म इति पञ्चनखैः सह जलजेभ्यः पृथगुक्त इत्यर्थः । ननु गवादीनां द्विशफत्वादिकं प्रसिद्धं

किमर्थमत्रोक्तमित्याशङ्कायामत्र प्रयोजनं प्रमाणेनैव दर्शयति ।। तत्तदाकारेति । अत्र प्रमाणान्तरमप्याह ।। उच्यत इति । अप्रसिद्धस्य ज्ञापनार्थम् । दृष्टान्ततयेति शेषः । द्विधा विधा प्रायेण शास्त्रवचः शास्त्रे प्रसिद्धानां वचः । पक्षिषु वल्लूरबर्हिण इति वल्लूरो गणितः । तत्र वल्लूरशब्दार्थं दर्शयितुमभिधानं पठति ।। वल्लूर इति । ननु तिरश्चां बहुविधत्वात्किमर्थमष्टाविंशतिमेव ग्रहणमित्याशङ्कायां यज्ञोपयुक्तत्वविवक्षयेति पूर्वं प्रमाणेनैव प्रदर्शितमिदानीं तत्र विवक्षान्तरमपि दर्शयत्प्रमाणं पठति ।। अष्टाविंशदिति । तुशब्दोऽवधारणे । अष्टाविंशदेवेति संबन्धः । प्राधान्यमपि यज्ञोपयोगादिनेति द्रष्टव्यम् । इदानीमनुक्तिर्नेत्याह ।। यो यस्येति । अन्य उक्तादन्यः । अस्योदाहरणमाह ।। जलजान्तर्गता इति । कुत इत्यत आह ।। तेषामिति । सर्वशः सर्वेषां शरीरस्य शरीराणाम् । तथा चानुक्तानामप्यत्रैवान्तर्भावस्य विवक्षितत्वान्न सर्वानुक्तिरिति भावः ।।२१-२४।।

**अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ।**
**रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ।। २५ ।।**

**तात्पर्यम्– रजोनिष्ठास्तमोनिष्ठा द्वेधाऽर्वाक्स्रोतसः स्मृताः । असुराद्यास्तमोनिष्ठा मानुषास्तु रजोऽधिका' इति व्योमसंहितायाम् । दुःखे च सुखमानिनोऽसुराः । 'सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी'ति वचनात् ।। 'सुखे सुखैकभावास्तु देवा नैवं तु दानवा' इति षाड्गुण्ये ।। २५ ।।**

**प्रकाशिका–** मूले नवमः सर्ग इत्यनुवर्तते । अर्वाक्स्रोतसां संबन्धित्वादर्वाक्स्रोतोनामकः । स्रोत इति ह्रस्वं छान्दसम् । अस्य नृणामित्युक्त्या मनुष्यमात्रपरत्वे दुःखे च सुखमानिन इत्यस्यासुरस्वभावकथनमयुक्तमित्यतोस्य तात्पर्यं प्रमाणेनैवाह ।। रजोनिष्ठा इति । तमोनिष्ठा इत्यनन्तरमितिशब्दोऽध्याहार्यः । आद्यशब्देन रक्षःपिशाचादीनां ग्रहणम् । तथाच मूले नृणामित्यसुराद्युपलक्षक इति भावः । तुशब्दोऽवधारणे । उपलक्षणयाऽसुरादीनां ग्रहणे मूले ज्ञापकं दर्शयति ।। दुःख इति । दुःखयतीति दुःखे दुःखसाधनतया प्रमिते हरिद्वेषादौ सुखयतीति सुखं सुखसाधनमिदमिति मन्यमाना मूलोक्ता असुरा एवेत्यर्थः । यद्वा । दुःखरूपे स्वचैतन्ये सुखरूपत्वमानिन इत्यर्थः । तथाचोपलक्षणयाऽसुराद्या अपि ग्राह्या इति शेषः । कथमेतदसुरत्वज्ञापकमित्यतोऽत्र प्रमाणमाह ।। सर्वार्थानिति । या विषयीकरोतीति शेषः । च शब्दोऽवधारणे । परतत्त्वं निर्गुणत्वादिनाऽपरतत्त्वं मिथ्यात्वादिना जानन्तीति सर्वार्थेषु तद्बुद्धेर्वैपरीत्यमिति भावः । इदं साधारणमित्यतो विशेषाकारेण दुःखे सुखमानित्वप्रतिपादकप्रमाणमाह ।। सुख इति । सुखात्मके स्वचैतन्ये सुखरूपमेवेदमिति भावयन्तीति भावः । दानवा नैवं किन्तु दुःखात्मके स्वचैतन्ये

सुखरूपमेवेदमिति सुखभावा इत्यर्थः ।। ततश्चायं श्लोकार्थः ।। अर्वाक् स्रोतोनामकः सर्गो नवमः । तुशब्दो स द्विविध इति विभागार्थः । कथम् । नृणां संबन्ध्येकविधः । असुरादीनां संबन्ध्येकविध इति । तत्राद्यानां स्वभावं दर्शयति ।। रजोऽधिका इति । अनेन द्वितीया तमोऽधिका इति सूचितम् । द्वितीयानां स्वभावमाह ।। दुःखे चेति । चशब्देन सर्वार्थानपि विपरीतानेव पश्यन्तीति सूचयति ।। २५ ।।

**वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ।**
**वैकारिकश्च यः प्रोक्तः कौमारस्तूभयात्मकः ।। २६ ।।**

**तात्पर्यम्– 'कुमारन्तीति कौमारो देवानामण्डजोद्भवः । वैकारिकाणां जननात्प्राकृतो वैकृतश्च सः । वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुतः । उभयात्मकत्वं तेनैव प्रोच्यन्तेऽष्टगणा अपीति । देवसर्गश्चेति चकारार्थ उभयात्मक इति वैकारिकस्तु देवसर्गः प्राकृतत्वेनोक्तः ।।२६।।**

**प्रकाशिका–** वैकृतास्त्रय एवैत इति श्लोकस्य द्वितीयार्धे कौमार इत्यस्य सनत्कुमारादिसंबन्धीत्यन्यथाप्रतीतिवारणाय तदर्थं दर्शयन्समग्रतदर्थप्रतिपादकं प्रमाणं पठति ।। कुमारन्तीति । अनेन कौ भूमौ मा निर्माणमरन्ति प्राप्नुवन्तीति कुमारा देवास्तेषामयं सर्गः कौमार इति व्याख्यानं दर्शयति ।। स क इत्यपेक्षायामाह ।। देवानामिति । देवानां योऽण्डे जात उद्भवो वैकृतत्वेनोक्तः स एवेत्यर्थः । उभयात्मक इत्यस्य व्याख्यानम् ।। प्राकृतो वैकृतश्च स इति । प्राकृतत्वेनोक्तानां वैकारिकाणां वैकारिकाहङ्कारकार्याणामिन्द्रियदेवानां पुनर्भूमौ जननादित्यर्थः । अनेन यो वैकारिकः प्राकृतत्वेनोक्तः स एवोक्तरीत्या कौमारो वैकृतश्चेत्युभयात्मकमिति मूलं व्याख्येयमिति दर्शयति । नन्वेवमण्डे जातानामिन्द्रियदेवानामेवोभयात्मकत्वेन वक्ष्यमाणानां पित्रादीनां वैकारिकत्वाभावेनोभयात्मकदेवप्रभेदत्वानुपपत्तिरित्यत आह ।। वैकारिकेष्वेवेति । अष्टगणा अपि अष्टगणान्तर्गताः पित्रादयोऽपीषद्भोगित्वहेतुतो वैकारिकेष्वन्तर्भूता यतोऽत उभयात्मकेनैवोभयात्मकदेवप्रभेदत्वेनैव प्रोच्यन्त इति योजना । अत्रेषद्भोगो यज्ञीय हविरादीनामिवेति ज्ञेयम् । नन्वेवं देवसर्गस्योभयात्मकत्वे वैकृतास्त्रय एवैते देवसर्गश्च सत्तमेति पूर्वार्धे चशब्देन देवशब्दस्य कथं वैकृतत्वं समुच्चीयत इत्यत आह ।। देवसर्गश्चेति । तथाच देवसर्ग उभयात्मक इत्यनुक्तसमुच्चायक एव चकारो नोक्तसमुच्चायको येनोक्तविरोधी स्यादिति भावः । उक्तसमुच्चायकत्वे त्रय एवेत्यवधारणानुपपत्तिश्चेति ज्ञेयम् । वैकारिकश्च यः प्रोक्त इत्यस्य प्राकृतत्वकोट्युपपादकतालाभायापेक्षितं पूरयति ।। वैकारिकस्त्विति । तुशब्द इन्द्रियाभिमानित्वरूपविशेषार्थः । ततश्च वैकारिक इत्येतत्प्राकृतत्वकोट्युपपादकं भविष्यतीति भावः ।। ततश्चायं श्लोकार्थः ।। एते तस्थुतिर्यङ्मानुषसंबन्धिनस्त्रय एव वैकृता वैकृतनामानः सर्गाः ।

उक्ता इति शेषः । दशमं सर्गमाह ॥ देवसर्गश्चेति । भो सत्तम सत्सु श्रेष्ठ । देवसर्गः । च शब्दोऽनुक्तसमुच्चायकः । प्राकृतो वैकृतश्चेत्युभयात्मक इत्यर्थः । एतदेव विशदयति ॥ वैकारिकस्त्विति । तुशब्दो महदाद्यभिमानिब्रह्मादिसर्गव्यावृत्त्यर्थः । द्वितीयस्तुशब्दश्चेदित्यर्थः । यो वैकारिको वैकारिकाहङ्कारकार्येन्द्रियदेवसर्गः पूर्वं प्राकृतत्वेनोक्तः स एवोक्तरीत्या कौमारश्चेत्युभयात्मकः । प्राकृतवैकृतनामको दशमः सर्ग इत्यर्थः ॥ २६ ॥

**देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ।**
**गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ २७ ॥**

**भूतप्रेतपिशाचाश्च विद्याध्रा किन्नरादयः ।**
**दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २८ ॥**

**तात्पर्यम्– 'प्रोक्ता अष्टविधा देवा विबुधाः सर्व एव तु । पितॄणां शतमेवात्र असुरास्त्रिंशदेव च । गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् । सप्ततिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु । शतं सिद्धास्तथान्यासु सप्ततिः सर्वजातिषु । ऊर्ध्वस्रोतस एते वै अन्येऽर्वाक्स्रोतसः स्मृताः । वैकारिकेषु देवेषु एते वै मुख्यभोगिनः । अभोगिनस्तदन्ये तु देवा एते ततः स्मृताः । सर्वज्ञास्ते सहाराध्या भक्तास्तेष्वन्तरेव च । नृत्तगानादिकर्तारो वाहनादिकृतस्तथा । सिद्धसिद्धेतिवक्तारश्चाराश्चैषां कचित्कचित् । सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः । अन्ये च ये तु सर्वज्ञा विबुधास्ते प्रकीर्तिताः । तथान्ये कर्मभिस्तैस्तैरष्टभेदान्तरं गता' इति तत्त्वविवेके । 'यदि देवादयो दोषाज्जायेरन्मानुषादिषु । तथाऽपि देवा विज्ञेयाऽसुराद्यास्तु तथा ध्रुवमि'ति च ॥ २७, २८ ॥**

**प्रकाशिका–** देवसर्गविभागमाह ॥ देवसर्गश्चेति । अवान्तरविधानत्वसमुच्चये चशब्दः । अष्टविधत्वमेव दर्शयति ॥ विबुधा इत्यादिना । नन्वत्र विबुधा इत्यारभ्य किन्नरादय इत्यन्तेन बहव उक्ताः । अतः कथमेषामष्टविधत्वमित्याशङ्कायामत्र विवक्षाविशेषं प्रमाणेनैव दर्शयति ॥ प्रोक्ता इति । देवा अष्टविधाः प्रोक्ता इति संबन्धः । तान्निर्दिशति ॥ विबुधा इति । विबुधा इन्द्रादयो देवाः सर्व एव न पित्रादिष्विव सङ्कोच इत्यर्थः । तुशब्दो विबुधेषु वैकारिकत्वरूपविशेषसूचकः । अत्राष्टगणे । असुराश्चेति संबन्धः । गन्धर्वाणां शतमप्सरसां च शतमिति द्विशतमेवेति संबन्धः । अन्यासु सर्वजातिषु । उक्तादन्यासु भूतादिकिन्नरान्तासु । ततश्च सर्वे विबुधाः शतसङ्ख्याकाः पितरस्त्रिंशत्संख्याका असुरा शतसङ्ख्याका गन्धर्वाः शतसङ्ख्याका अप्सरसश्चेत्येका विधा । सप्तति सङ्ख्याकानि यक्षरक्षांसि त्रिंशत्सङ्ख्याकाश्चारणाः शतसङ्ख्याकाः सिद्धा भूतादिकिन्नरान्तसर्वजातिषु सप्ततिसङ्ख्याकानामेकविधत्वमित्यभिप्रायेणात्र देवसर्गस्याष्टविधत्वमुक्तमिति भावः । कुत एवं पित्रादिषु

कतिपयानामेव देवसर्गमित्यतोऽत्र प्रमाणमाह ।। ऊर्ध्वस्रोतस इति । एत एव पूर्वं निर्दिष्टाः पित्रादय एवोर्ध्वस्रोतसः स्मृताः स्मृत्यादावुक्ताः । अन्ये शतत्वादिना निर्दिष्टेभ्योऽन्ये पित्रादयोऽर्वाक्स्रोतसः स्मृता अतो नोर्ध्वस्रोतस्त्वेनोक्तदेवविभागान्तर्भावयोग्या इति भावः । युक्तिं चाह ।। वैकारिकेष्विति । एते पूर्वं निर्दिष्टा देवेषु मध्ये मुग्धभोगिन ईषद्भोगिनः । ईषद्भोगित्वहेतुत इति पूर्वमुक्तत्वात् । देवा देवविधान्तर्गताः । एवं जात्याऽष्टविधत्वमुक्त्वा विभाजकान्तरमप्याह ।। सर्वज्ञा इत्यादिना । तथाच सर्वज्ञत्वं विबुधानां बिभाजकम् । तैर्विबुधसहाराध्यत्वं पितॄणाम् । अत एव श्राद्धे विश्वेदेवाराधननियमः । तेषु विबुधेष्वन्तरेव भक्ताश्चेत्यसुराणाम् । बल्यादयो हि स्वभृत्यमनःसमाधानाय बाह्यतो विबुधा न द्विषन्तोऽपि तेष्वन्तरेव भक्तिं कुर्वन्तीति प्रसिद्धम् । नृत्यगानकर्तार इति गन्धर्वाप्सरसां वाहनादिकर्तार इति यक्षरक्षसाम् । अत्रादिपदेन युद्धादिसङ्ग्रहः । सिद्धसिद्धेति सिद्धानां सिद्धं सिद्धमिति वक्तार इत्यर्थः । चाराश्चैषामिति चारणानाम् । कचित्कचित्कायविशेषे सेवाकार इति भूतादिकिन्नरान्तानाम् । ननु सर्वज्ञत्वस्य कथं विबुधविभाजोपाधिकत्वं वसिष्ठादिमुनिष्वपि सत्वादित्यतस्तेऽप्यत्र विबुधत्वेन विवक्षिता इत्याह ।। अन्ये चेति । ऋष्यादय इत्यर्थः । नन्वेवमपि तैः सहाराध्यत्वादिकं यत्पित्रादिविभाजनमुक्तं तदपि सर्वं तत्र तत्रातिप्रसक्तं कथं विभाजकं स्यादित्याशङ्कायामाह ।। तथाऽन्य इति । शतत्वादिना निर्दिष्टपित्रादिभ्योऽन्ये तैस्तैः कर्मभिस्तैः सहाराध्यत्वादिरूपोपाधिभिर्यदि युक्तास्तर्हि तेऽप्यष्टभेदान्तरं गताः । अष्टभेदत्वेनोक्तपित्रादित्वेनैव विवक्षिता अतो नोक्तोपाधीनामतिप्रसक्तिरित्यर्थः । ननु तथाऽपि विबुधत्वादिजातिप्रयुक्तो विभागोऽनुपपन्नः । विबुधादीनां मानुषादिषु जनने विबुधत्वादिजातेरपगमादित्यत आह ।। यदि देवादय इति । विबुधादय इत्यर्थः । आदिपदेन पित्रादयो ग्राह्याः । देवा विज्ञेया विबुधादयो विज्ञेयाः । विबुधत्वादिकं तेषु नापगच्छतीति भावः । प्रसङ्गाद्दृष्टान्ततया तानाह ।। असुराद्या इति । यथाऽसुराद्या मानुषादिषु जाता असुराद्या एव तथेत्यर्थः । उपसंहरति ।। दशैत इति ।। २७-२८ ।।

**अतः परं प्रवक्ष्यामि वंशान् मन्वतराणि च ।**
**एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ।**
**सृजत्यमोघसङ्कल्प आत्मैवाऽऽत्मानमात्मना ।। २९ ।।**

**तात्पर्यम्– गुणाप्लुतो हरिर्नित्यं गुणानां मध्यगो यतः । अनहंवेदनात्तस्य गुणासंस्पर्श एव चे'ति च । 'सृष्ट्वा देवादिदेहान्स आत्मानं बहुधाऽकरोत् । तन्नियन्तृतयाऽऽत्मानं प्रकृतिं देहभेदत' इति नारदीये । 'कर्ता च करणं चैव कर्म चैव स्वयं हरिः । आत्मनो बहुधाभावे प्रकृतेस्तु स्वतन्त्रत' इत्याग्नेये ।। २९ ।। इति तृतीयतात्पर्ये एकादशोऽध्यायः ।। ११ ।।**

**प्रकाशिका–** उक्तसृष्टिषु ब्रह्मादयो निमित्तमात्रं हरिरेव स्वातन्त्र्येण देवादीन्सृष्ट्वा तेषु तेषु नियन्तृतया स्वात्मानमपि सृष्टवानित्युपसंहरति ।। एवमिति । अत्र रजःप्लुत इति रजोगुणबद्धत्वमुच्यत

इति प्रतीतिवारणाय प्रमाणेनैव तत्र तात्पर्यमाह ॥ गुणाप्लुत इति । गुणाप्लुत इत्युच्यते यतो गुणानां मध्यगः प्रेरकतयाऽन्तर्गतः । गुणबद्धत्वमेवार्थः किं न स्यादित्यत आह ॥ अनहमिति । अभिमानाभावदित्यर्थः । चशब्दो यस्मादित्यर्थे । तथाच यस्मादभिमानाभावेन तस्य हरेर्गुणासंस्पर्श एव निश्चितस्तस्मादुक्त एवार्थ इति योजना । मूले आत्मानं सृजतीति सृज्यस्य जगतः स्वात्मत्वं प्रतीयतेऽतस्तदभिप्रायं प्रमाणेनैवाह ॥ सृष्ट्वेति । आत्मानं जीवराशिं बहुधोर्ध्वरेतस्त्वादिजातिभेदेन । अनेन मूले आत्मानमिति द्वितीयान्तं जीवराशिपरम् । बहुधेति चाध्याहार इति सूचयति । आत्मानमित्यस्य स्वात्मानमित्यप्यर्थ इत्याशयेनाह ॥ तन्नियन्तृतयेति । आत्मानमित्यस्य प्रकृतिपदत्वमभिप्रेत्याह ॥ प्रकृतिमिति । अत्रोभयत्र बहुधाऽकरोदिति पदयोरनुवृत्तिः । ननु यथा प्रकृतेर्देहभेदे बहुधाभावे कर्त्रादिकारकान्तरापेक्षा तथा हरेर्बहुधाभावेऽपि हरिभिन्नानां कर्त्रादीनामपेक्षा किमित्याशङ्कां प्रमाणेनैव परिहरति ॥ कर्ता चेति । स्वयमेवेत्याद्यस्यैवकारस्य संबन्धः । द्वितीयस्यात्मान एव बहुभाव इति । अत एव तद्व्यावर्त्यमाह ॥ प्रकृतेरिति । तुशब्दोऽवधारणे । प्रकृतेर्देवत्वादिभेदेन बहुधाभावे आत्मनः परमात्मनः स्वतन्त्रतैव प्रकृतिभिन्नकर्त्रादिकारणनियामकतयैव । न तत्रापि कर्त्रादैरैक्यमित्यर्थः । ततश्चैवमर्थः ॥ पूर्वोक्तरीत्या रजःप्लुतो नियामकतया रजोगुणान्तर्गतोऽत एव स्रष्टाऽऽत्मना स्वेच्छयैव भवतीत्यात्मभूर्हरिः । आत्मैव स्वयमेव कर्त्रादिकारकान्तरनियामकतया स्वतन्त्रः सन् आत्मानं जीवराशिं बहुधा देवादिभेदेन कल्पादिषु कल्पानामादिकालेषु सृजति । एवमात्मानं प्रकृतिं बहुधा देहभेदेन सृजतीत्यपि व्याख्येयम् । तथाऽऽत्मैव न कर्त्राद्यन्तरमपेक्ष्यात्मानं स्वात्मानमात्मना स्वेच्छयैव बहुधा जीवदेहादिनियामकानेकरूपवत्तया सृजति प्रादुर्भवतीति मूलयोजना द्रष्टव्या ॥ २९ ॥

**गुणव्यत्यय एतस्मिन् मायावत्त्वादधीशितुः ।**
**न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेर्यथा ॥ ३० ॥**

**प्रकाशिका–** नन्विदं गुणवैषम्यं किं पूर्वमुतापरमित्याशङ्कायामाह ॥ गुणव्यत्यय इति गुणव्यत्यये उक्तेगुणवैषम्यरूपसृष्टौ । अधीशितुः स्वातन्त्रेण कर्तुः । मायावत्वात्सर्वदा प्रकृत्यादि सर्वकारणत्वान्न पौर्वापर्यमिच्छन्ति । सृष्टिपरंपराया इदं प्रथमतां नेच्छन्ति ज्ञानिन इत्यर्थः । अत्र दृष्टान्तमाह ॥ नद्यामिति । न द्यां भ्रमत्याः पुतः पुनरावर्तमानाया भ्रमेरावर्तस्येव ॥ ३० ॥

**देवासुरादयः क्षत्तः कल्पेऽस्मिन् ये प्रकीर्तिताः ।**
**त एव नामरूपाभ्यामासन् मन्वन्तरान्तरे ॥ ३१ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे एकादशोऽध्यायः ।**

**प्रकाशिका–** नन्वेवमस्मिन्कल्प एव विरिञ्चादिसर्वदेवादीनामुक्तत्वादुत्तरकल्पे सृज्यसर्वदेवाद्यभावः । न च तत्पदस्था अन्यै सृज्या इति वाच्यम् । तेषां भिन्ननामादिरूपादिप्राप्तिसंभवेन तत्प्रतिपादकापौरुषेयवेदाप्रामाण्यप्रसङ्ग इत्यत आह ।। देवासुरादय इति । अस्मिन्कल्पे यद्रूपा यन्नामानः प्रकीर्तिता वेदेषु त एव तत्सदृशा एव तत्तद्गुणस्था एव नामरूपाभ्यामेतत्कल्पीयदेवादि समाननामरूपाभ्यामासन् भविष्यन्ति । मन्वन्तरान्तरे कल्पान्तरे आसन्निति वचनेन पूर्वमप्येवमेवाभूदिति देवादिप्रवाहस्यानादित्वं सूचयति । यद्वा । अस्मिन्दैनन्दिनकल्पे देवासुरादयो ब्रह्मादयो देवा बल्यादयोऽसुराः । आदिपदान्मरीचिप्रभृतयो ऋष्यादयश्च । ये प्रकीर्तितास्त एव मन्वन्तरान्तरे आसन्निति ।। ३१ ।। इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ।। ३-११ ।।

## अथ द्वादशोऽध्यायः ।

**मैत्रेय उवाच–**

**चरमस्तु विशेषाणामनेकासंयुतः सदा ।**
**परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ।। १ ।।**

**तात्पर्यम्– कालपरिमाणं दर्शयितुं द्रव्यपरिमाणं दृष्टान्तत्वेन दर्शयति । 'मनुष्या देवलोकेऽपि विशेषेणैव दर्शने । अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः । चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा । परमाणुः स विज्ञेयः कणादाद्या निरंशिनम् । अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्तिदर्शनात् । ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि । अनन्तत्वाद्विवेकार्थमस्योक्ता परमाणुते'ति तत्त्वविवेके । अनेकांशैरासमन्ताद्युतः ।। १ ।।**

**प्रकाशिका–** चरमस्तु विशेषाणामित्यस्य प्रकृतेन सङ्गत्यप्रतीतेस्तमाह ।। कालपरिमाणमिति । प्राक्प्रतिज्ञातमन्वन्तरादिकालनिरूपणार्थं परमाण्वादिकालपरिमाणं दर्शयितुं दर्शयतीत्यनन्तरम् चरम इत्यादि श्लोकद्वयेनेति शेषः । तत्र कालपरिमाणं दर्शयितुं दृष्टान्तत्वेन द्रव्यपरिमाणं लक्षयति ।। चरम इति । प्रथमश्लोकेनेत्यपि ग्राह्यम् । अत्र विशेषाणां पार्थिवादिकार्याणां चरमोऽन्त्यो विशेषोऽन्त्यावयविभूतो घटादिर्यः स परमाणुरित्याद्यन्यथाप्रतीतिवारणाय श्लोकतात्पर्यं प्रमाणेनैवाह ।। मनुष्या इति । यज्ञादिकं कृत्वा देवलोकादिकं गता इत्यर्थः ।। देवलोकेऽपीति । विशेषेण दर्शनसंपादकेऽपीत्यर्थः । विशेषेणैव वस्तुगताशेषविशेषेणैव दर्शने शक्ता अपीति शेषः । यस्य पदार्थस्यांशांशित्वविशेषमेतैरंशैरयमंशीति विशेषम् । तुशब्दस्तत्र तस्य विद्यमानत्वसूचकः । विद्यमानमपि द्रष्टुं न शक्नुयुरित्यर्थः । परमाणुः स विज्ञेय इत्यनेनोत्तरार्धाद्यपादस्यात्राप्यन्वय इति सूचयति । द्रव्यपरमाणुलक्षणान्तरकथनाय नृणामैक्येति मूलम् । तत्तात्पर्यमाह ।। कणादाद्या इति ।

आद्यशब्देन गौतमाद्या ग्राह्याः । अनेकांशयुत इत्यस्य तात्पर्यम् ॥ अनन्तांशयुतत्वेऽपीति । यं निरंशिनं ब्रूयुरित्यन्वयः । निर्गता अंशा यस्मात्स निरंशः स एव निरंशी । स्वार्थे इन् । भ्रान्तिदर्शनाद्भ्रान्तिरूपज्ञानात् । परमाणुः स विज्ञेय इति संबन्धः । तदंशानां परमाणुत्वेनाभिमतपदार्थांशानां तत्त्वात्ततोऽपि परमाणुत्वं परमाणुशब्दवाच्यत्वं यद्यप्यस्ति तथाऽप्यस्योक्तरूपस्य परमाणुता परमाणुत्वेन लक्ष्यताऽत्र मूले उक्ता । किमर्थं विवेकार्थम् । परमाण्वादिरूपकालपरमात्माणुज्ञापनार्थमित्यर्थः । अनेकैरंशैः संयुत इति व्याख्याने कथमनन्तांशयुतत्वरूपं प्रमाणोक्तं तात्पर्यमस्य लक्ष्यत इत्याशङ्कायामनेकांशयुत इत्यस्योक्ततात्पर्यानुकूलं व्याख्यानं दर्शयति ॥ अनेकांशैरिति । आ इत्यनुवादेन समन्तादिति व्याख्यानम् ॥ ततश्चायं श्लोकार्थः ॥ विशेषाणां पार्थिवादिकार्याणां यश्चरमो विशेषस्तस्य चरमत्वं प्रमाणोक्तरीत्या देवलोकस्थमानुषाणां विशेषाकारेण प्रत्यक्षत्वं प्रयोजकमहत्वाभावरूपं वैवक्षिकमिति दर्शयितुं तुशब्दः । तर्हि स किं निरवयवो नेत्याह ॥ अनेकेति । द्वितीयस्तु शब्दोऽप्यर्थः । आ समन्तादनेकैरंशैः संयुतोऽपीत्यर्थः विज्ञेयो विवेकार्थमत्र परमाणुतया विवक्षित इत्यर्थः । लक्षणान्तरमाह ॥ नृणामिति । कणादादीनामपीत्यर्थः । यतो यस्मिन् ऐक्यभ्रमो निरंशत्वभ्रमो भवति स परमाणुरित्यन्वयः । तादृशश्च जालसूर्यरश्मिषु दृश्यमानत्र्यणुकषष्ठभागरूप इति ज्ञातव्यम् ॥ १ ॥

**सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ।**
**कैवल्यं परममहानविशेषो निरन्तरः ॥ २ ॥**

**तात्पर्यम्– कालतो देशतो गुणतश्च परममहत्त्वं सतः परब्रह्मण एव । सच्छब्दोऽन्यत्राप्युपचारतो भवतीत्यतः पदार्थस्येति । सत्पदस्य यो मुख्याभिधेयस्तस्य । 'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते । अमुख्ये स्वर्थशब्दस्तु नीचोपरिहितो भवेदि'ति ब्रह्मतर्के । यद्वेव समः प्लुषिणेत्यादिनाऽन्यत्र स्थितस्य तत्परिमाणत्वमप्यस्तीत्यतः स्वरूपावस्थितस्येति । जगदावरकस्य स्वरूपस्य ततः किञ्चिन्महत्वमित्यतः कैवल्यमिति । तत्रापि बहुविधानि रूपाणि तस्य सन्तीत्यविशेष इति । सर्वगते प्रादेशमात्रमपि वियत इत्यतो निरन्तर इति । परब्रह्मणो यः केवलभावः । अण्डाद्यन्तःप्रविष्टं तदावरकं तस्यैव परमपुरुषादिरूपान्तरं तदेकदेशं (प्रादेशः प्रादेशमात्रादिविशेषं) च विना यत्सर्वगतं रूपं तदेव परममहान् । 'कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः । देशकोटिविहीनत्वं देशानन्त्यं तथैव च । गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः । आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् । तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् । तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते । परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते । तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च । गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् । व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि । न च भेदः कचित्तेषामणुमात्रोऽपि विद्यते । तथापि**

विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः । तस्माद्बुध्यवतारार्थमव्याप्तत्वं च भण्यते । यत्तस्य व्यापकं रूपं परं नारायणाभिधम् । शून्यं ब्रह्मेति तत्प्राहुर्द्वितीयं स्रष्टृ यत्ततः । परमः पुरुषो नाम मितं तद्देशतो विभोः । तृतीयं वासुदेवाख्यं जगदावरकं मितम् । देशतो जगदाविष्टं तुरीयं विष्णुनामकमि'ति ब्रह्मतर्के ॥ सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपया प्रकृत्या समव्याप्तावपि दार्ष्टान्तिकान्तर्भावा-त्तदन्यस्मिन्नवस्थानाच्च स्वरूपावस्थितस्येत्युक्तम् । 'देव्यां कालादिरूपिण्यां स्थितं ब्रह्मापि सर्वगम् । उच्यतेऽनन्यगं यस्मादात्मवत्सा हरेर्विभोः । महदादिगतं यत्तु तदन्यगतमुच्यत' इति ब्राह्मे ॥ २ ॥

**प्रकाशिका–** परममहाकालपरिमाणं दर्शयितुं दृष्टान्ततया परममहापरिमाणं द्रव्यं दर्शयति ॥ सत एवेति द्वितीयेन श्लोकेन । तत्र सतः सच्छब्दप्रतिपाद्यस्यैव यत्स्वरूपं स परममहानिति व्याख्यानेऽव-धारणानुपपत्तिः । कालादेरपि परममहत्त्वस्य वक्ष्यमाणत्वात् । सच्छब्दस्य चेतरसाधारण्याच्च । अतोऽत्र विवक्षितं परममहत्त्वं दर्शयंस्तदाश्रयं सच्छब्दवाच्यं दर्शयति ॥ कालत इति । तथा च त्रिविधपरममहत्त्वस्यान्यत्र कुत्राप्यभावादवधारणमुपपद्यत इति भावः । सत इत्यनुवादेन परब्रह्मण इति व्याख्यानम् । पदार्थस्येत्यादिविशेषणपञ्चकस्य क्रमेण प्रयोजनान्याह ॥ सच्छब्द इत्यादिना । निर्दुष्टवाचकः सच्छब्दोऽन्यत्र विष्णुव्यतिरिक्ते भवति प्रयुज्यते । तत्र च त्रिविधम् । परममहत्त्वं न संभवतीति भावः । नन्वमुख्यार्थस्यापि प्रतिपाद्यत्वेनार्थत्वात्कथमनेन परिहार इत्यत आह ॥ सत्पद-स्येति । अर्थशब्देन कथमयमर्थो लभ्यत इत्यतोऽत्राभिधानमाह ॥ मुख्याभिधेय इति । च शब्दोऽवधारणे । अन्यद्वाच्यमित्येव भण्यते नत्वर्थ इत्यर्थः । नन्वमुख्येष्वप्यर्थशब्दप्रयोगो दृश्यत इत्यत आह ॥ अमुख्येष्विति । नीचोपरीति लुप्तोपमा । यथा नीचोपरि हितः प्रणिहितः स्थापितस्तदयोग्योऽलङ्कारस्तथेत्यर्थः । अन्यत्र ब्रह्माण्डादौ स्थितस्य तत्परिमाणत्वं ब्रह्माण्डादि-परिमाणत्वं परममहत्त्वमपि तत्रास्तीति सूचनायापिशब्दः । तस्य तत्र लोकैर्दृश्यमानत्वाभावाद् ब्रह्माण्डादिसमपरिमाणस्यैव दृश्यमानत्वाद्व्यावर्त्यत्वमिति ज्ञातव्यम् । एवमेवाग्रेऽपि वक्ष्यमाणानां जगदावरकादिरूपाणां परिच्छिन्नपरिमाणवत्तयैव दृश्यमानत्वाद्व्यावर्त्यत्वं ज्ञातव्यम् । नन्वत्र ब्रह्माण्डादौ स्थितस्य तत्परिमाणत्वं कुतो येन व्यावर्त्यता स्यादित्यत उक्तम् ॥ यद्वेवसम इति । आदिपदेन समो मशकेनेत्यादेर्ग्रहणम् । अस्तीत्यवगम्यत इति शेषः । स्वरूपावस्थितस्येत्यस्या-न्यत्रानाश्रितस्येत्यर्थः । तेनोक्तरूपव्यावृत्तिरिति ध्येयम् । जगदावरकस्येत्यनेन जगद्बाह्यो-क्त्याऽन्यत्रानाश्रितत्वं दर्शयति । ततो जगदन्तर्गतात्कैवल्यम् । स्वार्थे कप्रत्ययः । लिङ्गव्यत्ययेन केवल इत्यर्थः । जगदनावरक इति यावत् । तत्रापि जगदावरकरूपाद्बहिरपि बहुविधानि रूपाणि परिच्छिन्नपरिमाणतयैव । दृश्यमानानीति शेषः । अविशेषशब्दस्य तादृशरूपविशेषा अपि नेत्यर्थः ।

प्रादेशमात्रं प्रादेशादिपरिमितैकदेशः । निरन्तरशब्देन कथं तदप्राप्तिरित्यतस्तस्य तात्पर्यमाह ॥ परब्रह्मण इति । य इत्यनेन यदित्येतल्लिङ्गव्यत्ययेनात्र संबध्यत इति सूचयति । केवलोऽखण्डो भवतीति भावरूपो विशेषः । अनेन प्रथमान्तानां विशेष्यमुक्तमिति ज्ञातव्यम् । व्याप्ततयैव दृश्यमानो रूपविशेष इति यावत् । निरन्तर शब्देनात्र विवक्षित इति शेषः । नन्वेवं सतः परब्रह्मणो यो निरन्तरः केवलो भावः स एव परममहानित्येवास्तु किं पूर्वविशेषणैरिति चेत् । सत्यम् । न तानि लक्षणशरीरानुप्रविष्टानि किन्तु क्रमेणात्र रूपविशेषे बुद्ध्यवतारायैवोक्तानि । अतो न कोऽपि दोषः । वक्ष्यति चैतत् । तस्माद्बुद्ध्यवतारार्थमिति । उक्तमर्थं बुद्ध्यारोहाय पिण्डीकृत्याह ॥ अण्डाद्यन्तरिति । समः प्लुषिणेत्यादिश्रुत्युक्तम् । तदावरकमण्डावरकं तस्यैव परब्रह्मण एव । परमपुरुषेति वचनं वक्ष्यमाणप्रमाणे परमपुरुषस्य ग्रहणात् । यत्सर्वगतं रूपं योगिभिः सर्वगतत्वेन दृश्यमानं शून्यनामकं रूपं तदेव परममहान् । परममहत्परिमाणवत्तयाऽत्र विवक्षितमित्यर्थः । कालतो देशतो गुणतश्च परममहत्त्वं ब्रह्मण एवेति उक्तं प्रपञ्चयितुं प्रमाणं पठति ॥ कालेति । कोटिशब्दोऽवध्यर्थः । कालानन्त्यं कालतः परममहत्त्वम् । एवमग्रेऽप्यानन्त्यशब्दार्थो वर्णनीयः । गुणानामप्रमेयत्वम् । सङ्ख्यापरिमाणाभ्यामिति शेषः । हरेरेवेत्येवकारसंबन्धः । तदेव विवृणोति । नान्यस्येति । ननु ब्रह्मणः सर्वरूपेष्वपि त्रिविधानन्त्यस्य श्रुत्यादिसिद्धत्वात्कथमण्डाद्यन्तस्थादीनां रूपाणां व्यावर्त्यत्वोक्तिरित्याशङ्क्याह ॥ तस्येति । अपरिभिव्याप्तौ । तुशब्दो यद्यपीत्यर्थः । परिच्छेदोऽपि विद्यते । योगिभिः स्पष्टतया दृश्यमान इति शेषः । तथा चाण्डाद्यन्तस्थादिषु केचिद्रूपेषु महत्परिमाणसत्वेऽपि तद्योगिभिः सर्वदा न दृश्यते । देशतः परिच्छेद एव दृश्यतेऽतस्तेषां दृश्यमानपरिमाणमपेक्ष्य व्यावर्त्यत्वमुपपद्यत इति भावः । ऐश्वर्यदिवेत्येवशब्दसंबन्धः । कृष्ण आगतो गत इत्यादिव्यवहारार्थं च परिच्छेदो विद्यत इत्यन्वयः । विष्णुरूपाणां देशतः परिच्छेदवत्कालतो गुणतश्च परिच्छेदोऽपि विद्यते किं नेत्याह ॥ गुणत इति । नैवेति संबन्धः । कुत्रचित्केषुचिद्धरिरूपेषु । तस्य सर्वस्वरूपेष्वित्यादिनोक्तमेव विशदयति ॥ व्याप्तत्वमिति ॥ यद्यपीति । तथाच न तेषु केषाञ्चिदुक्तविशेषणव्यावर्त्यत्वमिति शङ्काशेषः । युक्त्यन्तरमाह ॥ न वेति । तेषां व्यावर्त्यतयोक्तरूपाणां भेदः परममहत्परिमाणतयाऽत्रोच्यमानशून्यनामकरूपादिति शेषः । तथाच परममहत्परिमाणवत्तयाऽत्राभिमतशून्यनामकब्रह्माभिन्नत्वादुक्तरूपाणां न व्यावर्त्यत्वमिति भावः ॥ तथाऽपीति । केषुचिद्रूपेष्वैश्वर्ययोगतोऽणुत्वं स्पष्टतया दृश्यमानं यस्माद्विद्यते तस्मात्तेषु । चशब्दोऽवधारणे । अव्याप्तमेव भण्यते । श्रुत्यादाविति शेषः । बुद्ध्यवतारार्थं लक्ष्यतयाऽभिमते । रूप इति शेषः । अत्र लक्ष्यतयाऽभिमतरूपस्य व्यावर्त्यतयोक्तरूपाणां च नामरूपे दर्शयति ॥ यत्तस्येत्यादिना । यत्ततो जातं तत् द्वितीयम् । स्रष्टृशुद्धसृष्टेरिति शेषः । तस्य परमपुरुष इति नाम । विभोर्व्याप्तस्य तद्रूपं देशतो मितम् । मितत्वेन दृष्टमतो निर्विशेषपदव्यावर्त्यं वासुदेवाख्यं देशतो मितम् ।

अतस्तत्कैवल्यपदव्यावर्त्यं जगदाविष्टं विष्णुनामकं तुरीयं चतुर्थं तत्स्वरूपावस्थितपदव्यावर्त्यम् । नन्वत्र यः शेते प्रलये विष्णुः शून्यनामा महाकृतिः स तु नारायणनाम । नराणामयनत्वतः । रूपं द्वितीयं भवति दीपादीपान्तरं यथा । सिसृक्षोस्तस्य पुरुष इत्याहुस्तद्विदो जना इति द्वितीयतात्पर्येण विरोधः । तत्र पुरुषनामकवासुदेवस्य द्वितीयतयोक्तत्वादिति चेत् । न । तत्रापि पुरुषशब्देन द्वितीयतया परमपुरुषस्य तृतीयतया वासुदेवस्य च ग्रहणात् । ननु परममहत्परिमाणे वस्तुनि निरूपणीये शून्यनामकं ब्रह्मैव कस्माद्वक्तव्यम् । ब्रह्मसमव्याप्तानां कालाकाशादीनां तदभिमानिन्या रमायाश्च सत्वात् समः प्लुषिणेति न्यायेन शून्यनामकब्रह्मणोऽपि कालादिरूपप्रकृतिगतत्वेनोक्त-रूपस्वरूपावस्थितत्वासंभवाच्चेत्याशङ्क्य परिहरति ॥ सर्वगतस्यापीत्यादिना । अपिशब्दद्वयं शङ्काद्वयानुवादसूचकम् । प्रकृत्यादिसर्वगतस्यापीत्यर्थः । अनेन द्वितीयशङ्काया अनुवादः । समव्याप्तावपीत्यन्तेनाद्यशङ्कायाः । कालादिरूपया कालाद्यभिमानिन्या । आद्यशङ्काया उत्तरमाह ॥ दार्ष्टान्तिकेति । अत्र हि कालादिपरिमाणं दर्शयितुं दृष्टान्ततया द्रव्यपरिमाणं निरूप्यते । काल-शब्दस्य देशाद्युपलक्षकत्वात् । ततश्च यावत्कालादिकं तदभिमानिप्रकृत्यादिकं वा ब्रह्मसमं व्याप्तं तावदत्र परममहत्परिमाणवत्तया प्रदर्शनीयं तत्र च दृष्टान्ततयोक्तं रूपं ब्रह्मैव वक्तव्यम् । नान्यत् । तस्य सर्वस्य दार्ष्टान्तिकान्तर्भावात् । उपलक्षणया वक्ष्यमाणदार्ष्टान्तिककालशब्दार्थान्तर्गतत्वा-दित्यर्थः । द्वितीयशङ्काया उत्तरमाह ॥ तदन्यस्मिन्निति । दार्ष्टान्तिकतयाऽत्र विवक्षितं कालाद्यभि-मानिप्रकृत्यादिकं तदतिरिक्तं परामृश्यते । तदन्यस्मिन्महदादावित्यर्थः । तथाच शब्दोऽवधारणे । स्वरूपावस्थितस्येत्यनेन यद्दार्ष्टान्तिकतया विवक्षितं व्याप्तं कालादिकं तदतिरिक्ते परिच्छिन्नपरिमाणे महादादावेवानवस्थानं विवक्षितं न स्वस्वरूपातिरिक्ते सर्वत्रातो नासंभव इति भावः । ननु स्वरूपावस्थितस्येत्यनेनानन्यगतत्वमेवोच्यते न तूक्तरीत्या सङ्कोच इत्यतोऽत्र प्रमाणमाह ॥ देव्यामिति । यद्यपि । तथाऽप्यनन्यगं स्वरूपावस्थितमुच्यते । आत्मवत्स्वरूपवदन्तरङ्गत्वादिति भावः । सा प्रकृतिस्तदभिमानं कालादिकं च । तर्हि स्वरूपावस्थितस्येत्यनेन किं व्यावर्त्यमित्यत उक्तम् ॥ महदादीति । तुशब्दोऽवधारणे । तदेवान्यगतमुच्यते । अतस्तदेव व्यावर्त्यमिति भावः ॥ ततश्चायं श्लोकार्थः ॥ सतो निर्दोषस्य यद्यो भावो रूपविशेषः स एव परममहानित्यन्वयः । ननु सच्छब्द उपचारेणान्यत्र मुक्तादावप्यस्ति । अतस्तद्रूपेष्वपि परममहत्त्वप्राप्तिरित्यत उक्तम् ॥ पदार्थस्येति । सत्पदमुख्याभिधेयस्येत्यर्थः । तथा च परब्रह्मण इत्यर्थः । नन्वेवं परब्रह्मणो जगदाविष्टं यद्रूपं तत्रापि प्राप्तिः । तस्य परिच्छिन्नतया दृश्यमानत्वेनालक्ष्यत्वादत उक्तम् ॥ स्वरूपावस्थित-स्येति । अन्यत्र महदादावनवस्थितस्येत्यर्थः । नन्वेवमपि जगदावरकतया जगत्यनवस्थिते वासुदेवेऽपि प्रसङ्ग इत्यत उक्तम् ॥ कैवल्यमिति । व्यत्ययेन केवल इत्यर्थः । जगदावरक इति यावत् । ननु तथाऽपि परब्रह्मणः परमपुरुषादिरूपेषु वासुदेवाद्बहिरपि विद्यमानतया जगदनावरकेषु

प्राप्तिरित्यत उक्तम् ॥ निर्विशेष इति । दृश्यमानपरिच्छिन्नपरिमाणैतादृशरूपविशेषा अपि नेत्यर्थः । नन्वेवं लक्ष्यतयाऽभिमते रूपे हस्तवितस्त्यादिपरिमितस्यैकदेशस्य प्राप्तिरत उक्तम् ॥ निरन्तर इति । तादृशैकदेशविशेषोऽपि नेत्यर्थः । व्याप्ततयैव दृश्यमान इति यावत् । तादृशो रूपविशेषः शून्यनामा नारायण एव स एव महान्दृश्यमानत्रिविधानंत्यवानित्यर्थः । अत्र परब्रह्मणो योगिभिर्दृश्यमानपरम-महत्परिमाणरूपं लक्ष्यम् । दृश्यमानपरिच्छिन्नपरिमाणानि रूपाण्यलक्ष्याणीति विवेकः ॥ २ ॥

**एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ।**
**संस्थानभुक्त्या भगवानव्यक्तोव्यक्तभुग् विभुः ॥ ३ ॥**

**तात्पर्यम्– अनुमितः शास्त्रलोकानुसारेण ज्ञातः । 'अनुमेति द्वयं प्राहुर्यथाज्ञानं च लिङ्गजमि' त्यभिधानम् ॥ 'यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत् । महाप्राज्ञो देवजूकः स कालः परमाणुकः । सर्गाद्यैरनवच्छिन्नस्तदनन्तर इत्यपि । तथैव परमाण्वादिविशेषात्मापि नो भवेत् । पूर्वापरादिभेदो न स कालः परमो महानि'ति ब्रह्मतर्के ॥ स्वरूपावस्थितस्य कैवल्यमविशेषो निरन्तर इत्येतानि विशेषणानि क्रमेण परममहतः कालस्याप्यत्रोक्तानि । 'देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः । यथानन्त्यं न चान्यस्य प्रकृतेर्देशकालतः । तथाशब्दस्य कालस्य देशानन्त्यं न कालतः । कालशब्दात्मिका सैव तथापि तु हरेः सदा । नास्याः सामर्थ्यलेशोऽपि ज्ञानानन्द-गुणेष्वपि । ज्ञेयस्तदवरोवायुः शेषवीन्द्रहरास्ततः । अवरास्तत इन्द्राद्या गुणैः सर्वैर्न संशय' इति ब्रह्मवैवर्ते ॥ 'अण्वादिकालसंस्थानभोक्तृत्वात्परमेश्वरः । अण्वादिनामवाच्योऽसौ कालश्चेत्यभि-धीयत' इति च ॥ सतो ब्रह्मणः अविशेषं स्वरूपं यः कालः कालान्तर्यामी तदेव ब्रह्म भुंक्ते । तदपि ब्रह्म परममहान् । तस्यापि त्रिधा परिच्छेदाभावात् । सर्वं सर्वत्र भोक्ताऽपि विशेषादेक-भोक्तृवत् । स्थितो हरिरचिन्त्यात्मा निजैश्वर्यादजो विभुरि'ति ब्रह्मतर्के ॥ ३ ॥**

**प्रकाशिका–** एवं परमाणुपरममहती द्रव्ये दृष्टान्ततया लक्षयित्वेदानीं तदुभयलक्षणं दार्ष्टान्ति-कोभयविधकाले दर्शयति ॥ एवमिति । अत्रानुमितशब्दस्य लिङ्गजज्ञानविषयमात्रपरत्वे दार्ष्टान्तिक-योर्लिङ्गकथनादुत्तरत्रापि तदकथनाद्योग्यताभाव इत्याशङ्कापरिहारायानुमितशब्दमनूद्य तस्यार्थमाह ॥ शास्त्रेति । अत्र लोकशब्देन लोकसिद्धदृष्टान्तगृहीतव्याप्तिमूलकानुमानमुच्यते तथाचानुमितशब्दवाच्यं द्विविधम् । शास्त्रानुसारेण यथावज्ज्ञातं लिङ्गानुसारेण चेति । अत्राभिधानमाह ॥ अनुमेतीति । द्वयं द्विविधम् । तुशब्दो यथाज्ञानस्य शास्त्रजत्वरूपविशेषसूचकः । लिङ्गजमित्यत्रापि यथाज्ञानमि-त्यनुवर्तनीयम् । तथा चानुमितमपि द्विविधमिति भावः । उक्तलक्षणवत्तयोभयविधकालज्ञापकं शास्त्रं तावद्दर्शयति ॥ यावन्तमिति । चरमस्तु विशेषाणामिति यद्द्रव्यपरमाणुलक्षणं देवलोकस्थमानुषैरं-

शांशिविभागं विना दृश्यमानत्वरूपमुक्तं तदेवात्र परमाणुरूपे कालेऽनेनोच्यते । यावदन्तमनन्तांशोपेतमपि त्र्यणुककालषष्ठभागपरिमितं कालम् । तु शब्दोंऽशांशित्वविभागं विनेत्यर्थः । अवधारयेत्पश्येत् । देवजूको यज्ञादिना प्राप्तदेवप्रसादः । परमाणुकः परमाणुरूपतया ज्ञातव्यः । स्वरूपावस्थितस्येत्यादिना यत्परममहद्द्रव्यलक्षणमुक्तं तत्परममहति काले दर्शयति ॥ सर्गाद्यैरिति । सर्गस्थितिसंहारैरनवच्छिन्नो न युक्त इत्यर्थः । सर्गकालादिकालत्रिकभिन्न इति यावत् । तस्मात्कालत्रयादनन्तरः किञ्चिदधिक इति शब्देनाप्यनवच्छिन्नो युक्तो न । एतादृशशब्दप्रतिपाद्यकालेऽपि नात्र लक्ष्यतयाऽभिमत इत्यर्थः । अपितथाशब्दौ समुच्चये । नो भवेदेवेत्येवकारान्वयः । पूर्वापरादिभेदस्तद्रूप एकदेशोऽप्यत्र विवक्षितो नेत्यर्थः । स कालः प्रवाहतोऽपरिच्छिन्नः परमो महान्परममहच्छब्दवाच्यतया ज्ञेय इत्यर्थः । ननु मूले एवं शब्देन स्वरूपावस्थितेत्यस्य यत्कैवल्यमित्यादिनोक्तं यत्परममहद्द्रव्यलक्षणं तद्दार्ष्टान्तिके परममहतिकालेऽतिदिष्टमुदाहृततत्प्रमाणेन त्वन्यथैव तल्लक्षणमुक्तमतो विरोध इत्यत आह ॥ स्वरूपावस्थितस्येति । अत्रापीत्यन्वयः । प्रमाणेऽप्यर्थत उक्तानीत्यर्थः । स्वरूपावस्थितेत्यस्य तात्पर्यम् ॥ सर्गाद्यैरनवच्छिन्न इति । तदनन्तर इत्यपीति कैवल्यमित्यस्यार्थः । अविशेषमित्यस्यार्थः ॥ परमाण्वादीति । निरन्तरइत्यस्य पूर्वपरादिभेदो नेत्यर्थ इति द्रष्टव्यम् । विमतः कालः परमाणुपदवाच्यस्तल्लक्षणवत्त्वात् द्रव्यपरमाणुवत् । विवादास्पदः कालः परममहानिति व्यवहर्तव्यस्तल्लक्षणवत्त्वात् शून्यनामकब्रह्मवत् । इत्यनुमानेऽप्यत्र द्रष्टव्ये । नन्वत्र कालशब्दस्योपलक्षकतया प्रकृत्यादिकमपि दार्ष्टान्तिकान्तर्भूतमित्युक्तम् । तत्र कुत्रापि त्रिविधानन्त्यरूपं परममहत्त्वं नास्ति । गुणत आनन्त्यस्यान्यत्र काप्यभावात् । अतोऽत्र कालान्तर्यामी हरिरेव दार्ष्टान्तिकतया विवक्षित इति वक्तुमन्यत्र त्रिविधानन्त्याभावे तावत्प्रमाणमाह ॥ देशत इति । हरिरेवेति संबन्धः । चशब्दोऽवधारणम् । तथाऽन्यस्य नैवेत्यर्थः । एतदेव विशदयति ॥ प्रकृतेरित्यादिना । देशकालतो देशकालाभ्याम् । आनन्त्यमिति वर्तते । कालतश्चानंत्यमिति सम्बन्धः । नन्वचेतनेषु प्रकृत्यादिषु गुणानंत्यासम्भवेऽपि कालाद्यभिमानिन्यां चेतनप्रकृतौ तत्सम्भावितमित्याशङ्कामपाकरोति ॥ कालशब्दात्मिकेति । शब्दो वर्णात्मकः । कालशब्दात्मिका तदुभयाभिमानिनी । तुशब्दो यद्यपीत्यर्थे । सैव चेतना प्रकृतिरेव । हरेः सामर्थ्यलेशो हरिसामर्थ्यलेशसमानं सामर्थ्यमस्या नेत्यर्थः । ज्ञानानन्दादिगुणेष्वपि साम्यं नेत्यर्थः । नन्वथाऽपि न चान्यस्येत्युक्तमयुक्तम् । सर्वोत्तमानां वाय्वादीनां तत्सम्भवादित्याशङ्कां कैमुत्येनापाकरोति ॥ ज्ञेय इत्यादिना । इन्द्राद्या अवरा इति वर्तते । तथाच गुणानंत्यशून्यप्रकृत्यपक्षेयाऽपि तारतम्येनावरेषु वाय्वादिषु गुणानंत्यमसम्भावितमेवेति भावः । एवमन्यत्र । त्रिविधानंत्यरूपपरममहत्त्वस्य बाधितत्वात्तदुपपत्तये कालान्तर्यामिहरिरूपमेव दार्ष्टान्तिकतयाऽत्र विवक्षितमित्याशयेनैवं कालोऽप्यनुमित इति श्लोकद्वयतात्पर्यं प्रमाणेनाह ॥ अण्वादीति । आदिपदेनापरिच्छिन्नकालग्रहणम् । संस्थानं परमाण्वाद्यवस्था

तद्धोकृत्वं तन्नियामकतया तादृशावस्थयैव तत्र स्थितत्वं तस्मादित्यर्थः । अण्वादिनामवाच्योऽसावित्यन्तेन द्वितीयश्लोकस्य तात्पर्यमुक्तम् । कालश्चेत्यनेनाद्यस्यापि परमेश्वर इत्यनेन भगवानित्यतदुक्ततात्पर्यम् । परमात्मनि युगपदणुत्वमहत्वोपपादकमेतत् । स कालः परमो महानिति पदद्वयतात्पर्यमुक्तम् । अण्वादिनामवाच्योऽसाविति । कालश्चेत्यनेन कालशब्दत्रयमुक्तार्थम् । सतोऽविशेषभुगित्यादिकमप्रतीत्या व्याख्याति ॥ ततो ब्रह्मण इति शून्यनामकस्येत्यर्थः । अविशेषमखण्डस्वरूपमवस्थां भुंक्तेऽनुभवति । प्राप्नोतीति यावत् । दृष्टान्तदार्ष्टान्तिकयोर्भेद शङ्कानिरासायोक्तम् । तदेवब्रह्मेति । अनेन मूले तु शब्दार्थो दर्शित इति ज्ञातव्यम् । नन्वेवं दार्ष्टान्तिकस्य दृष्टान्तादेः पुनर्वचनं व्यर्थमित्याशङ्कां परिहरन् स कालः परमो महानित्यस्यार्थमाह ॥ तदपीति । अपरिच्छिन्नकालान्तर्गमपीत्यर्थः । दृष्टान्तीकृतरूपसमुच्चयार्थोऽपिशब्दः । तथाच रूपविशेषापेक्षया पुनर्वचनमिति भावः । अत्र सतोऽविशेषभुगित्यनेन सूचितं हेतुं दर्शयति ॥ तस्यापीति । नन्वपरिच्छिन्नकालगतोऽपि हरिः सर्वज्ञत्वात्परमाण्ववस्थां भुङ्क्ते । एवं परमाणुकालगतोऽपि सतोऽविशेषभुक् । तथाच कथमिदमसङ्कीर्णतयोच्यत इत्याशङ्कां प्रमाणेनैव परिहरति ॥ सर्वं सर्वत्रेति । विशेषादेवासाधरण्यादेव भोक्तृवत्तत्तद्वस्तुभोक्तृवत्स्थितः । कुत इत्यत उक्तम् ॥ निजैश्वर्यादिति । अचिंत्यात्मेत्यादिविशेषणानि निजैश्वर्यस्याघटितघटकत्वमुपपादयितुम् ॥ ततश्चायं श्लोकार्थः ॥ न केवलं परमाणुपरममहती द्रव्ये एवोक्तविधेऽनुमिते शास्त्रादिना यथावत्ज्ञाते किन्तु कालोऽपि कालान्तर्यामी कालनामा हरिरपि सौक्ष्म्ये परमाणुत्वे विषये स्थौल्ये परममहत्त्वे च विषये एवमुक्तलक्षणवत्तयाऽनुमितः शास्त्रानुसारेण लिङ्गानुसारेण च यथावत्ज्ञातः । कथं भूतः सौक्ष्म्ये कथं भूतश्च स्थौल्येऽनुमित इति विविच्याह ॥ संस्थानेति । भगवान्परमेश्वरः संस्थानम् । अण्वादिकालावस्थात्तदुक्तिः । तादृशावस्थयैव तन्नियामकतया तत्रावस्थितिः । तथाऽव्यक्तोऽस्मदाद्यप्रत्यक्षः परमाणुरूपद्रव्यसाम्यभुक् सौक्ष्म्ये विषयेऽनुमितो व्यक्तभुक् । व्यक्तं व्याप्ततयैव दृश्यमानं यच्छून्यनामकं रूपं तत्साम्यमनुभवतीति व्यक्तभुक् । अत एव विभुः कालान्तर्यामी हरिः स्थौल्येऽनुमितः ॥ ३ ॥

**स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।**
**सतोऽविशेषभुग् यस्तु स कालः परमो महान् ॥ ४ ॥**

**प्रकाशिका**– एतदेव विशदयति ॥ स काल इति । कालः कालान्तर्यामी तन्नामा हरिः परमाणुः परमाणुकालसंस्थानभागेन परमाणुः परमाणुशब्दवाच्यः । वै शास्त्रलिङ्गानुसारेण प्रसिद्धः । स कः । यः परमाणुतां पूर्वं दृष्टान्ततयोक्तः परमाणुद्रव्यसमानतां भुङ्क्ते प्राप्नोति स कालः कालान्तर्यामी परममहाकालसंस्थानभोगेन परमो महात्परममहाकाल शब्दवाच्यः सः को यः सतः शून्यनामकस्य

ब्रह्मणोऽविशेषः । साम्यं तद्भुक् तद्वान् । तु शब्दोऽत्र दृष्टान्तदार्ष्टान्तिकयोर्भेदाभावरूप-विशेषसूचकः ॥ ४ ॥

**अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः ।**
**जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ ५ ॥**

**तात्पर्यम्– अगात् दृष्टिविषयं प्राप्य ज्ञात इत्यर्थः ॥ ५ ॥**

**प्रकाशिका–** इदानीं परमाणुपरममहतो मध्यमगतानां कालावयवानां परिमाणानि नामानि वक्तुं तावदादौ द्व्यणुकत्र्यणुकनामकं द्रव्यस्वरूपं दर्शयति ॥ अणुरिति । द्वौ परमाणू अणुर्द्व्यणुकापर-नामा । त्रयोऽणवस्त्रसरेणुनामकः । स तु प्रत्यक्ष इत्याह ॥ जालार्केति । जालं गवाक्षम् । तत्र वर्तमानार्करश्मिनावगतः । कोऽसौ । योऽतिलघुत्वेन खमेवानुपतन्नगात् । गतः । अत्र नगादिति पदच्छेदभ्रमवारणाय पदच्छेदं दर्शयति ॥ अगादिति । नगादिति छेदेऽर्थासम्भव इति भावः ॥ ५ ॥

**त्रसरेणुत्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता ।**
**तत्त्रिभागस्तु वेधः स्यात् तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥**

**प्रकाशिका–** इदानीं त्रुटिकालमारभ्य कालस्वरूपं दर्शयति ॥ त्रसरेणुत्रिकमिति । त्रसरेणुनाम-कद्रव्यसाम्यं भुङ्क्ते प्राप्नोति । त्रुटिस्त्रुटिनामकः कालः । अत्र त्रुट्याद्यन्तर्गतस्तन्नामा हरिरपि विवक्षितः । अत एव भुङ्क्त इत्युक्तम् । अत्र द्व्यणुकसाम्यभुक् द्व्यणुकनामकः कालस्त्र्यणुकसाम्याभुक् त्र्यणुकसंज्ञकः काल इत्यपि वक्तव्यम् । शास्त्रेणानयोरव्यवहारान्न स्वशब्देनोपपादनमिति ज्ञातव्यम् । ता उक्तरूपास्तिस्रस्त्रुट्यो भागा यस्य स वेधो वेधनामकः कालः । तैर्वेधैः । तुशब्दोऽवधारणे ॥६॥

**निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणः ।**
**क्षणान् पञ्च विदुः काष्ठां लघु ता दश पञ्च च ॥ ७ ॥**

**प्रकाशिका–** ते निमेषास्त्रयः क्षण इत्याम्नातः । ताः काष्ठा दशपञ्च च लघु लघुसंज्ञकः कालः। ॥ ७ ॥

**लघूनि वै समाम्नाता दश पञ्च च नाडिका ।**
**ते द्वे मुहूर्तं प्रहरः षड् यामः सप्त वा नृणाम् ॥ ८ ॥**

**तात्पर्यम्–** राशिभेदात् । ऊनातिरेकात्सप्त वेति ॥ ८ ॥

**प्रकाशिका–** दशपञ्च च लघूनि नाडिका घटिका ते द्वे नाडिके मुहूर्तं षण्णाडिकाः प्रहरो दिवसस्य पञ्चमो भागः सप्त वा नाडिका नामो दिवसस्य चतुर्थो भागः । अत्र सप्त वेति विकल्पः कुत इत्यतोऽभिप्रायमाह ॥ राशिभेदादिति । अत्र राशिशब्देन संक्रमणं लक्ष्यते । तथाच कर्कादिसंक्रमणभेदमपेक्ष्येत्यर्थः । ऊनातिरेकात् । नाडीनामिति शेषः । ततश्च कर्कसंक्रमणमारभ्य धनु:संक्रमणपर्यन्तं नाडीनामूनात्क्रमेण न्यून्यत्वाद्धनुसंक्रमणसमये यामस्य सप्तनाडीत्वम् । मकरसङ्क्रमणमारभ्य मिथुनसंङ्क्रमणपर्यन्तं नाडीनां क्रमेणातिरेकादाधिक्यान्मिथुनेऽष्टनाडीत्वम् । मेषतुलयोः सार्धसप्तनाडीत्वमित्यादिविशेषसूचनाय वेति विकल्प इति भावः ॥ ८ ॥

**द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ।**
**स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलं पिबेत् ॥ ९ ॥**

**तात्पर्यम्– काकणिकाचतुष्कं तु विंशांशेत्यभिधीयते । कृष्णलेत्यपि तं ब्रूयुस्तैश्चतुर्भिस्तु माषकम् । चतुरङ्गुलदीर्घे तु कृते माषचतुष्टये । यावत्स्यात्परिणाहेन तावद्वारं विधीयते । प्रस्थस्य नाडीपात्रस्य षट्दलस्य शुभे जले । भाराधिक्येनोदकेन क्षिप्रं पूर्तिर्भविष्यति । अतिशैत्ये कलङ्के च ना(माघे)द्येनैव तु पूरणम् । तस्माद्वसन्तेकाले तु प्रयागस्थोदकेन तु । नाडीशुद्धिपरीक्षा स्याद-न्यथा न समं भवेदि'ति पाद्मे ॥ निर्मलेन समोष्णेन नित्यसूर्यांशुवारिणा । प्रवाहगेन कार्या स्यात्कालशुद्धिः सदैव त्वि'ति ब्रह्माण्डे ॥ ९ ॥**

**प्रकाशिका–** नाडिका परिज्ञानाय तत्पात्रलक्षणमाह ॥ द्वादशार्धेति । अत्राप्रतिपत्तिविप्रतिपत्ति-निरासाय श्लोकतात्पर्यं प्रमाणेनैव दर्शयन् माषशब्दार्थं वक्तुं तदुपयुक्तं तावदाह ॥ काकणिकेति । काकणिकविंशशब्दौ मानविशेषवाचकौ । तं काकणिकाचतुष्कम् । तैः कृष्णलैः । तु शब्दोऽवधारणे । माषशब्दोऽपि मानविशेषपरः । अनेन मूले माषशब्द उक्तार्थः । तु शब्दोऽव-धारणे । माषाणां चतुष्टयं यस्य स तथोक्तं तस्मिन् । सुवर्ण इति शेषः । चतुरङ्गलदीर्घे चतुरङ्गुलसमविस्तारदीर्घदण्डाकारेण कृते सति परिणाहेन तद्दंडविस्तारेण द्वारं यावत्तावद्विधीयते । नाडीपात्रस्य नाडीज्ञापकपात्रस्य । अनेनोन्मीयते नाड्यनेनेत्युन्मानशब्दार्थो दर्शित इति ज्ञेयम् । द्वारमिति शेषः । अनेन चतुर्भिरित्यादेः छिद्रमित्यन्तस्य तात्पर्यमुक्तम् । कथं भूतस्य षट्दलस्य । षट्पलपरिमितिताम्रमयस्य । अनेनद्वादशार्धेत्यस्य । शुभे जले प्रस्थस्य प्रकर्षेण स्थितस्य । प्रस्थजल-पूर्तियोगस्येति वा । शुभशब्दार्थं सूचयंस्तद्व्यावर्त्यं दर्शयति ॥ भाराधिक्येनेति । क्षिप्रं पूर्तिर्भविष्यति नाडीपात्रस्य । प्रस्थजलेनेति शेषः । तथाच भाराधिक्यादिदोषशून्यत्वमेव जलस्य शुभत्वमिति भावः । एतादृशशुभजलप्राप्त्यै देशकालावाह ॥ तस्मादिति । तु च शब्दाववधारणे । न समं भवेत् ।

उक्तरीत्या नाडीपात्रस्य प्रस्थजलपानं नाडीकालेन समं न भवेदित्यर्थः । प्रयागोदकालाभे-नाडीशुद्धिप्रकारं प्रमाणेनाह ॥ निर्मलेनेति । भाराधिक्यादिदोषशून्येनेत्यर्थः । सूर्यस्यांशवो यस्मिंस्तत्सूर्यांशुस्तद्वारि च । अतएव समोष्णेन । भावप्रधानो निर्देशः । शैत्यसमोष्णेन ॥ तथाचायं श्लोकार्थः ॥ उन्मीयतेऽनेनेत्युन्मानं पात्रं द्वादशार्धपलं षट्पलपरिमितं ताम्रमयं तच्च तदुन्मानं च । चतुर्भिः स्वर्णमाषैश्चतुरङ्गुलैश्चतुरङ्गुलविस्तारदण्डाकारेण परिणितैश्चतुरङ्गुलविस्तारपरिमितदैर्ध्येण माषचतुष्कस्वर्णनिर्मितदण्डेनेति यावत् । कृतं छिद्रं यस्य तत् । पात्रं यावद्यावता कालेन प्रस्थं प्रस्थपरिमितं जलं पिबेत् । तेन जलेन पूरितः सन्निमज्जति । तावान्कालः । नाडिकेति शेषः । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं पूर्तिरल्पत्वे च विलम्बेनात उभयोर्नियम उक्तः ॥ ९ ॥

**यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ।**
**पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥**

**तात्पर्यम्– यत्रोभयोः स शब्दः स्यात्तत्र द्विवचनेऽप्युभ' इत्यभिधानम् ॥ १० ॥**

**प्रकाशिका–** अहनी अहोरात्रे । अत्र द्विवचनेनैव विवक्षितोभयलाभे पुनरुभे इति व्यर्थमि-त्याशङ्कां तत्सार्थक्याभिधायकप्रमाणेनैव परिहरति ॥ यत्रेति । यत्र वाक्ये उभयोः । विजातीययोरिति शेषः । स शब्द एक एव शब्दः प्रयुक्तः स्यात् । तत्र द्विवचनेऽपि द्विवचनप्रयुक्तेऽपि विजातीयद्व-यग्रहणायोभे इति पुनः प्रयोक्तव्यमेवेत्यर्थः । अन्यथा सजातीयद्वयग्रहणमात्रेण द्विवचनपर्य-वसानेऽपेक्षितस्य विजातीयद्वयस्य बोधो न स्यादिति भावः ॥ १० ॥

**तयोः समुच्चये मासः पितॄणां तदहर्निशम् ।**
**द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥ ११ ॥**

**प्रकाशिका–** विधेयलिङ्गापेक्षया तदित्युक्तम् । तन्मनुष्यमासः पितॄणामहर्निशमहोरात्रौ तौ । द्वौ मासौ ऋतुः । षण्मासोऽयनम् । तत्तु दक्षिणं चोत्तरमिति द्विविधमित्यर्थः । दिवीत्यस्योत्त-रत्रान्वयः ॥ ११ ॥

**अयने अहनी प्राहुर्वत्सरो द्वादश स्मृतः ।**
**संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥**

**प्रकाशिका–** दिवि स्वर्गे देवानामयने द्वेऽहनी अहोरात्रे । रात्रिरपि तेषामहस्तुल्येति ज्ञापनाय उभे इति नोक्तम् । द्वादशमनुष्यमासा एको वत्सर इत्यर्थः । परमुत्तमम् ॥ १२ ॥

**ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ।**
**संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥ १३ ॥**

**प्रकाशिका–** आदित्यादि ज्योतिश्चक्रम् । परमाण्वादिकालो वा । स्वपरिभ्रमणेनैव नृणामायुः प्रवर्तयतीत्यत आह ॥ ग्रहेति । ग्रहाः सूर्यादयः । ऋक्षाण्यश्विन्यादीनि । तारा ध्रुवाद्याः । ग्रहनक्षत्रताराणां चक्रम् । चंक्रमणाच्चक्रनामकं मण्डलं तत्र स्थितः । परमाण्वादिना संवत्सरावसानेन कालेन सह जगन्मनुष्यादिरूपं पर्येति सततं गच्छति । हरिरेव सूर्यादीनां मण्डलेषु स्थित्वा परमाण्वादिकालविशेषान्सृष्ट्वा तन्नियामकेन तत्तन्नामकेन स्वरूपविशेषेण सह मनुष्याद्यायुः प्रवर्तयति न सूर्यादय एव तेषामस्वतन्त्रत्वादिति भावः । अनिमिष शब्दव्याख्यानमुत्तरत्र भविष्यति । विभुः समर्थः । अनेन ग्रहादीनामस्वातन्त्र्यं सूचयति ॥ १३ ॥

**संवत्सरः परिवत्सर इडावत्सर एव च ।**
**अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥**

**तात्पर्यम्– 'इडावत्सरनामाऽसौ नक्षत्रद्वादशे स्थितः । तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः । वत्सरो यः स्थितस्त्वह्नां षष्ट्युत्तरशतत्रये । गुर्वावर्ते द्वादशांशे यः स्थः स परिवत्सरः । सौरद्वादशके मासे यः स्थः संवत्सरो हरिः । एवं स कालनामाऽपि कालस्थः परमेश्वर' इति ब्रह्मतर्के ॥ 'सर्वदा दर्शनात्तस्यानिमिषत्वं विदुर्बुधाः । सततं गमनाद्वापि कालस्थस्य महात्मन' इति च ॥ १४ ॥**

**प्रकाशिका–** उक्तरीत्या कालविशेषवाचकपरमाण्वादिशब्दवाच्यो हरिरेवेत्यत्र युक्तिमाह ॥ संवत्सर इति । भाष्यते । वेदादाविति शेषः । तथाच हरिः परमाण्वादिकालविशेषवाचकशब्दाभिदेयस्तत्समानयोगक्षेमं च संवत्सरादिशब्दवाच्यतया श्रुत्यादिसिद्धत्वादिति युक्तिरुक्ता भवतीति ज्ञातव्यम् । अत्र संवत्सरादिशब्दानामर्थविशेषं भगवत्परं प्रमाणेनैव दर्शयति ॥ इडेति । असौ हरिरश्विन्यादिसप्तविंशतिनक्षत्राणां द्वादशवारमावृत्तौ यावान्कालस्तस्मिन्काले नियामकत्वेन स्थित इत्यर्थः । तिथीनां शुक्लप्रतिपदमारभ्यामावास्यादिपर्यन्तानां त्रिंशत्संख्याकानां द्वादशवारमावृत्तमावृत्तिर्यस्मिंस्तद् द्वादशावृत्तस्तस्मिन्काले । स्थित इत्यनुवर्तते । अनुवत्सरोऽनुवत्सरनामा । अन्हां षष्ट्युत्तरशतत्रयेति । यं कञ्चनदिवसमारभ्य गणनायां यावतां कालेनान्हां षष्ट्युत्तरत्रयं भवति तावति काले स्थित इत्यर्थः । स्थितीनां द्वादशावृत्ते तु वृद्धिह्राससम्भवेनान्हां षष्ट्युत्तरशतत्रयत्वनियमः । अतोऽस्य ततो भेद इति ज्ञातव्यम् । गुरोर्बृहस्पतेर्मेषादिराशिष्वावर्त्त आवृत्तिर्यस्मिन्द्वादशवत्सरात्मके काले स गुर्वावृत्तो यस्मात् द्वादशे द्वादशमेंऽशे भागे स्थः स्थितः । स परिवत्सपरिवत्सरस्तन्नामा ।

सौरेः सूर्यसम्बन्धिनि द्वादशके संक्रमणभेदेन द्वादशसंख्याके मासे माससमुदाये संवत्सरस्तन्नामा। एवं कालविशेषवाचकशब्दाभिधेयत्वमुक्त्वेदानीं कालशब्दाभिधेयत्वमाह ॥ एवमिति । अनेनैवं कालोऽप्यनुमित इत्यादौ ये कालशब्दास्तेषां तात्पर्यमुक्तमेवेत्यवगन्तव्यम् । इदानीमनिमिषपद-मप्रतीत्या प्रमाणेनैव व्याख्याति ॥ सर्वदेति । महात्मनस्तस्य हरेरनिमिषत्वमनिमिषशब्दवाच्यत्वं सर्वदा दर्शनात् निमित्तात् । चक्षुर्निमीलनं निमिष इत्युच्यते । स तस्य न विद्यत इत्युक्तेऽनिमिषशब्दो नार्थात्सर्वदा दर्शनमेवायातीति भावः । वाशब्दस्तुशब्दार्थः । कालस्थस्य तस्य सन्ततं गमनाद्वा निमित्तादित्यर्थः । मिष गताविति धातोः । मिषो गमनं निकृष्टो मिषो निमिषो न विद्यते निमिषो यस्येति विग्रहे सन्ततं गमनं लभ्यते । तच्च कालस्य तदन्तस्थस्य हरेश्चास्तीति प्रदर्शनाय कालस्थस्ये-त्युक्तम् । अनेन यतः पर्येत्यतोऽनिमिषोऽनिमिषशब्दवाच्य इति मूलयोजनां सूचयति । यद्यपीदं पदं पूर्वश्लोकस्थं पूर्वमेव व्याख्येयं तथाप्युत्तरश्लोकेऽपि कर्तृसमर्पकतयाऽस्य सम्बन्धोस्तीति ज्ञापनाय तद्व्याख्यानानन्तरं व्याख्यानमिति ज्ञातव्यम् ॥ १४ ॥

**यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या**
**पुंसोऽभ्रमाय दिवि धावति भूतभेदः ।**
**कालाख्यया गुणमयीं क्रतुभिर्वितन्वं-**
**स्तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥**

**तात्पर्यम्– अभ्रमाय भूतभेदकः । क्रतुभिः स्वप्रज्ञाभिः । 'भूतानां ज्यैष्ट्यकानिष्ट्यज्ञप्त्यै यज्ञादिवृत्तये । बोधयन्सृज्यशक्तिं च कालस्थो वर्तते हरिरि'ति तन्त्रप्रकाशिकायाम् ॥ १५ ॥**

**प्रकाशिका–** एतादृशकालनियामको हरिः परमोपकारित्वात्सर्वैः पूजनीय इत्याशयेनाह ॥ य इति । अत्र भ्रमायेति पदच्छेदेऽर्थासम्भवमालोच्याकारप्रश्लेषेण छेदं दर्शयति ॥ अभ्रमायेति । भूतभेद इत्यत्र षष्ठीतत्पुरुषो बाधितार्थकः । अतो भूतानां भेदो यस्मादिति व्यधिकरणो बहुव्रीहिरित्याशयेन तत्तात्पर्यमाह ॥ भूतभेदक इति । क्रतुभिरित्यस्य यज्ञार्थत्वेऽसङ्गतिरतोऽत्र विवक्षितमर्थं दर्शयति ॥ क्रतुभिरिति । प्रज्ञानामसु पाठादिति भावः । भूतानां भेदस्य स्वत एव सिद्धत्वात्कथमस्य भूतभेद-कत्वं कथं चाभ्रमायेत्यस्य प्रयोजनत्वमित्यतः श्लोकतात्पर्यं प्रमाणेनैवाह ॥ भूतानामिति । तथाच भेदपदं ज्येष्ठ्यादिरूपधर्मपरम् । तेन तज्ज्ञानमुपलक्षणीयमिति भावः । अभ्रमायेत्यस्य तात्पर्यम् ॥ यज्ञादिवृत्तय इति । आदिपदेन प्रातरादिकालविहितकर्मान्तरग्रहणम् । कालपरिज्ञानाभावे सङ्गवादि-कालेषु मध्यन्दिनत्वादिभ्रमप्रसङ्गेन यज्ञादिप्रवृत्तिः सम्यङ्न भवतीति भावः । सृज्यानामङ्कुरादीनां प्रतिदिनं वर्धने शक्तिं सृज्यविषये कारणशक्तिमिति वा बोधयन् । अनेन सृज्यशक्तिमुच्छ्वसयन्नि-

त्येतदुक्तार्थं कालस्थ इत्यनेन वत्सरपदमुक्तार्थम् । वर्तत इत्यनेन वर्तत इत्यध्याहार्यमिति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ यः कालान्तर्यामी हरिः सृज्यशक्तिमुरुधाऽनेकप्रकारेणोच्छ्वसयन् उद्बोधयन्पुंसो विहितकर्मकर्तुरभ्रमाय यज्ञादिकर्माङ्गकालभ्रमाभावाय । यज्ञादिप्रवृत्तय इति यावत् । दिव्यन्तरिक्षे धावति । ज्योतिश्चक्रं गत इति शेषः । प्रयोजनान्तरमाह । भूतानां प्राणिनां भेदो ज्यैष्ठ्यकानिष्ठ्यभेदज्ञाप्तिर्यस्मादिति । कालाख्यया स्वशक्त्येत्यन्वयः । स्वरूपशक्त्या सहकारिशक्त्या चेत्यर्थः । प्रयोजनान्तरमाह ॥ गुणमयीमिति । क्रतुभिः स्वप्रज्ञाभिः सत्त्वादिमयीं प्रकृतिं वितन्वन्विस्तारयन् सृष्टिकाले रजोमयीं स्थितिकाले सत्त्वमयीं संहारकाले तमोमयीं विस्तारयन्यो वर्तते तस्मै संवत्सरपञ्चकस्थाय तन्नाम्ने हरये बलिं पूजां हरत कुरुतेति ॥ १५ ॥

**विदुर उवाच–**

**पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ।**
**परेषां गतिमाचक्ष्व ये स्युः कल्पाद् बहिर्विदः ॥ १६ ॥**

**प्रकाशिका–** इदं वर्षशतगणितमायुर्मानं नृणामितरेषां दिनमानादिकं च कल्प्यते प्रतिदिनं सृज्यत इति कल्पास्त्रैलोक्यं तस्माद्बहिर्महरादिषु ये विदो ज्ञानिनः स्युस्तेषां परेषामुत्तमानां गतिं स्थितिं दिनमानादिरूपामाचक्ष्व ॥ १६ ॥

**भगवान् वेद कालस्य गतिं भगवतो ननु ।**
**विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥ १७ ॥**

**प्रकाशिका–** मैत्रेयस्य वक्तव्यार्थे ज्ञानमस्तीत्याह ॥ भगवानिति । कालस्य कालान्तर्यामिणो गतिं स्थितिं मानं वा कुतो यस्माद्धीरा भवदादयो योगराद्धेन योगसिद्धेन चक्षुषा । ज्ञानदृष्ट्येति यावत् । विश्वं सर्वं विचक्षते विशेषेण पश्यन्ति तस्मादित्यर्थः ॥ १७ ॥

**मैत्रेय उवाच–**

**कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।**
**दिव्यैर्द्वादशसाहस्रैः सावधानं निरूपितम् ॥ १८ ॥**

**प्रकाशिका–** त्रैलोक्याद्बहिः स्थितानां दिनादिमानं वक्ष्यन्नादौ तावत्कृतादिचतुर्युगानां तत्संध्याकालानां च परिमाणं वक्ति ॥ कृतमिति । दिव्यैर्देवानां विद्यमानैः । निरूपितं विद्वद्भिः ॥ १८ ॥

**चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।**
**संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ १९ ॥**

**प्रकाशिका–** द्वादशसहस्रवर्षाणां चतुर्षु युगेषु त्रिसहस्ररूपैश्चतुर्भिर्भागैः । किं साम्येन निरूपणं नेत्याह । चत्वारीति । कृतयुगे चत्वारि सहस्राणि त्रेतायुगे त्रीणि द्वापरे द्वे सहस्रे कलियुगे त्वेकं सहस्रमिति दशसाहस्र्या विनियोगः । अवशिष्टसहस्रद्वये विंशतिशतानि भवन्ति । तेषां चतुर्युगसंध्यांशयोर्विनियोगः स कथमित्यपेक्षायामाह ॥ द्विगुणानि शतानि चेति । कलियुगपूर्वापरसन्धिमारभ्य द्विगुणानि ज्ञेयानीत्यर्थः । तथाहि । कलियुगपूर्वापरसन्ध्ययोरेकैकं शतं द्वापरपूर्वापरसंध्ययोर्द्वे शते त्रेतायुगपूर्वापरसंध्ययोस्त्रीणि त्रीणि शतानि । कृतयुगपूर्वापरसंध्ययोश्चत्वारिश्चत्वारीति ॥ १९ ॥

**सन्ध्यांशयोरन्तरेण यः कालः शतसंख्ययोः ।**
**तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ २० ॥**

**प्रकाशिका–** एवं तर्हि कृतादियुगत्वं कियन्तः कालस्येत्यपेक्षायामाह ॥ संध्यांशयोरिति । संध्यासंध्यांशयोरन्तस्थोयः काल इत्यन्वयः । कृतादियुगपूर्वापरकोटिसम्बन्धः कालः संध्यातदुत्तरकालविशेषः संध्यांश इति ज्ञातव्यम् । शतसंख्ययोरुक्तक्रमेणैकत्वादिविशेषितशतसंख्ययोः । धर्मो युगधर्मः ॥ २० ॥

**धर्मश्चतुष्पान्मनुजान् कृते समनुवर्तते ।**
**स एवान्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥**

**प्रकाशिका–** युगधर्मस्थितिं दर्शयति ॥ धर्मश्चतुष्पादिति । धर्मः सत्यादिरूपश्चतुष्पात्सम्पूर्णः । मनुजानुद्दिश्य स एवान्येषु त्रेतादियुगेषु । अधर्मेणासत्यादिरूपेण हेतुना प्रतियुगं पादेन वर्धताव्येति क्रमेण ह्रसति ॥ २१ ॥

**त्रैलोक्याद् युगसाहस्रं बहिराब्रह्मणो दिनम् ।**
**तावत्येव निशा तात यन्निमीलति विश्वसृक् ॥ २२ ॥**

**प्रकाशिका–** एवमुपयुक्तमुक्त्वेदानीं परेषां गतिमाचक्ष्वेति पृष्टस्योत्तरमाह ॥ त्रैलोक्यादिति । त्रैलोक्याद्बहिर्महर्लोकमारभ्य ब्रह्मणः सत्यलोकपर्यन्तं युगसाहस्रं चतुर्युगसाहस्रं दिनमुच्यत इत्यर्थः । तावत्येव चतुर्युगसहस्रस्यैव यद्यस्यां विश्वसृक् ब्रह्मा निमीलति चक्षुर्निमीलनं करोति । स्वपितीति यावत् ॥ २२ ॥

**निशावसान आरब्धो लोककल्पोऽनुवर्तते ।**
**यावद् दिनं भगवतो मनून् भुञ्जश्चतुर्दश ॥ २३ ॥**

**तात्पर्यम्– दिनस्थो भगवान्भोक्ता ॥ २३ ॥**

**प्रकाशिका–** तत्र दिनस्थितिमाह ॥ निशावसान इति सार्धैश्चतुर्भिः । लोकानां भूरादीनां जनानां कल्पः सृष्ट्यादिरूपस्तावदनुवर्तते यावद्भगवतो ब्रह्मणो दिनं स्यात् । कथं भूतं दिनम् । चतुर्दशमनून् भुंजन् भुञ्जानम् । नन्वत्र कथं जडस्य दिनस्य भोक्तृत्वमुच्यत इत्यतोऽभिप्रायमाह ॥ दिनस्थ इति । भगवदभिप्रायेण भोगोक्तिः । अत एव भुञ्जन्निति पुल्लिंगप्रयोग इति भावः । अत्र भोगोऽनुभवः प्राप्तिर्वा ॥ २३ ॥

**स्वं स्वं कालं मनुर्भुङ्क्ते साधिका ह्येकसप्ततिः ।**
**मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः ।**
**भवन्ति चैते युगपत् सुरेशाश्चानु ये च तान् ॥ २४ ॥**

**तात्पर्यम्– 'युगैकसप्ततेरूर्ध्वं सार्धाष्टादशलक्षकम् । वत्सराणां मनोर्भुक्तिः सहस्रंचतुरुत्तरम् । शतानां प्रलयश्चैव पञ्चोत्तरमथापि च । आद्येषु षट्सु प्रथमे द्विसहस्रं प्रकीर्तितम् । वत्सराणां मनोरन्तरेवमिन्द्रादीनां भवेदि'ति महावाराहे ॥ २४ ॥**

**प्रकाशिका–** यद्यप्येकस्मिन्दिने चतुर्दशमनवो भवन्ति तर्हि ते किं युगपदेन दिनं भुञ्जते । क्रमतश्चेदेकैकस्य कियान्काल इत्यपेक्षायामाह ॥ स्वं स्वमिति । तथा च न युगपद्भोग इति भावः । द्वितीयस्योत्तरमाह ॥ साधिकेति । महायुगानां किञ्चिदधिकैकसप्ततिर्मनुकाल इत्यर्थः । अत्राधिक्यं कियता कालेनेत्यपेक्षायां श्लोकतात्पर्यं प्रमाणेनैवाह ॥ युगैकेति । महायुगैकसप्ततेरित्यर्थः । सार्धाष्टादशलक्षकमित्यनेन साधिकेत्येतद्व्याख्यातमिति ज्ञातव्यम् । मनुप्रलयकालोऽपि साधिकेत्य-त्राधिकशब्देन विवक्षित इत्याशयेन मनूनां प्रलयकालपरिमाणमाह ॥ सहस्रमिति । शतानां चतुरुत्तरं वत्सराणां सहस्रमेव मनोः प्रलयकालश्चेत्यन्वयः । शतचतदुष्टयेनाधिकं वत्सरसहस्रमेकैकस्य मनोः प्रलयकाल इत्यर्थः । आद्येषु षट्सूक्तस्यापवादमाह ॥ पञ्चोत्तरमिति । शतानां पञ्चोत्तरं पञ्चशतोत्तरं वत्सराणां सहस्रमित्यर्थः । अथापि चेति निपातसमुदायः । त्रिशतोत्तरमिति पक्षान्तरत्वद्योतकः । तत्रापि प्रथमेऽपवादमाह ॥ प्रथम इति । स्वायम्भुवमन्वन्तरे वत्सराणां द्विसहस्रं मनोरन्तर्मनुप्रलयकाल इति प्रकीर्तितम् । शास्त्र इति शेषः । तथाचाद्येषु षठ्सु प्रथमे द्विसहस्रं द्वितीये पञ्चशतोत्तरं सहस्रं तृतीये चतुःशतोत्तरं शिष्टेषु त्रिशतोत्तरमिति ज्ञेयम् । मनुषूक्तप्रकारं इन्द्रादावतिदिशति ॥ एवमिति ।

इन्द्रादीनाम् । आदिपदम् ऋष्यादिसङ्ग्रहार्थम् । भवेत् । भुक्तिकालः प्रलयकालश्चेति शेषः । अनेन ऋषयः सुरा इत्यादिकमुक्तार्थम् । मन्वन्तरेष्वधिकृतानाह ॥ मन्वन्तरेष्विति । तद्वंश्या मनुवंशभवा राजानः क्रमेण भवन्ति । मनवो ऋषयः सुराः सुरेशा इन्द्रश्च । तान् सुरेशान् । अनुचरतो ये ये गन्धर्वादयस्तेऽपीत्येते युगपदेन भवन्तीत्यर्थः ॥ २४ ॥

**एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः ।**
**तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः ॥ २५ ॥**

**प्रकाशिका–** ब्राह्मो ब्रह्मकृतः । त्रैलोक्यं वर्तयतीति त्रैलोक्यवर्तनः । सम्भव उत्पत्तिः ॥ २५ ॥

**मन्वन्तरेषु भगवान् बिभ्रत् सत्त्वं स्वमूर्तिभिः ।**
**मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥**

**प्रकाशिका–** मन्वादीनां जगत्पालकत्वममुख्यं मुख्यतो भगवानेवैतेषु स्थित्वा जगत्पालयतीत्याह ॥ मन्वन्तरेष्विति । सत्त्वं सत्त्वगुणं बिभ्रत्कार्योन्मुखं कुर्वन्स्वमूर्तिभिः स्वस्य मूर्तिर्येषु तैः । स्वरूपविशेषावेशवद्भिः । स्वस्य प्रतिमाभूतैरिति वा । यज्ञतापसादिस्वमूर्तिभिर्मन्वादिभिर्द्वारभूतैरिति वा । उदितपौरुष आविष्कृतपराक्रमः ॥ २६ ॥

**तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ।**
**कालेनानुगतः शेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥**

**तात्पर्यम्– 'ब्रह्मणा कालनाम्ना तु सह शेते हरिर्निशी'ति ब्राह्मे ॥ २७ ॥**

**प्रकाशिका–** रात्रिस्थितिमाह पञ्चभिः तमोमात्रां तमोगुणम् । मात्रशब्दस्य गुणपरत्वेनान्यत्र व्याख्यातत्वात् । उपादाय कार्योन्मुखीकृत्य । प्रतिसंरुद्धः प्रत्याहतो विक्रमः पालनानुकूलो व्यापारो यस्य स तथोक्तः । दिनात्यये रात्रौ शेषे प्रलयजलगतानन्तभोगपर्यङ्के तूष्णीमास्ते शेत इत्यर्थः । अत्र कालेनानुगत इत्यर्धस्यार्थं प्रमाणेनैव दर्शयति ॥ ब्रह्मणेति । तुशब्दः प्रसिद्धकालव्यावृत्त्यर्थः । अनेन कालेनेत्येतदुक्तार्थम् । अनुगत इत्यस्यार्थः ॥ सहेति । तूष्णीमास्त इत्यस्य तात्पर्यम् ॥ शेत इति । पूर्वश्लोकस्थं भगवानिति पदमत्रानुवर्तनीयमित्याशयेन हरिरित्युक्तम् । दिनात्यय इत्यस्यार्थः ॥ निशीति ॥ २७ ॥

**तमेवानुविलीयन्ते लोका भूरादयस्त्रयः ।**
**निशायामनुवृत्तायां निर्मुक्तशशिभास्करे ॥ २८ ॥**

**प्रकाशिका–** तमेव प्रसुप्तमेवानुसृत्य । तत्संकल्पानुसारेणेति यावत् । शशिभास्करयोर्निर्मुक्तः निर्मोकोऽभावः । निर्मुक्तशशिभास्करस्तस्मिंश्च सति । अन्धकारे सतीति यावत् । परनिपातश्छान्दसः ॥ २८ ॥

**त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना ।**
**यान्त्यूष्मणा महर्लोकाज्जनं ऋभ्वादयोऽर्दिताः ॥ २९ ॥**

**प्रकाशिका–** विलीयन्त इत्येतदेव स्पष्टयन् तदा महर्लोकवासिन ऊष्मणौष्ण्येनार्दिताः सन्तो जनं जनलोकम् ॥ २९ ॥

**तावत् त्रिभुवनं सद्यः कल्पान्ते विषसिन्धवः ।**
**प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः ॥ ३० ॥**

**प्रकाशिका–** विषसिन्धवः सङ्कर्षणमुखगतविषमिश्राः सप्तसमुद्रा उत्कट उत्कृष्ट आटोपो वेगो यस्य स उत्कटाटोपोऽत एव चण्डः क्रूरो वातस्तेनेरिता उज्जृंभिता ऊर्मयो येषु ते तथोक्ताः ॥ ३० ॥

**अन्तः स तस्मिन् सलिल आस्तेऽनन्तासनो हरिः ।**
**योगनिद्रामीलिताक्षः स्तूयमानो जनालयैः ॥ ३१ ॥**

**प्रकाशिका–** जनालयैर्महर्लोकादागतैरन्यैश्च ॥ ३१ ॥

**एवंविधैरहोरात्रैः कालगत्योपलक्षितैः ।**
**अपेक्षितमिवास्यापि परमायुर्वयःशतम् ॥ ३२ ॥**

**तात्पर्यम्– अस्य ब्रह्मणः । ब्रह्मणो दिनमित्युक्तत्वात् ॥ ३२ ॥**

**प्रकाशिका–** एवं ब्रह्माहोरात्रयोः स्थितिमुक्त्वेदानीं तदायुःप्रमाणं दर्शयति ॥ एवंविधैरिति । अतिस्थूलप्रमाणैरित्यर्थः । उपलक्षितैर्ज्ञातैः । अत्रास्येत्यनेन प्रकृतस्य हरेः परामर्शे परमायुर्वयः शतमित्येतद्बाधितार्थकं स्यात् । हरेरायुर्मानाभावस्य वक्ष्यमाणत्वादतस्तत्परामृश्यं दर्शयति ॥ अस्य ब्रह्मण इति । नन्वप्रकृतस्य ब्रह्मणः कथं परामर्श इत्यत आह ॥ ब्रह्मण इति । बहिराब्रह्मणो दिनमिति पूर्वमुक्तत्वाद्ब्रह्मापि प्रकृत एवेति भावः । यद्वा । यावद्दिनं भगवत इत्यत्र भगवतो ब्रह्मणो दिनमित्युक्तत्वान्न तस्याप्रकृतत्वमित्यर्थः । वयःशतमिति मूलम् । वर्षशतरूपं यत्परनामकमायुस्तदप्यस्य ब्रह्मणोऽपेक्षितमिव हरिसेवोपयोगित्वादपेक्षितम् । वस्तुतः परमविरक्तस्यानपेक्षितमेवेति द्योतनायेवशब्दः ॥ ३२ ॥

**यदर्धमायुषस्तस्य परार्धमभिधीयते ।**
**पूर्वः परार्धोऽपक्रान्तो ह्यपरार्धोऽद्य वर्तते ॥ ३३ ॥**

**प्रकाशिका–** यदर्धमायुष इत्यारभ्य चतुर्भिर्वस्तुस्थितिकथनम् ॥ ३३ ॥

**पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ।**
**कल्पो यत्राभवद् ब्रह्मा शब्दब्रह्मेति यं विदुः ॥ ३४ ॥**

**प्रकाशिका-** पूर्वस्य परार्धस्यादौ । ब्रह्मा विराट्संज्ञः । ग्रन्थान्तरविरोधपरिहारायाह ॥ शब्देति । यं ब्रह्माणं शब्दब्रह्मेति वेदवेद्यमिति विदुर्ज्ञानिनः ॥ ३४ ॥

**तस्यैव चान्ते कल्पोऽभूद् यं पाद्ममभिचक्षते ।**
**यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥ ३५ ॥**

**प्रकाशिका–** पूर्वापरार्धान्ते च जातं कल्पमाह ॥ तस्यैवेति । पूर्वापरार्धस्यैवेत्यर्थः । अन्ते चेत्यन्वयः । पाद्मत्वे हेतुमाह ॥ यदिति । यद्यस्मिन्कल्पे । यस्मादिति वा ॥ ३५ ॥

**अयं तु कथितः कल्पो द्वितीयस्यापि भारत ।**
**वाराह इति विख्यातो यत्रासीत् सूकरो हरिः ॥ ३६ ॥**

**प्रकाशिका–** द्वितीयपरार्धस्यार्धकल्पमाह ॥ अयंत्विति । द्वितीयपरार्धस्यायं वाराह इति व्याख्यातः कल्पः । तुशब्दस्तस्याद्यत्वरूपविशेषसूचकः । आद्यत्वेन कथित इत्यर्थः । वाराहत्वे निमित्तमाह ॥ यत्रेति । प्रथममितिशेषः ॥ ३६ ॥

**कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।**
**अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः ॥ ३७ ॥**

**तात्पर्यम्– 'नायुर्मानं भगवतः कस्मिन्रूपेऽपि विद्यते । अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्यय' इति हरिवंशेषु ॥ ३७ ॥**

**प्रकाशिका–** एवं भगवत्सृष्टानां कालकृतमायुर्मानमुक्त्वेदानीं भगवतो यत्त्रिविधानन्त्यरूपं परम-महत्त्वमुक्तं तदुपपादयन्नादौ तावत्कालानन्त्योपपादनाय तस्य कालकृतमायुर्मानं नास्तीत्याह ॥ काल इति । अत्र यत्रासीत्सूकर इति वराहरूपस्य कालकृतपरिच्छेदश्रवणात् । मूलरूप एवायुर्मानाभाव उच्यत इति प्रतीतिवारणाय श्लोकतात्पर्यं प्रमाणेनैवाह ॥ नायुर्मानं इति । कस्मिन्रूपेऽपीत्यनेन मूले

सर्वेषु रूपेष्विति पूरणीयमिति सूचयति । अनादित्वादित्यादिना द्वितीयार्धतात्पर्यमुक्तम् । अव्याकृतस्येत्यस्यार्थः ॥ अमध्यत्वादिति । पञ्चमीप्रयोगेनाव्याकृतस्येत्यादिकं हेतुगर्भमिति दर्शयति । आयुर्मानाभावात्सः सर्वरूपोऽपि भगवान् अव्ययः कालपरिच्छेदशून्य इत्युच्यत इत्यर्थः । तथा चासीदित्यादिप्रयोगो लोकदर्शनमपेक्ष्योपपादनीय इति भावः ॥ ततश्चायं मूलार्थः ॥ निमेषस्त्रिलव इत्युपचर्यते । न मुख्यवृत्त्योच्यते । हरेरिति शेषः । मुख्यत्वाभावे निमित्तमाह ॥ अव्याकृतस्येति । व्याकृतं विकारानन्तरं विद्यमानं मध्यावस्थं न व्याकृतमव्याकृतं तस्येत्यर्थः । हेतुगर्भाणीमानि विशेषणानि । तथाच मध्यावस्थाशून्यत्वादन्तशून्यत्वादादिशून्यत्वादिति हेतुत्रयमायुर्मानाभावे उक्तमिति ज्ञातव्यम् । जगदात्मनो जगदन्तर्यामिणः सर्वेष्वपि रूपेषु निमेष उपचर्यत इति संबन्धः । हि शब्द उक्तप्रमाणप्रसिद्धिद्योतकः ॥ ३७ ॥

**कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईरितः ।**
**नैवेष्टे स प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥ ३८ ॥**

**तात्पर्यम्– 'यमः कालो मानुषाणां तस्य कालः सुदर्शनः । तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गाऽपि तस्य तु । सा ब्रह्मप्रलये देवी वर्तते चक्ररूपिणी । संहरन्ती सदा लोकान्सैव ब्रह्मादिषु स्थिता । तस्या नियामको विष्णुः परः कालः स उच्यते । कालाभिमानिनी सैव प्रभुर्न जगदीशितुः । तस्याः प्रभुः स एवेशो विष्णुः सर्वेश्वरेश्वर' इति च ॥ ३८ ॥**

**प्रकाशिका–** एवं कालकृतमायुर्मानं हरेर्नास्तीत्युक्त्वेदानीं तदधीनत्वमपि तस्य नास्तीत्याह ॥ कालोऽयमिति । अत्र कालशब्दवाच्यो न जडः कालः । तस्येशितृत्वासंभवात् । नापीश्वरः । तस्य भूम्न इति पृथगुक्तत्वेनार्थासंभवात् । नापि यमादिः । तत्र धाममानिनामित्यसंभवात् । अतोऽत्र विवक्षितं कालं ज्ञापयितुं श्लोकतात्पर्यं प्रमाणेनैवाह ॥ यम इति । सुदर्शनचक्राभिमानी कामः । तुशब्दोऽवधारणे । तस्यापि ब्रह्मणोऽपि दुर्गैव कालः संहारकर्त्री । एतदेव दर्शयति ॥ सेति । ग्रन्थान्तरविरोधपरिहाराय चक्ररूपिणीत्युक्तम् । सैव ब्रह्मादिसंस्थिता । प्रेरणायेति शेषः । अनेन धाममानिनामीश्वर इत्येतदुक्ततात्पर्यम् । प्रभुरित्यस्य तात्पर्यम् तस्या नियामक इति । स कालो भूम्नो नैवेष्ट इत्यस्य तात्पर्यम् ॥ कालाभिमानिनीति । निगमयति ॥ तस्या इति । अनेन मूले दुर्गैव कालाभिमानिनी काल शब्दवाच्यतया ग्राह्या । अन्यथा वाक्यार्थासंभवादिति ज्ञापितं भवति ॥ ततश्चैवं श्लोकयोजना ॥ योऽयं कालः कालाभिमानिनी सर्वसंहर्त्री दुर्गेरिता पूर्वं तव कथितोऽस्यापि पूर्वग्रन्थे वा दार्ष्टान्तिकान्तर्भूततयाऽभिप्रेतत्वात् । यश्च धाममानिनां लोकाभिमानिनामीश्वरः सः दुर्गा भूम्नः पूर्णगुणस्य हरेर्नैवेष्टे प्रेरणाय न समर्था । यतः स भूमैव तस्याः प्रभुरिति मूलं योज्यमिति भावः ॥ ३८ ॥

विकारैः षोडशैर्युक्तो विशेषादिभिरावृतः ।
अण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ॥ ३९ ॥

दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ।
लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः ॥ ४० ॥

**तात्पर्यम्–** 'दशेन्द्रियाणि च मनो भूतान्यण्डगतानि तु । विकारा इति विज्ञेया भूताहंमहतः पर' इति च ॥ 'पृथिवीं विशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मत्वाद्वृणोत्यण्डं द्विगुणा तु दशोत्तराः । अबादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृता' इति च । अन्तर्गताः शरीराणि । शरीराणां बहुत्वेन अतीतानागतैस्तथा । अस्यैव देवकायेषु प्रतिप्रति च दर्शनात् । विष्णुसामर्थ्य-तोऽण्डानां बहुत्वं नान्यथा भवेदि'ति ब्रह्मतर्के ॥ 'एकमण्डं बहुत्वेन प्रत्येकं रोमकूपगम् । ब्रह्माऽपश्यत्तथाऽऽत्मानं हरेस्तेषु पृथक्पृथगि'ति ब्रह्माण्डे ॥ 'बृहदण्डमभूदेकमि'ति च भारते ।
॥ ३९,४० ॥

**प्रकाशिका–** एवं कालकृतायुर्मानाभावेन कालानन्त्यमुपपाद्य तस्य देशानन्त्यमुपपादयति ॥ विकारैरिति । अत्र विकारशब्देन विशेषादिशब्देन च भूतादीनां ग्रहणेऽण्डकोशस्य तद्युक्तत्वं तदावृतत्वं चोच्यमानं विरुद्धमतस्तद्धटनाय प्रमाणमेव पठति ॥ दशेन्द्रियाणीति । तुशब्दोऽवधारणे । अण्डगतान्येवोपादानतयाऽण्डानुस्यूतान्येव । विकारा इति बहुवचनान्तेन शब्देन वाच्यतया विज्ञेयानि । भूताहंमहतो भूतानि चाहं च महांश्च भूताहंमहान्तः । सुपां सुलुगित्यादिना जसः शसादेशः । अतो महत इति द्वितीयाबहुवचनं साधु । परेऽनुपादानभूता ब्रह्माण्डाद्बहिरपि संतीत्यर्थः। तथा चोपादानतयाऽनुस्यूतैर्भूतादिभिर्युक्तत्वं बहिर्विद्यमानैरावृतत्वमतो न विरोध इति भावः । ननु विशेषादिभिरित्यत्र विशेषशब्दाभिधेयं किम् पृथिवी चेत्तस्यास्तच्छब्दवाच्यत्वे किं निमित्तम् । तस्या आदिपदेन गृहीताबादीनां च परिमाणं किम् । सममुत विषममिति शङ्कापरिहाराय प्रमाणमेव पठति ॥ पृथिवीति । शब्दादीनां गुणानां बहुत्वतः पञ्चत्वसङ्ख्यया सत्वादित्यर्थः । परान्वयेन सत्त्वादिपञ्चगुणाधारत्वात् । पृथिवी विशेषशब्दवाच्येति भावः । सा पृथिवी द्विगुणा । अण्डकटा-हापेक्षया द्विगुणासत्यण्डं वृणोत्यावृणोति । नन्वण्डस्यापि तथात्वे कथमावृतत्वमित्यत आह ॥ सूक्ष्मत्वादिति । अण्डकटाहस्येति शेषः । तथा चाण्डकटाहापेक्षया द्विगुणा पृथिवी । अतस्तस्या-स्तदावरकत्वं युक्तमिति भावः । यद्वा । असूक्ष्मत्वादिति पदच्छेदः । अण्डापेक्षयेति शेषः । अबादयः प्रकृत्यन्ताः । गुणत्रयान्तास्तु दशोत्तरा दशगुणितपरिमाणाः । अतस्तेषां युक्तं पूर्वापूर्वा-वरकत्वम् । ग्रन्थान्तरविरोधपरिहारायाह । अष्टप्रकृतय इति । यत्राष्टप्रकृतिभिरावृतत्वमुक्तं

तत्राप्यष्टप्रकृतिशब्देनोपपादनत्वनिमित्तेन विशेषादय एव प्रकृत्यन्ता विवक्षिताः । अतो न विरोध इति भावः ।। ततश्चायं श्लोकद्वयार्थः ।। विक्रीयन्त इति विकारा एकादशेन्द्रियपञ्चभूताख्यास्तैः षोडशैः षोडशसंख्याकैर्युक्तो विकृतः । विशिष्यत इति विशेषः । पृथिवी साऽऽदिर्येषां ते तथोक्तास्तैः । अतद्गुणसंविज्ञानत्वेन नाबादिभिर्बहिरपि विद्यमानैर्दशोत्तरोधिकैः पञ्चाशत्कोटिविस्तृतोऽयमण्डकोशो यत्र हरौ प्रविष्टः परमाणुवल्लक्ष्यते । न केवलमयमेक एवाण्डकोशः सावरणे हर्यंतर्गतः किं त्वन्येपीत्याह ।। लक्ष्यन्त इति । ब्रह्मणा दृश्यन्त इत्यर्थः । अनेन योगिप्रत्यक्षं प्रमाणमत्र दर्शयति । हि शब्दः प्रमाणप्रसिद्धिद्योतकः । अत्र युगपदेन ब्रह्माण्डबहुत्वमुक्तं तत्कथमित्यतस्तदुपपादयितुमपेक्षितं पूरयति ।। अन्तर्गता इति । अत्र शरीराणीति द्वितीयान्तपदमध्याहृतम् । तथा च शरीराण्यन्तर्गताः शरीराणामन्तः कोटिशो ह्यण्डराशयो गताः प्रविष्टा इति । विष्णुशरीरबहुत्वेन तद्गतानामण्डानां बहुत्वमित्युक्तं भवति । उक्तमर्थमर्थान्तरं च प्रतिपादयत्प्रमाणं पठति ।। शरीराणामिति । विष्णुशरीराणामित्यर्थः । बहुत्वेनाण्डानां बहुत्वमुच्यमानं भवेदित्यन्वयः । प्रकारान्तरमाह ।। अतीतानागतैरिति । अण्डानां बहुत्वं भवेदित्यन्वयः । तथाच मूलेऽतीतानागतं ब्रह्माण्डाभिप्रायेण वा लक्ष्यंतेऽतर्गताश्चान्य इत्युक्तमिति भावः । ननु शरीराणां बहुत्वेऽपि कथमण्डानां बहुत्वमित्यतस्तदुपपादयति ।। अस्यैवेति । देवस्य विष्णोः कायेष्वस्यैकस्यैव ब्रह्माण्डस्य प्रतिप्रतिकायं विष्णुसामर्थ्यतो दर्शनाच्चाण्डानां बहुत्वं भवेत् अन्यथा घटादिवद्भिन्नानां बहुत्वोक्तेरर्थो न भवेदित्यर्थः । एवं विष्णुशरीरबहुत्वेनाण्डबहुत्वमुपपाद्येदानीमेकस्मिन्नेव विष्णुशरीरे रोमकूपबहुत्वेनापि तदुपपादयत्प्रमाणं दर्शयति ।। एकमण्डमिति । हरे रोमकूपगमिति सम्बन्धः । प्रत्येकमित्यस्य रोमकूपेत्यनेन बुद्ध्या विविक्तेनान्वयः । तेषु प्रत्येकं रोमकूपगेषु ब्रह्माण्डेषु तथांऽडवदात्मानं च पृथक् पृथक् स्थितं ददर्शेत्यर्थः । एकस्यैवाण्डस्यानेकत्वे प्रमाणान्तरमप्याह ।। बृहदण्डमिति । एकमण्डं बृहदनेकमभूदित्यर्थः ।। ३९, ४० ।।

**यमाहुरक्षरं ब्रह्म सर्वकारणकारणम् ।**
**विष्णोर्धाम परं साक्षात् पुरुषस्य महात्मनः ।। ४१ ।।**

**इति श्रीमद्भागवते तृतीयस्कन्धे द्वादशोऽध्यायः ।।**

**तात्पर्यम्– धाम गृहमण्डराशयः ।। ४१ ।। इति तृतीय तात्पर्ये द्वादशोऽध्यायः ।। १२ ।।**

**प्रकाशिका–** इदानीं गुणतोऽप्यानंत्यं हरेर्दर्शयन् ब्रह्माण्डाधारे तस्मिन् ब्रह्माण्डान्तर्गतत्वमप्यस्तीत्याह ।। यमाहुरिति । अत्र यमाहुस्तद्धामेत्यन्वयभ्रमवारणायान्वयं दर्शयन् अत्र विवक्षितं धाम शब्दार्थमाह ।। धामेति । तथाचाण्डराशय इति पूर्वानुवृत्त्याऽन्वय इति भावः ।। ततश्चायं मूलार्थः ।।

यमक्षरं देहनाशरहितं सर्वकारणानां ब्रह्माण्डादीनां कारणं विष्णुं ब्रह्म गुणपूर्णमाहुस्तस्य महात्मनः पुरुषस्य विष्णोरण्डराशयो धाम गृहभूताः । आश्रया इति यावत् । तथा चाण्डान्तर्बहिश्चास्तीति तस्य देशत आनंत्यं युक्तमिति भावः ॥४१॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥३-१२ ॥

## अथ त्रयोदशोऽध्यायः ।

**मैत्रेय उवाच–**

**इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः ।**
**महिमा वेदगर्भोऽथ यदस्राक्षीन्निबोध मे ॥ १ ॥**

**प्रकाशिका–** वेदगर्भो विराण्णामको ब्रह्मा । अथ वैकारिकदेहसृष्ट्यनंतरम् ॥ १ ॥

**ससर्जाग्रेऽथ तामिस्रमन्धतामिस्रमादिकृत् ।**
**महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥ २ ॥**

**तात्पर्यम्– 'तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः । तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते । मरणं त्वन्धतामिस्रमविद्या पञ्चपर्विके'ति भारते ॥ तमोऽज्ञानं विपर्यासो मोहोऽन्ये तु तदाग्रहा' इति हरिवंशेषु ॥ २ ॥**

**प्रकाशिका–** अग्रे वैकारिकसृष्टेः पूर्वम् । षष्ठस्तु तामसः सर्ग इत्युक्तप्रपञ्चोऽयमिति ज्ञातव्यम् । अत्रान्धतामिस्रादिशब्दार्थान्प्रमाणेनैव दर्शयति ॥ तमस्त्विति । इतराविद्यावृत्तिवैलक्षण्यसूचकस्तु शब्दः । शर्वर्यां भवं शार्वरम् । अन्धकाररूपम् । अन्धकारवैलक्षण्यसूचनाय चशब्दस्तुशब्दार्थः । विपर्यय एव मिथ्याज्ञानमेव । उच्यत इति सर्वत्र सम्बध्यते । तदाग्रहो विपर्ययाग्रहः । मरणं मरणकालीनक्लेशनिमित्ता मूर्च्छा । एवमविद्या पञ्चपर्विका पञ्चवृत्त्युपेता । अनेनाज्ञानवृत्तय इति मूलमुक्तार्थम् । प्रबलकार्यक्रममपेक्ष्य मूलेऽधतामिस्रादितया निर्देशः । दुर्बलकार्यक्रमानुसारेण प्रमाणे तमआदितयेति ज्ञातव्यम् । प्रकारान्तरेण तम आदिस्वरूपं प्रमाणेन दर्शयति ॥ तमोऽज्ञानमिति । अज्ञता सम्यग्ज्ञाननाशः । अविद्याकार्यस्यैवात्र प्रकृतत्वात् । अन्ये त्विति । तु शब्दस्तरतमादिरूपविशेषसूचकः । तथाचान्ये महामोहस्तामिस्रांधतामिस्राः क्रमेण विपर्यासा ग्रहाग्रहतरा ग्रहतमरूपा इत्यर्थः । एतेषां मूलकारणं किमित्यपेक्षायामाह ॥ अज्ञानवृत्तय इति । एतेंऽधतामिस्रादयो भावरूपाविद्याकार्यभूता इत्यर्थः ॥ २ ॥

दृष्ट्वा पापीयसीं सृष्टिं नाऽत्मानं बह्वमन्यत ।
भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजत् ॥ ३ ॥

**तात्पर्यम्–** कालतो बलतश्चैव ज्ञानानन्दादिकैरपि । सर्वैर्गुणैर्विष्णुरेव श्रेष्ठस्तदवमा रमा । अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखः । अवरो बहुलांशेन तत्समो वायुरुच्यते । नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः । तस्मात्समानता मुक्तौ वायुत्वे किञ्चिदूनता । दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि । आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः । यावत्पश्चाज्जनिस्तावत्पूर्वं देहक्षयो भवेत् । ब्रह्मवाय्वोस्तु ये देव्यौ तद्दशांशः सुखादिकः शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः । शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् । तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः । एवं मुक्तौ च पूर्वं च नान्यथा कचिदिष्यते । अन्यथोक्तिर्यत्र च स्यात्तन्मोहार्थं भविष्यति । पूर्वापरविपर्यासो बहुरूपत्वहेतुत' इति विष्णुकृततत्त्वविवेके ॥ 'अथात आनन्दस्य मीमांसा' । 'देवासुरेभ्यो मघवान्प्रधान' इत्यादि च । 'इन्द्राद्याः सनकाद्याश्च दक्षाद्या येऽपि चापरे । ऋषयो मनवो देवास्तद्वशा ये च केचन । उमाया अवराः सर्वे गुणैः सर्वैर्न संशयः । तत्समो न भविष्यो वा न भूतोऽद्यतनोऽपि वा । ऋते हरिं ब्रह्मवायू शेषवीन्द्रान्सभार्यकान् । शङ्करं चेति वेत्तव्यमन्यन्मोहार्थमुच्यत' इति विष्णुकृततत्त्वनिर्णये ॥ ४ ॥

**प्रकाशिका–** अत्र सनकं च सनंदेत्यादिना सनकाद्युत्पत्तिमादावुक्त्वा पश्चाद्रुद्रोत्पत्तिं वक्ष्यति । सृष्टिक्रम एव तारतम्यज्ञापकोऽतो रुद्रापेक्षया सनकादीनामुत्तमत्त्वं प्राप्तमित्याशङ्कायामादिसृष्टिक्रम एव तारतम्यज्ञापको नार्वाचीनसृष्टिक्रमः । अत्रोक्ताऽनादिसृष्टिरतो न कोऽपि विरोध इति परिहारमभिप्रेत्य देवानां तारतम्यं तज्ज्ञापकमादिसृष्टिक्रम एव तारतम्यज्ञापको नार्वाचीनसृष्टिक्रमः । अत्रोक्ताऽनादिसृष्टिरतो न कोऽपि विरोध इति परिहारमभिप्रेत्य देवानां तारतम्यं तज्ज्ञापकमादिसृष्टिक्रमं च प्रमाणेनैव दर्शयति ॥ कालत इत्यादिना । अनन्तांशेन । तदवमा विष्णोर्नीचा । कालतोऽप्यवमत्वे प्राप्ते सत्यपवादमाह ॥ कालादिति । तुशब्दश्चशब्दार्थो देशादपीत्यनुक्तसमुच्चायकः। बहुलांशेन कोटिगुणांशेन । समत्वे हेतुमाह ॥ नियमादिति । मुक्तावित्यस्य व्यावर्त्यमाह ॥ वायुत्व इति वायुत्वावस्थायां किञ्चिदूनता । तत्पदस्येति शेषः । वायुर्ब्रह्मापेक्षया कालतोऽप्यून इत्याह ॥ दशवर्षमिति । तु शब्दो वर्षाणां दिव्यत्वरूपविशेषसूचकः । तथा च दिव्यदशवर्षं यथा स्यात्तथा तस्य ब्रह्मणः पश्चाद्वायोर्जननमित्यर्थः । तत्स्त्रियोर्ब्रह्मवायुस्त्रियोः सरस्वतीभारत्योस्तद्दशांशो ब्रह्मवाय्वानन्दादिशतांशन्यून इत्यर्थः । कालस्तत्स्त्रियोर्जननकालः । वायूत्पत्त्यनन्तरं संवत्सरात्परः पश्चात्तनः । उत्पत्तिक्रमवत्तद्विपरीतलयक्रमोऽपि तारतम्यज्ञापक इत्याशयेन मध्ये लयक्रममप्याह ॥ यावदिति ।

देहक्षयः । उक्तानां वक्ष्यमाणानां च । महाप्रलय इति शेषः । यो यदपेक्षया यावता कालेन पश्चाज्जातः स तदपेक्षया तावता कालेन पूर्वमेव देहक्षयं प्राप्नोतीत्यर्थः । तुशब्दः प्रकृतत्वानुसंधानार्थः । तद्दशांशो ब्रह्मवायुदेव्योरानन्दादिः शतांशन्यून इत्यर्थः । कालो भारतीसरस्वत्योरुत्पत्त्यनन्तरभाविशेषगरुडयोर्जननकालो देवतावर्षसहस्रात्मक इत्यर्थः । नन्वत्र रुद्रानुक्तिः किमित्यतस्तस्य शेषसमत्त्वाच्छेषग्रहणे रुद्रोऽपि गृहीत एवेत्याशयेनाह ॥ शेषरुद्राविति । यथा परस्परं समौ वायुत्वे किंचिदूनता । तद्वत्तथा परस्परं समौ । रुद्रत्वे किंचिदूनतेत्यर्थः । तद्देव्यः शेषगरुडरुद्रदेव्यः । तद्दशांशाः तदानन्दादिशतांशशून्यानन्दादिका इत्यर्थः । ततस्ताभ्यः । तु शब्दः शतांशन्यूना इत्यस्य समुच्चायकः । कचित्कालदेशे च । नन्वेवं सर्वेषां देवानां साम्यमेव न तारतम्यमिति वचनानां का गतिरित्यत आह ॥ अन्यथोक्तिरिति । च शब्दोऽवधारणे । मोहार्थमेवेत्यन्वयः । नन्वेवं तारतम्यस्य सृष्टिक्रमो यदि ज्ञापकस्तर्हि मूले सनकाद्युत्पत्त्यनन्तरं रुद्रोत्पत्तेरत्रोक्तत्वात्तस्य तदपेक्षया न्यूनत्वं स्यादित्यत आह ॥ पूर्वापरेति । आदिसृष्टौ पूर्वोत्पन्नपश्चादुत्पन्नयोर्विपर्यासौ वैपरीत्येन वचनं पूर्वोत्पन्नस्य बहुरूपत्वनिमित्तादित्यर्थः । आदिसृष्टिक्रम एव तारतम्यज्ञापकोऽतोऽर्वाचीनसृष्टावुत्तमस्य रूपान्तरेण नीचानन्तरमप्युत्पत्तिकथनेऽपि न तारतम्यभङ्ग इति भावः । किञ्च देवतातारतम्यं श्रुत्योत्तरग्रन्थेन चोक्तरीत्यैवाभिहितमतः सनकादेर्न रुद्रापेक्षयोत्तमत्वमित्याशयेनाह ॥ अथात इति ॥ इत्यादि च वाक्यमुक्तरीत्यैव देवतातारतम्यम् । ज्ञापयतीति शेषः । विशिष्यसनकादीनां रुद्रापेक्षया नीचत्वं कैमुत्येन प्रतिपादयत्प्रमाणं दर्शयति ॥ इन्द्राद्या इति । उमाया अवरास्तदा रुद्रादवरा इति किं वाच्यमित्याशयः । इति वक्तव्यं तत्समानेति वाक्यं पूरणीयमित्यर्थः । अन्यदुमाया एव सर्वोत्तमत्वम् । बहुमन्यतेति मूलं नाभ्यनन्ददित्यर्थः भगवद्ध्यानपूतेनेति वचनं मनः सृष्टानां सनकादीनां न पूर्ववदसाधुत्वमिति प्रदर्शनाय ॥ ३ ॥

**सनकं च सनन्दं च सनातनमथाऽत्मभूः ।**
**सनत्कुमारं च मुनिं निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥**

**प्रकाशिका–** आत्मभूर्ब्रह्मा । निष्क्रियान्परमहंसान् अत एवोर्ध्वरेतसः ॥ ४ ॥

**तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ।**
**तन्नैच्छन् मोक्षधर्माणो वासुदेवपरायणाः ॥ ५ ॥**

**प्रकाशिका–** स्वः स्वतन्त्रः परमात्मा । तस्माद्भवतीति स्वभूर्ब्रह्मा । भो पुत्रकाः । तत् प्रजासर्जनम् । मोक्षधर्माणो मुच्यतेऽनेनेति मोक्षो ज्ञानं स एव धर्मो येषां ते तथोक्ताः । ज्ञानमार्ग एव रता इत्यर्थः ॥ ५ ॥

**सोऽवज्ञातः सुतैरेवं प्रत्याख्यातानुशासनैः ।**
**क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे ॥ ६ ॥**

**प्रकाशिका—** अवज्ञामेव दर्शयन्नाह ॥ प्रत्याख्यातेति । प्रत्याख्यातं निराकृतमनुशासनमाज्ञापनं यैस्ते तथोक्तास्तैः । अनेनाज्ञातिक्रम एवावज्ञेति दर्शितं भवति । जातम् । स्वात्मनीति शेषः ॥ ६ ॥

**धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात् प्रजापतेः ।**
**सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥ ७ ॥**

**प्रकाशिका—** प्रजापतेर्ब्रह्मणः स चासौ मन्युश्च तन्मन्युः । सद्यो नियमात्पूर्वमेव । अनेन सद्योजातशब्दार्थो दर्शित इति ज्ञातव्यम् । नीललोहितो रुद्रः ॥ ७ ॥

**स वै रुरोद देवानां पूर्वजो भगवान् भवः ।**
**नामानि कुरु मे धातः स्थानानि च जगद्गुरो ॥ ८ ॥**

**प्रकाशिका—** रुद्रनामार्थं वक्तुमाह ॥ स वा इति ॥ ८ ॥

**इति तस्य वचः पाद्मो भगवान् परिपालयन् ।**
**अभ्यधाद् भद्रया वाचा मा रोदीस्तत् करोमि ते ॥ ९ ॥**

**प्रकाशिका—** तन्नामादिकम् ॥ ९ ॥

**यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः ।**
**ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः ॥ १० ॥**

**प्रकाशिका—** बालक इव हृन्मनः ॥ १० ॥

**हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही ।**
**सूर्यश्चन्द्रस्तपश्चैव स्थानान्येकादशैव ते ॥ ११ ॥**

**मन्युर्मनुर्महानासो महाञ्छिव ऋतध्वजः ।**
**मरुरेता भवः कालो वामदेवो धृतव्रतः ॥ १२ ॥**

**प्रकाशिका—**मरुरेताः। मरुरग्निः कृष्णवर्त्मेत्यभिधानात् । तद्वद्दाहकं रेतो यस्य स मरुरेताः॥ १२ ॥

धीर्वृत्तिरसहो मा च नियुत् सर्पिरिलाम्बिका ।
इरावती सुधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः ॥ १३ ॥

**प्रकाशिका–** हे रुद्र । एताः स्त्रियस्ते दत्ता अतो रुद्राण्यः । भविष्यन्तीति शेषः ॥ १३ ॥

गृहाणैतानि नामानि स्थानानि च सपोषणम् ।
आभिः सृज प्रजा वह्वीः प्रजानामसि यत् पतिः ॥ १४ ॥

**प्रकाशिका–** पुष्णात्यनया धर्ममिति पोषणा भार्या । सपोषणमिति क्रियाविशेषणम् । आभिः स्थानैर्नामभिश्च युक्तः । यद्यस्मात्प्रजानां पतिरसि । प्रजानामभावे तत्पतित्वं ते मृषा भविष्यतीति भावः ॥ १४ ॥

इत्यादिष्टः स गुरुणा भगवान् नीललोहितः ।
सत्त्वाकृतिः स्वभावेन ससर्जात्मसमाः प्रजाः ॥ १५ ॥

**प्रकाशिका–** गुरुणा पित्रा ब्रह्मणा । सत्त्वं बलमाकृतिर्मूर्तिः स्वभाव उग्रत्वम् । द्वन्द्वैकवद्भावः । तेन । आत्मसमाः स्वसमाः ॥ १५ ॥

रुद्राणां रुद्रसृष्टानां समन्ताद् ग्रसतां जगत् ।
निशाम्यासंख्यशो यूथान् प्रजापतिरशङ्कत ॥ १६ ॥

**प्रकाशिका–** रुद्राणां क्रूराणां यूथान्दृष्ट्वेत्यन्वयः ॥ १६, १७ ॥

अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम ।
मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः ॥ १७ ॥

तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम् ।
तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् ॥ १८ ॥

**प्रकाशिका–** यथा पूर्वं तथा स्रष्टा ॥ भविष्यतीति शेषः । स्रष्टा सृक्ष्यतीति वा ॥ १८ ॥

तपसैव परंज्योतिर्भगवन्तमधोक्षजम् ।
सर्वभूतगुहावासमञ्जसा विन्दते पुमान् ॥ १९ ॥

**प्रकाशिका–** मोक्षसाधनमपि तप एवेत्याह ।। तपसैवेति आलोचनादिरूपेणैवेत्याशयः । विंदते प्राप्नोति ।। १९ ।।

**मैत्रेय उवाच–**

**एवमात्मभुवादिष्टः परिक्रम्य गिरां पतिम् ।**
**बाढमित्यमुमामन्त्र्य विवेश तपसे वनम् ।। २० ।।**

**प्रकाशिका–** आत्मभुवा ब्रह्मणा । गिरां पतिं सरस्वतीपतिं ब्रह्माणम् ।। २० ।।

**अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ।**
**भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ।। २१ ।।**

**प्रकाशिका–** प्रतिजज्ञिरे । अङ्गेभ्य इति शेषः ।। २१ ।।

**मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ।। २२ ।।**

**उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुवः ।**
**प्राणाद् वसिष्ठः सञ्जातो भृगुस्त्वचि करात् क्रतुः ।। २३ ।।**

**प्रकाशिका–** कस्मात्कस्मादङ्गादेतेषामुत्पत्तिरित्यपेक्षायामाह ।। उत्सङ्गादिति । अङ्कादित्यर्थः। ।। २२,२३ ।।

**पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयो ऋषिः ।**
**अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ।। २४ ।।**

**धर्मः स्तनाद् दक्षिणतो यत्र नारायणः स्वयम् ।**
**अधर्मः पृष्टतो यस्मान्मृत्युर्लोकभयङ्करः ।। २५ ।।**

**प्रकाशिका–** ब्रह्माङ्गेभ्योऽन्येषामुत्पत्तिमाह ।। धर्म इत्यादिना । दक्षिणतो दक्षिणात् । यत्र यस्मान्नारायणः । स्वयं प्रसन्नो भवतीति शेषः । पृष्ठतः पृष्ठभागात् । मृत्युर्नरकाद्यनर्थः । भवतीति शेषः ।। २४,२५ ।।

**हृदि कामो भ्रुवोः क्रोधो लोभश्चाधरदच्छदात् ।**
**आस्याद् वाक् सिन्धवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ।। २६ ।।**

**प्रकाशिका–** हृदि मनसि । अधरदच्छदादधरोष्ठात् । सिंधवस्तदभिमानी वरुणो मेंढ्राद्गुह्ये-न्द्रियात् । अघाश्रयोऽधर्माभिमानी । अधर्म इत्यत्रोक्तोऽधर्मस्त्वसुर एवेति ज्ञेयम् ॥ २६ ॥

**छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः ।**
**मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ २७ ॥**

**प्रकाशिका–** विश्वकृतो ब्रह्मणः ॥ २७ ॥

**वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः ।**
**अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥ २८ ॥**

**प्रकाशिका–** ब्रह्मणोऽसुरजनमाहेनाय कामिजनविडम्बनप्रकारमाह ॥ वाचमिति । अस्मादुत्पन्नां तन्वीं सुंदरीं नोऽस्माभिः श्रुतम् ॥ २८ ॥

**तमधर्मे कृतमतिं विलोक्य पितरं सुताः ।**
**मरीचिमुख्या मुनयो विस्रम्भात् प्रत्यबोधयन् ॥ २९ ॥**

**नैतत् पूर्वैः कृतं त्वद्य न करिष्यन्ति येऽपरे ।**
**यः स्वां दुहितरं गच्छेदनिगृह्याङ्गजं प्रभुः ॥ ३० ॥**

**प्रकाशिका–** योगजं काममनिगृह्य स्वां दुहितरं गच्छतस्त्वैतत्कर्म पूर्वैस्तदन्यैर्न कृतम् । अद्यतना न कुर्वन्ति । येऽपरे पश्चात्तनास्तेऽपि न करिष्यंतीत्यन्वयः ॥ २९, ३० ॥

**तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो ।**
**यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते ॥ ३१ ॥**

**प्रकाशिका–** ननु ममापरोक्षज्ञानित्वान्नैतल्लेप इत्याशङ्क्याह ॥ तेजीयसामिति । अपरोक्षज्ञानि-नामपीत्यर्थः । न सुश्लोक्यं सत्कीर्तिप्रदं जगद्गुरुत्वाच्च नैतत्तव योग्यमित्याशयेन जगद्गुरो इति संबोधनम् । अत्राप्रयोजकतापरिहाराय विपक्षे बाधकं सूचयन्नाहुः ॥ यद्वृत्तमिति । यदाचारमित्यर्थः । तस्य नैतत्सुश्लोक्यमित्याशयः । तथाच यद्यदाचरति श्रेष्ठ इति वचनात् लोकस्याप्येतादृशाचार-प्रसक्तावनर्थप्राप्तिरेवस्यादिति बाधकं सूचितमिति ज्ञातव्यम् ॥ ३१ ॥

**तस्मै नमो भगवते य इदं स्वेन रोचिषा ।**
**आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥ ३२ ॥**

**प्रकाशिका–** क्रोधभीत्या नमन्तः प्रार्थयन्तीत्याह ॥ तस्मा इति । रोचिषा ज्ञानेनात्मस्थं परमात्मस्थमिदं जगद्व्यञ्जयामासोत्पादयामास ॥ ३२ ॥

**स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।**
**प्रजापतिपतिस्तन्वीं तत्याज व्रीडितस्तदा ॥ ३३ ॥**

**तात्पर्यम्– 'यां तत्याज विभुर्ब्रह्मा मानुषी वाक्चसा स्मृता । सरस्वती निजा भार्या देवीं वाचं तु तां विदुरि'ति च ॥ ३३ ॥**

**प्रकाशिका–** तन्वीं वाचं तत्याजेत्युक्त्या सरस्वतीत्यागः प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ यां तत्याजेति । तुशब्दोऽवधारणे । मनुष्यसम्बन्धिनी वागेव कणादादि निर्मितकुशास्त्ररूपा । तदभिमानिनीति यावत् । तां देवीमेव । वाचं वेदादिरूपवागभिमानिनीं ज्ञानिनो विदुरित्यर्थः ॥ ३३ ॥

**तां दिशो जगृहुर्घोरां नीहारं यद् विदुस्तमः ।**
**कदाचिद् ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ॥ ३४ ॥**

**प्रकाशिका–** मूले दिशो दिशि विद्यमाना जना नीहारमिव नीहारं बाष्पवत्सम्यग्ज्ञानप्रतिबन्धकं तमो मिथ्याज्ञानं यद्यस्याः सकाशाद्भवतीति विदुर्ज्ञानिनस्तमित्यर्थः । चतुर्मुखाच्चतुर्भ्यो मुखेभ्यः । पाद्मकल्पेऽप्येवमेव वेदादिसृष्टिरिति प्रदर्शनायैवमुक्तमिति ज्ञातव्यम् । एवमग्रेऽपि ॥ ३४ ॥

**कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ।**
**चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह ।**
**धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥**

**प्रकाशिका–** ध्यानप्रकारं दर्शयति ॥ कथमिति । स्वस्वविहितकर्मादिसमवेतान्मुक्तानिति ध्यायत इत्यन्वयः । न केवलं वेदा एवासन् किंतु कर्मादयोऽपीत्याह ॥ चातुर्होत्रमिति । होत्रादीनां चतुर्णां सम्बन्धि कर्मतन्त्रं यज्ञविस्तारः । उपवेदा गन्धर्वादयो नया नीतिशास्त्राणि तैः सह धर्मस्य चत्वारः पादा वक्ष्यमाणा आश्रमा ब्रह्मचर्यादयस्तद्वृत्तयस्तदाचारास्तज्जीवनोपाया वा । आसन्नित्यनुवर्तते ॥ ३५ ॥

विदुर उवाच–
स वै विश्वसृजामीशो वेदादीन् मुखतोऽसृजत् ।
यद् यद् येनासृजद् देवस्तन्मे ब्रूहि तपोधन ॥ ३६ ॥
मैत्रेय उवाच–
ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।
शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात् क्रमात् ॥ ३७ ॥

**प्रकाशिका–** पूर्वादिभिः पूर्वदक्षिणपश्चिमोत्तरदिग्भेदभिन्नैः । चतुर्होत्रसृष्टिक्रममाह ॥ शस्त्रमिति । शस्त्रम् ऋग्वेदमन्त्रशासनं होतुः कर्म । इज्यां यागामध्वर्योः कर्म । स्तुतिस्तोमशब्दौ सामवेदगस्तोत्रविशेषपरौ । तच्छासनमौद्गात्रं कर्म । प्रायश्चित्तं ब्राह्मम् ॥ ३६,३७ ॥

आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ।
स्थापत्यं चासृजद् वेदं क्रमाद् पूर्वादिभिर्मुखैः ॥ ३८ ॥

**प्रकाशिका–** उपवेदसृष्टिक्रममाह ॥ आयुर्वेदमिति । आत्मनो मुखैरायुर्वेदं वैद्यशास्त्रम् । धनुर्वेदमायुधविद्याम् । गान्धर्वं भरतशास्त्रं स्थापत्यं तक्षशास्त्रम् ॥ ३८ ॥

इतिहासपुराणं च पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥

**प्रकाशिका–** सर्वदर्शनः । सर्वज्ञः । अनेनाप्तत्वं सूचयति ॥ ३९ ॥

षोडश्युक्थौ पूर्ववक्त्रात् पुरीष्याग्निष्टुतावथ ।
आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ४० ॥

**प्रकाशिका–** षोडश्यादयो यज्ञविशेषाः । तद्भेदः कल्पतोऽवगन्तव्यः । पुरीष्याग्निष्टुदादिकं च द्वयं दक्षिणादिवक्त्रेभ्य उत्पन्नम् ॥ ४० ॥

तपः शौचं दया सत्यं धर्मस्येति पदानि च ।
आश्रमांश्च यथासंख्यमसृजत् सह वृत्तिभिः ॥ ४१ ॥

**तात्पर्यम्–** 'अभिमानितः शब्दतश्च ब्रह्मा वेदान्ससर्ज ह । यज्ञादींश्चक्लृपे वाचा तथा सर्वाभिमानिनः । 'इतिहासपुराणे तु श्रुत्वा हरिमुखात्स्वयम् । भारतादीन्विना पश्चाद्धरिणाऽन्यैश्च निर्मितानि'ति ॥ ४१ ॥

**प्रकाशिका–** तपआदि धर्मपादानामपि पूर्वादिमुखेभ्यो जन्मेति ज्ञातव्यम् । वृत्तिभिर्भैक्ष्यचर्यादिभिः सहाश्रमाद्ब्रह्मचर्यादीन्यथासंख्यं ब्रह्मचर्यं पूर्वमुखादित्यादिक्रमेण । अत्र वेदानामपौरुषेयत्वात्कथं सर्जनमुच्यते । इतिहासपुराणानां च मूलरूपेण हरिणा व्यासेन च कृतत्वात्कथं ब्रह्मकर्तृत्वमित्याशङ्कां प्रमाणेनैव परिहरति ॥ अभिमानित इति ॥ वेदान्ससर्जेत्यस्य वेदाभिमानिनो देवतादेहान्ससर्जेत्येवार्थो न त्वितरशास्त्रवच्छब्दतः सर्जनमित्यर्थः ॥ शब्दत इति । पूर्वकल्पीयवेदक्रमादितुल्यक्रमादिविशिष्टस्य वेदस्य ब्रह्मबुद्धिक्रमजन्यत्वादित्याशयः । षोडशयुक्तकृत्यादीनां सर्जनं कीदृशमित्यपेक्षायामाह ॥ यज्ञादीनिति । आदिपदात्तपआदेर्ग्रहणम् । वाचा तत्प्रतिपादकशास्त्रकरणेन चक्लृपे प्रदर्शितवान् । प्रकारान्तरमाह ॥ तथेति । सर्वेषां यज्ञादीनामभिमानिन इत्यर्थः । तथाच षोडश्यादिशब्दैस्तदभिमानिनामेव ग्रहणात्तत्सृष्टिरेवात्राभिप्रेतेति भावः । तुशब्दस्तयोर्हरि कृतत्वरूप विशेषसूचकः । तथाच पूर्वं हरिकृते इतिहासपुराणे हरिमुखात् श्रुत्वा स्वयं चक्लृप इत्यन्वयः । तर्हि किं भागवतभारतादिकं च ब्रह्म चकार नेत्याह ॥ भारतादीन्विनेति । कुत इत्यतस्तत्र हेतुं सूचयन्नाह । पश्चादिति । हरिणा व्यासरूपिणाऽन्यैश्च मार्कण्डेयादिभिः पश्चाद्ब्रह्मनिर्मितेतिहासाद्यनन्तरम् । तथाच भारतादीनां पश्चाद्व्यासादिभिः कृतत्वान्न तान् ब्रह्मा चकारेति भावः ॥ ४१ ॥

**सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत् तथा ।**
**वार्ताऽसञ्चयशालीनं शिलोञ्छ इति वै गृहे ॥ ४२ ॥**

**तात्पर्यम्– 'प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगामिते'ति व्यासस्मृतौ ॥ 'वार्ता यायावरं ज्ञेयमेकाहित्वमसञ्चय' इति च ॥ ४२ ॥**

**प्रकाशिका–** ब्रह्मचर्याश्रमावान्तरभेदोत्पत्तिमाह ॥ सावित्रमिति । इति चतुर्विधं ब्रह्मचर्यमसृजदित्यन्वयः । अत्र सावित्रं ब्रह्मचर्यमुपनयनादारभ्य वेदग्रहणपर्यन्तं गायत्रीमधीयानस्य व्रतम् । ब्राह्मं द्वादशवर्षपर्यन्तं गुरुकुले वेदमधीयानस्य व्रतम् । बृहत्तु यावज्जीवं ब्रह्मचर्यं नैष्ठिकापरनामकम् । प्राजापत्यं ब्रह्मचर्यं तु कीदृशमित्यपेक्षायां प्रमाणेनैव दर्शयति ॥ प्राजापत्यमिति । गृहस्थस्यापीति शेषः । तथाच यस्य गृहस्थस्यैकैव भार्या तस्यां च ऋतुकाल एव गमनं तदप्येकं ब्रह्मचर्यं तदेव प्राजापत्यनामकमित्यर्थः । गृहस्थाश्रमस्यापि वृत्तिभेदेन चातुर्विध्यमाह ॥ वार्तेति । अत्र वार्ता कृष्यादिना वृत्तिरसंचयः सर्वथा संचयाभाव इत्यन्यथाप्रतीतिवारणाय वार्तासंचयेत्येतत्प्रमाणेनैव व्याख्याति ॥ वार्तेति । यायावर्यं भैक्षचर्यविशेषः । एकाहित्वं तद्दिनार्जितव्रीह्यादेस्तद्दिन एव व्ययः । शालीनं वत्सरपर्यन्तं स्ववृत्तिहेतुधान्यादिसङ्ग्रहः । शिलोञ्छस्तु क्षेत्रेषु गलितव्रीह्यादिना वृत्तिः । सुपां सुलुगित्यादिना बहुवचनस्यैकवचनादेशः । इति वृत्तिभेदेन गृहे गृहस्थाश्रमे चातुर्विध्यम् । भवतीति शेषः ॥ ४२ ॥

वैखानसा वालखिल्योदम्बराः फेनपा वने ।
न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियौ ॥ ४३ ॥

**तात्पर्यम्–** 'वैखानसा मूलभक्षाः फलभक्षा उदुम्बराः । वालखिल्याः सर्वभक्षाः फेनपा वत्सफेनपा' इति च ॥ ४३ ॥

**प्रकाशिका–** वृत्तिभेदेन वानप्रस्थाश्रमेऽपि चातुर्विध्यं दर्शयति ॥ वैखानसा इति । अत्र वैखानसां अकृष्टपच्यवृत्तयो वालिखिल्या नवे लब्धे पूर्वसंचितान्नत्यागिन औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः । फेनपाः स्वयं पतितैः फलादिभिर्जीवन्त इति व्याख्यानं प्रमाणाविरुद्धमित्याशयेन वैखानसादि शब्दान्प्रमाणेनैव व्याख्याति ॥ वैखानसा इति । वत्सफेनपा गोवत्समुखगलितक्षीरफेनपा इत्यर्थः । वने वानप्रस्थाश्रमे वसन्तोऽप्येवम् । चतुर्विधा इति शेषः । न्यासे संन्यासाश्रमे वसन्तोऽपि चतुर्विधा इति शेषः । तान्निर्दिशति ॥ कुटीचक इति । कुट्यां स्वगृह एव पुत्रादिदत्तान्नादिना चकृते तृप्यति । चक तृप्ताविति धातोः । स कुटीचकः पूर्वं प्रथमः । बहूदस्तीर्थयात्रापरस्त्रिदण्डी द्वितीयः । हंसनिष्क्रियौ तृतीयचतुर्थौ हंस एकदण्डी यज्ञोपवीती । निष्क्रियः परमहंस एकदण्डी हंसादिक्रियारहितो यज्ञोपवीतधारणाशून्यः ॥ ४३ ॥

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ।
एवं व्याहृतयश्चासन् प्रणवेनास्पदं गताः ॥ ४४ ॥

**तात्पर्यम्–** 'आन्वीक्षिकी तन्त्रविद्या सा च वेदानुसारिणी । विष्णुप्रोक्ता शिवाद्युक्ता ज्ञेया वेदबहिष्कृता । दण्डनीती राजधर्मस्त्रयी वेदाः प्रकीर्तिताः । वार्ता वाणिज्यकादिः स्यादेताभिर्यत्तु जीवनम् । तदान्वीक्षिक्यादिनाम ब्रह्मणा निर्मितं पुरे'ति च । प्रणवः पूर्ववक्त्रात् । प्रणवः पूर्ववक्त्रेण भूराद्याश्च मुखत्रयात् । प्रदक्षिणमवर्तन्त वेदाश्चैवाश्रमास्तथे'ति ब्राह्मे ॥ ४४ ॥

**प्रकाशिका–** ब्राह्मणादिवर्णानां वृत्तयोऽपि यथासंख्यं पूर्वादिमुखेभ्यो जाता इत्याह ॥ आन्वीक्षिकीति । अत्रान्वीक्षिक्यादिशब्दान्प्रकृतोपयुक्ततया प्रमाणेनैव व्याख्याति ॥ आन्वीक्षिकीति । तन्त्रविद्या । तर्कविद्या । वेदबहिष्कृता अतोऽत्र न सा ग्राह्येति भावः । राजधर्मो राज्यपरिपालनम् । आदिशब्देन त्रैवर्णिकशुश्रूषणं ग्रहणम् । नन्वेतेषां कथं ब्राह्मणादिवृत्तित्वमित्यत आह ॥ एताभिरिति । आन्वीक्षिक्य त्रय्या च ब्राह्मणानां जीवनम् । राजनीत्या क्षत्रियाणाम् । वार्तया वैश्यादीनामिति विवेकः । तथाच मूले आन्वीक्षिक्यादिशब्दैस्तदुपजीवनं लक्षणया व्याख्येयमिति भावः । एवशब्दः शिवाद्युक्तव्यावृत्त्यर्थः । व्याहृतयो भूर्भुवःस्वरिति तिस्रः प्रणवेन सहास्पदं ब्रह्मणः

पूर्ववत्क्रादिरूपम् । गताः प्राप्ता आसन्नभिव्यक्ता इत्यर्थः । अत्र व्याहृतीनां प्राधान्येन निर्देशात्तासामेव पूर्ववक्त्रादिजातत्वं प्रतीयतेऽतोऽभिप्रायमाह ॥ प्रणव इति । अत्र प्रमाणमाह ॥ प्रणव इति । प्रदक्षिणं यथा स्यात्तथाऽऽवर्तन्तेऽभिव्यक्ताः । वेदाश्चैवाश्रमास्तथेत्यनेन कदाचिद्व्या-यतस्तस्य वेदा आसंश्चतुर्मुखादित्यादिनोक्तमपि प्रमापितमिति ज्ञातव्यं ॥ ४४ ॥

**तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः ।**
**त्रिष्टुप् मांसात् स्नुतोऽनुष्टुब् जगत्यस्थ्नः प्रजापतेः ।**
**मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥ ४५ ॥**

**प्रकाशिका–** ब्रह्मणो रोमादिभ्यः सप्तछन्दसां सर्गमाह ॥ तस्येति । स्नुतः स्नायुतः ॥ ४५ ॥

**स्पर्शास्तस्याभवन् जीवात् स्वरो देह उदाहृतः ।**
**ऊष्माण इन्द्रियाण्याहुरन्तस्था बलमात्मनः ॥ ४६ ॥**

**तात्पर्यम्– 'स्पर्शास्तस्या भवञ्जीवात्स्वरा देहात्प्रजज्ञिरे । ऊष्माणं इन्द्रियेभ्यश्च अन्तस्था बलतो विभोरि'ति च ॥ 'यस्माद्यज्जायते चाङ्गात्तत्तदङ्गाभिधं भवेदि'ति च ॥ ४६ ॥**

**प्रकाशिका–** वर्णानाम्' । ब्रह्मणोऽभिव्यक्तिमाह ॥ स्पर्शा इति । स्पर्शाः कादयो मावसानाः । जीवाच्चैतन्यात् । स्वरो कारादिः । देहो देहात् । ऊष्माणः शषसहाः । इन्द्रियाणीन्द्रियेभ्यः । अन्तस्था यरलवाः । ग्लं बलात् । आत्मनो ब्रह्मणः । अत्र देहादिशब्दाः पञ्चम्यर्था एव सप्तसु प्रथमेति सूत्रादित्याशयेन समाख्याप्रमाणं पठति ॥ स्पर्शा इति । पञ्चम्यर्थत्वाभावेऽपि प्रथमान्तानां देहादिशब्दानां तज्जन्यपरत्वस्य प्रमाणसिद्धत्वान्न सामानाधिकरण्यानुपपत्तिरित्याशयेनाप्याह ॥ यस्मादिति ॥ यत्स्वरादिकं यस्माद्देहादेरङ्गाज्जायते तत्स्वरादिकं तदङ्गाभिधं तदङ्गाभिधायकशब्दवाच्यं तज्जन्यत्वनिमित्तेन भवेदित्यर्थः । तथाच स्वरादिर्देहादिजन्य इत्यर्थस्य विवक्षितत्वान्न सामानाधि-करण्यानुपपत्तिरिति भावः ॥ ४६ ॥

**स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ।**
**शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः प्रभोः ॥ ४७ ॥**

**तात्पर्यम्– 'शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधो यतः । ऋते नारायणादीनि नाम्नां स विषयो यतः । व्यक्तं ब्रह्माण्डमुद्दिष्टमव्यक्तं महदादि च । तद्व्यापकत्वाद्ब्रह्मा तु व्यक्ताव्यक्ता-त्मकः स्मृत' इति च ॥ ४७ ॥**

**प्रकाशिका–** सप्तस्वरा निषादर्षभगांधारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्ततन्त्रीकण्ठोत्थिताः स्वरा इत्यादिनोक्ताः । प्रजापतेर्विहारेण शरीरसंचरणविशेषेण भवन्ति स्म अभवन्नित्यर्थः । एवंविधस्य सृष्टिकर्तृत्वं ब्रह्मणो नासम्भावितं तस्य भगवन्मात्रवाचकशब्दादतिरिक्तसर्वशब्दवाच्यत्वात् । अव्यक्तादिसर्वतत्त्वव्याप्तत्वाच्चेत्याशयेनाह । शब्दब्रह्मेति । अत्र शब्दविस्ताराद्भेदोऽव्यक्तादिसर्वजगदभेदश्च ब्रह्मणः प्रतीयते तदुभयं बाधितमतोऽत्र विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ शब्दब्रह्मात्मक इति । इत्युच्यत इति शेषः । सर्वशब्दाभिधेयत्वतः । तु शब्दो रुद्राद्यपेक्षया विशेषव्याप्तिसूचकः । तथाच शब्दब्रह्मनारायणादिनामव्यतिरिक्तं वैदिकशब्दविस्तरं विषयतया प्राप्नोतीति शब्दब्रह्मा । तस्य व्यक्तं ब्रह्माण्डमव्यक्तं महदादिकं च व्याप्नोतीति व्यक्तात्मा तस्य । अत एव प्रभोरिति मूलं व्याख्येयमिति भावः ॥ ४७ ॥

**ब्रह्मानुभावविततो नानाशक्त्युपबृंहितः ।**
**ततोऽपरामुपादाय स सर्गाय मनो दधे ॥ ४८ ॥**

**प्रकाशिका–** एवं ब्रह्मा स्वदेहात्तदवयवेभ्यश्च सृष्टिं चकारेत्युक्तम् इदानीं प्रकारान्तरेण सृष्टिं कर्तुं मनश्चक्रेत्याह ॥ ब्रह्मेति । स ब्रह्मा ततः पूर्वोक्तादपरां स्त्रीपुरुषसर्जनशक्तिमुपादाय कार्योन्मुखीकृत्य सर्गाय नानाविधजगत्सृष्टये मनो बुद्धिं दधे चकार । किं स्वातन्त्र्येण नेत्याह ॥ ब्रह्मेति । ब्रह्मणः परब्रह्मणोऽनुभाव आनुकूल्येन चिन्तनमनुग्रहो वा तेन विततः पूर्णोऽत एव नानाशक्त्युपबृंहितो नानाविधसृष्टिसामर्थ्यपूर्णः ॥ ४८ ॥

**ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ।**
**ज्ञात्वा तद् हृदये भूयश्चिन्तयामास कौरव ॥ ४९ ॥**

**अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ।**
**न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ॥ ५० ॥**

**एवं युक्तिमतस्तस्य दैवं चावेक्षतस्तदा ।**
**कस्य रूपमभूद् द्वेधा यत् कायमभिचक्षते ॥ ५१ ॥**

**तात्पर्यम्– 'ऋषीणां भूरिवीर्याणामिति सिंहावलोकनम् । यत्र पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनमि'ति ब्रह्मतर्के ॥ ४९ ॥**

**तात्पर्यम्–** केन व्याप्तत्वात्कायः ॥ ५१ ॥ इति तृतीयतात्पर्ये त्रयोदशोऽध्यायः ॥ १३ ॥

**प्रकाशिका–** अपरशक्त्युपादानेन सर्गं वक्तुं तावत्तच्चिंताप्रकारमाह ॥ ऋषीणामिति ॥ ननु मरीच्यादिसृष्ट्यनंतरमेवेयं चिन्ता वक्तव्या प्रस्तुतत्वात् । अतः कथं कदाचिध्ध्यायतस्तस्ये- त्यादिनाऽन्यदुक्त्वेदानीं तत्कथनमप्रस्तुतत्वादित्यत आह ॥ ऋषीणामिति । सत्यम् । तत्रैवेयं चिंता वक्तव्येति । तथाऽपि कदाचिध्ध्यायत इत्यारभ्य स्वराः सप्त विहारेणेत्यन्तेनान्यदुक्त्वा सिंहावलो- कनवत्पूर्वोक्तामृष्यादिसृष्टिमेवालोक्य ब्रह्मचिन्ताऽत्रोच्यतेऽस्मिन्प्रकृते नाप्रस्तुतत्वविरोध इत्यर्थः । ननु कुत एवं सिंहावलोकनन्यायेन व्यवहितचित्तोक्तिरित्यतोऽत्रोपपत्तिं प्रमाणेनैवाह ॥ यत्रेति । यत्र यस्मिन्प्रकृतेऽर्थे यन्निरूपणीयं तदपेक्षया पश्चात्तनः पश्चान्निरूप्यमाणोऽर्थः श्रेष्ठः श्रोतृबुभुत्सादीनां मध्ये निरूपणीयतां प्राप्तस्तत्र तस्मिन्प्रकृतेऽर्थे पुनर्विस्तरतो निरूप्यमाणे सिंहावलोकनं सिंहावलोकनन्यायानुसरणमावश्यकम् । अन्यथाऽप्रस्तुतत्वोक्तित्वप्रसङ्गादित्यर्थः ॥ ततश्चायं मूलार्थः ॥ ऋषीणां मरीच्यादीनां सकाशात् । सृष्टौ व्यापृतस्य युक्तिमतो मनोयोगवतः । ध्यायत इति यावत् । दैवं दैवानुग्रहं कस्य ब्रह्मणो रूपं देहः स्त्रीपुरुषरूपेण द्वेधाऽभूत् । ब्रह्मदेहः सरस्वतीब्रह्म- देहद्वयात्मना परिणत इत्यर्थः । यद्रूपद्वयं कायं कायशब्दवाच्यमभिचक्षते निरुक्तिज्ञाः । अत्र रूपद्वये काय शब्दवृत्तौ किं निमित्तमित्यतस्तं शब्दं तत्र निर्वक्ति ॥ केनेति ॥ केन ब्रह्मणा प्राप्तत्वाज्जातत्वात्काय इत्युच्यते देहसमुदाय इत्यर्थः ॥ ४९,५०,५१ ॥

**ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ।**
**यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् ॥ ५२ ॥**

**प्रकाशिका–** ताभ्यां ब्रह्मसरस्वतीदेहाभ्यां स्वराट् चक्रवर्ती ॥ ५२ ॥

**स्त्रीर्यासीच्छतरूपाख्या महिष्यस्य महात्मनः ।**
**तदा मैथुनधर्मेण प्रजा एधांबभूविरे ॥ ५३ ॥**

**प्रकाशिका–** या स्त्री सा । अस्य स्वायंभुवमनोर्महिषी भार्याऽऽसीत् । एधांबभूविरे वृद्धिं प्राप्ताः। ॥ ५३ ॥

**स चापि शतरूपायां पञ्चापत्यान्यजीजनत् ।**
**प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ ५४ ॥**

**प्रकाशिका–** तदेवाह ॥ स चापीति ॥ ५४ ॥

आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ।
आकूतिं रूचये प्रादात् कर्दमाय तु मध्यमाम् ।
दक्षायादात् प्रसूतिं च यत आपूरितं जगत् ॥ ५५ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे त्रयोदशोऽध्यायः ।

**प्रकाशिका–** यतः कन्यात्रयात् ॥ ५५ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥३-१३॥

## अथ चतुर्दशोऽध्यायः ।

शुक उवाच–

निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ।
भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥

विदुर उवाच–

स वै स्वायम्भुवः सम्राट् प्रियः पुत्रः स्वयम्भुवः ।
प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥

चरितं तस्य राजर्षेरादिराजस्य सत्तम ।
ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥

**प्रकाशिका–** वक्तव्यत्वहेतुमाह ॥ विष्वक्सेनेति । हि यस्माद्विष्वक् सर्वत्र सेना यस्य हरेस्तदाश्रयस्तद्भक्तः ॥ ३ ॥

श्रुतस्य पुंसः सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः ।
यत् तद् गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥

**प्रकाशिका–** हरिचरितं तद्भक्तचरितं चेति द्वयमेव मुमुक्षुणा श्रोतव्यम् । सूरिभिः सर्ववेदादिश्रवणफलत्वेन तयोः कथितत्वादित्याह ॥ श्रुतस्येति । सुचिरं श्रमो देहायासो यस्य स तथा । तस्य पुंसां श्रुतस्य कर्मपरवेदाद्यर्थश्रवणस्यांजसा मुख्यतया तस्य हरेर्गुणानुश्रवणम् । येषां हृदयेषु मुकुन्दपादारविन्दं लसति तद्गुणानुश्रवणं च सूरिभिरीडितः स्तुतोऽर्थः । ननु स्तुतं फलं खलु यद्यस्मात्तस्माद्ब्रूहीति पूर्वेणान्वयः ॥ ४ ॥

शुक उवाच–

**इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ।**
**प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥**

**प्रकाशिका–** सहस्रशीर्ष्णो हरेश्चरणोपधानं पादपीठायितं सहस्रशीर्ष्णः श्रीकृष्णस्य चरणावुपधीयेते यस्मिन् कृष्णः प्रीत्या यस्योत्संगे चरणौ प्रसारयतीत्यर्थ इति वा । तमभ्यचष्टाभाषत । भगवत्कथायां प्रणीयमाणः प्रेर्यमाणः ॥ ५ ॥

**मैत्रेय उवाच–**

**यदा स्वभार्यया साकं जातः स्वायम्भुवो मनुः ।**
**प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥**

**त्वमेकः सर्वभूतानां जन्मकृद् वृत्तिदः पिता ।**
**अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥**

**तद् विधेहि नमस्तुभ्यं कर्मस्विज्यात्मशक्तिषु ।**
**यत् कृत्वेह यशो विष्वगमुत्र च भवेद् गतिः ॥ ८ ॥**

**प्रकाशिका–** सर्वभूतानां जन्मकृदतो पिता वृत्तिदः पोषकश्च त्वमेकस्त्वमेवातस्तव यद्यप्यन्यापेक्षा नास्ति । अथाऽपि नोऽस्माकमिज्यात्मशक्तिष्विज्यारूपेषु भगवत्पूजारूपेषु स्वशक्तिविषयेषु च कर्मसु मध्ये ते शुश्रूषा केन येन कर्मणा भवेत्तद्विधेहि । विष्वक् सर्वतोऽमुत्र परलोके । गतिरात्यन्तिकसुखप्राप्तिः ॥ ६,७,८ ॥

**ब्रह्मोवाच–**

**प्रीतस्तुभ्यमहं तात स्वस्ति स्याद् वां क्षितीश्वर ।**
**यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितम् ॥ ९ ॥**

**प्रकाशिका–** वां युवाभ्यां यद्यतो मा मां शाधि अनुशिक्षयेत्यात्मना स्वयमेवार्पितं निवेदितमतः प्रीतोऽस्मि ॥ ९ ॥

**एतावत्यात्मजैरेवं कार्याथापचितिर्गुरौ ।**
**शक्त्याऽप्रमत्तैर्गृह्येत शासनं गतमत्सरैः ॥ १० ॥**

**प्रकाशिका–** गुर्वाज्ञाकरणमेव तत्पूजेत्याह ॥ एतावदिति । अपचितिः पूजा । शासनमाज्ञा गृह्यत इति यत्सेयमित्यर्थः ॥ १० ॥

**स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ।**
**उत्पाद्य शाधि धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥**

**प्रकाशिका–** आज्ञामाह ॥ स त्वमिति । गां भूमिं शाधि पालय ॥ ११ ॥

**परं शुश्रूषणं मह्यं स्यात् प्रजारक्षया नृप ।**
**भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥**

**प्रकाशिका–** तच्छुश्रूषणेनापि किमित्यत आह ॥ भगवानिति ॥ १२ ॥

**येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ।**
**तेषां श्रमोऽप्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥**

**प्रकाशिका–** भगवत्तोषणेनापि किमित्यत आह ॥ येषामिति । यज्ञलिङ्गो यज्ञप्रवर्तकदेहः । श्रमो यज्ञानुष्ठानायासः । अपार्थायापगतोऽर्थो यस्मात् । न केवलं श्रमायैवेत्यर्थः । यद्यस्मात्परमात्मा स्वयं स्वेन ॥ १३ ॥

**मनुरुवाच–**
**आदेशेऽहं भगवतो वर्तयाम्यरिसूदन ।**
**स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥**

**प्रकाशिका–** अनुजानीहि अत्र स्थातव्यमित्यनुज्ञापय ॥ १४ ॥

**यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि ।**
**अस्या उद्धरणे यत्नो देव देव्या विधीयताम् ॥ १५ ॥**

**प्रकाशिका–** पृथिव्यामेव स्थातव्यमित्याह ॥ यदोक इति । सर्वसत्त्वानां सर्वप्राणिनां यदोक आवासस्थानं सा मही महांभसि प्रलयजले मग्नाऽभूत् । हे देव । अस्या देव्या भूमेः ॥ १५ ॥

मैत्रेय उवाच–

परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् ।
कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥

**प्रकाशिका–** सन्नां मग्नां समुन्नेष्ये उद्धरामि ॥ १६ ॥

पीतं मया जलं सर्वं पृथिवी च निवेशिता ।
तथापि किमिदं साद्य प्लाव्यते पुनरम्बुभिः ॥ १७ ॥

**प्रकाशिका–** चिन्ताप्रकारमेवाह ॥ पीतमिति । प्रायेण पीतमित्यर्थः । न तु निःशेषतया । वार्भिः प्लाव्यमानेत्यनेन विरोधप्रसङ्गात् ॥ १७ ॥

प्रजा देवासुरपितृमनुष्यपशुपक्षिणः ।
सरीसृपान् नगान् नागान् भूतान्युच्चावचानि च ॥ १८ ॥

सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना लयं गता ।
अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १९ ॥

**प्रकाशिका–** देवादिप्रजाः सृजतः सत इत्यन्वयः । प्लाव्यमाना चञ्चलीक्रियमाणा । आलयं रसातलम् । अथ तस्मात् । अत्रास्यामवस्थायां सर्गं ईश्वरेणनियुक्तैः ॥ १८,१९ ॥

यस्याहं हृदयादासं स ईशो विदधातु मे ।
इत्यभिध्यायतो नासाविवरात् सहसानघ ।
वराहतोको निरगादङ्गुष्ठपरिमाणतः ॥ २० ॥

**प्रकाशिका–** मेऽनुष्ठेयं स एव विदधातु संपादयतु । शमिति पाठे सुखमित्यर्थः । नासाविवरान्नासाबिलात् । वराहतोकः सूक्ष्मवराहः ॥ २० ॥

तस्याभिपश्यतः स्वस्थः क्षणेन किल भारत ।
गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥ २१ ॥

**प्रकाशिका–** खस्थ आकाशे स्थितः ॥ २१ ॥

**प्रकाशिका–** गुर्वाज्ञाकरणमेव तत्पूजेत्याह ॥ एतावदिति । अपचितिः पूजा । शासनमाज्ञा गृह्यत इति यत्सेयमित्यर्थः ॥ १० ॥

**स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ।**
**उत्पाद्य शाधि धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥**

**प्रकाशिका–** आज्ञामाह ॥ स त्वमिति । गां भूमिं शाधि पालय ॥ ११ ॥

**परं शुश्रूषणं मह्यं स्यात् प्रजारक्षया नृप ।**
**भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥**

**प्रकाशिका–** तच्छुश्रूषणेनापि किमित्यत आह ॥ भगवानिति ॥ १२ ॥

**येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ।**
**तेषां श्रमोऽप्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥**

**प्रकाशिका–** भगवत्तोषणेनापि किमित्यत आह ॥ येषामिति । यज्ञलिङ्गो यज्ञप्रवर्तकदेहः । श्रमो यज्ञानुष्ठानायासः । अपार्थायापगतोऽर्थो यस्मात् । न केवलं श्रमायैवेत्यर्थः । यद्यस्मात्परमात्मा स्वयं स्वेन ॥ १३ ॥

**मनुरुवाच–**
**आदेशेऽहं भगवतो वर्तयाम्यरिसूदन ।**
**स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥**

**प्रकाशिका–** अनुजानीहि अत्र स्थातव्यमित्यनुज्ञापय ॥ १४ ॥

**यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि ।**
**अस्या उद्धरणे यत्नो देव देव्या विधीयताम् ॥ १५ ॥**

**प्रकाशिका–** पृथिव्यामेव स्थातव्यमित्याह ॥ यदोक इति । सर्वसत्त्वानां सर्वप्राणिनां यदोक आवासस्थानं सा मही महांभसि प्रलयजले मग्नाऽभूत् । हे देव । अस्या देव्या भूमेः ॥ १५ ॥

मैत्रेय उवाच–

परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् ।
कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥

प्रकाशिका– सन्नां मग्नां समुन्नेष्ये उद्धरामि ॥ १६ ॥

पीतं मया जलं सर्वं पृथिवी च निवेशिता ।
तथापि किमिदं साद्य प्लाव्यते पुनरम्बुभिः ॥ १७ ॥

प्रकाशिका– चिन्ताप्रकारमेवाह ॥ पीतमिति । प्रायेण पीतमित्यर्थः । न तु निःशेषतया । वार्भिः प्लाव्यमानेत्यनेन विरोधप्रसङ्गात् ॥ १७ ॥

प्रजा देवासुरपितृमनुष्यपशुपक्षिणः ।
सरीसृपान् नगान् नागान् भूतान्युच्चावचानि च ॥ १८ ॥

सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना लयं गता ।
अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १९ ॥

प्रकाशिका– देवादिप्रजाः सृजतः सत इत्यन्वयः । प्लाव्यमाना चश्चलीक्रियमाणा । आलयं रसातलम् । अथ तस्मात् । अत्रास्यामवस्थायां सर्गं ईश्वरेणनियुक्तैः ॥ १८,१९ ॥

यस्याहं हृदयादासं स ईशो विदधातु मे ।
इत्यभिध्यायतो नासाविवरात् सहसानघ ।
वराहतोको निरगादङ्गुष्ठपरिमाणतः ॥ २० ॥

प्रकाशिका– मेऽनुष्ठेयं स एव विदधातु संपादयतु । शमिति पाठे सुखमित्यर्थः । नासाविवरान्नासाबिलात् । वराहतोकः सूक्ष्मवराहः ॥ २० ॥

तस्याभिपश्यतः स्वस्थः क्षणेन किल भारत ।
गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥ २१ ॥

प्रकाशिका– खस्थ आकाशे स्थितः ॥ २१ ॥

मरीचिमुख्यैर्विप्रैश्च कुमारैर्मनुना सह ।
दृष्ट्वा तत् सौकरं रूपं तर्कयामास चित्रधा ॥ २२ ॥

**प्रकाशिका–** कुमारैः सनकादिभिः । चित्रधाऽनेकधा ॥ २२ ॥

किमेतत् सौकरव्याजं सत्त्वं दिव्यमवस्थितम् ।
अहो बताश्चर्यमिदं नासाया मे विनिःसृतम् ॥ २३ ॥

दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद् गण्डशिलोपमः ।
अपिस्विद् भगवानेष यज्ञो मे खेदयन्मनः ॥ २४ ॥

**प्रकाशिका–** अङ्गुष्ठशिरोमात्रोंऽगुष्ठाग्रप्रमाणकः । गण्डशैला गिरिगलन्तः स्थूलपाषाणास्तत्सम एष वराहो यज्ञो विष्णुः खेदयन् अनलंबुद्धिं प्रापयन् ॥ २३,२४ ॥

इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ।
भगवान् यज्ञपुरुषो जगर्जागेन्द्रसन्निभः ॥ २५ ॥

**प्रकाशिका–** सूनुभिर्मरीच्यादिभिः । जगर्ज गर्जनं कृतवान् । अगेन्द्रसंनिभो गिरीन्द्रतुल्यः । ॥ २५ ॥

ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ॥
स्वगर्जितेन ककुभः प्रतिस्वनयता विदुः ॥ २६ ॥

**प्रकाशिका–** गर्जनप्रयोजनमाह ॥ ब्रह्माणमिति । प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता ॥ २६ ॥

निशम्य तद् घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ।
जनस्तपः सत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन् स्म ॥ २७ ॥

**प्रकाशिका–** तस्य वराहस्य घर्घरितं स्वजात्यनुकरणध्वनिम् । कथंभूतम् । स्वखेदक्षपयिष्णु स्वदुःखविनाशनशीलम् । मायया महिम्ना मयः पूर्णः स चासौ सूकरश्च तस्य त्रिभिर्वेदैः पवित्रैर्निर्दोषैः । अगृणन् अस्तुवन् ॥ २७ ॥

तेषां सतां वेदवितानमूर्तिं ब्रह्मावधार्यात्मगुणानुवादम् ।
ननर्द भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश ॥ २८ ॥

**प्रकाशिका–** तेषां स्तुत्या प्रसन्न इत्याह ॥ तेषामिति । वेदैर्वितन्यते विस्तृतयोच्यत इति वेदविताना तथाविधा मूर्तिर्यस्य तत्तथा । ब्रह्मस्तुतिरूपं वेदम् । यज्ञवितानमूर्तिरिति पाठे यज्ञविस्तारांगजनकमूर्तिरित्यर्थः । आत्मनः स्वस्य गुणानामनुवादो यस्मिंस्तत् । भूयो ननर्द ननाद । जलं प्रलयजलम् ॥ २८ ॥

**उत्क्षिप्तवालः खचरः कठोरसटा विधुन्वन् खररोमशत्वक् ।**
**खुराहताभ्रः सितशृङ्ग ईक्षाज्योतिर्विभासो भगवान् महीध्रः ॥ २९ ॥**

**प्रकाशिका–** जलमाविशन्तं तमुपवर्णयति द्वाभ्याम् । तत्राद्येन पर्वतसाम्येन वर्णनम् । भगवान्महीध्रो नारायणाख्यपर्वतः कं जलमाविशदित्युत्तरेणान्वयः । कथंभूतः । उत्क्षिप्तबाल उद्धृतपुच्छः । अन्यत्रोद्धृतह्रीबेरः । बालं तु कपिलं वज्रह्रीबेरं दीर्घरोमकमित्यभिधानात् । खे आकाशे चरतीति खेचरः । उभयत्र समम् । कठोराः कठिणाः सटाः स्कन्धगतरोमविशेषात् । धुन्वन्कंपयन् । अन्यत्र सटा लताविशेषः । सखराः परुषा रोमशा रोमवती त्वग्यस्य स तथोक्तः । अन्यत्र रोमशः पिचुमन्दः खरो पिचुमन्दः खरा पिचुमन्दस्य त्वग्यस्मिन्स तथा । खुरैराहतमभ्रं येनासौ खुराहताभ्रः खुरसन्ताडितमेघः । अन्यत्र खुरैः शृङ्गैः । सितशृङ्गो धवलदंष्ट्रः । अन्यत्र धवलसानुः । ईक्षा निरीक्षणं तदेव ज्योतिरग्निज्वाला तेन विभासो विभासनं यस्य स तथा ॥ २९ ॥

**घ्राणेन पृथ्व्याः पदवीं विजिघ्रन् क्रोडापदेशः स्वयमध्वराङ्गः ।**
**करालदंष्ट्रोप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान् गृणतोऽविशत् कम् ॥ ३० ॥**

**प्रकाशिका–** पदवीं स्थितिं मार्गं विजिघ्रन्विमार्गयन् । तज्जात्यनुकरणमेतत् । क्रोडापदेशो देवकार्यव्याजेन क्रोडः । अत एव न प्रसिद्धक्रोडसदृश इत्याह । स्वयं सतोऽध्वराङ्गो यज्ञोपयुक्तकुशादिजनकाङ्गः । गृणतः स्तोतॄन्विप्रान् । उत् ऊर्ध्वं वीक्ष्य ॥ ३० ॥

**स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ।**
**उत्सृष्टदीर्घोर्मिकरैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ ३१ ॥**

**प्रकाशिका–** तदानीन्तनं समुद्रमुत्प्रेक्षते ॥ स वज्रेति । स उदन्वान्समुद्रः स्तनयन् शब्दं कुर्वन् आर्तः सन् । भो यज्ञेश्वर मां पाहीति चुक्रोशाजुहाव । आर्तत्वे निमित्तमाह ॥ वज्रकूटेति । वज्रकूटवद्योघनवद्गुरुतममङ्गं तस्य निपातवेगेन विशीर्णः कुक्षिर्यस्य स तथा । आर्तसाम्यमाह ॥ उत्सृष्टेति । उत्सृष्टोर्ध्वं गता दीर्घा ऊर्मय एव करास्तैः । उदरविदारणार्तः पुमान्यथोर्ध्वबाहुः सन् विदारक प्रति

मां पाहीत्याक्रोशति तथाऽयमप्युक्तरीत्याऽक्रोशतीवेति भावः । इदं तु जडजलराश्यपेक्षया । अभिमानिविवक्षायां स्तुतिरेवेयमिति ज्ञातव्यम् ॥ ३१ ॥

**खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारवारं त्रिवरू रसायाम् ।**
**ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३२ ॥**

**प्रकाशिका–** यद्दर्शनार्थं तस्य जलप्रवेशस्तद्दर्शनं जातमित्याह ॥ खुरैरिति । क्षुरप्रैः क्षुरवन्निशितैः। अर्धचन्द्रः क्षुरप्रः स्यादित्यभिधानात् । अर्धचन्द्राकारैरिति वा । उत्पारवारमिति क्रियाविशेषणम् । पारे तीरान्तरे स्थितं वारं जलं यथोद्गतं भवति । तथा तस्य समुद्रस्यापो विदारयन् त्रिभिर्वेदैर्विव्रीयत इति त्रिवरुः । ढ्र लोपे पूर्वस्य दीर्घो ण इति दीर्घः । रसायां रसातले गां भूमिम् । कथं भूताम् । तत्राप्सु सुषुप्सुर्योगनिद्रां कर्तुकामः सन् अग्रे पूर्वं जीवा धीयन्तेऽस्यामिति जीवधानी तां सर्वप्राण्याधारभूतां गां स्वयमेवाभ्यदत्त प्रलयजलस्योपरि निहितवान् ॥ ३२ ॥

**स्वदंष्ट्रयोद्धृत्य महीं विलग्नां स उत्थितः संरुरुहे रसायाः ।**
**तत्रापि दैत्यं गदयाऽऽपतन्तं सुनाभसन्दीपिततीव्रमन्युः ॥ ३३ ॥**

**जघान रुन्धानमसह्यविक्रमः सलीलयेभं मृगराडिवाम्भसि ।**
**तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३४ ॥**

**प्रकाशिका–** तां विलग्नां रसातले विशेषेण संबद्धां रसाया रसातलादुत्थित उद्गतः सन् संरुरुहे उपरितनदेशमारुरुहे । तत्राप्यारोहसमयेऽपि दैत्यमादिहिरण्याक्षं गदया सह गदामुद्यम्य पतन्तमागच्छन्तं रुन्धानं स्वगमनप्रतिबन्धकं सोढुमशक्यो न सह्यो विक्रमो यस्य सोऽसह्यविक्रमः स वराहोंऽभसि मृगराट् सिंहो गजमिव स्वदंष्ट्रया लीलया जघान । कथं भूतः । सुनाभस्य सुदर्शनस्य सन्दीपितः प्रज्वलितस्तीव्रो मन्युर्येन भगवतः सुदर्शनमुपेक्ष्य स्वदंष्ट्रया दैत्यहनने कृते सति ममात्र किं कृत्यमिति सुदर्शनस्य तस्मिन्समये कोप उत्पादित इति भावः । गजेन्द्रो जगतीं गैरिकाद्युपेतभूमिं क्रीडया स्वदंष्ट्रया विभिन्दन् यथाऽरुणपङ्काङ्किततुण्डगण्डो भवति । तथा तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुण्डं च यस्य स तथोक्तः । जघानेति पूर्वेणान्वयः ॥ ३३, ३४ ॥

**तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग ।**
**प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम् ॥ ३५ ॥**

**प्रकाशिका–** उत्क्षिपन्तमुद्धरन्तं प्रज्ञाय हरिरयमिति ज्ञात्वाऽनुवाकैर्वेदवाक्यैरुपतस्थुस्तुष्टुवुः॥३५॥

**देवा ऊचुः–**

**जितं जितं तेऽजित लोकभावन त्रयीतनुं स्वां परिधुन्वते नमः ।**
**यद्रोमगर्तेषु निलिल्युरब्धयस्तस्मै नमः कारणसूकराय ते ॥ ३६ ॥**

**प्रकाशिका–** भो अजित । ते त्वया जितम् जितमिति संभ्रमे द्विरुक्तिः । यज्ञभावन यज्ञोपयुक्तकुशाद्युत्पादक । त्रयीतनुं वेदप्रतिपाद्यां मूर्तिं स्वां स्वरूपभूतां परिधुन्वते रोमजलत्यागाय कंपनाय निलिल्युर्निलीनाः ॥ ३६ ॥

**रूपं तवैतन्ननु दुष्कृतात्मनां**
**दुर्दर्शनं देव यदध्वरात्मकम् ।**
**छन्दांसि यस्य त्वचि बर्हिरोम**
**स्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥ ३७ ॥**

प्रकाशिका– भूम्युद्धरणादिरूपकारणेन सूकरावताराय । अध्वरात्मकमित्यनेनोक्तं यज्ञाङ्गपदार्थ-जनकत्वं प्रपञ्चयन्तः स्तुवन्ति ॥ छन्दांसीत्यादिना । गायत्र्यादिछन्दःप्रभृतियज्ञाङ्गं त्वचादि-भगवदवयवेषु । आसीज्जातमाश्रितं चेत्यर्थः । बर्हिर्दर्भः । अत्र दीर्घाभावश्छान्दसः । दृशि चक्षुषि चातुर्होत्रं चतुर्भिर्होत्रादिभिः क्रियमाणं कर्म ॥ ३७ ॥

**स्रुक् तुण्ड आसीत् स्रुव ईश नासयो-**
**रिडोदरे चमसः कर्णरन्ध्रे ।**
**प्राशित्रमास्ये रसने ग्रहास्तु**
**यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३८ ॥**

प्रकाशिका– इडा भक्षणपात्रं चमसश्चतुष्कोणो यज्ञपात्रविशेषः । प्राशित्रं ब्रह्मभागपात्रं ग्रहा द्वादशसोमग्रहाः । रसने जिव्हाव्यापारे यच्चर्वणं दन्तैश्चूर्णनं तत्र ॥ ३८ ॥

**दीक्षात्मजन्मोपसदः शिरोध-**
**स्त्वं प्रायणीयोदनीयदंष्ट्रः ।**
**जिह्वा प्रवर्ग्यस्तव शीर्षणं क्रतोः**
**सभ्यावसथ्याचितयोऽसवो हि ते ॥ ३९ ॥**

**प्रकाशिका–** आत्मजन्म स्वाभिव्यक्तिः । दीक्षा दीक्षणीयेष्टिर्व्रतसङ्ग्रह इति वा । उपसद उपसन्नामानो यज्ञविशेषाः । उपसत्तिविशेषा वा । शिरोधो ग्रीवात्वं प्रायणीया दीक्षानन्तरेष्टिः । उदयनीया समाप्तेष्टिः । त एव दंष्ट्रे यस्य स तथोक्तः । प्रवर्ग्यो नाम ऋत्विक् सभ्यो होमरहितोऽग्निरावसथ्य औपासनाग्निः । क्रतोर्यज्ञरूपस्य ज्ञानरूपस्य वा तव शीर्षणं शिरः । चितय इष्टिकाबन्धनविशेषास्तवासवः पञ्चप्राणाः । क्रतुरिति पाठे क्रतुः सङ्कल्पः शीर्षणम् । सभ्यावसथ्यौ चितयश्च तवासव इति व्याख्येयम् । हि शब्दः प्रमाणप्रसिद्धिद्योतकः ॥ ३९ ॥

**सोमस्तु रेतः सवनान्यवस्थितिः**
**संस्थाविभेदास्तव देहधातवः ।**
**सत्राणि सर्वाणि शरीरसन्धि-**
**स्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥ ४० ॥**

**प्रकाशिका–** सोमो लताविशेषः । प्रातरादीनि त्रीणि सवनानि । अवस्थितिर्निश्चलत्वेनैकत्रावस्थानम् । संस्थाविभेदा अग्निष्टोमेत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसंस्थाविभेदाः । त्वङ्मांसादिसप्तदेहधातवः । सत्राणि बहुभिः संभूय कर्तव्ययज्ञात्मकानि कर्माणि । असोमा यज्ञाः ससोमाः क्रतवस्ते सर्वेऽपि त्वमित्यर्थः । इष्टिः प्रतिपत्तिथ्यादिषु क्रियमाणकर्मविशेषः । बन्धनं देहस्य संहननं यस्य स तथोक्तः । अत्र दीक्षेत्यादिश्लोकद्वये दीक्षादीनां भगवदवयवादिना सामानाधिकरण्येन निर्देशोऽपि तत्तदवयवादिजन्यत्वादिकमेवार्थतयावाच्यम् । न त्वैक्यम् । यस्माद्यज्जायते चाङ्गात्तत्तदङ्गाभिधं भवेदिति पूर्वं प्रमाणोदाहृतत्वादिति ज्ञातव्यम् ॥४०॥

**नमो नमस्तेऽखिलमन्त्रदेवता**
**द्रव्याय सर्वक्रतवे क्रियात्मने ।**
**वैराग्यभक्त्याऽऽत्मजयानुभावित-**
**ज्ञानाय विद्यागुरवे नमो नमः ॥ ४१ ॥**

**प्रकाशिका–** पूर्वोक्तमेव सपरिकरं कथयतः प्रणमन्ति ॥ नमो नम इति । मन्त्रादिसत्ताप्रदत्वेन मन्त्रादिषु स्थिताय तन्नामकाय । सर्वक्रतवे सर्वविषयकज्ञानरूपाय क्रियात्मने विहितक्रियादानादिकर्त्रे वैराग्यं च भक्तिश्चात्मनो मनसोजयश्च तैरनुभावितं योग्यतानुसारेणोत्पादितं ज्ञानं स्वसाक्षात्कारो येन स तथा तस्मै । अत एव विद्यागुरवे । विद्यानामादिवक्त्रे इति वा ॥ ४१ ॥

**दंष्ट्राग्रकोट्या भगवंस्त्वया धृता**
**विराजते भूधर भूः सभूधरा ।**
**यथा वनान्निस्सरतो दता धृता**
**मतंगजेन्द्रस्य सपत्रपद्मिनी ॥ ४२ ॥**

**प्रकाशिका–** हे भूधर । सभूधरा सपर्वता वनाज्जलान्निःसरतो निर्गच्छतो मतङ्गजेन्द्रस्य दत्ता दन्तेन पत्रैः सहिता पद्मिनी सरसी ॥ ४२ ॥

**त्रयीमयं रूपमिदं च सौकरं**
**भूमण्डलं नाथ दता धृतेन ते ।**
**चकास्ति शृङ्गोढघनेन भूयसा**
**कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ४३ ॥**

**प्रकाशिका–** त्वया धृता भूर्विराजित इत्युक्तम् । इदानीं भूमण्डलेन त्वद्रूपं विराजित इत्याहुः ॥ त्रयीमयमिति । वेदप्रतिपाद्यम् । ते रूपं कर्तृ । अथेत्यर्थान्तरे । चकास्ति शोभते । शृङ्गेणोढेन घनेन मेघेन । भूयसा महता । विभ्रमो विलासः ॥ ४३ ॥

**संस्थापयैनां जगतां सितस्थुषां**
**लोकाय पत्नीमसि मातरं पिता ।**
**विधेम यस्यै नमसा सह त्वया**
**यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ४४ ॥**

**प्रकाशिका–** ते पत्नीमेनां भूमिं लोकाय लोकोपकाराय जलस्योपरि संस्थापय । हितायेत्यपि क्वचित्पाठः । सतस्थुषां स्थावरैः सहितानां जगतां जङ्गमानां मातरम् । यतस्त्वं पिताऽसि । एवं सति तत्र तत्र स्थिताः सन्तस्त्वया सहास्यै मात्रे नमसा नमनं विधेम कुर्मः । मातृत्वं पितृत्वं च स्पष्टयन्त आहुः ॥ यस्यामिति । यस्यां भूम्यां स्वतेजः स्ववीर्यमरणावग्निमथनदारुविशेषे याज्ञिका मन्त्रतोऽग्निमिवाधा निहितवानसि ॥ ४४ ॥

**कः श्रद्धधीतान्यतमस्तव प्रभो**
**रसां गताया भुव उद्विबर्हणम् ।**
**न विस्मयोऽसौ त्वयि विश्वविस्मये**
**यो माययेदं ससृजेऽतिविस्मयः ॥ ४५ ॥**

**प्रकाशिका–** त्वदन्येनेदं कर्म मनसा ज्ञातुमशक्यं किं पुनः कर्तुमिति विज्ञापयन्ति ॥ क इति । श्रद्दधीत करिष्यामीत्यध्यवस्येत । अन्यतमोऽन्यस्तव त्वया कृतं भुव उद्बिबर्हणमुद्धरणं तवेदं नाश्चर्यमित्याहुः ॥ न विस्मय इति । असौ भूम्युद्धरणरूपो व्यापारो विश्वविस्मये सर्वाश्चर्यवति । एत देवोपपादयति । यो भवान्यतो मायया स्वेच्छयेदं विश्वं ससृजेऽतोऽतिविस्मयः । अतिशयेन विस्मयवान् ॥ ४५ ॥

**विधुन्वता वेदमयं निजं वपु-**
**र्जनस्तपस्सत्यनिवासिनो वयम् ।**
**सटाशिखोद्भूतशिवाम्बुबिन्दुभि-**
**र्विमृज्यमाना भृशमीश पाविताः ॥ ४६ ॥**

**प्रकाशिका–** विस्मयमेव दर्शयन्त आहुः ॥ विधुन्वतेति । वेदमयं वेदप्रतिपाद्यम् । सटानां शिखाभिरग्रैरुद्भूता उत्क्षिप्ता ये शिवा अंबुबिन्दवस्तैर्विमृज्यमानाः सिच्यमाना विशेषेण शुद्ध्यन्त इति वा । पाविताः पवित्रीकृताः । सर्वकर्मस्वधिकृता इति यावत् ॥ ४६ ॥

**स वै बत भ्रष्टमतिस्तवैषते**
**यः कर्मणां पारमपारकर्मणः ।**
**त्वद्योगमायागुणयोगमोहतो**
**विस्रंसतां नो भगवन् विधेहि शम् ॥ ४७ ॥**

**प्रकाशिका–** अपारकर्मणस्तव कर्मणां भूम्युद्धरणादीनां पारमन्तं य एष ते ज्ञातुमिच्छति स भ्रष्टमतिर्मूर्खो वा इति प्रमाणप्रसिद्धमेतत् । बतेत्यास्वादने । कर्मणां पारज्ञानप्रसक्तिरेव कुत इत्यतोऽत्र कारणं दर्शयन्तोऽपारत्वज्ञानदार्ढ्याय प्रार्थयन्ते ॥ त्वद्योगमायेति । तव योगमाया बन्धकशक्तिस्तस्या गुणाः सामर्थ्यं तेन मोहितात्मनां मोहयुक्तमनसामत एव विस्रंसतामदृढज्ञानानां शं ज्ञानदार्ढ्यप्रयुक्तं सुखम् ॥ ४७ ॥

**मैत्रेय उवाच–**
**प्रत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ।**
**सलिले स्वखुराक्रान्त उपाधत्तावितावनिम् ॥ ४८ ॥**

**प्रकाशिका–** अविता रक्षकोऽवनिं भूमिम् ॥ ४८ ॥

स इत्थं भगवानुर्वीं विश्वक्सेनः प्रजापतिः ।
रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४९ ॥

य एवमेतां हरिमेधसो हरेः
कथां सुभद्रां कथनीयमायिनः ।
श्रुण्वीत भक्त्या श्रवयेत वोशतीं
जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ५० ॥

**प्रकाशिका–** इयं कथा यथावस्थिता तथैवेत्याशयेन श्रद्दधतुः फलमाह ॥ य एवमिति । हरेर्मेधा धारणवती बुद्धिर्यस्मात्स तथोक्तस्तस्य हरेर्हर्यवताराख्यवराहस्य कथनीयमायिनः कथनीयमाहात्म्यस्य श्रवयेत् । ह्रस्वं छान्दसम् । उशतीं कमनीयाम् ॥ ५० ॥

तस्मिन् प्रसन्ने सकलाशिषां प्रभौ
किं दुर्लभं ताभिरलं लवात्मभिः ।
अनन्यभक्त्या भजतां गुहाशयः
स्वयं विधत्ते स्वगतिं परः पुमान् ॥ ५१ ॥

**प्रकाशिका–** तत्प्रसादेनापि किमित्यत आह ॥ तस्मिन्निति । सकलाशिषाम् । प्रभौ दातरि किं दुर्लभं न किमपि । सकला अप्याशिषः सुलभा इत्यर्थः । यद्यपि सुलभास्तथाऽपि न प्रार्थनीया इत्याह ॥ ताभिरिति । आशीर्भिरलं ता न प्रार्थनीया इत्यर्थः । लवात्मभिस्तुच्छाभिः । तर्हि त्वद्भजनं व्यर्थमिति नाशङ्कनीयमित्याह ॥ अनन्येति । स्वगतिं स्वलोकम् । स्वलक्षणगम्यमिति वा । गुहाशय इत्यनेन भक्तिपूर्वकं भजनज्ञानं तस्यास्तीति सूचयति ॥ ५१ ॥

को नाम लोके पुरुषार्थसारवित्
पुराकथानां भगवत्कथासुधाम् ।
आपीय कर्णाञ्जलिभिर्भवापहा-
महो विरज्येत विना नरेतरम् ॥ ५२ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्दशोऽध्यायः ।

**तात्पर्यम्–** 'ब्रह्मजस्तु' हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयः(यं) कर्णताडनात् । पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् । भुवमुद्धरतैवासौ हरिणा

**क्रोडमूर्तिने'ति ब्रह्माण्डे ॥ 'व्यत्यासेनापि चोच्यन्ते अविवेकेन कुत्रचित् । दुष्टानां मोहनार्थाय तत्र तत्र कथाः क्वचिदि'ति स्कान्दे ॥ अविवेकेनेत्यस्य विविच्यनोच्यत इत्यर्थः । न तु कर्तुरविवेकः । 'सर्वज्ञस्य कुतोऽज्ञानं व्यासस्योदारकर्मणः । दुष्टानां मोहनार्थाये'ति च ॥ ५२ ॥ इति तृतीयतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥**

**प्रकाशिका—** अवश्यमियं कथा सारज्ञेन सादरं श्रोतव्येत्याशयेनाह ॥ को नामेति । पुराकथानां पूर्वतनकथानां मध्ये विद्यमानानां भगवत्कथालक्षणसुधामापीय सादरमाकर्ण्य पश्चात्को नाम पुरुषार्थसारविद्विरज्येत न कोऽपि । ननु दृश्यते तादृश इत्यत उक्तम् ॥ नरेतरं पशुं विनेति । तथा च योऽत्र विरक्तः स पशुरिति भावः । नन्वत्र वराहहतत्वेनोच्यमानो हिरण्याक्षः कः किमादिसर्गे ब्रह्मज उतैतन्मन्वन्तरे कश्यपादित्यां जातः । नाद्यः । उत्तराध्यायेषु विदुरप्रश्नपूर्वकमुक्तस्यास्य हिरण्याक्षस्य कश्यपपुत्रत्वावगमात् । न द्वितीयः । तमादिदैत्यं गदया पतन्तमित्यत्रादिदैत्यो हिरण्याक्ष इत्युत्तरत्र च तस्यादिदैत्यवचनात् । किं चात्र हतस्य दंष्ट्रया हननमुच्यते । अत एव तद्रक्तपङ्काङ्कितगण्डतुण्ड इत्युक्तम् । दंष्ट्रहतत्वं विना रक्तपङ्काङ्कितुण्डत्वाद्यनुपपत्तेः । उत्तराध्याये च करेण कर्णमूलेऽहन्नित्युक्तम् । न ह्येकदैकस्य दंष्ट्रया हननं कर्णमूले करेण हननं च संभवति । किं चात्र प्रलयजले मग्नाया भुव उद्धरणमुक्तम् । तत्कथं कश्यपजहिरण्याक्षस्य वधे विवक्षिते संभवति । तदा प्रलयजलाभावात् । अतः कथमेतदित्याशङ्कायामेतदध्यायसमुदायतात्पर्यं प्रमाणेनैवाह ॥ ब्रह्मजस्त्विति । तु शब्दोऽवधारणे । तेन कश्यपजत्वं व्यावर्तयति । प्रथमं पूर्वम् । अनेनैतदध्यायतात्पर्यमुक्तम् । उत्तराध्यायानां तात्पर्यमाह ॥ स एवेति । पार्षदो विजयः । द्वितीयं पश्चात्कर्णताडनात्कर्णमूले करेण ताडनात् । हत इत्यनुवर्तते । तथा चादिसर्गे ब्रह्मजो यो हिरण्याक्षः स एव वरोहण दंष्ट्रया हत इत्यस्मिन्नध्याये उच्यते । उत्तराध्यायेषु तस्यैव भगवत्पार्षदविजयदेहाविष्टस्य पुनः करेण हननम् । अत एकस्यैव देहभेदेन हननद्वयमत्राध्यायसमूहे विवक्षितमतो न कोऽपि विरोध इति भावः । नन्वेवं द्वितीयहनने प्रलयजलाभावात्कथं भुव उद्धरता हननमित्यत आह ॥ पूर्वमिति । लयोदके भगवत एव मग्नां भुवमुद्धरता क्रोडमूर्तिना हरिणाऽसौ ब्रह्मजो हिरण्याक्षः पूर्वमेव हतः । द्वितीयं पश्चात्तु तेन पार्षदाविष्टेन सामुद्रजले मज्जतां भुवमुद्धरता हतः । अतस्तदा प्रलयजलाभावेऽपि न दोष इति भावः । नन्वेवं विविच्यात्र कस्मान्नोक्तमित्यतोऽत्र प्रयोजनं प्रमाणेनैवाह ॥ व्यत्यासेनापीति । कुत्रचिद्ग्रन्थे तत्र तत्र प्रदेशेषु कथा व्यत्यासेन कालव्यत्यासेन पुरुषव्यत्यासेन चोच्यन्ते । यथा श्रीकृष्णगमनानन्तरं भीमः सुयोधनं प्राहसदिति क्वचिद्वचनम् । यथा वाऽत्रैव ग्रन्थे दशमे राजसूयकथनावसरे दिग्विजयकथनान्तरं जरासन्धवधकथनम् । पुरुषव्यत्यासेन वचनं तु श्रीकृष्णेन द्रौपदीं प्रति धनञ्जयशरैर्हतान्दुर्योधनादींस्ते दर्शयिष्य इत्यादिकं क्वचिदुक्तं तदेव द्रष्टव्यम् ।

न विद्यते विवेको विविच्य वचनं यस्मिन्वाक्ये तदविवेकं तेनेत्यर्थः । कुत्रचिद्ग्रन्थे । उभयत्र प्रयोजनमाह ।। दुष्टानामिति । अत्राविवेकेनेत्यस्य कर्तुः सम्यग्ज्ञानाभावेनेत्यर्थ इति प्रतीतिवारणाय तात्पर्यमाह ।। अविवेकेनेत्यस्येति । अक्षरार्थस्तु पूर्वमेवोक्तः कर्तुरविवेक एव किं न स्यादित्यतोऽत्र बाधकं वक्तुमाह ।। नत्विति । नैवेत्यर्थः । कुत इत्यत आह ।। सर्वज्ञस्येति । उत्तरात् स्कन्दपुराण एवोत्तरत्राद्विद्यमानवाक्यात्तद्विरोधादित्यर्थः । अनन्तरङ्गज्ञापकमप्याह ।। दुष्टानामिति । दुष्टानां मोहो ह्येतादृशव्यासवचनस्यात्र प्रयोजनतयोच्यते । व्यासस्य विवेकवचने तदभिप्रायानुसारेणैव दुष्टैर्वाक्यार्थस्य ज्ञातत्वान्न मिथ्याज्ञानरूपो मोहस्तेषां स्यात् । अतोऽत्रविविच्यावचनमेवाविवेकशब्दार्थतया वर्णनीयमिति ज्ञायत इति भावः । अस्योदाहरणं तु प्रकृतहिरण्याक्षवधकथनादिकमिति मन्तव्यम् ।। ५२ ।। इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ।। ३-१४ ।।

## अथ पञ्चदशोऽध्यायः ।

**शुक उवाच–**

**निशम्य कौशारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ।**
**पुनः स पप्रच्छ समुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः ।। १ ।।**

**प्रकाशिका–** स्वस्यादरप्रदर्शनाय समुद्यतांजलिः । हरिमुद्दिश्येति शेषः ।। १ ।।

**विदुर उवाच–**

**तेनैव च मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना ।**
**आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ।। २ ।।**

**प्रकाशिका–** येन लयोदके मग्नां भुवमुद्धरता यज्ञांगजनकमूर्तिना हरिणा वराहरूपेण ब्रह्मजो हिरण्याक्षो हतस्तेनैव हरिणाऽऽदिदैत्यो हिरण्याक्षः स एव कश्यपजपार्षदविजयदेहाविष्टः पुनर्हत इत्यनुशुश्रुमो ग्रन्थान्तरे ज्ञानिमुखात् ।। २ ।।

**तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया ।**
**दैत्यराजस्य च ब्रह्मन् कस्माद्धेतोरभून्मृधः ।। ३ ।।**

**प्रकाशिका–** तद्विस्तरतो वर्णयेत्याशयेन पृच्छति ॥ तस्य चेति । क्षोणी सामुद्रजले तेन मज्जिताम् । दैत्यराजस्य पार्षददेहाविष्टस्य । मृधो युद्धम् ॥ ३ ॥

**मैत्रेय उवाच–**

**साधु वीर त्वया पृष्टमवतारकथां हरेः ।**
**यत् त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥ ४ ॥**

**प्रकाशिका–** प्रश्नस्य साधुत्वं कुत इत्यत आह ॥ अवतारेति । यद्यस्मात्त्वं मृत्युपाशविशातनीं छन्दिनीं हरेरवतारकथां पृच्छसि । तथाच पुरुषार्थसाधनीभूतकथाविषयकत्वादस्य प्रश्नस्य साधुत्वमिति भावः ॥ ४ ॥

**ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ।**
**मृत्योः कृत्वेह मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम् ॥ ५ ॥**

**प्रकाशिका–** हरिकथाया मृत्युपाशविनाशकत्वमेव न किं त्वैहिकामुष्मिकसकलपुरुषार्थसाधकत्वमिति दृष्टान्तमुखेनाह ॥ ययेति । मुनिना नारदेन अर्भकः पञ्चवर्षो ध्रुवः । इह जीवलोके मृत्योर्मूर्ध्न्यङ्घ्रिं कृत्वा । मृत्युं जित्वेति यावत् । अनेन सशरीर एव हरेः पदं ध्रुवस्थानमारुरोहेति गम्यते ॥ ५ ॥

**अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ।**
**ब्रह्मणा देवदेवेन देवानामनुपृच्छताम् ॥ ६ ॥**

**प्रकाशिका–** तयोः सङ्ग्रामहेतुत्वं वक्तुं पुरावृत्तं कथयति ॥ अथेति । अथ तस्माद्धरिकथाविषयत्वदीयप्रश्नोत्तरस्यावश्यं वक्तव्यत्वात् । न केवलमत्रार्थे मदीयवचनं किं त्वयं वक्ष्यमाणेतिहासोऽपि मे मया श्रुतोऽस्ति । तमेव प्रश्नोत्तरत्वेन । वक्ष्यामीति शेषः ॥ ६ ॥

**दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ।**
**अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता ॥ ७ ॥**

**प्रकाशिका–** इतिहासमेवाह ॥ दितिरिति । दाक्षायणी दक्षस्य पुत्री दितिर्नामतो मारीचं मरीचिपुत्रम् । रामशरहतमारीचव्यावृत्त्यर्थं कश्यपमिति । तथा साङ्केतितपुरुषान्तरव्यावृत्तये मारीचमिति । चकमे कामितवती । सन्ध्यायां सन्ध्याकाले । तत्र हेतुर्हृच्छयः कामस्तेनार्दितेति ॥ ७ ॥

**इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम् ।**
**निम्लोचत्यर्क आसीनमग्र्यागारे समाहितम् ॥ ८ ॥**

**प्रकाशिका–** तदप्यग्निहोत्रगृहे तत्रापि समाहितं समाधियुक्तम् । चकम इत्याह ॥ इष्ट्वेति । अग्निरेव जिह्वा यस्य स तथा तं यजुषां पतिं यजुर्वेदप्रतिपाद्यं यज्ञाराध्यं पुरुषं पूर्णषड्गुणं विष्णुम् । निम्लोचत्यस्तंगच्छति । अग्र्यागारेऽग्निगृहे ॥ ८ ॥

**दितिरुवाच–**

**एष मां त्वत्कृते विद्वन् काम आत्तशरासनः ।**
**दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः ॥ ९ ॥**

**प्रकाशिका–** त्वत्कृते त्वामुद्दिश्य दुनोति पीडयति । विक्रम्य शौर्यमाविर्भाव्य । रम्भां कदलीम् । ॥ ९ ॥

**तद् भवान् दह्यमानायां सपत्नीनां समृद्धिभिः ।**
**प्रजावतीनां भद्रं ते मय्यायुङ्क्तामनुग्रहम् ॥ १० ॥**

**प्रकाशिका–** न केवलं भोगेच्छुरहं त्वां याचे किंतु प्रयोजनांतरेच्छयाऽपीत्याह ॥ तद्भवानिति । प्रजावतीनां पुत्रवतीनां ते भद्रमस्तु । आयुङ्क्तां सर्वतो युनक्तं सम्यक् करोतु । मय्ययुङ्क्तामिति पाठेऽडागमः छांदसः ॥ १० ॥

**भर्तर्याप्तोरुमानानां लोकानाविशते यशः ।**
**पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥**

**प्रकाशिका–** अनुग्रहसाध्यं प्रयोजनं दर्शयति ॥ भर्तरीति । सप्तमी पञ्चम्यर्थे । भर्तुः प्राप्तबहुमानानामित्यर्थः । स्त्रीणामिति शेषः । मानमपि पुत्रप्राप्तिलक्षणमित्याशयेनाह ॥ पतिरिति । प्रजया पुत्ररूपेण । तज्जाया जाया भवति यदस्यां जायते पुनरिति श्रुतेरिति भावः ॥ ११ ॥

**पुरा पिता नो भगवान् दक्षो दुहितृवत्सलः ।**
**कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक् ॥ १२ ॥**

**स विदित्वात्मजानां नो भावं सन्तानभावनः ।**
**त्रयोदशाददात् तासां यास्ते शीलमनुव्रताः ॥ १३ ॥**

**प्रकाशिका–** नोऽस्माकं पिता नोऽस्मान्पृथगपृच्छत् भावमभिप्रायमददाददात् ॥ १२,१३ ॥

**अथ मे कुरु कल्याण कामं कञ्जविलोचन ।**
**आप्तोपसर्पणं भूमन्नमोघं हि महीयसि ॥ १४ ॥**

**प्रकाशिका–** अथ तस्मान्महीयसि त्वादृशे महत्तमे पुरुषे आप्तत्वेनोपसर्पणं शरणगमनम् ॥१४॥

**मैत्रेय उवाच–**

**इति तां वीर मारीचः कृपणां बहुभाषिणीम् ।**
**प्रत्याहानुनयन् वाचा प्रवृद्धानङ्गकश्मलाम् ॥ १५ ॥**

**प्रकाशिका–** भो वीर । कृपणाम् । एष मां त्वत्कृते विद्वन्निति श्लोकद्वये पूर्वं कृपणत्वस्योक्तत्वात् । भर्तरीत्यादिश्लोकचतुष्टयोक्तरीत्या बहुभाषिणीं प्रवृद्धोऽनंगः कामस्तेन कृतं कश्मलं चित्तक्षोभलक्षणं यस्याः सा तथा ताम् ॥ १५ ॥

**एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि ।**
**तस्याः कामं न कः कुर्यात् सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥**

**प्रकाशिका–** अथाऽपि काममेनं त इत्यादिना स्वेन वक्ष्यमाणमङ्गीकारयितुं भार्यां स्तौति ॥ एष त इति पञ्चभिः । यतो यस्याः सकाशात् । त्रैवर्गिकी त्रयाणां धर्मार्थकामानां सम्बन्धिनी सिद्धिः प्राप्तिः ॥ १६ ॥

**सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ।**
**व्यसनार्णवमत्येति जलयानैर्यथार्णवम् ॥ १७ ॥**

**प्रकाशिका–** सर्वाश्रमान् ब्रह्मचर्याद्याश्रमोक्तान् स्वाश्रमेण गार्हस्थ्याश्रमानुष्ठानेनोपादायान्नदानादिना सम्भाव्य ॥ १७ ॥

**यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य भामिनि ।**
**यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥**

**प्रकाशिका–** आत्मनो देहस्यार्धमग्निहोत्रादिकर्मसु द्वयोः सहाधिकारात् । यच्छब्दानाम् । हे भामिनि । सुन्दरी रमणी रामा कोपना सैव भामिनीत्यभिधानात् । कोपयुक्ते सुन्दरीत्यर्थः । स्वधुरं दृष्टादृष्टकर्मभागम् । अध्यस्य निक्षिप्य विज्वरो निश्चिंतः ॥ १८ ॥

**यामाश्रित्येन्द्रियारातीन् दुर्जयानितराश्रमैः ।**
**वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा ॥ १९ ॥**

**प्रकाशिका–** इन्द्रियाण्येवारातयः शत्रवस्तान् । इतर आश्रमो येषां तैर्हेलाभिर्लीलाभिर्जयेम । सभार्यस्येन्द्रियाणि प्रायेणेतस्ततो न गच्छन्तीति भावः ॥ १९ ॥

**न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ।**
**अप्यायुषा वा कार्त्स्न्येन ये चान्ये गुणगृध्नवः ॥ २० ॥**

**प्रकाशिका–** तामनेकोपकारकर्त्रीं त्वां कार्त्स्न्येनानुकर्तुं प्रत्युपकारैरनृणीभवितुं न प्रभवो न समर्थाः । गुणगृध्नवो गुणलुब्धाः पुरुषास्तेऽपि न समर्थाः । आयुषाऽपि सम्पूर्णेनाप्यायुषा । वा शब्दाज्जन्मान्तरेऽपि न प्रभव इति सूचयति ॥ २० ॥

**अथापि काममेनं ते प्रजायै करवाण्यलम् ।**
**यथा मां नातिवाचन्ति मूहूर्तं प्रतिपालय ॥ २१ ॥**

**प्रकाशिका–** यद्यपि त्वदनुकरणमशक्यमथाऽपि प्रजायै पुत्रोत्पत्तौ । यथा येन मुहुर्तेन नातिवाचन्ति न निन्दन्ति ज्ञानिनस्तदेकं मुहूर्तं प्रतिपालयानिष्टकारि यथा न स्यात्तथा कुरु । एकमुहूर्तगमनपर्यन्तं धैर्यं कुर्विति यावत् ॥ २१ ॥

**एषा घोरतमा वेला घोराणां घोरदर्शना ।**
**चरन्ति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥**

**प्रकाशिका–** घोराणां वेत्युक्तं स्पष्टयति ॥ चरन्तीति ॥ २२ ॥

**एतस्यां साध्वि सन्ध्यायां भगवान् भूतभावनः ।**
**परीतो भूतपार्षद्भिर्वृषेणाटति भूतराट् ॥ २३ ॥**

**प्रकाशिका–** भूतान्यस्माकं किं करिष्यन्तीत्यत आह ॥ एतस्यामिति । भूतान्येव पार्षदा भृत्यास्तैः । पार्षद शब्दपर्यायः पार्षच्छब्दः । वृषेण वृषमारुह्य । तथाच भूतराट् रुद्रोऽधिकारिणोऽस्मान्दण्डयिष्यतीति भावः ॥ २३ ॥

**श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ।**
**भस्मावकुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥**

**प्रकाशिका–** तर्हि तदज्ञाता भवानीत्यतस्तदज्ञातत्वं तवाशक्यमित्याशयेनाह ॥ श्मशानेति । तत्कर्तृकदर्शनमपि भयप्रदमिति द्योतनायैतानि विशेषणानि । श्मशाने विद्यमानश्चक्रानिलश्चक्राकार-वातस्तेनोत्पन्ना या धूलिस्तया धूम्रवर्णो विकीर्णो विक्षिप्तो विद्योतो विशिष्टद्युतिमान् जटाकलापो यस्य स तथा । भस्मनावकुण्ठोऽवरूषणं यस्य सः । अमलं रुक्मं रजतम् । भस्मावकुण्ठोऽमल-रुक्मवद्धवलदेहो यस्य स तथा । त्रिभिः नेत्रैरिति शेषः । अस्मिन्मूहूर्तेऽधिकारिणो निलीनानपि तृतीयनेत्रेण पश्यतीति भावः । ते देवरः सहोदरीपतिः । इदं लज्जोत्पादनार्थमुक्तम् ॥ २४ ॥

**न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः ।**
**वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥**

**प्रकाशिका–** ननु स्वजनानामस्माकं स दण्डं न करिष्यतीत्यत आह ॥ न यस्येति । स्वजनो बन्धुः परो वैरी योग्यतातिरेकेण नास्तीत्यर्थः । एवमग्रेऽपि । विगर्ह्यो विशेषेण निंद्यः । वयमपि तादृशश्चेत्कुतोऽस्माकं तद्भयमित्यत आह ॥ वयमिति । येन चरणेनापविद्धां तिर्यक् प्रहरतां भुक्तभोगा यया तामप्यजां गृहभार्यादिरूपां प्रकृतिं व्रतैस्तमाराध्याशास्महे इच्छामः । बत इत्यनेनास्माकं न तादृशवैराग्यमिति सूचयति । अतस्तद्भयमस्माकमस्त्येवेति भावः ॥ २५ ॥

**यस्यानवद्याचरितं मनीषिणो**
**गृणन्त्यविद्यापटलं बिभित्सवः ।**
**निरस्तसाम्यातिशयो हरेः स्वयं**
**पिशाचचर्यामचरत् सतां गतिः ॥ २६ ॥**

**प्रकाशिका–** नन्वयं पिशाचचर्यां चरन्दृश्यतेऽतः पिशाचवदेवाकिंचित्कर इत्यत आह ॥ यस्येति । यस्य महारुद्रस्यानवद्यानि विषमरागादिशून्यान्याचरितानि हरिध्यानादिरूपाणि मनीषिणो नारदाद्या अविद्यालक्षणं पटलं ज्ञानदृष्टिप्रतिबन्धकं बिभित्सवो भेतुमिच्छव इन्द्रादिसर्वजीवेषु निरस्तौ साम्यातिशयौ यस्य स तथा । सतां नारदादीनां गतिरुपदेशार्थं गम्य एतादृशोऽपि स्वयं कारणविशेषेनैव पिशाचचर्यामचरत् । अतः कथमकिंचित्कर इति भावः ॥ २६ ॥

**हसन्ति यस्याचरितं हि दुर्भगाः**
**स्वात्मन् रतस्याविदुषः समीहितम् ।**
**यैर्वस्त्रमाल्याभरणानुलेपनैः**
**श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥**

**प्रकाशिका–** नन्वेवं चेत्केचिदेनं कस्माद्धसन्तीत्यत आह ॥ हसंतीति । स्वात्मन्स्वात्मनि स्वांतर्यामिणि समीहितमभिप्रेतमविदुषोऽविद्वांसः । सुपां सुलुगिति जसः शस् । श्वभोजनं शुनो भोजनमित्यन्नस्थानीयं शरीरं स्वात्मतयेदमेव स्वात्मेति बुद्ध्योपलालितं पोषितम् ॥ २७ ॥

**ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं हि मायया ।**
**आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥ २८ ॥**

**तात्पर्यम्– 'पिशाचचर्यामचरद्रुद्रो विष्ण्वाज्ञयैव तु । गर्भिणीवधनोदार्थमहो विष्णुर्विडम्बकृदि'ति वाराहे ॥ २८ ॥**

**प्रकाशिका–** केनचित्कारणेन रुद्रः पिशाचचर्यामचरदित्युक्तम् । किं तत्कारणमित्यपेक्षायामाह ॥ ब्रह्मादय इति । अत्र यच्छब्दाभ्यां रुद्रपरामर्शे ब्रह्मादीनां तत्कृतसेतुपालनत्वसम्भवान्नास्य रुद्रस्याज्ञाकर्यन्यस्य पिशाचचर्येत्यर्थप्रतीतिप्रसङ्गाच्च विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ पिशाचचर्यामिति । गर्भिणी काचन तस्या वधजनितपापनाशार्थं या विष्ण्वाज्ञा तयैवेति योज्यम् । तुशब्दो भक्तिपूर्वकत्वादिति विशेषसूचकः । अनेन मूले यच्छब्दद्वयं तच्छब्दश्च विष्णुपराः पिशाचचर्येत्यतः पूर्वं रुद्रस्येति शेष इति दर्शयति । ननु रुद्रस्य ज्ञानिनः कथं गर्भिणीवधेन पापप्रसक्तिर्यन्नाशार्थं विष्णुना पिशाचचर्या ज्ञापितेत्यत आह ॥ अहो विष्णुरिति । विष्णुर्विडम्बकृल्लोकानुकरणकर्ता । लोके हि भृत्यैः पापे कृते तत्प्रायश्चित्तार्थं तत्स्वामिभिः किञ्चिद्व्रतं विधीयते । तथा तस्य पापाभावेऽपि लोकशिक्षार्थं चकारेति भावः । अहो आश्चर्यम् । एतादृशानपि स्वाज्ञाकारिणः करोतीति । अनेन मूलेऽहो विभूम्न इति चतुर्थपादतात्पर्यमुक्तमिति ज्ञातव्यम् । ततश्चायं श्लोकार्थः । ब्रह्मादयो देवा येन विष्णुना कृतं सेतुं धर्ममर्यादां पालयन्तीति यत्कृतसेतुपालाः । तस्याज्ञाकरीत्यत्रेदं हेतुतयोक्तमिति ज्ञातव्यम् । अत्रापि हेतुं सूचयन्नाह ॥ यत्कारणमिति । इदं विश्वं यत्कारणं तद्यत्कारणम् । विश्वनिमित्तत्वं चेच्छयैवेत्याह । माययेति । च शब्दोऽवधारणे । माययैवेत्यर्थः । तस्य विष्णोराज्ञाकरी गर्भिणीवधजनितपापनाशाय या विष्णुना कृताऽऽज्ञा तत्करणरूपा रुद्रस्य पिशाचचर्या । ननु रुद्रस्य ज्ञानिनः पापप्रसक्तेरेवाभावात्कथमेवमाज्ञा विष्णुना कृतेत्यत आह ॥ अहो विभूम्न इति । विशेषेण इति । विशेषेण पूर्णस्य विष्णोश्चरितं रुद्राद्याज्ञापनं विडम्बनं लोकानुकरणरूपमहो आश्चर्यम् । एतादृशानपि स्वाज्ञाकर्मणि प्रवर्तयतीति ॥ २८ ॥

**मैत्रेय उवाच–**

**एवं संवेदिता भर्त्रा मन्मथोन्मथितेन्द्रिया ।**
**जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥**

**प्रकाशिका**– संवेदिता सम्यग्ज्ञापिता । वासः परिधानम् । वृषलीव वेश्येव ॥ २९ ॥

**संविदित्वाथ भार्यायास्तन्निर्बन्धं विकर्मणि ।**
**नत्वा दिष्टाय रहसि तया चोपविवेश ह ॥ ३० ॥**

**प्रकाशिका**– निर्बन्धं दुराग्रहं विकर्मणि निषिद्धकर्मणि दिष्टाय कर्मसाक्षिणे देवाय । उपविवेश निर्देश उपभोगः स्यादुपवेशस्तु मैथुनमित्यभिधानान्मैथुनं कृतवानित्यर्थः । हेति हरि संकल्प एतादृश इत्यास्वादने ॥ ३० ॥

**अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ।**
**ध्यायन् जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥**

**प्रकाशिका**– उपस्पृश्य स्नात्वा जजाप । गायत्रीमिति शेषः ॥ ३१ ॥

**दितिस्तु व्रीडिता तेन कर्मावद्येन भारत ।**
**उपसङ्गम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥**

**प्रकाशिका**– कर्मावद्येन कर्मजनितदोषेण ॥ ३२ ॥

**न मे गर्भमिमं ब्रह्मन् भूतानामृषभोऽवधीत् ।**
**रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥**

**प्रकाशिका**– नावधीत् मा हंत्वित्यर्थः । वधशंकाबीजमाह ॥ यस्येति । अंहसमपराधमकरवं कृतवती ॥ ३३ ॥

**नमो रुद्राय महते देवायोग्राय मीढुषे ।**
**शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥ ३४ ॥**

**प्रकाशिका**– नतानां न भयमिति गत्वा रुद्रं नमति ॥ नम इति रुद्राय भक्तापराधरूपरुग्द्रावणकर्त्रे । उग्राय दुष्टानामतिक्रूराय मीढुषे भक्ताभीष्टसेचकाय साधुषु न्यस्तदण्डाय दुष्टेषु धृतदण्डायातएव मन्यवे क्रोधवते मननशीलायेति वा ॥ ३४ ॥

**स नः प्रसीदताद् भीमो भगवानुर्वनुग्रहः ।**
**व्याधस्याप्यानुकम्प्यानां स्त्रीणां देवः सतीपतिः ॥ ३५ ॥**

प्रकाशिका– मा भीर्यस्मादसौ भीमः । प्रसादकरणे हेतुं कैमुत्येनाह ॥ व्याधस्येति । हिंसकस्यापीत्यर्थः । सतीपतिरित्यनेन स्वभगिनीपतित्वरूपमपि हेतुं सूचयति ॥ ३५ ॥

**मैत्रेय उवाच–**

**स्वगर्भस्याशिषं लोक्यामाशासानां प्रवेपतीम् ।**
**निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥**

**प्रकाशिका–** लोक्यां लोकद्वयार्हाम् । आशिषं शुभम् । आशासानां कामयमानां प्रवेपतीं कंपमानां संध्यायां यो नियमः स निवृत्तो यस्य स तथा ॥ ३६ ॥

**कश्यप उवाच–**

**अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ।**
**मन्निर्देशातिचारेण देवानां चैव हेलनात् ॥ ३७ ॥**

**प्रकाशिका–** आत्मनो मनसोऽप्रायत्यान्निग्रहे प्रकृष्टयत्नाकरणान्मौहूर्तिकाद्दोषात् । संध्याकाल-रूपमुहूर्तसम्बन्धिमुहूर्तजनितदोषात् । उतापि । मन्निर्देशातिचारेण मदाज्ञातिक्रमेण । रुद्रादिदेवानां हेलनादवज्ञानाच्च ॥ ३७ ॥

**भविष्यतस्तवाभद्रावभद्रे जाठराधमौ ।**
**लोकान् सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः ॥ ३८ ॥**

**प्रकाशिका–** जाठराधमौ पुत्राधमावेव । अधमपुत्रत्वमेवोपपादयति ॥ लोकानिति । भो चण्डि क्रूरे ॥ ३८ ॥

**प्राणिनां हन्यमानानां दीनानामकृतागसाम् ।**
**स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥**

**प्रकाशिका–** प्राणिनामिति श्लोके त्वत्पुत्राभ्यामिति शेषः । हन्यमानानां सतां निगृह्यमाणानां सतीनाम् । कोपितेषु सत्सु ॥ ३९ ॥

**तदा विश्वेश्वरः क्रुद्धो भगवान् लोकभावनः ।**
**हनिष्यत्यवतीर्यासौ यथाद्रीञ्छतपर्वधृक् ॥ ४० ॥**

**प्रकाशिका–** शतपर्वधृग्वज्रधर इन्द्रः ।। ४० ।।

दितिरुवाच–

**वधं भगवता साक्षात् सुनाभोदारबाहुना ।**
**आशासे पुत्रयोर्मह्यं मा क्रुद्धाद् ब्राह्मणात् प्रभो ।। ४१ ।।**

**प्रकाशिका–** सुनाभेन सुदर्शनचक्रेणोदारौ बाहू यस्य तेन । आशासे इच्छामि । मह्यं मम महात्मसु कोपितेष्वित्युक्ते शंकितचित्ता सती प्रार्थयते ।। मा क्रुद्धाद्ब्राह्मणादिति । एकवचनं समुदायाभिप्रायम् । ब्राह्मणानां शापादित्यर्थः ।। ४१ ।।

**न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ।**
**नारक्यश्चानुगृह्णन्ति यां यां योनिमसौ गतः ।। ४२ ।।**

**प्रकाशिका–** ब्रह्मशापेन हतस्य किमनिष्टं भवतीत्यत आह ।। न ब्रह्मेति । दण्डः शापो नारका नरके पतिता अपि । तथा यां यां योनिमसौ ब्रह्मदण्डदग्धो भूतभयदो वा गतो भवति । तत्रस्थश्च नानुगृह्णन्ति न कृपां कुर्वन्ति ।। ४२ ।।

कश्यप उवाच–

**कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् ।**
**भगवत्युरुमानाच्च भवे मय्यपि चादरात् ।। ४३ ।।**

**प्रकाशिका–** कृतशोकानुतापेन कृतपापनिमित्तशोकजातेन पश्चात्तापेन । प्रत्यवमर्शनाद्युक्तायुक्तविचारानुसंधानादुरुमानाद्बहुमानात् । भवे रुद्रे ।। ४३ ।।

**पुत्रस्यैव च पुत्राणां भवितैकः सतां मतः ।**
**गायन्ति यद् यशः शुद्धं भगवद्यशसा समम् ।। ४४ ।।**

**प्रकाशिका–** पुत्रस्य हिरण्यकशिपुनामकस्य पुत्राणां मध्ये भविता भविष्यति । तमेव वर्णयति ।। गायन्तीति सार्धैः पञ्चभिः । गायन्ति गास्यन्ति । समं सह ।। ४४ ।।

**योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः ।**
**निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ।। ४५ ।।**

· **प्रकाशिका–** साधवो यस्य त्वत्पौत्रस्य शीलं शमदमादिस्वभावम् । अनुवर्तितुमनुगन्तुं प्राप्तुं निर्वैरादिभिर्योगैरूपायैरात्मानमन्तःकरणं भावयिष्यन्ति शोधयिष्यन्ति । किमिव । योगैर्दाह-विशेषादिरूपैर्दुर्वर्णं हीनवर्णं हेमेव सुवर्णमिव ॥ ४५ ॥

**यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ।**
**शश्वद्दृक् भगवान् यस्य तोष्यतेऽनन्यया दृशा ॥ ४६ ॥**

**प्रकाशिका–** यस्य भगवतः प्रसादादिदं विश्वं ब्रह्मादिकं प्रसीदति प्रसन्नं भवति । अत एव यदात्मकं यत्स्वामिकं यः शश्वद्दृक् सर्वदैकप्रकारज्ञानः स भगवान्यस्य त्वत्पौत्रस्यानन्यया दृशा सर्वोत्तमो हरिरेव तत्समोऽन्यो नास्तीत्येवं रूपज्ञानेन तोष्यते तोषं प्राप्स्यति ॥ ४६ ॥

**स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ।**
**प्रवृद्धभक्त्या ह्यनुभाविताशये विवेश्य वैकुण्ठमतद् विहास्यति ॥ ४७ ॥**

**प्रकाशिका–** भगवत्तोषनिमित्तांतराण्याह ॥ स वा इत्यादिना । महात्मा श्रेष्ठांतःकरणो महानु-भावो महाप्रभावो महतां मध्ये महिष्ठोऽतिशयेन महान् अनुभाविताशये शोधिते मनसि वैकुण्ठं नारायणम् । अतद्धरेरन्यत् । आब्रह्मस्तंबपर्यन्तं जगदसारमनित्यं चेति मत्वा विहास्यति त्यक्ष्यति ॥ ४७ ॥

**अलम्पटः शीलधरो गुणाकरो हृष्टः**
**परार्थे व्यथितेषु दुःखितः ।**
**अभूतशत्रुर्जगतः शोकहर्ता**
**नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥**

**प्रकाशिका–** निर्वैरादिभिरित्यत्रादिपदोक्तान् गुणानाह ॥ अलंपट इत्यादिना । अलंपटो विषया-सक्तिशून्यः शीलधरः । शील समाधाविति धातोः समाधिं कुर्वाणो गुणाकरः शमादिगुणाश्रयः परार्थे परेषां प्रयोजने सति स्वयं हृष्टः । परार्ध्यैति पाठे परेषामृद्ध्या समृद्ध्येति व्याख्येयम् । परेषु व्यथितेषु दुःखितेषु सत्सु स्वयं दुःखितोऽभूत् । शत्रुरजातशत्रुः शोकहर्ता तत्त्वोपदेशेन नैदाघिकम् उष्णकालजातम् ॥ ४८ ॥

**अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम् ।**
**पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम् ॥ ४९ ॥**

**प्रकाशिका–** श्रीसंज्ञाया ललनायाः स्त्रियो ललाममलंकारस्थानीयं द्रष्टा दृश्यति ॥ ४९ ॥

**मैत्रेय उवाच–**

**श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ।**
**पुत्रयोश्च वधं कृष्णाद् विदित्वासीन्महामनाः ॥ ५० ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चदशोऽध्यायः ।**

**तात्पर्यम्– 'विष्णुहस्तवधाल्लोको भक्तस्यान्यस्य न क्वचित् । तथाप्यसुरमोहाय न विविक्तं क्वचित्क्वचिदि'ति स्कान्दे ॥ 'हिरण्यकशिपुश्चापि भगवन्निन्दया तम' इति च । 'स्वतः सद्गति-योग्यस्य पुत्रादेर्हेतुता भवेत् । योग्यताऽनादिभक्तिः स्यादयोग्यस्य कुतो गतिरि'ति ब्रह्मतर्के ॥ ५० ॥ इति तृतीयतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥**

**प्रकाशिका–** अमोदत पौत्रेण पुत्रयोः सद्गतिर्भविष्यतीति भावेनामोदतेत्यर्थः । कृष्णाद्धरेर्महा-मनाः सोत्साहचित्ता । अत्र कृष्णहस्तवधमात्रेण सर्वेषामपि सद्गतिर्भवतीत्युच्यत इति प्रतीय-तेऽतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ विष्णुहस्तेति । लोक ऊर्ध्वोऽन्यस्याभक्तस्य । तर्ह्येवं मूलं विविच्य कस्मान्नोक्तमित्यत आह ॥ तथाऽपीति । न विविक्तं न विविच्योक्तं क्वचिद्ग्रन्थे । ननु कुत एवं सङ्कोचः । अभक्तानामपि विष्णुहस्तवधेनोर्ध्वलोकः किं न स्यादित्यतोऽत्र बाधकमाह ॥ हिरण्येति । यद्यभक्तस्यापि विष्णुहस्तवधादूर्ध्वलोकस्तर्हि भगवद्धतस्य हिरण्यकशिपोस्तमः प्रवेशप्रसक्ति-रत्रोच्यमानाऽनुपपन्ना स्यादिति बाधकमनेनोक्तमिति ज्ञातव्यम् । श्रुत्वा भागवतं पौत्रममोदतेत्युक्त्या पुत्रयो. पौत्रेण सद्गतिर्भविष्यतीत्यभिप्रेतं तदपि नाभक्तविषयमित्याशयेन प्रमाणं पठति । स्वतइति । स्वभावत एव न तु दक्षिणातर्पितवैष्णवर्त्विगनुग्रहेण । सद्गतियोग्यस्यापि तु । सद्गतिप्राप्ता विशेषः का स्वतः सद्गतियोग्यतेत्यत उक्तम् ॥ योग्यतेति । कुत एवं सङ्कोच इत्यत उक्तम् । अयोग्यस्येति । अनादिभक्तिरूपयोग्यताशून्यस्येत्यर्थः । गतिः सद्गतिः कुतो न कुतोऽपीत्यर्थः । तथाच स्वपुत्रयोर्जीवद्वयसमावेशात् । अनादिभक्तिमतोः पौत्रेण सद्गतिर्भविष्यतीत्यमोदतेति तात्पर्यमत्रेति भावः ॥ ५० ॥ इति श्रीभागवतटिप्पण्यां पञ्चदशोऽध्यायः ॥ ३-१५ ॥

## अथ षोडशोऽध्यायः ।

**मैत्रेय उवाच–**

**प्राजापत्यं तु तत् तेजः परतेजोहनं दितिः ।**
**दधार वर्षाणि शतं शङ्कमानाऽसुरार्दनात् ॥ १ ॥**

**प्रकाशिका–** प्राजापत्यं प्रजापतेः कश्यपस्य सम्बन्धि तेजो वीर्यं परेषां तेजः सामर्थ्यं हंतीति परतेजोहनम्। असुरार्दनाद्धरेर्वधं शङ्कमाना सती ॥ १ ॥

**लोके तेन हतालोके लोकपाला हतौजसः ।**
**न्यवेदयन् विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥**

**प्रकाशिका–** तेन गर्भेण हता लोके निरस्तसूर्यादिप्रकाशे तत्परिहारार्थं हतौजसो नष्टसामर्थ्याः। विश्वसृजे ब्रह्मणे ध्वान्तेन कृतं व्यातिकरं व्यत्यासम्। दिगन्तरभ्रममिति यावत् ॥ २ ॥

**देवा ऊचुः–**

**तम एतद् विभो वेत्थ संविग्ना यद् वयं भृशम् ।**
**न ह्यव्यक्तं भगवतः कालेनास्पष्टवर्त्मनः ॥ ३ ॥**

**प्रकाशिका–** वेत्थ जानासि। यद्यतो वयं संविग्ना भ्रान्ता हि यस्माद्भगवतस्तवाव्यक्तमज्ञानं न। कुत इत्यत उक्तम्। कालेनेति। कालेन कालादिनाऽस्पृष्टमतिरोहितं वर्त्म ज्ञानमार्गो यस्य स तथा यस्य ॥ ३ ॥

**देवदेव जगद्धातर्लोकनाथशिखामणे ।**
**परेषामपरेषां वा त्वं भूतानामसि भाववित् ॥ ४ ॥**

**प्रकाशिका–** सार्वज्ञ्यमेव विशदमाहुः ॥ देवदेवेति। परेषामुत्तमानामपरेषामधमानां भावविद-भिप्रायज्ञोऽसि। केनाभिप्रायेण दितेर्गर्भोऽवर्धत इति जानासीत्यर्थः ॥ ४ ॥

**नमो विज्ञानवीर्याय माययेदमुपेयुषे ।**
**गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये ॥ ५ ॥**

**प्रकाशिका–** प्रकृतोपद्रवशान्तिकरणाय स्तुतिपूर्वकं नमन्ति ॥ नम इति। विज्ञानवीर्याय विशेष-ज्ञानलब्धपराक्रमाय। मायया हरेरिच्छयेदं पारमेष्ठ्यं पदमुपेयुषे ज्ञातवते गृहीतः सर्जनोन्मुखीकृतो गुणभेदो गुणविशेषो रजोगुणो येन स तथा तस्मै। अव्यक्तं ब्रह्म योनिः कारणं यस्य तस्मै ॥ ५ ॥

**ये त्वामनन्यभावेन भावयन्त्यात्मभावनम् ।**
**आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥**

**प्रकाशिका–** दितिगर्भप्राप्ततिमिरकृतापेद्रवपरिहारः सर्वोपद्रवनाशकस्त्वदुपासकानामस्माकमवश्यं भविष्यतीत्येवेत्याशयेनाहुः ॥ ये त्विति । ये पुरुषास्त्वामनन्येन भावेनायमेवास्माकं गुरुरिति-भक्त्या भावयन्ति ध्यायन्ति तेषां पुंसां न कुतश्चित्पराभव इत्यन्वयः । कुतोऽस्य मुख्यगुरुत्वमित्यत उक्तम् । आत्मभावनमिति । आत्मानं परमात्मानं भावयति ध्यायत्युपदिशति वेत्यात्मभावनस्तम् । ध्याने उपसंहार्यान् गुणान्दर्शयन्ति । आत्मनीति । आत्मनि परमात्मनि प्रोतानि ग्रथितानि स्थापितानि भुवनानि येन स तथा तम् । अत एव परं सर्वजीवोत्तमं सदसदात्मकं कार्यकारणप्रपञ्चतयाऽऽप्तम् ॥ ६ ॥

**तेषां सुव्यक्तयोगानां जितश्वासेन्द्रियात्मनाम् ।**
**लब्धयुष्मत्प्रसादानां न कुतश्चित् पराभवः ॥ ७ ॥**

**प्रकाशिका–** भावयन्तीत्युक्तध्यानोत्तरभावीन्यवान्तरफलानि दर्शयन्त आहुः । तेषां सुव्यक्तयोगानामित्यादि । त्वयि मुख्यगुरुत्वादित्यादिना सम्यग्ध्याते हरिविषयकध्यानादिरूपो योगः सम्यग्व्यक्तो भवति । प्राणेन्द्रियजयश्च सम्पद्यते । अनन्तरं मोक्षहेतुर्युष्मत्प्रसादश्च भवतीत्यर्थः ॥७॥

**यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः ।**
**हरन्ति बलिमायत्तास्तस्मै मुख्यात्मने नमः॥ ८ ॥**

**प्रकाशिका–** भगवत्पूजात्मककर्मोपदष्टृत्वाचार्य मुख्यो गुरुरित्याहुः । यस्य वाचेति । यस्य तव वाचा वेदरूपया ब्रह्मणः सर्ववेदद्रष्टृत्वात् । प्रजा ब्राह्मणादिरूपास्तंत्या गोबन्धनाय रचितया दीर्घया रज्वा बद्धाः । यन्त्रिबन्धन इति धातोः । हरंत्याहरन्ति बलिं स्वविहितं भगवत्पूजादिकम् । आयत्ता आधीनाः सत्यो मुख्यात्मने सर्वजीवमुख्याय ॥ ८ ॥

**स त्वं विधत्स्व शं भूमन् तमसा लुप्तकर्मणाम् ।**
**अदभ्रदयया दृष्ट्या प्रपन्नानर्हसीक्षितुम् ॥ ९ ॥**

**प्रकाशिका–** प्रकृतं विज्ञापयन्ति ॥ स त्वमिति । लुप्तकर्मणामहोरात्रविभागाज्ञानेन लुप्तानि कर्माणि येषाम् ॥ ९ ॥

**एष देव दितेर्गर्भ ओजः काश्यपमर्पितम् ।**
**दिशस्तिमिरयन् सर्वा एधतेऽग्निरिवैधसि ॥ १० ॥**

**प्रकाशिका–** तमसः कारणं स्वयमेवोत्प्रेक्ष्याहुः ॥ एष इति । गर्भे कुक्षौ यदोजो वीर्यमर्पितं निक्षिप्तं स एष दितेर्गर्भस्तिमिरयंस्तमोव्याप्तः कुर्वन् एधसि काष्ठे निक्षिप्तोऽग्निरिव ॥ १० ॥

**मैत्रेय उवाच–**

**स प्रहस्य महाबाहो भगवान् शब्दगोचरः ।**
**प्रत्याचष्टात्मभूर्देवान् प्रीणन् रुचिरया गिरा ॥ ११ ॥**

**प्रकाशिका–** दितेः कुकर्म ज्ञात्वा प्रहस्य । शब्दगोचरो देवस्तुतिरूपशब्दविषयः । प्रीणन्प्रीणयन् ॥ ११ ॥

**ब्रह्मोवाच–**

**मानसा मे सुता युष्मत्पूर्वं वै सनकादयः ।**
**चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः ॥ १२ ॥**

**प्रकाशिका–** मानसा मनोजाताः । विहायसाऽऽकाशमार्गेण । किं प्रयोजनापेक्षया चेरुर्नेत्याह ॥ लोकेष्विति । लोकस्थविषयेषु विगतेच्छाः । अथाऽपि तेषां लोकसंचरणं लोकतत्त्वविवित्सयेत्याशयः ॥ १२ ॥

**त एकदा भगवतो वैकुण्ठस्यामलात्मनः ।**
**ययुर्विकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥**

**प्रकाशिका–** विकुण्ठाख्यं निलयं लोकम् ॥ १३ ॥

**वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ।**
**ये नित्यमनिमित्तेन धर्मेणाराधयन् हरिम् ॥ १४ ॥**

**तात्पर्यम्– अनिमित्तेन विष्ण्वर्पणेन ॥ १४ ॥**

**प्रकाशिका–** तं वर्णयति ॥ वसंतीत्यादिद्वादशभिः । वैकुण्ठस्य हरिरेव मूर्तिर्येषां ते तथा । सारूप्यभाज इत्यर्थः । अत्रानिमित्तेनेत्यस्य विवक्षितं तात्पर्यं दर्शयति ॥ अनिमित्तेनेति । विष्णोरर्पणम् । कारयितृत्वाद्यनुसंधानरूपं यस्मिन्स तथा तेनेत्यर्थः । अनेन अः परमात्मा स एव निमित्तं कारयितृतयोद्देश्यतया चानु सहितो यस्मिन्निति मूलं व्याख्येयमिति सूचयति ॥ १४ ॥

यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः ।
सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥ १५ ॥

**प्रकाशिका–** शब्दगोचरो मूर्तिमद्भिर्वेदैः स्तुतः । सत्त्वं ज्ञानबलसमाहारात्मकं देहं विष्टभ्य सत्त्वं सत्त्वगुणं विष्टभ्य कार्योन्मुखी कृत्येति वा मृडयन् रक्षन् स्वानां नोऽस्माकं वृषः श्रेष्ठः ॥ १५ ॥

यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ।
सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥

वैमानिकाः सललनाश्चरितानि यत्र
गायन्ति लोकशमलक्षपणानि भर्तुः ।
अन्तर्जले तु विलसन्मधुमाधवीनां
गन्धेन खण्डित धियोऽप्यनिलं क्षिपन्तः ॥ १७ ॥

**तात्पर्यम्– मुक्ताश्चैवाधिकारस्था द्वेधा वैकुण्ठलोकगाः । अमुक्तानां भ्रमः क्वापि न मुक्तानां कचिद्भवेदि'ति भविष्यत्पुराणे । 'कृष्णात्मनां न रज आदधुरि'ति च ॥ १७ ॥**

प्रकाशिका– तत्रत्यवनं वर्णयति ॥ यत्रेति चतुर्भिः । द्रुमैर्विभ्राजत् । कथं भूतैर्द्रुमैः । सवर्तुश्रीभिः सर्वेषु ऋतुषु विद्यमाना या श्रीः पुष्पादिसम्पद्येषां तैः । कामितार्थदाने दृष्टान्तः । मूर्तिमद्व्यक्तमूर्तिधरं कैवल्यं ब्रह्मैव स्थितमिति । स ललनाः स्त्रीभिः सहिता वैमानिका विमानेन चरन्तः पुरुषा लोकस्य जनस्य शमलक्षणानि पापनाशकानि भर्तुर्हरेश्चरितानि यत्र वने गायन्ति । कथं भूताः । अन्तर्जले जलस्यांतस्तु विशेषेण विकसंत्यो या मधुमाधव्यो मधुमकरंदस्तद्युक्ता माधव्यो वसंतकालीना लतास्तासां विकसन्मधवः प्रसरन्मकरन्दा माधव्यस्तासामिति वा गंधेन वायुना । नीतेनेति शेषः । खण्डितधियोऽपि हरेर्भ्रंशितबुद्ध्योऽपि अनिलगन्धप्रापकं क्षिपन्तस्तिरस्कुर्वन्तो गायन्ति । अनेन तेषां विषये संन्निधानेन चित्तक्षोभेऽपि न भगवद्रतिरपगतेति सूचयति । अत्र गन्धेन खण्डितधीत्वं न मुक्तानां युक्तमतोऽत्र विवक्षितान्वैमानिकान्पुरुषान्प्रमाणेनैवाह ॥ मुक्ताश्चेति । अमुक्तानां भ्रमश्चित्तक्षोभः । तथाचात्र वैमानिकाः पुरुषा अमुक्ता आधिकारिक एव विवक्षिता इति भावः । एवं विधविशेषसूचनाय वा तु शब्दाः । वैमानिका इत्यनेन सम्बन्धनीयः । मुक्तानामेवैवं विधः क्षोभः किं न स्यादित्यतोऽत्र बाधकमाह ॥ न रज इति येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैरित्युत्तरवाक्ये मुक्तानां विषयसम्बन्धेऽपि चित्तक्षोभाभावस्योक्तत्वेन तद्विरोधप्रसङ्गोऽन्यथेत्यर्थः ॥ १७ ॥

**पारावतान्यभृतसारसचक्रवाक-**
**दात्यूहहंसशुकतित्तिरबर्हिणाद्यैः ।**
**कोलाहले विरचिते चिरमात्रयोच्चै-**
**र्भृङ्गाधिपे हरिकथामनुगायमाने ॥ १८ ॥**

**तात्पर्यम्– 'तिरश्चीनाः स्थावराश्च सर्वे ज्ञानाद्विकुण्ठगाः । अमुक्ता युक्तिमायान्ति नियमात्कर्मणः क्षय' इति च ॥ १८ ॥**

**प्रकाशिका–** गायनस्यान्यत्कण्ठोत्थध्वनिविशेषसाहित्येऽनुगाने च सति शोभा भवत्यतस्तदुभयमत्रास्तीत्याह ॥ पारावतेति । अन्यभृताः कोकिला दात्यूहश्चातकश्चिरमात्रया त्रिमात्रादिस्वरेण कोलाहले कण्ठोत्थध्वनिविशेषे विरचिते कृते सति भृंगाधिपे भ्रमरश्रेष्ठे हरिकथामनुगायमाने सति गायन्तीति पूर्वेणान्वयः । ननु तिरश्चां पारावतादीनां कथं पुरुषकृतगायनोपयोगिध्वनिविशेषादिकर्तृत्वं लोके दर्शनादित्यतोऽत्र समाधानं प्रमाणेनैव दर्शयति ॥ तिरश्चीना इति । स्थावराश्चेत्यनेनोत्तरश्लोकस्थमन्दरादीनां ग्रहणम् । ये पारावताद्यास्तिरश्चीनाये च मन्दराद्याः स्थावरा अमुक्तास्ते सर्वे हरिज्ञानान्नियमान्नियमेन प्रारब्धकर्मणः क्षये मुक्तिमायान्ति पश्चाद्विकुण्ठलोकगा भवन्तीत्यर्थः । अतो मुक्तानां पारावतादीनां गायनोपयुक्तध्वनिकर्तृत्वादिकमुपपन्नमिति भावः ॥ १८ ॥

**मन्दारकुन्दकुरबोत्पलचम्पकोर्ण-**
**पुन्नागनागबकुलाम्बुजपारिजाताः ।**
**गन्धेऽर्चिते तुलसिकाभरणेन तस्या**
**यस्मिंस्तपः सुमनसो बहुमानयन्ति ॥ १९ ॥**

**तात्पर्यम्– भक्तैरर्चिते सति भगवता तुलसिकाभरणे कृते तस्या गन्धार्थं तपो बहुमानयन्ति ॥ १९ ॥**

**प्रकाशिका–** मन्दारपारिजातौ सुरतरुविशेषौ कुरबस्तिलकवृक्षः । ऊर्णं करवीरपुष्पं नागो नागकेसरः पुन्नागङ्गः सुरकर्णिकारः । बहुवचनमाद्यर्थे । एतदाद्याः सुमनसः पुष्पजातयोः यस्मिन्वने तुलसिकाभरणेन हरिणा तुलस्या गन्धैरर्चिते सति तस्यास्तपौ बहुमानयन्तीति यथाश्रुतोऽर्थः । अत्र हरिकर्तृकं तुलसीगन्धार्चनं प्रमाणबाधितमतोऽत्र विवक्षितमध्याहृत्याबाधितां योजनामाह ॥ भक्तैरिति । भगवता तुलसिकाभरणे कृत इत्यध्याहार्यम् । अन्यथा तुलसिकाभरणेनेत्यनुवादायोगादिति ज्ञातव्यम् । तस्यास्तुलस्या गन्ध इति सप्तमी तादर्थ्ये इत्याशयेनोक्तं गन्धार्थमिति ॥ ततश्चायमर्थः ।

मन्दरादि पारिजातांता मुक्ताः स्थावरजीवा यस्मिन्वने भगवति भक्तैः स्वस्वपुष्पैस्तुलस्या चार्चिते सति भगवता तानि पुष्पाणि विहाय तुलसिकाभरणे कृते सति तुलसिकाभरणेन कृतेन निमित्तेन तस्यास्तुलस्या गन्धे गन्धार्थतया बहुमानयन्ति । किमनया हरिप्रीतिकरगन्धभोगार्थं तपः कृतम् । येनास्मान्विहाय हरिणेयमाभरणीकृतेति पूजयन्तीत्यर्थ इति । एवं भूतं वनं यत्र तं विकुण्ठनिलयं ययुरिति पूर्वेणान्वयः ॥ १९ ॥

**यत् सङ्कुलं हरिपदानतिमात्रतृप्तै-**
**र्वैदूर्यमारकतहेममयैर्विमानैः ।**
**येषां बृहत्कटितटाः स्मितशोभिमुख्यः**
**कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥**

**प्रकाशिका–** पुनर्वैकुण्ठमेव वर्णयति ॥ यत्संकुलमिति । यद्वैकुण्ठस्थानं संकुलं व्याप्तं भवति । कैः विमानैः । कथं भूतैः । हरेः पदयोरानतिर्भक्तिपूर्वकप्रमाणामस्तन्मात्रेण तृप्ताः पुरुषा येषु तैर्वैडूर्यं पद्मरागं मरकतमिन्द्रनीलं तदेव मारकतं हेम सुवर्णमेतैर्विरचितैरेषां विमानस्थानां बृहन्ति कटितटानि नितंबप्रदेशा यासां ताः । स्मितशोभीनि मुखानि यासां ताः । एवं विधा अपि स्त्रियः कृष्णे आत्मा मनो येषां तेषां रजो रागमुत्स्मयाद्यैरुत्कृष्टगर्वपूर्वकशृङ्गारचेष्टाविशेषैर्नादधुर्न जनयामासुः । तेषां विमानैरितिसंबन्धः ॥ २० ॥

**श्री रूपिणी क्वणयती चरणारविन्दं**
**नीलाम्बुजेन हरिसद्मनि मुक्तदोषा ।**
**संलक्ष्यते स्फटिककुड्य उपेतहेम्नि**
**सम्मार्जतीव यदनुग्रहणेऽन्ययत्नाः ॥ २१ ॥**

**प्रकाशिका–** श्रीर्महालक्ष्मी रूपिणी प्रत्यक्षरूपधारिणी नूपुरालङ्कृतं चरणारविन्दं क्वणयती शब्दयन्ती शनैरितस्ततः । पयर्टन्तीति यावत् । लीलार्थं गृहीतेनांबुजेन सहिता हरिसद्मनि मुक्तश्चाञ्चल्यलक्षण दोषो यया सा । इतरसद्मसु चाञ्चल्यं न तया कुत्रापि मुक्तमिति भावः । स्फटिकमये कुड्ये संमार्जयतीव लक्ष्यते । कथं भूते कुड्ये । उपेतं मध्ये शोधार्थं प्राप्तं हेमपट्टिकारूपं यस्मिंस्तस्मिन् । कीदृशीः श्रीः । यस्या अनुग्रहसम्पादनायान्येषां ब्रह्मादीनां यत्ना उपासनादिरूपाः प्रयत्ना भवन्ति सा श्रीरित्यन्वयः । अयं भावः । हरिसद्मनि लीलांबुजं भ्रामयती शनैश्चरन्ती श्रीः स्फटिकमये स्वच्छे कुड्ये प्रतिबिंबिता भवति । तदा लोकैस्तत्प्रतिबिंबं दृष्ट्वा श्रीरेव संमार्जनीस्थानीयेनांबुजेन कुड्यं संमार्जयन्ती शोधयतीत्येवं संलक्ष्यत इति । वस्तुतः संमार्जनाभावादिव शब्दः ॥ २१ ॥

**वापीषु विद्रुमतटास्वमृतामलाप्सु**
**प्रेष्यान्विता निजवने तुलसीभिरीशम् ।**
**अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्र-**
**मुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ॥ २२ ॥**

**प्रकाशिका–** अङ्ग हे देवाः । वचनव्यत्ययः । यद्यस्मिंल्लोके विद्रुममयानि तटानि यासां तास्वमला अमृततुल्या आपो यासु तासु वापीषु सुखावतारकूलासु निजवने कमलवने प्रेष्याभिः परिचारकाभिरन्विता तुलसीभिरीशं स्वपतिमभ्यर्चति पूजयन्ती तदा तदुदके प्रतिबिंबितं स्वलक शोभनकुन्तलमुन्नसमुत्कृष्टनासिकायुक्तम् । सर्वलक्षणोपलक्षकमेतत् । स्ववक्त्रं वीक्ष्य प्रतिबिंबेन बिंब-भूतं स्ववक्त्रमपि । तादृशमनुमायति यावत् । इदं मदीयमित्यतिसुन्दरं सर्वलक्षणोपेतं वक्त्रम् । भगव-तोच्छेषितमुच्छिष्टं कृतम् । चुंबितमिति यावत् । अहो अहं धन्येत्यमतामंसतालं स्तवेन मेने ॥२२॥

**यत्र व्रजन्त्यघभिदोऽरचनानुवादाः**
**शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।**
**यास्तु श्रुता हतभगैर्नृभिरात्तवीर्या-**
**स्तास्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ॥ २३ ॥**

**तात्पर्यम्– अरचनानुवादाः ॥ २३ ॥**

**प्रकाशिका–** स्वर्गादिवन्न सर्वलोकगम्योऽयं लोक इत्याह ॥ यत्र व्रजन्तीति । अत्र रचनानुवादा इति छेदभ्रान्तिं परिहरति ॥ अरचनानुवादा इति । अन्यथा तेषां निन्दनमत्र क्रियमाणमनुपपन्नं स्यादिति ध्येयम् ॥ ततश्चायं श्लोकार्थः ॥ यद्वैकुण्ठस्थानमघं भिनत्तीत्यघभित्तस्य हरेर्न विद्यते रचनानां जगत्सृष्ट्यादिकर्मणामनुवादो येषां ते तथा । न केवलमेतावत् । किन्तु अन्यविषया मतिघ्नीर्यथार्थज्ञाननाशिनीरत एव कुकथाः रतिवर्णनादिरूपाः कथाः शृण्वन्ति । तासां कथानामेत-त्स्थानप्राप्तिप्रतिबन्धकत्वमेव न फलं किन्तु तमःप्रापकत्वमपीत्याह ॥ या इति । तु शब्दः श्रवणे आदरसूचकः । अन्यथा दूषणार्थं तच्छ्रवणेऽपि तमःप्राप्तिप्रसङ्गात् । हतभगैर्ज्ञानभक्त्यादिरूप-भाग्यशून्यैरात्तं सम्यगुन्नद्धं वीर्यं तमः पातने सामर्थ्यं याभिस्ता आत्तं स्वीकृतं श्रोतॄणां वीर्यं पुण्यं याभिरिति वा । अशरणेषु रक्षकरहितेषु । हन्तेति खेदे ॥ २३ ॥

**येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना**
**ज्ञानं च तत्त्वविषयं सहधर्म यत्र ।**

नाराधनं भगवतो वितरन्त्यमुष्य
संमोहिता विततया ननु मायया ते ॥ २४ ॥

**तात्पर्यम्–** ये नृगतिं ज्ञानादियोग्यां न प्रपन्नाः । ते मोहाद्भगवदाराधनं न कुर्वन्ति । धर्मज्ञानवर्जिता मानुषा एव न भवन्तीत्यर्थः ॥ २४ ॥

**प्रकाशिका–** वैकुण्ठलोकप्राप्तिसाधनं धर्मज्ञानादिकमप्यवश्यमनुष्ठेयमित्याशयेन तदभाववतो मानुषान्निन्दति ॥ येभ्यर्थितामिति । अत्र नोऽस्माकं देवानामभ्यर्थितां नृगतिं प्रपन्ना इति व्याख्याने देवानां नृगतेरप्रार्थ्यत्वाच्छापादिना कथञ्चित्प्राप्यत्वाच्चार्थासंभवमालोच्य विवक्षितां योजनां दर्शयति ॥ ये नृगतिमिति । सहधर्मज्ञानं यत्रेत्यस्य तात्पर्यम् ॥ ज्ञानादियोग्यामिति । आदि पदेन धर्मग्रहणम् । योग्यामित्यनेनोत्पत्तुमर्हतीति शेषं सूचयति । नो इत्यस्य निषेधार्थत्वं न प्रपन्ना इत्यनेनान्वयं चाभिप्रेत्याह ॥ न प्रपन्ना इति । द्वितीयार्धेऽन्वयं दर्शयन्किञ्चिद्व्याख्याति ॥ ते मोहादिति । मोहादित्यनेन संमोहिता इत्येतन्नाराधनं वितरन्तीत्यत्र हेतुतयोत्थामिति सूचयति । वितरन्तीत्यस्यार्थः ॥ कुर्वन्तीति । नन्वेवं ये नृगतिं न प्रपन्नाः पश्वादयस्ते मोहाद्भगवदाराधनं न कुर्वन्तीति पश्वादीनां स्वरूपं कथ्यत इत्येव प्राप्तं न धर्मज्ञानविवर्जितानां मानुषाणां निन्दनमित्यतः पूर्वार्धाभिप्रायं दर्शयति ॥ धर्मज्ञानवर्जिन्ता इति । अनेन यत्र नृगतौ सहधर्मज्ञानमुत्पत्तुमर्हति । तां तत्त्वज्ञानादियोग्यां नृगतिं ये नो प्रपन्ना न प्राप्ता इति विशिष्टनिषेधस्य विशेषेण निषेधे पर्यवसानेन लब्धार्थो दर्शित इति ज्ञातव्यम् । मानुषा एव न भवन्तीत्यनेन च शब्दोऽवधारणार्थः । नृगतिं नो प्रपन्ना इत्यस्यावृत्तिरिति सूचयति ॥ ततश्चायं श्लोकार्थः ॥ ये पुरुषाः सधर्मं धर्मेण सह वर्तमानं तत्त्वविषयं ज्ञानं यत्र नृगतावुत्पत्तुमर्हति तां साधुभिरप्यर्थितामपि नृगतिं तत्त्वज्ञानादियोग्याम् । नृगतिमिति यावत् । नो प्रपन्नाः । नृगतिं प्राप्यापि तत्त्वज्ञानादिवर्जिता इति यावत् । ते नृगतिं नो प्रपन्नाः । च शब्दोऽवधारणे । मानुषा एव न भवन्तीत्यर्थः । तेषां मानुषजन्म व्यर्थं भवतीति भावः। कुत एव नृगतिं प्राप्ता अपि ज्ञानादिवर्जिता भवन्तीत्यतोऽत्र हेतुं वदन् उक्तमेव विशदयति ॥ नाराधनमिति । ते नृगतिं प्रपन्ना यतोऽमुष्य भगवतो विततया मायया बन्धकशक्त्या संमोहिता अतो भगवत आराधनं तत्त्वज्ञानपूर्वकं स्वविहितभगवदर्चनरूपं कर्म न वितरन्ति न कुर्वन्ति तत्त्वज्ञानादिवर्जिता भवन्तीत्यर्थः ॥ २४ ॥

यत्र प्रयान्त्यनिमिषामृषभानुवृत्त्या
दूरेयमा ह्युपरि नः स्पृहणीयशीलाः ।
भर्तुर्मिथः सुयशसः कथनानुराग-
वैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥ २५ ॥

**प्रकाशिका–** नन्वेतादृशा न व्रजन्ति चेत्कीदृशास्तं व्रजन्तीत्यपेक्षायामाह ॥ यत्रेति । अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या निरन्तरसेवया दूरीकृतो यमो येषां ते तथा । अत एव सर्वैः स्पृहणीयशीलाः सुयशसः पुण्यकीर्तेर्भर्तुः स्वामिनो हरेः कथने योनुरागस्तेनोत्पन्नं यद्वैक्लव्यं पारवश्यं तेन जाता या बाष्पकलाऽऽनन्दाश्रुधारा तया पुलकीकृतानि रोमाञ्चितान्यङ्गानि येषां ते तथोक्ताः । न उपरि विद्यमानं यत्र यत्स्थानं व्रजन्ति तदिति पूर्वोत्तरेण वा संबन्धः ॥ २५ ॥

**तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं**
**दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ।**
**आपुः परां मुदमपूर्वमुपेत्य**
**योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥**

**तस्मिन्नतीत्य मुनयः षडसज्जमानाः**
**कक्ष्याः समानवयसस्त्वथसप्तमायाम् ।**
**देवावचक्षत गृहीतगदौ परार्घ्य-**
**केयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥**

**प्रकाशिका–** प्रकृतमनुसरति ॥ तदिति । अथो गमनानन्तरं मुनयः सनकादयस्तद्वैकुण्ठाख्यं स्थानं योगमायया बलेनोपसनादिजनितज्ञानसामर्थ्येनोपेत्य परां मुदमवापुः । वैकुण्ठस्य मोदजनकत्वमुपपादयितुं तद्विश्वगुर्वधिकृतमित्यादीनि विशेषणानि । स चासौ विश्वगुरुश्च तेनाधिकृतं पालितं दिव्यं लोकविलक्षणम् । विचित्राणि नानावर्णानि विबुधाग्र्याणां देवश्रेष्ठानां विमानानि शोचयति दीपयतीति विचित्रविबुधाग्र्यविमानशोचिः । शुचि दीप्ताविति धातोः । अपूर्वं पुनः पुनर्दर्शनेऽपि पूर्वादृष्टमिव स्थितम् । तस्मिन्वैकुण्ठे षट् कक्षाः प्राकारद्वाराणि । असज्जमानास्तत्रानिवार्यमाणा देवौ द्वारपालौ । अचक्षतापश्यन्तः । परार्ध्यैः केयूरादिभिर्विटंकोऽलङ्कृतो वेषो ययोस्तौ ॥२६,२७॥

**मत्तद्विरेफवनमालिकया निवीतौ**
**विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ।**
**वक्त्रभ्रुवा कुटिलया स्फुटनिर्गतेन**
**रक्तेक्षणेन च मनाग् रभसं दधानौ ॥ २८ ॥**

**तात्पर्यम्–** वक्त्रस्थया भ्रुवा सह निर्गतेन ॥ २८ ॥

**प्रकाशिका–** तावेव वर्णयन्ति ॥ मत्तेति । मत्ता द्विरेफा भ्रमरा यस्यां तया वनमालिकया निवीतौ परिष्कृतौ । कथं भूतया । असितानां नीलानां चतुष्टयस्य मध्ये उरसि विन्यस्तया । अत्र वत्क्रस्थित-भ्रुवेत्यस्य विवक्षितमर्थं वदन् अन्वयं दर्शयति ॥ वत्क्रस्थयेति । तथा च कुटिलया वक्रया वत्क्रस्थितभ्रुवा सह स्फुटं यथा स्यात्तथा निर्गतेन रक्तेक्षणेन रक्तान्तनिरीक्षणेन । वत्क्रभूसाहितरक्त-निरीक्षणयुक्तवत्क्रेणेति यावत् । अन्यथा वत्क्रेत्येस्य वैयर्थ्यप्रसङ्गात् । मनागीषद्रभसं कोपाटोपं दधानौ तथाऽनुमीयमानाविति मूलयोजना द्रष्टव्या । वत्क्रभ्रूरक्तनिरीक्षणयुक्तमुखत्वस्य च कोपाविना भूतत्वादिति भावः ॥ २८ ॥

**द्वार्येतयोः प्रविविशुर्मिषतोरपृष्ट्वा**
**पूर्वा यथाऽरपुटवज्रकपाटिका याः ।**
**सर्वत्र ते ह्यविषया मुनयः स्वदृष्ट्या**
**ये सञ्चरन्त्यविहता विगताभिशङ्काः॥ २९ ॥**

**प्रकाशिका–** एतयोर्मिषतोः पश्यतोः सतोर्द्वारि । सप्तमीयम् । द्वारि तावत्पृष्ट्वा । अनादृत्येति यावत् । विविशुः । कथम् । या आरपुटवज्रकपाटिका आरेण पित्तलेन सुवर्णेन वाऽलङ्कृतं पुटमुपरितनभागो यासां तास्तथोक्ताः । आरपुटा वज्रशिलामयाः कपाटा यासां तास्तथा ताः पूर्वाः षट् द्वारः । यथाऽपृष्ट्वेव विविशुस्तथैव । अप्रश्ने हेतुकथनाय सर्वत्र ते ह्यविषया इत्यादीनि विशेषणानि । हि यस्माद्ये सर्वत्राविहता अविचारिता अत एव विगताभिशङ्काश्चरन्ति । अत्रापि हेतुः स्वस्य स्वतन्त्रस्य परमात्मनो दृष्ट्या ज्ञानेनाविषया अविद्यमानविषयाभिलाषा यत इति मुनय इत्यन्वयः ॥ २९ ॥

**तान् वीक्ष्य वातरशनांश्चतुरः कुमारान्**
**वृद्धान् दशार्धवयसो विदितात्मतत्त्वान् ।**
**वेत्रेण चास्खलयतामतदर्हणांस्तौ**
**तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥**

**तात्पर्यम्– 'जयस्य विजयस्यापि कदाचिद्ब्रह्मशापतः । कृष्णावतारपर्यन्तं प्रातिकूल्यं च जायत' इति नारदीये ॥ ३० ॥**

**प्रकाशिका–** वातो वायुरेव रशना वस्त्रं येषां ते तथा तान् । नग्नानिति यावत् । वस्तुतो वृद्धान्दशार्धवयसः पञ्चवर्षान्कुमारांस्तथा प्रतीयमानान्विदितं परमात्मतत्त्वं यैस्ते तथा तान् । वैत्रेण

दण्डविशेषेण । च शब्दाद्धाचेत्यपि ग्राह्यम् । अस्खलयतां प्रवेशपतिरोधं चक्रतुः । अतदर्हणान् स्खलनायोग्यान् । तेजस्तेषां प्रभावं विहस्यागणय्य । अहो अत्राप्येतेषां धाष्टर्चमित्युपहासं कृत्वेति वा । ननु भगवतो भक्तवत्सलत्वात्तत्प्रवेश इष्टोऽतः कथं तद्भृत्यावेतौ भगवद्भक्तानां प्रवेशप्रतिविरोधं चक्रतुरित्यत उक्तम् ॥ भगवदिति । भगवतः प्रतिकूलं विरुद्धं शीलं स्वभावो ययोस्तौ तथा । अत्र जयविजययोः शीलशब्देन भगवत्प्रातिकूल्यं स्वभाव इति प्रतीयते । न चैतत्संभवति । तयोर्भक्तत्वात् । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेन दर्शयति ॥ जयस्येति । कदाचित्प्रातिकूल्यं चेति संबन्धः । सर्वदा भगवदनुकूलशीलावेव जयविजयौ यत्प्रातिकूल्यं कदाचिदनयोर्भवति तदपि ब्रह्मशापनिमित्तं कृष्णावतारसमाप्तिपर्यन्तमेव नोत्तरत्रातोऽत्र शीलशब्दो न स्वभावार्थः किन्तु गौणवृत्त्या बहुकालावस्थायित्वार्थक इति भावः ॥ ३० ॥

**ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः**
**स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ।**
**ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्-**
**कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥**

**प्रकाशिका–** सुष्ठ्वर्हत्तमाः पूज्यतमा अपि । निषेधानर्हा अपीति यावत् । अनिमिषेषु देवेषु मिषत्सु पश्यत्सु हरेः प्रतिहारपाभ्यां द्वारपालपतिभ्यां ताभ्यां जयविजयाभ्यां प्रतिषिध्यमाना वार्यमाणास्ते मुनयः सुहृत्तमस्य हरेर्दिदृक्षितस्य दर्शनेच्छाया भंगे विघ्ने सतीषत्कामानुजेनाल्पक्रोधेन सहसाऽकस्मादेवोपप्लुतान्यतिशयेन क्षुभितान्यक्षीणि येषां ते तथा विधा ऊचुरित्यर्थः ॥ ३१ ॥

**को वा इहैत्य भगवत्परिचर्ययोच्चै-**
**स्तद्धर्मिणामपि सतां विषमस्वभावः ।**
**तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां**
**को वाऽत्मवत् कुहकयोः परिशङ्कनीयः ॥ ३२ ॥**

**तात्पर्यम्– युवयोर्यथा विरुद्धस्वभावत्वं तद्वद्भगवद्विषय इह शङ्कनीयः कः ? तस्मान्निषेधो व्यर्थ इत्यर्थः ॥ ३२ ॥**

**प्रकाशिका–** किमूचुरित्यतस्तेषां वचनमेव दर्शयति ॥ को वा इहेत्यादिश्लोकत्रयेण ॥ अत्र कयोश्चित्कुहकयोरात्मवत्तस्मिन् भगवति परिशङ्कनीयो विषमस्वभावः क इत्यन्यथाप्रतीतिवारणाय द्वितीयार्धस्य विवक्षितमर्थं दर्शयति ॥ युवयोरिति । तथा च कुहकयोरित्यत्र जयविजयावेव

विवक्षिताविति भावः । आत्मवदित्येतदपि स्वात्मनोरिवेति व्याख्येयमित्याशयेनोक्तम् ॥ युवयोर्यथेति । विषमस्वभाव इत्यस्यार्थः ॥ विरुद्धस्वभावत्वमिति । भगवद्विषय इत्यनेन तस्मिन्निति विषयसप्तमीति सूचयति । इहेत्यस्यावृत्तिमभिप्रेत्योक्तम् ॥ इहेति । अस्मास्वित्यर्थः । परिशङ्कनीय इत्यस्य क इत्यनेनान्वय इत्याह ॥ शङ्कनीय कः इति । न कोऽपीत्याक्षेपार्थत्वं क इत्यस्येत्याशयेन तत्फलं दर्शयति ॥ तस्मादिति । निषेधोऽस्मत्प्रवेशप्रतिषेधः ॥ ततश्चायं श्लोकार्थः ॥ उच्चैरुत्कृष्टतया भगवतः परिचर्यया तद्धर्मिणां भगवद्धर्मवतां सतामपि परिचर्ययेह वैकुण्ठे एत्य प्राप्य स्थितयोः कुहकयोर्मिथ्याज्ञानिनोर्युवयोरयं विषमस्वभावः । ब्रह्मण्यदेवस्य भगवतः स्वभावेन विरुद्धस्वभावो ब्राह्मणप्रवेशप्रतिषेधरूपः को वा कुत्सित एव । युवयोरयोग्य इत्यर्थः । युष्मासु भगवद्विषये विषमस्वभावशङ्कयाऽयं प्रतिषेधो द्वारपालकयोरावयोर्गुण एवेति शङ्कायामाहुः ॥ तस्मिन्निति । भगवति विषये वां कुहकयोः कुहकाभ्यां युवाभ्यामात्मवत्स्वात्मनोरिव यथास्वात्मनोरिदानीं भगवत्स्वभावविरुद्धस्वभावत्वं तथेहास्मात्स्वपि परिशङ्कनीयः सम्यक् शङ्कितुं योग्यो विषमस्वभावो भगवत्प्रातिकूल्याचरणरूपः को वा न कोऽपि तस्मादस्मत्प्रतिषेधो व्यर्थ इत्यर्थः । ननु युष्मासु भगवत्प्रातिकूल्याचरणरूपः स्वभावः कुतो न शङ्कनीय इत्यत उक्तम् ॥ प्रशान्तपुरुषे गतविग्रहे वेति । वा शब्दश्चशब्दार्थः । प्रकर्षेण शान्ते भक्तापराधसहिष्णौ पुरुषे सर्वदेहेषु नियामकतया स्थिते अत एव गत विग्रहे । भक्तैः सह विरोधो यस्य तस्मिन् । लोके ह्यपराधसहिष्णुरस्मदेहनियामकतयोपकार्यत एव भक्तेषु गतविग्रहः । तस्मिन्विषये तद्भक्ता वयं कथं विषयस्वभावा भवेम । अस्माकं भक्तत्वं चात्रागमनादेव भवद्भ्यां निश्चितमिति भावः ॥ ३२ ॥

**न ह्यन्तरं भगवतीह समस्तकुक्षा-**<br>
**वात्मानमात्मनि नभो नभसीव धीराः ।**<br>
**पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं**<br>
**व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥**

**तात्पर्यम्– समस्तकुक्षौ स्थिते भगवति नहि भेदः । अस्मिंल्लोके । अन्तस्थभगवद्रूपं बहिष्ठैक्येन पश्यन्ति नभो नभसीव । तत्र प्रत्युदरभेदनिमित्तं भयं युवाभ्यां व्युत्पादितं किम् सर्वान्तर्यामित्वेनाभयस्य भयमस्तीति भावः कृतः । अन्यथा किमिति निवारणम् । 'सर्वोदरगतं ब्रह्म ये भेदेन विचक्षते । सर्वत्रापि भयं तेषां मृतानां तम एव चे'ति तत्त्वविवेके ॥ ३३ ॥**

**प्रकाशिका–** कुहकयोरित्युक्तं मिथ्याज्ञानित्वं तयोरुपपादयन्ति ॥ न ह्यन्तरमिति । अत्र समस्तकुक्षौ भगवतीति सामानाधिकरण्येनाभेदप्रतीतिवारणायाह ॥ समस्तकुक्षाविति । अधिकरणसप्तमीबलात्स्थित इत्येतल्लभ्यत इति भावः । अन्तरशब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ न हि भेद

इति । न हीत्यस्यानुवादः । अन्तरशब्दस्य भेदवाचकत्वे वाक्यार्थः शिष्टतरो भवतीति सूचनाय । इहेत्यस्य भगवत्परत्वे यत्रेत्यस्य वैयर्थ्यमित्यालोच्य विवक्षितमर्थमाह ।। अस्मिंल्लोक इति । अधिकरणसप्तमीबललब्धमर्थं दर्शयन् आत्मपदद्वयं जीवपरमिति प्रतीतिवारणाय वाक्यं योजयति ।। अन्तःस्थेति । आत्मानमित्यस्यार्थः ।। भगवद्रूपमिति । आत्मनीत्यस्य तात्पर्यम् ।। बहिस्थैक्येनेति । तात्पर्यं कस्मादवगतमित्यतो दृष्टान्तबलादेवेत्याशयेन नभो नभसीवेति दृष्टान्तानुवादः । यत्रेत्युक्तत्वात्तत्रेत्यध्याहृतम् । उदर इत्यतः प्राक् प्रतीत्यध्याहारमभिप्रेत्याह ।। प्रत्युदरभेदनिमित्तमिति । इन् प्रत्ययार्थप्रदर्शनाय निमित्तमित्युक्तम् । युवयोरिति षष्ठी कर्तरीत्याशयेन युवाभ्यामित्युक्तम् । किं शब्दोऽत्र निन्दार्थक इति सूचनाय व्युत्पादितं किमित्यन्वयो दर्शितः । अस्येत्यस्य विवक्षितमर्थमाह ।। सर्वान्तर्यामित्वेनेति । अनेन समस्तकुक्षावित्येतदभयत्वसूचनायोक्तमिति ज्ञापयति । भयव्युत्पादितमित्यस्याभिप्रायमाह ।। भयमस्तीति । भावोभावज्ञानमिति यावत् । आवयोरेवं भावोऽस्तीति कथं भवद्भिरवगतमित्यतस्तदभिप्रेतं ज्ञापकमाह ।। अन्यथेति । तथा च निवारणान्यथाऽनुपपत्तेरेवैतत्ज्ञापिकेति भावः । अस्त्वेवं विधं ज्ञानं ततः किमित्यतस्तज्जन्यमनिष्टं प्रमाणेनैवाह ।। सर्वोदरगतमिति । भयमैहिकं मृतानां चेत्यन्वयः ।। ततश्चायं श्लोकार्थः ।। समस्तकुक्षौ सर्वान्तरनियामकतया स्थिते भगवत्यन्तरं भेदो न हि नास्तीति प्रमाणप्रसिद्धम् । तस्मात्तस्य कुतोऽपि । न भयमस्तीति शेषः । किं तत्प्रमाणमित्यतस्तद्दर्शयन्त आहुः । यत्र भगवतीहास्मिंल्लोके स्थितमात्मानं भगवद्रूपमात्मनि बहिः स्थिते भगवद्रूपे । तदैक्येनेति यावत् । नभो घटाद्यवच्छिन्नमाकाशं बहिः स्थिते नभसीव धीराः स्थानभेदयुक्तेनाभासत्वं जानन्तः पश्यन्ति तत्र सुरलिङ्गिनोः सुरचिन्हधारिभ्यां युवयोर्युवाभ्यामुदरभेदिभयम् । अत्रादौ प्रतीत्यध्याहार्यम् । उद्गदा अरा दोषा यस्मात्तदुदरं ब्रह्म भेदो भेददर्शनस्य निमित्ततयाऽस्तीति भेदिप्रत्युदरभेददर्शननिमित्तकमित्यर्थः । वैकुण्ठान्तर्गतभगवद्रूपं प्रतिस्थितम् । तदाभिमुख्येन स्थितमिति यावत् । यदस्मदन्तर्गतरूपं रागादिदोषरहितं ब्रह्म तद्भेदबुद्ध्याऽस्मदाद्यन्तर्गतभगवद्रूपेभ्योऽस्य सर्वान्तर्नियामकतया भयशून्यस्य वैकुण्ठान्तर्गतस्य भगवद्रूपस्य भयं व्युत्पादितं भावितं किमहो पापिष्ठौ भवन्तावित्याशयः । हीत्यनेन तथा ज्ञानेन महाननर्थः प्रमाणप्रसिद्धोऽस्तीति सूचयति । यत एवानर्थकारि ज्ञानं युवयोरतः पापीयसो लोकान्व्रजतमित्युत्तरेणान्वयः ।। ३३ ।।

**तद् वा अमुष्य परमस्य विकुण्ठभर्तुः**
**कर्तुं न युक्तमिति धीमहि मन्दधीभ्याम् ।**
**लोकानितो व्रजतमन्तरभावदृष्ट्या**
**पापीयसस्त्रय इमे रिपवोऽस्य यत्र ।। ३४ ।।**

**तात्पर्यम्–** त्रयो रिपवो देहत्रये ॥ ३४ ॥

**प्रकाशिका–** एवमपराधमुत्पाद्य तद्योग्यं दण्डं कुर्वन्त आहुः ॥ तद्वा अमुष्येति । अत्र यत्रेत्यस्य येषु भूरादिलोकेष्विमे त्रयो रिपवस्तांल्लोकानित्यन्यथाप्रतीतिवारणायार्थमाह ॥ त्रयो रिपव इति । यत्रेत्यस्यार्थः ॥ देहत्रय इति । अनेन लोकशब्दो देहपरो न प्रसिद्धभूरादिपर इति दर्शयति । देहत्रयस्यानिष्टत्वोपपादनाय त्रयो रिपवो हरेर्द्वेषिणो भवन्तीत्युक्तम् । अत्र जयविजययोरैक्यविवक्षया तदाविष्टयोरसुरयोर्द्वित्वविवक्षया त्रय इत्युक्तमिति ज्ञातव्यम् । द्वौ स्वभावतोऽरी तत्संसर्गाज्ज-यविजययोरप्यरित्वमिति सूचनायापिशब्दः ॥ ततश्चायमर्थः ॥ मन्दधीभ्यां युवाभ्यां परमस्य विकुण्ठभर्तुरमुष्य सर्वजगदन्तर्नियामकरूपस्य सकाशात्तद्भेददर्शनं कर्तुं न युक्तम् । वै प्रमाणप्रसिद्ध-मेतत् । इति धीमहि चिन्तयामः । तद्युवाभ्यां कृतमतोऽन्तरभावदृष्ट्याऽन्तरं हरौ भेदस्तस्य भावदृष्टिः सद्भावदर्शनं तया तज्जनितपापेनेतो वैकुण्ठलोकात्पापीयसोऽति- पापांल्लोकान्देहान्व्रजतं यात । यत्र देहत्रये इमे प्रसिद्धा अस्य हरेस्त्रयोऽपि रिपवो द्वेषिणो भविष्यन्ति तांल्लोकानित्यन्वयः । अत्र द्वौ स्वभावतोऽरी एकत्वेन विवक्षितयोर्जयविजययोस्तु तत्संसर्गादरित्वमतो यौ तौ तवारीह तयोः प्रविष्टाविति भारततात्पर्यनिर्णयविरोधो नेति ज्ञातव्यम् । स्वाभाविकारित्वविवक्षया तात्पर्यनिर्णयः प्रवृत्तः । अतो न विरोधः । अत्र देहानां यद्यपि षट्त्वं तथाऽपि द्वयोर्द्वयोरैक्यविवक्षया त्रित्वमुक्त-मिति ज्ञातव्यम् ॥ ३४ ॥

**तेषामितीरितमुभाववधार्य घोरं**
**तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः ।**
**सद्यो हरेरनुचरावुरुबिभ्यतस्तत्-**
**पादग्रहावपततामतिकातरेण ॥ ३५ ॥**

**प्रकाशिका–** शापनिमित्तमेव तयोर्हरिप्रातिकूल्याचरणमिति ज्ञानाय तयोः सत्स्वभावं दर्शयति ॥ तेषामिति । तावुभौ हरेरनुचरौ तेषामीरितं भाषितं घोरं यत्तमस्त्रपूगैः प्रत्यस्त्रसमूहैरनिवारणं न विद्यते निवारणं यस्य तं ब्रह्मदण्डं ब्राह्मणशापमवधार्य निश्चित्य सद्यस्तदुत्तरक्षण एवोरु बहु बिभ्यतो बिभीतः । अनन्तरमतिकातरेणातिकातर्येणातिशयितभयेन तत्पादग्रहौ तेषां पादग्रहणं कुर्वन्तौ सन्तावपतताम् । दण्डवदिति शेषः । ब्राह्मणेभ्य उरु बिभ्यतो हरेरनुचराविति वा ॥ ३५ ॥

**भूयानघाद्धि भगवद्भिरकारि दण्डो**
**यो नौ हरेत सुरहेलनमप्यशेषम् ।**

**मा वोऽनुतापकलया भगवत्स्मृतिघ्नो**
**मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥**

**तात्पर्यम्– सुरहेलनस्यापि दण्डो भवति । अत्र स्थितयोः पुनः पूर्ववन्मोहो न स्यादंशिनोः । ॥ ३६ ॥**

**प्रकाशिका–** नमस्कारान्तरं तयोः पश्चात्तापेन प्रार्थनाप्रकारं दर्शयति ॥ भूयानिति । यो दण्डोऽशेषसुरहेलनमपि हरेतेति कथमुच्यतेऽस्य दण्डस्यास्माभिस्तदर्थप्रयोगादित्यतोऽस्याभिप्रायमाह ॥ सुरहेलनस्यापीति । दण्डः प्रायश्चित्तरूपो भवति । अतो हरेतेत्याशय इत्यर्थः । तदर्थमप्ययं दण्डो भवतीत्यभिप्रायो भवतां भवत्वित्याशयः ॥ ततश्चायं मूलार्थः ॥ भवद्भिः पूज्यैर्युष्माभिर्यो दण्डो नौ अकारि स न केवलं युष्मदवज्ञानजन्यं पापं हरति । किं त्वशेषं यथा स्यात्तथा ब्रह्मादिदेवानामप्यस्माभिरेवमेव पूर्वमवज्ञाकृताजन्यमपि पापं हरेत हरेत् । तस्यापि पापस्यायं प्रायश्चित्तरूपो भवतीति भवतामभिप्रायो भवत्वित्याशयः । कुतः । हि यस्मादघादस्मत्कृतापराधाद्भूयान् अस्माभिरल्प एवापराधः कृतो भवद्भिस्त्वसुराविष्टदेहत्रयप्राप्तिरूपो दण्डो भूयान्कृतोऽतः स पूर्वतनदेवावज्ञाजनितपापस्यापि प्रायश्चित्तरूपो भवत्वित्यनुग्रहः कर्तव्य इत्याशयः । अन्यदपि स्वस्वाभीष्टं प्रार्थयन्तावाहतुः ॥ मा व इति । वो युष्माकं सकाशात् । युष्मदनुग्रहादिति यावत् । अनुतापकलयाऽस्माकं पश्चात्तापलेशेन पुनः पूर्ववद्भगवत्स्मृतिघ्नो मोहो मिथ्याज्ञानमिह वैकुण्ठस्थितयोर्नौ आवयोर्मा भवेन्मा भूत् । कथं भूतयोः । अधोऽधोऽत्यन्तनिकृष्टदेहान्व्रजतोर्गच्छतोः । अत्राधोऽधो व्रजतोः कथमिह वैकुण्ठस्थितत्वमुच्यमानं युज्यते विरोधादित्यतोऽत्र विवक्षितं तात्पर्यमाह ॥ अत्र स्थितयोरिति । इहेत्यस्यार्थः ॥ अत्रेति । स्थितयोरित्यधिकरणसप्तम्या लब्धार्थप्रदर्शनम् । पुनः पूर्ववदिति प्रसक्तिप्रदर्शनम् । अंशिनोरित्येतत्तु शब्दार्थप्रदर्शनम् । तथाचांशेनाधोऽधो व्रजतोरप्यावयोरिह वैकुण्ठस्थितयोरशिनोर्मोहो मा भूदिति तात्पर्यमतो न विरोध इत्यर्थः ॥ ३६ ॥

**एवं तदैव भगवानरविन्दनाभः**
**स्वानां विबुध्य सदतिक्रमार्यहृद्यः ।**
**तस्मिन् ययौ परमहंसमहामुनीना-**
**मन्वेषणीयचरणो निलयात् सहश्रीः ॥ ३७ ॥**

**प्रकाशिका–** तदेव तस्मिन्नेव क्षणे । स्वानामिति बहुवचनं जात्यभिप्रायेण । स्वकीययोरित्यर्थः । सन्स् सनकादिष्वतिक्रममपराधमार्याणां ज्ञानिनां हृद्यो हृदि भवः । सनकादिध्येय इत्यर्थः । यत्र ते स्थितास्तस्मिन्देशे । तद्देशमुद्दिश्येति यावत् । अन्वेषणीयचरणश्चलन्नित्यनेन भगवतो ब्राह्मणेषु भक्तिं

दर्शयति ।। सहश्रीरिति । सकलत्रेणैव गृहस्थेनातिथ्याभ्यागमनादिकं कार्यमिति दर्शयितुं श्रीनिरीक्षणेनापि ते धन्या भवन्त्वित्याशयेन वा तथोक्तम् । तु शब्द आगमने उक्तविशेषसूचकः ।। ३७ ।।

**तं त्वागतं प्रतिहृतौपयिकं स्वपुंभि-**
**स्तेऽचक्षताक्षविषयं स्वसमाधिगम्यम् ।**
**हंसश्रियोर्व्यजनयोः शिववायुलोल-**
**शुभ्रातपत्रशशिकेसरशीकराम्बुम् ।। ३८ ।।**

**तात्पर्यम्– केसरा रश्मयः ।। ३८ ।।**

**प्रकाशिका–** तत्रत्यैः स्वपुंभिः स्वभृत्यैः प्रतिहृतमभ्यर्थितमौपयिकमुपायनादिसत्कारद्रव्यं यस्मै स तथोक्तः । तं प्रतिहृतमानीतमौपयिकं गमनोपयुक्तं छत्रचामरपादुकादि यस्येति वा । अचक्षतापश्यन् । कथं भूतम् । अन्तः स्वसमाधिगम्यो यस्तमेव बहिरक्षविषयं चक्षुर्विषयं सन्तम् । पुनः कथं भूतम् । हंसवद्धवलश्रीर्ययोरुभयतश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलं चञ्चलं शुभ्रं धवलमातपत्रं छत्रं तदेव शशी चन्द्रमास्तस्य केसरेभ्यो गलन्ति शीकरांबूनि कणभूतामृतानि यस्मिन्स तथोक्तस्तम् । अत्र प्रकृतोपयुक्तं केसर शब्दार्थं दर्शयति ।। केसरा रश्मय इति । यथा कौस्तुभादिकं ब्रह्मादिरूपं तथा छत्रमपि चन्द्रमसो रूपम् । तथाच तस्य रश्मिभ्यो गलन्ति शीकरांबूनीति युक्तमिति ध्येयम् ।। ३८ ।।

**कृत्स्नप्रसादसुमुखं स्पृहणीयधाम**
**स्नेहावलोककलया हृदि संस्पृशन्तम् ।**
**श्यामे पृथावुरसि शोभितया श्रिया स्व-**
**ग्रीवामणिं सुभगयन्तमिवात्मधिष्ण्यम् ।। ३९ ।।**

**तात्पर्यम्– 'कौस्तुभो ब्रह्मणो रूपं प्राणश्चूडामणिस्तथे'ति च ।। ३९ ।।**

**प्रकाशिका–** पुनस्तमेव विशिनष्टि ।। कृत्स्नप्रसादेत्यादिचतुर्भिः । कृत्स्नप्रसादेन पूर्णप्रसादेन सुशोभनं विकसितं मुखं यस्य तम् । स्पृहणीयानां गुणानां धाम स्थानम् । स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशन्तं सुखयन्तं श्यामे इन्द्रनीलकान्तिमति । पृथौ विस्तीर्णे उरसि शोभितया । उरः कान्त्येति शेषः । स्वग्रीवस्थं मणिं कौस्तुभाख्यम् । कथं भूतम् । आत्मधिष्ण्यमात्मन आवासस्थानम् । सुभगयन्तमिव सुभगयन्कश्चित्तद्वत्स्थितं शोभनकान्तियुक्तम् । कुर्वन्तामिति

यावत्। अत्र श्लोकचतुष्टये विद्यमानानां द्वितीयान्तानां पदानामचक्षतेति पूर्वेण वा नेमुरित्युत्तरेण वाऽन्वयः । अत्रात्मधिष्ण्यमित्यस्यात्मनो ब्रह्मण आवासस्थानमित्यभिप्रेत्य तत्र प्रमाणसंवादं दर्शयति ॥ कौस्तुभ इति । रूपं प्रतिमा । प्राणो मुख्यप्राणश्चूडामणिश्चूडामणिस्थः ॥ ३९ ॥

**पीतांशुकं पृथुनितम्बमधिस्फुरन्त्या**
**काञ्च्याऽलिभिर्विरुतया वनमालया च ।**
**वल्गुप्रकोष्ठवलयं विनतासुतांसे**
**विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥**

**प्रकाशिका–** पीतमंशुकं वस्त्रं यस्मिंस्तं पृथुनितंबं विस्तीर्णकटितटमधि अधिकृत्य । तत्परित इति यावत् । स्फुरंत्या कांच्याऽलिभिर्भ्रमरैर्विरुतया शब्दितया वनमालया च शोभमानं वल्गुषु सुन्दरेषु प्रकोष्ठेषु मणिबन्धस्थानेषु विद्यमाना वलयाः कङ्कणा यस्य तम् । विनतासुतो गरुडस्तदंसे विन्यस्तवामहस्तम् । इतरेण दक्षिणहस्तेन धुनानं कम्पयन्तम् ॥ ४० ॥

**विद्युत्क्षिपन्मकरकुण्डलमण्डनार्ह-**
**गण्डस्थलोन्नसमुखं मणिमत्किरीटम् ।**
**दोर्दण्डखण्डविवरे चरता परार्घ्य-**
**हारेण कन्धरगतेन च कौस्तुभेन ॥ ४१ ॥**

**प्रकाशिका–** विद्युती क्षिपती ये मकराकारे कुण्डले तयोर्मण्डनार्हेऽलङ्कारयोग्ये गण्डस्थले यस्मिंस्तत्तथा । तच्च तदुन्नसमुन्नतनासिकं मुखं च यस्य तथा तम् । दोर्दण्डानां खण्डः समूहस्तस्य विवरे मध्ये चरता वर्तमानेन परार्घ्यहारेणानर्घ्यमुक्तामालया कन्धरगतेन कन्धरायां ग्रीवायां स्थितेन । ह्रस्वच्छान्दसः । कौस्तुभेन च ॥ ४१ ॥

**अत्रोपसृष्टमिति चोत्स्मितमिंदिरायाः**
**स्वानां धिया विरचितं बहुसौष्ठवाढ्यम् ।**
**मह्यं भवस्य भवतां भजनीयमङ्गं**
**नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः ॥ ४२ ॥**

**तात्पर्यम्– 'अविद्यमानकरणं विद्यमानस्मृतिस्तथा । उभयं रचनं प्रोक्तं पूर्वसिद्धेषु तु स्मृतिरि'ति शब्दनिर्णये ॥ ४२ ॥**

**प्रकाशिका–** अत्र मदीयस्थाने उरसि उपस्पृष्टं मत्समीपे स्थितमिति हेतोः । च शब्दोऽप्यर्थे । इन्दिराया अपि उत्स्मितमुत्कृष्टस्मयो जात इति । स्वानां धिया विरचितं स्मृतम् । आस्मृतमिति पाठे हारेण कौस्तुभेन चेन्दिराया अप्युपसमीपे स्पृष्टं संबध्य स्थितमिति आ सम्यक् स्मृतं भक्तैर्ध्यातम् । अहो हारकौस्तुभयोर्भाग्यं याभ्यां भगवदङ्गे उत्तमाया अपि रमायाः समीपे स्थीयत इति । ध्यातमिति यावत् । उत्स्मृतमिति पाठेऽप्ययमेवार्थः । आस्मृतमिति पाठे स्वानां धिया विरचितं स्मृतमिति पृथग्विशेषणम् । विरचितशब्दस्य कृतौ रूढत्वात्कथं स्मृतमिति व्याख्यानमित्यतो रचनशब्दस्य स्मरणेऽपि विद्वद्रूढिं प्रमाणेनैव दर्शयति ॥ अविद्यमानकरणमिति । उभयोरपि रचनशब्दार्थत्वेऽत्र स्मृतिरेव ग्राह्येति कुत इत्यत उक्तम् ॥ पूर्वसिद्धेष्विति । तुशब्दोऽवधारणे । स्मृतिरेव रचनशब्दार्थतया । ग्राह्येति शेषः । प्रकृते च भगवदङ्गं पूर्वं सिद्धमतस्तद्धिया विरचितमित्यस्य स्वबुद्ध्यनुसारेण स्मृतमित्येव व्याख्येयमिति भावः । बहुसौभगाढ्यमपरिमितैश्वर्यादिगुणपूर्णम् । न विशेषेण तृप्ता दृशो नेत्राणि येषां ते तथा । कैः शिरोभिर्मुदा नेमुः ॥ ४२ ॥

**तस्यारविन्दनयनस्य पदारविन्द-**
**किञ्जल्कमिश्रतुलसीमकरन्दवायुः ।**
**अन्तर्गतः स्वविवरेण चकार तेषां**
**सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ४३ ॥**

**तात्पर्यम्– अक्षरजुषामपि तद्रूपसेवाभ्यासिनामपि ॥ ४३ ॥**

प्रकाशिका– तेषु भगवदङ्गोपाङ्गप्रदेशे दण्डवत्पतितेषु तत्रत्यो वायुस्तेषां हर्षं चकारेत्याह ॥ तस्येति । पदयोरर्पितानि यान्यरविन्दानि तेषां किञ्जल्कैः केसरैर्मिश्रा या तत्रैवार्पिता तुलसी तस्या मकरन्देन स्वादुरसमिश्रगन्धेन युक्तो वायुः स्वविवरेण नासिकारन्ध्रेणान्तर्गतः प्रविष्टस्तेषां सनकादीनां चित्ततन्वोः क्षोभं कञ्चन विकारं चित्तेऽतिहर्षं तनौ रोमाञ्चं चकारेत्यर्थः । कथंभूतानाम् । अक्षरजुषामपि । अत्राभिप्रेतमर्थं दर्शयति ॥ अक्षरजुषामपीति । तथाचाक्षरशब्देन प्रकृतं भगवद्रूपमेव ग्राह्यम् । तज्जुषां तत्सेवाभ्यासिनामपीत्यर्थः । धातुबलात्सेवामात्रलाभेऽपि अपिशब्दबलादभ्यासोऽपि सूचित इति ज्ञातव्यम् । अनेन भगवच्चरणार्पितारविन्दादिकिञ्जल्कसामर्थ्यमेतादृशमिति तन्माहात्म्यातिशयो दर्शित इति ज्ञातव्यम् ॥ ४३ ॥

**ते वा अमुष्य वदनासितपद्मकोष-**
**मुद्वीक्ष्य सुन्दरतराधरकुन्दहासम् ।**

**लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रि-**
**द्वन्द्वं नखारुणमणिश्रयणं निदध्युः ॥ ४४ ॥**

**प्रकाशिका–** तेषां हर्षकारितं संभ्रममाह ॥ ते वा इति द्वाभ्याम् । ते वै किल । वदनमेव सितपद्मकोशं कृष्णकमलकुड्मलम् । सुन्दरतराधरश्च कुन्दपुष्पवद्धवलो हासश्च यस्मिन्स तथा तम् । उद्वीक्ष्योर्ध्वं दृष्ट्वा स्वेषां ऱ्हस्वत्वान्मुखान्युन्नमय्य । दृष्ट्वेति यावत् । लब्धाशिषः प्राप्तमनोरथाः सन्तो नख एवारुणयस्तेषां श्रयणमाश्रयभूतमङ्घ्रिद्वन्द्वं पुनरवेक्ष्याधो वीक्ष्य । मुखमारभ्य पादपर्यन्तमवलोक्येति यावत् । निदिध्युर्नितरां हृदि स्थापितवन्तः ॥ ४४ ॥

**पुंसां गतिं मृगयतामिह योगमार्गै-**
**र्ध्यानास्पदं बहुमतं नयनाभिरामम् ।**
**ते तद्वपुर्दर्शयानमनन्यसिद्धै-**
**रौत्पत्तिकैः समगृणन् युतमष्टभोगैः ॥ ४५ ॥**

**प्रकाशिका–** योगमार्गैर्गतिं मोक्षं मृगयतां पुंसां ध्यानास्पदं ध्यानस्य विषयभूतं बहुमतमत्यादरास्पदं पूर्णत्वेन मतं ज्ञात्वेति वा । नयनान्यभिरामयति सुखयतीति नयनाभिरामं तद्वपुर्दर्शयानं तं दर्शयन्तम् । अनन्यसिद्धैरन्येष्वसिद्धैरसाधारणैरौत्पत्तिकैः स्वाभाविकैरष्टभोगैर्युतं समगृणन्सम्यगस्तुवन् ॥ ४५ ॥

**कुमारा ऊचुः–**
**योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्व-**
**मद्यैषि नो नयनमूलमनन्तराद्धः ।**
**यर्ह्येव कर्णविवरेण गुहां गतो नः**
**पित्रानुवर्णितरहो भवदुद्भवेन ॥ ४६ ॥**

**प्रकाशिका–** हे अनन्त । यस्त्वं हृदिगतोऽपि दुरात्मनां दुष्टमनसामन्तर्हितोऽसि स नोऽस्माकमद्य नयनमूलं दृष्टिपथमेषि । कथमित्यत उक्तम् ॥ राद्धमिति । अघटितघटकसामर्थ्यसिद्धिपूर्णो यत इत्यर्थः । कदाऽप्येवमहं भवद्भिर्नानुभूतः किमित्यतोऽन्तरेवानुभूत इत्याहुः । यर्ह्येवेति । एवशब्दोऽप्यर्थः । यद्यपि भवत उद्भवो जननं यस्य तेन नः पित्रा नाम्ना ब्रह्मणा यर्हि येन लक्षणानुवर्णितरहो यथावदुपदिष्टरहस्यो हरिरस्मत्कर्णविवरेण नो हृदयगुहां गतोऽभूदन्तरेव ध्यातस्तथाऽप्यद्य बहिरपि नयनमूलं गतः । अहो अस्मद्भाग्यमिति भावः ॥ ४६ ॥

तं त्वां विदाम भगवन् परमात्मतत्त्वं
सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम् ।
यत् तेऽनुभावविदितैर्दृढभक्तियोगै-
रुद्ग्रन्थयो हृदि विदुर्मुनयोविरागाः ॥ ४७ ॥

**प्रकाशिका–** ननु भवत्पितरोपदिष्टः परमात्मा नाहं तस्याव्यक्तत्वात् । मम तु भवद्भिर्दृष्टत्वादित्यतस्तदेव त्वं तल्लक्षणत्वेनास्मत्प्रत्यभिज्ञाविषयत्वादित्याहुः ॥ त्वं त्वामिति । भो भगवन् । त्वा त्वामस्मद्दृष्टिविषयं परमात्मनस्तत्त्वं लक्षणं यस्यास्मत्पित्रोपदिष्टस्य तमेव विदाम विद्मः प्रत्यभिजानीमः । किं तल्लक्षणं भवत्पित्रा चोपदिष्टं यत्त्वत्प्रत्यभिज्ञया भवतामपि परमात्मबुद्धिरित्यतो लक्षणद्वयमाहुः ॥ सत्त्वेनेति । संप्रति स्थितिकाले सत्त्वेन गुणेन । तदभिवर्धनेनेति यावत् । एषां लोकानां रतिं सुखं रचयन्तमुत्पादयन्तम् । अनेन पालकत्वं विष्णुलक्षणमुक्तमिति मन्तव्यम् । यद्यस्तेऽनुभावः सामर्थ्यविशेषः । कृपेति यावत् । तेन विदितैर्लब्धैर्दृढभक्तिरूपयोगैर्मोक्षोपायैर्विरागा विषयेषु शोभनाध्यासविधुरा अत एवोद्ग्रन्थय उन्मीलिताहङ्कारबन्धा मुनयो हृदि विदुर्दृष्टवन्तस्तं विद्म इत्यन्वयः । अनेन योगिभिर्दृश्यत्वं लक्षणमुक्तमिति ज्ञातव्यम् ॥ ४७ ॥

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किं चान्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥

**तात्पर्यम्– 'भक्तिज्ञानपरीपाकात्किञ्चित्पूर्वं च मुच्यते । दर्शनेन हरेस्तत्र नानन्दः पूर्णतां व्रजेदि'ति ब्रह्मतर्के ॥ अतोऽनपेक्षाणामानन्दोद्रेको मोक्षेच्छुभ्यः । तेषां परिपाकतः पूर्वं ब्रह्मदृष्ट्या मुक्तिप्राप्तेः । 'मुमुक्षोः केवलो भक्तो मुक्तावपि सुखी भवेदि'ति च ॥ ४८ ॥**

**प्रकाशिका–** मुनयः किमितरसाधारणमोक्षादिकमुद्दिश्य हृदि विदुर्नेत्याह ॥ नात्यन्तिकामिति । अत्र ये भवतः कथाया रसज्ञा भगवत्कथाश्रवणादिजनितापरोक्षज्ञानेन स्वरूपसुखानुभववन्तस्ते आत्यन्तिकं प्रसादमत्यर्थं प्रसादं तदुत्तरभाविनं मोक्षमपि न विगणयन्तीत्युक्त्या जीवन्मुक्तानां ब्रह्मदर्शनेन मोक्षात्पूर्वमपि स्वरूपानन्दाभिव्यक्तिरूपा मुक्तिरस्तीति प्रतीयते । सा कथम् । पुनः श्रवणाद्यनुष्ठानवैय्यर्थ्यप्रसङ्गादतोऽत्राभिमतानन्दाभिव्यक्तिं प्रमाणेनैव दर्शयति ॥ भक्तिज्ञानेति । भक्तिज्ञानपरिपाकात् । तत्साध्यादात्यन्तिकप्रसादात्पूर्वमपि हरिदर्शनेन किञ्चिन्मुच्यते प्रायः स्वरूपा-

नन्दाभिव्यक्तिमान् भवतीत्यर्थः । तर्हि पुनः श्रवणादिवैयर्थ्यमित्यत उक्तम् ॥ तत्रेति । तत्र तदा पूर्णताम् । स्वयोग्यतापेक्षया । तदर्थं पुनः श्रवणादिकमिति भावः । नन्वेवं कथमेतेषामात्यन्तिकप्रसादाविगणनं मूलोक्तं संभवति । स्वयोग्यानन्दपूर्त्यर्थं तदपेक्षया अवश्यकत्वादित्यतोऽत्राभिप्रेतमर्थं दर्शयति ॥ अत इति । यत एवं ज्ञानिनां ब्रह्मदर्शनमात्रेण प्रायः स्वरूपानन्दाभिव्यक्तिः प्रमाणसिद्धाऽतः साऽनपेक्षाणामुत्तमाधिकारिणां मोक्षेच्छिभ्योऽधमाधिकारिभ्यः। तदपेक्षयेति यावत् । आनन्दोद्रेक उत्कृष्टानन्दाभिव्यक्तिरूपो भवतीत्यर्थः । अत्रानपेक्षाणामित्युक्त्या स्वयोग्यानन्दपूर्त्यपेक्षाऽपि तेषां नास्तीति सूचयति । ततश्च किमित्यत आह ॥ तेषामिति । अनपेक्षाणामुत्तमाधिकारिणामित्यर्थः । परिपाकतः । भक्तिज्ञानयोरिति शेषः । मुक्तिप्राप्तेरधमाधिकारिप्राप्यमुक्त्यपेक्षयाऽप्यधिकमुक्तिप्राप्तेरधमाधिकारिभिः प्राप्तमात्यन्तिकप्रसादमपि न विगणयन्ति । इत्युक्तमिति शेषः । तथा चोत्तमाधिकारिणो ये कथाया रसज्ञा ब्रह्मसाक्षात्कारप्राप्तस्वरूपानन्दानुभववन्तस्तेऽधमाधिकारिषु जायमानमात्यन्तिकप्रसादमपि न विगणयन्ति । स्वेषामिदानीमेव तन्मोक्षसुखापेक्षयाऽधिकसुखस्य लाभादिति मूलाभिप्राय इति भावः । ब्रह्मदर्शनमात्रेणानपेक्षाणां मोक्षेच्छुमुक्त्यपेक्षयाऽधिकानन्दप्राप्तिर्भवतीत्येव कुत इत्यतोऽत्र प्रमाणमाह ॥ मुमुक्षोरिति । केवलो निरपेक्षः सुखी अधिकसुखवान् । अपि शब्देन न केवलं जीवन्मुक्तावित्यस्य लाभात्प्रकृतसिद्धिरिति ज्ञातव्यम् ॥ ततश्चायं श्लोकार्थः ॥ हे अङ्ग । ये त्वदङ्घ्रिरेव शरणमाश्रयो येषां ते तथा । त्वद्भक्ता इति यावत् । कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा । तस्य भगवतः कथाया रसज्ञाः । तच्छ्रवणादिप्राप्तब्रह्मदर्शनाभिव्यक्तकिञ्चित्स्वरूपसुखानुभववन्तः कुशला नीचोच्चविदस्ते उत्तमाधिकारिणस्ते तवाधिकारिषु जायमानमात्यन्तिकं भक्तिज्ञानपरिपाकानन्तरभाविनं मोक्षाव्यवहितपूर्वकालीनं प्रसादमपि । तज्जन्यं मोक्षमपीति यावत् । न विगणयन्ति न बहु मन्यन्ते स्वेषामिदानीमेव तदपेक्षयाऽधिकसुखप्राप्तेः । ते भ्रुव उन्नयैरुज्जृंभणविशेषैरर्पितं पतनभयं यस्य तदन्यत्स्वर्गादिकं न विगणयन्तीति किमु वक्तव्यमिति ॥ ४८ ॥

**कामं व्रजेम वृजिनैर्निरयेषु नष्टा-**
**श्चेतोऽलिवद् यदि नु ते पदयो रमेत ।**
**वाचश्च नस्तुलसिवद् यदि तेऽङ्घ्रिशोभाः**
**पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥ ४९ ॥**

**तात्पर्यम्– 'यावत्परमभक्तैस्तु भुज्यते दुःखमुल्बणम् । तावन्मुक्तौ सुखोद्रेकस्तत्र चेद्भक्तिवर्धनमि'ति च ॥ ४९ ॥ इति तृतीयतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥**

**प्रकाशिका–** इदानीं त्वत्पार्षदयोः शापप्रदानजनितपापफलं दुःखमस्माकमवश्यं भवत्वित्याशयेन प्रार्थयन्ते ॥ काममिति । वृजिनैः शापप्रदानजनितैः पापैर्निरयेषु नष्टाः क्लिष्टा अलिवदलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेष्वेव रमन्ते तद्वच्चेतस्त्वत्पादयोर्विघ्नानगणय्य यदि रमेत । अङ्घ्रिर्यथा शोभते तथा । तुलसीवदित्यस्य तुलसी यथा त्वत्प्रीत्यैव त्वदङ्घ्रिभ्यां शोभेत शोभेरन्निति भावः । अत्र पापफलदुःखभोगः कथं प्रार्थ्यते दुःखस्यानिष्टत्वेन द्वेष्यत्वात् । तत्र च मनआदीनां भगवद्विषयकत्वरूपभक्तिवर्धनं च किमर्थं प्रार्थ्यत इत्यतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ यावदिति । तुशब्देन दुःखे कायक्लेशादिरूपतया जन्यत्वं वोत्तमापराधादिरूपपापजन्यत्वं वा सूचितमिति ज्ञातव्यम् । सुखोद्रेकस्तेषाम् । भवतीति शेषः । चेतोऽलिवदित्यादेस्तात्पर्यम् ॥ तत्र चेदिति । तथा च हरिभक्त्यविलोपेन दुःखभागे आनन्दोद्रेकरूपफलसद्भावादेव प्रार्थनं युक्तमिति भावः ॥ ४९ ॥

**प्रादुश्चकर्थ यदिदं पुरूहूत रूपं**
**तेनेश निर्वृतिमवापुरलं दृशो नः ।**
**तस्मा इदं भगवते नम उद्विधेम**
**योऽनात्मनां दुरुदयो भगवान् प्रतीतः ॥ ५० ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे षोडशोऽध्यायः ।**

**प्रकाशिका–** एतद्रूपदर्शनेन वयं कृतार्था इत्याहुः ॥ प्रादुश्चकर्थेति । भो पुरुहूत पुरु बहु हुतं यशो यस्येत्यर्थः । यदिदं रूपं प्रादुश्चकर्थ प्रकटितवानसि । दृशोनेत्राण्यनात्मनामजितेन्द्रियाणां दुरुदयो दुःप्रकाश इदं नमः प्रत्युपकाराय विधेम कुर्मः । यः उत्प्रतीत उत्कृष्टतयेदानीं साक्षात्कृतः ॥ ५० ॥ इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ३-१६ ॥

## अथ सप्तदशोऽध्यायः ।

**ब्रह्मोवाच–**

**इति तद् गृणतां तेषां मुनीनां योगधर्मिणाम् ।**
**प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥**

**प्रकाशिका–** योगो भक्तियोगः स एव धर्मो येषामस्तीति योगधर्मिणस्तेषाम् ॥ १ ॥

श्री भगवानुवाच–
एतौ वै पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद् वो बह्वाधत्तामतिक्रमम् ॥ २ ॥

**प्रकाशिका–** भक्तपराधीनोऽहमिति दर्शयतो हरेः सनकादीन्प्रति स्नेहपूर्वकवचप्रकारं दर्शयति ॥ एतावित्येकादशभिः । मह्यं मम कदर्थीकृत्य अविगणय्य । तुच्छीकृत्येति यावत् । मम ब्राह्मणभक्तत्वेन तदपराधाचरणस्य ममानिष्ठत्वात् । बहु यथा स्यात्तथाऽतिक्रममपराधमधत्तामकुर्वताम् । यद्यस्मात्तस्माद्यस्त्वेतयोरित्युत्तरेणान्वयः ॥ २ ॥

यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः ।
स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥ ३ ॥

**प्रकाशिका–** देवहेलनाद्ब्रह्मादिदेवानामप्यपराधात् ॥ ३ ॥

तद् वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ।
तध्येवात्मकृतं मन्ये यत् स्वपुंभिरसत्कृताः ॥ ४ ॥

**प्रकाशिका–** हि यस्माद्ब्राह्मणकुलं मे परमं दैवमिव प्रीतिपात्रं तत्तस्मात् । अद्य वः प्रसादयामि । तव कोऽपराधो येनास्मत्प्रसादनं त्वया क्रियत इत्यत आह ॥ तद्धयवेति । स्वपुंभिः स्वभृत्यैः ॥ ४ ॥

यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ।
सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः ॥ ५ ॥

**प्रकाशिका–** एतदेवोपपादयति ॥ यन्नामानीति । ततः कः हानिरित्यत आह ॥ स इति । आमयः कुष्टाभिधो रोगः ॥ ५ ॥

यस्यामृतामलयशः श्रवणावगाहः
सद्यः पुनाति जगदाश्वपचं विकुण्ठः ।
सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्ति-
श्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥

**प्रकाशिका–** मे ब्रह्म दैवमित्युक्तं ब्राह्मणप्रियत्वं ब्राह्मणेभ्यः कस्तवोपकारो येन तव प्रिया जाता इत्याशङ्कां परिहरन् विशदशति ॥ यस्यामृतमिति । यस्य ममामलामृतत्वप्रदयशः श्रवण-लक्षणोऽवगाहः स्नानं सद्यस्तत्क्षणादेवाश्वपचं श्वपचमभिव्याप्य विद्यमानं जगत्पुनाति । भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता । विस्तृत्येति यावत् । सुतीर्थासु पावनी कीर्तिर्यस्य स तथा अनेन स्वस्य ब्राह्मणकृतोपकारो दर्शितः । स्वबाहुं स्वस्य बाहुजातं क्षत्रियं राजानमपि हन्यां काऽन्यस्य कथेत्यर्थः । अत्र स्वोत्कर्षवर्णनं ब्राह्मणोत्कर्षप्रतिपादनायैवेति ज्ञातव्यम् ॥ ६ ॥

**यत्सेवया चरणपद्मपवित्ररेणोः**
**सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ।**
**न श्रीर्विरक्तमपि मां विजहाति यस्याः**
**प्रेक्षालवार्थमितरे नियमोऽर्हते मत् ॥ ७ ॥**

**तात्पर्यम्– 'सर्वोत्तमोऽपि भगवान्विप्रादेः पूजनाय तु । गुणलब्धिं ततो ब्रूते नित्यपूर्ण-गुणोऽपि सन् । ब्रूयुश्चान्ये क्वचित्तु तदुक्तेरनुसारतः । उपादत्ते वरांश्चापि लोकानां मोहनाय चे'ति कौर्मे ॥ विप्राणां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं श्रीर्न जहातीति यत् । अतश्छिन्द्याम् । 'अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु । अज्ञानाद्दोषविज्ञानं गुणज्ञानं यथार्थत' इति पैङ्गिश्रुतिः ॥ 'विप्राणां चापि भक्तानामन्येषां च जनार्दनः । ब्रह्मणः शङ्कराद्वापि देवताभ्यस्तथैव च । आत्मनश्च श्रियश्चैव सकाशात्प्रियतामपि । पूज्यतामत्ययुक्तं च वदेत्क्वापि विमोहयन्नि'ति स्कान्दे ॥ ७ ॥**

**प्रकाशिका–** हरिः स्वस्य ब्राह्मणसेवया गुणलब्धिं वक्तीत्याह ॥ यत्सेवयेति । विप्राणां चरणपद्मपवित्ररेणोः सेवया सद्यस्तत्क्षणादेव क्षतानि नष्टान्यखिलानि मलानि पापानि यस्य स तथा तम् । अत एव प्रतिलब्धशीलं प्राप्तश्रीवत्सलाञ्छनस्वभावं प्राप्तैश्वर्यादिगुणस्वभावं वा विषयेषु विरक्तमपि मां श्रीर्न विजहाति । त्वत्स्त्रीत्वात्त्वां न जहाति । अतः को विशेषोऽनेनेत्यत आह ॥ यस्या इति । प्रेक्षालवार्थं कृपाकटाक्षलेशार्थं मदितरन्मदपेक्षयेतरेषां नियमो व्रतानुष्ठानादिरूपोऽर्हते योग्यो भवति सा श्रीरित्यन्वयः । अत्र ब्राह्मणसेवया सर्वोत्तमस्य भगवतो गुणप्राप्ति-र्लक्ष्मीप्राप्तिश्चोच्यमाना प्रमाणबाधिताऽतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ सर्वोत्तमोऽपीति । विप्रादेरित्यत्रादिपदेन देवानां सङ्ग्रहः । तुशब्दोऽवधारणे । पूजनायैव पूज्यत्वप्रदर्शनायैव । ततो विप्रादेः सकाशात् । गुणलब्धिं गुणप्राप्तिं स्वात्मनो ब्रूते । ननु हरिवचनमेवं पूज्यत्वप्रदर्शनार्थमित्यस्तु । तथाऽप्येवमेव ब्राह्मणा देवान्प्रति मैत्रेयेण विदुरं प्रति शुकेन परीक्षितं

प्रति सूतेन शौनकादीन्प्रति कथमुच्यत इत्यत आह ॥ ब्रूयुरिति । अन्ये च ब्रह्मादयः क्वचिद्ग्रन्थे यद्येवमेव ब्रूयुः । तुशब्दोऽवधारणे । तदुक्तेरनुसारत एव हरिवचनानुवादरूपमेव तत् अतो न दोष इति भावः । उक्तन्यायमन्यत्राप्यतिदिशति ॥ उपादत्त इति । विप्रादेरिति वर्तते । चशब्द उक्तवचनसमुच्चयार्थः । अपिशब्दस्य यद्यपि सर्वोत्तमस्तथाऽपीत्यर्थः । मोहनाय चेतिशब्देन पूजनाय चेत्यस्य समुच्चयः । अत्र यत्सेवयेत्यस्यैकपदत्वे येषां सेवया क्षताखिलमलं प्रतिलब्धशीलं चेत्यन्वये चरणपद्मपवित्ररेणोरित्यस्यान्वयः । भिन्नपदत्वे च येषां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं मां श्रीर्न विजहाति । तेषां वः प्रतिकूलवृत्तिं स्वबाहुं छिन्द्यामित्यन्वयलाभेऽपि शीलादिगुणप्राप्तेः श्रीपरित्यागाभावस्य च न साक्षाच्छिन्द्यामित्यत्र हेतुत्वलाभस्तत्ज्ञापकाभावात् । अतो विप्राणामित्यध्याहारं यदित्यस्य हेत्वर्थत्वं तस्याध्याहृतेति शब्देनान्वयं चाभिप्रेत्य योजनां दर्शयति ॥ विप्राणामिति । छिन्द्यामित्यनन्तरमिति सम्बन्ध इति शेषः । क्षताखिलमलमित्यनेन विष्णौ दोषप्रसक्तिः प्रतीयतेऽतस्तदभिप्रायं श्रुत्यैव दर्शयति ॥ अनुक्ताश्चेति । श्रुत्यादावुक्ता अनुक्ताश्च गुणा ग्राह्याः । दोषा उक्ता अपि न तु नैव ग्राह्याः । तर्हि कथं दोषप्रसक्तिरित्यत उक्तम् ॥ अज्ञानादिति । तद्वाक्यस्य तात्पर्यस्याज्ञानात् । विपरीततया मानादित्यर्थः । यथार्थतो यथार्थतात्पर्यज्ञानात् । पैङ्गिश्रुतिर्यतः । अतो दोषप्रतीतिजनकवाक्यस्य न स्वार्थे । तात्पर्यमिति शेषः । स्वार्थे तात्पर्याभावे तादृशवचनानां कुत्र तात्पर्यमित्यपेक्षायां प्रमाणेनैव दर्शयति ॥ विप्राणां चेति । अपिशब्दो वक्ष्यमाणप्रियत्वपूज्यत्वशून्यानामपीत्यर्थे । पूज्यानामपीत्यन्वयः । अत्ययुक्तम् । सद्यः क्षतमित्यादिकं काप्येव विमोहयन्नेवेत्येवकारयोः संबन्धः । तथा चासुरजनमोहन एव तादृशवचनानां तात्पर्यमिति भावः । इतरे नियमान्वहन्ते इत्यपि क्वचिन्मूलपाठः ॥ ७ ॥

**नाहं तथाद्मि यजमानहविर्वितानै-**
**श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन ।**
**यद् ब्राह्मणस्य मुखतश्चरतोऽनुघासं**
**तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥**

**प्रकाशिका–** इतोऽपि विप्राः पूज्या इत्याशयेनाह ॥ नाहमिति । अहं वितानैर्विस्तृतैर्मन्त्रैर्दत्तं चोतद्गलद्घृतं तेन प्लुतं मिश्रितं यजमानस्य हविश्च पुरोडाशादिरूपं हुतभुङ्मुखेनाग्निलक्षणेन मुखेनादन् अश्नन्नपि तथाऽपि नाश्नामि । तथा न तृप्तिं यामीति यावत् । यद्यथा मय्यवहितैरर्पितैर्निजकर्मणां पाकैः फलैस्तुष्टस्य । निष्कामकर्मकरणेनैव तुष्टस्येति यावत् । चरतो भुञ्जानस्य ब्राह्मणस्य ब्रह्मज्ञानवतो मुखेनानुघासं प्रतिकवलमद्मि । अनेन प्रीतो भवामि तथेत्यन्वयः ॥ ८ ॥

येषां बिभर्म्यहमखण्डविकुण्ठयोग-
मायाविभूतिरमलाङ्घ्रिरजः किरीटैः ।
विप्रांस्तु को न विषहेत यदर्हणांभः
सद्यः पुनाति सहचन्द्रललामलोकान् ॥ ९ ॥

**प्रकाशिका–** पुनरसुरजनमोहनाभिप्रायेणैवाह ॥ येषामिति । अखण्डा पूर्णा विकुंठाऽप्रतिहता योगमाया योगसामर्थ्यं तया प्राप्तविभूतिः प्राप्तपरमैश्वर्योप्यहं यस्य ममार्हणांभो ब्रह्मकृतप्रक्षालनोदकं तद्रूपगङ्गाख्यमंभश्चन्द्रललामेन चन्द्रभूषणेन रुद्रेण सहितान् लोकान्पुनाति । सोऽहमेवं परमपावनोऽपि किरीटैर्येषां विप्राणाममलाङ्घ्रिरजो बिभर्मि तान्विप्रान् अपकुर्वतोऽपि कोऽन्यो न विषहेत तदपराधान्न सहेत । बहुष्ववतारेषु बिभर्मीति सूचनाय किरीटैरिति बहुवचनम् ॥ ९ ॥

ये मे तनूर्द्विजवरान् दुदुहुर्मदीयान्
भूतान्यलब्धशरणानि च भेदबुध्या ।
द्रक्ष्यन्त्यघक्षतदृशो ह्यभिमन्यवस्तान्
गृध्रा रुषा मम कृषन्त्यधिदण्डनेतुः ॥ १० ॥

**प्रकाशिका–** सर्वथा ब्राह्मणद्रोहो न कार्योऽनर्थहेतुत्वादित्याह ॥ ये म इति । तान्नः प्रतिमाभूतान्मदीयान्मद्भक्तान्दुदुहुस्तदीयवित्तादिकं गृहीतवन्तः दुद्रुहुरिति पाठे द्रोहं कृतवन्त इत्यर्थः । येनाघेन क्षतदृशोऽन्धीकृतनेत्राः सन्तोऽलब्धशरीराणि रक्षकरहितानि भूतानि प्राणिनो भेदबुद्ध्या स्वपाल्यपुत्रादिवैलक्षण्यबुद्ध्या द्रक्ष्यन्ति पश्यन्ति तान्मम मयाधिकृतो यो दण्डनेता दण्डकारी यमस्तस्याभिमन्यवोऽभितो मन्युर्येषां ते तथा गृध्राः । रुषा कृषन्ति चञ्चुभिश्छिदन्ति ॥ १० ॥

ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्ति
तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ।
वाण्यानुरागकलयात्मजवद् गृणन्तः
संबोधयन्त्यहमिवाहमुपाकृतस्तैः ॥ ११ ॥

**प्रकाशिका–** इदानीं ब्राह्मणपूजयैवाहं वशो भवामीत्याह ॥ ये क्षिपतो भर्त्सयतोऽपि ब्राह्मणास्तुष्यद्धृदो हृष्यन्मनसः स्मितमेव सुधा तयोक्षितमासिक्तं पद्मतुल्यं वक्त्रं येषां ते तथा । अनुरागकलया स्नेहसंबद्ध्या । कल बन्धन इति धातोः । वाण्या वाचाऽऽत्मजवत्कृतं पितरं पुत्र इव गृणन्तः स्तुवन्तः सन्तोऽहमिव यथाऽहं विप्रान्संबोधयामि तथैव संबोधयन्ति । मयि धिया हरिरेषु विशेषतः सन्निहित इति बुद्ध्याऽर्चयन्ति च तैरहमुपाकृतो वशीकृतः ॥ ११ ॥

**तन्मे स्वभर्तुरवसायमलक्षमाणौ**
**युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ।**
**भूयो ममान्तिकमितां तदनुग्रहो मे**
**यत् कालतोऽप्यविरमो हृतयोर्विवासः ॥ १२ ॥**

**प्रकाशिका–** इदानीं स्वभृत्योर्मोक्षं प्रार्थयते ॥ तन्म इति । तत्तस्मान्मेऽवसायमभिप्रायमलक्षमाणावजानन्तौ युष्मद्व्यतिक्रमगतिं युष्मदपराधोचितगतिं सद्यः प्रतिपद्य प्राप्य ममान्तिकं मत्समीपमितामागच्छताम् । तत्पुनः समीपागमनं ममानुग्रहः स एवमपि क्रियमाणो भवद्भिरनुग्रहः । कुत एवं प्रार्थ्यत इत्यत आह ॥ यदिति । यद्यस्माद्भवच्छापेन हृतयोः स्थानभ्रंशितयोर्विवासो देहान्तराव-स्थानरूपः कालतोऽपि बहुनापि कालेनाविरामोऽवसानहीनः स्यात् । अतोऽयमनुग्रहो प्रार्थ्यत इति भावः ॥ १२ ॥

**ब्रह्मोवाच–**
**अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ।**
**आस्वाद्य मन्युदष्टानां तेषामात्माप्यतृप्यत ॥ १३ ॥**

**तात्पर्यम्– देवीं द्योतमानाम् । ऋषिकुल्याम् ऋषिकुलस्तुतिपराम् ।**

**प्रकाशिका–** तस्य हरेरुशतीमभीष्टप्रदां सरस्वतीं वाचमास्वाद्य तन्माधुर्यमनुभूय मन्युदष्टानामपि मन्युलक्षणाहिना दष्टानामपि तेषामात्मनः। अत्र देवीं ऋषिकुल्यामितिपदयोः प्रकृतोपयुक्तमर्थं दर्शयति ॥ देवीमिति ॥ चित्रपदोपेततया गंभीरवाक्योपेततया अबाधितार्थतया च द्योतमानामित्यर्थः ऋषिकुलस्तुतिपरामृषिकुलस्तुतौ तात्पर्योपेताम् । अनेनाबाधितार्थत्वमुपपादितमिति ज्ञातव्यम् ॥ १३ ॥

**सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ।**
**विगाह्यागाधगम्भीरं न विदुस्तच्चिकीर्षितम् ॥ १४ ॥**

**प्रकाशिका–** व्यादाय प्रसार्य । कर्णौ दत्वेति यावत् । लघ्वीं मिताक्षरीं गुरुभिरर्थैर्गव्हरां अप्रवेश्यामगाधां अभिप्रायतो गंभीरामर्थतः । अनेन गुर्वर्थगव्हरत्वमुपपादितमिति ज्ञातव्यम् । विगाह्य विचार्योक्तवाक्यानामापातप्रतीतमर्थं तस्य हरेश्चिकीर्षितं प्रतिपादयितुमिष्टं न विदुः ॥ १४ ॥

**ते योगमाययारब्धपारमेष्ठ्यमहोदयम् ।**
**प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः कम्पिततत्वचः ॥ १५ ॥**

**तात्पर्यम्**– '**तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमि'त्युक्तम्** ॥ १५ ॥

**प्रकाशिका**– ते सनकादयो योगमायाभ्रूविजृंभादिरूपसामर्थ्येनारब्ध उत्पादितः पारमेष्ठ्यमहोदयो ब्रह्मपदसंबन्धिभूतैश्वर्यं यस्य स तथा हरिम् । कंपितत्वचो रोमाञ्चितत्वचः । अत्र योगमायाशब्दो नानिर्वाच्याविद्यापरः किं तूक्तार्थपर एवेत्यभिप्रेत्य समाख्यामाह ॥ तद्भ्रूविजृंभ इति । परमेष्ठिधिष्ण्यं परमेष्ठिधिष्ण्यजनक इति यतः पूर्वमुक्तमतोऽत्रापि स एवार्थो वर्णनीय इत्यर्थः ॥ १५ ॥

**ऋषय ऊचुः–**

**न वयं भगवन् विद्मस्तव देव चिकीर्षितम् ।**
**कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥**

**प्रकाशिका**– चिकीर्षितमुक्तवाक्यैः प्रतिपादयितुमिष्टम् । न विद्मस्तद्वाक्यानामापाततः प्रतीतार्थस्त्वत्तात्पर्यविषयो न भवतीति विद्म इत्यर्थः । एतदेवाहुः ॥ कृतोम इत्यादिना । यद्यस्माद्-ध्यक्षोऽधिपतिरितरानुग्रहापेक्षाविधुरोऽपि सन् तदनुग्रहो म इति वाक्येन मेऽयमेवानुग्रहः कृत इति प्रभाषसे तस्मादयमेवार्थो न तवेष्टः किं त्वन्य एवेति जानीम इत्यर्थः ॥ १६ ॥

**ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो ।**
**विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥**

**प्रकाशिका**– ब्रह्म दैवं परं हि म इत्येतदपि वचनं न प्रतीतार्थपरमित्याहुः ॥ ब्रह्मण्यस्येति । ब्राह्मणपूज्यस्य ते ब्राह्मणाः परं दैवं किल । किलेत्यनेन प्रतीतार्थो बाधित इति सूचयति । कुतो भगवतो ब्राह्मणपूज्यत्वमित्यत आह ॥ विप्राणामिति । देवदेवानां देवदेवपूज्यानां विप्राणां भगवानात्मदैवतं स्वदैवतम् । कुलदेवतेति यावत् ॥ १७ ॥

**त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ।**
**धर्मस्य परमो गुह्यो निर्विकारो भवान् मतः ॥ १८ ॥**

**तात्पर्यम्– धर्मस्यापि दुर्ज्ञेयः ॥ १८ ॥**

**प्रकाशिका**– कुत इत्यतस्तैरनुष्ठेयमानधर्मरक्षकत्वात्तवेत्याहुः ॥ त्वत्त इति । त्वत्तो मूलरूपात् । तव तनुभिः कपिलाद्यवतारैश्च । ब्रह्म दैवं परं हि म इति वाक्यमपि न प्रतीतार्थपरमित्याहुः ॥ धर्मस्येति । धर्मस्याचेतनस्य गुह्यमित्येतदसंभवितार्थकमतो व्याख्याति ॥ धर्मस्यापीति । धर्माभिमानिनो यमस्यापीत्यर्थः । गुह्य इत्यस्यार्थः ॥ दुर्ज्ञेय इति । इतरेषां दुर्ज्ञेयत्वे किमु वाच्यमिति कैमुत्यार्थोऽपिशब्दो मूलेऽध्याहार्य इति सूचयति । अनेन ब्राह्मणैरनुष्ठीयमानधर्माभिमानिनो

यमधर्मस्यापि सकाशाद्भगवान्परम उत्तमः । कुतः । यतस्तस्यापि गुह्यो दुर्ज्ञेयः । तर्ह्यव्यक्तवद्विकारी स्यादित्यत उक्तम् । निर्विकार इति । मतः श्रुत्यादिभिरेवं ज्ञातः । अतस्तव कथं ब्राह्मणा देवाः स्युरिति शेषः ॥ १८ ॥

**तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ।**
**योगिनः स भवान् किंस्विदनुगृह्येत यत् परैः ॥ १९ ॥**

**प्रकाशिका–** इतोऽपि तदनुग्रहो म इति वाक्यं न प्रतीतार्थपरमित्याहुः ॥ तरन्तीति । निवृत्ता निवृत्तधर्मनिष्ठाः । स भवान्परैरन्यैर्ब्राह्मणादिभिरनुगृह्येतानुग्रहोपजीवनं क्रियेतेति यत्तत्किं स्वित् । विप्रस्तुतिमन्तरेण न किमपीत्यर्थः ॥ १९ ॥

**यं वै विभूतिरुपयात्यनुवेलमन्यै-**
**रर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।**
**धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो**
**लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥**

**तात्पर्यम्– मधुव्रतपतेः सारग्राहिणां पतेः । अङ्घ्रिस्थतुलसीलोकं स्थानमुरसिस्थापि स्पर्धयेव कामयाना । 'लब्ध्वाऽपि वक्षसि पदमि'ति च ॥ २० ॥**

**प्रकाशिका–** यच्चोक्तं विप्राणां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलमित्यादि तदपि न प्रतीतार्थपरमित्याहुः । यं वा इति श्लोकद्वयेन । अत्र मधुव्रतपतेरित्यस्य प्रकृतोपयुक्तमर्थं यौगिकं दर्शयति ॥ मधुव्रतपतेरिति । सारग्राहिणां सारभोजिनाम् । अनेन मधुनः सारस्य व्रतं भुक्तिर्येषां ते मधुव्रतास्तेषां पतेः पत्युरिति योगं दर्शयति । अस्य धन्यार्पिताङ्घ्रितुलसी नवधामधाम्नो लोकमित्यनेनान्वय इत्यभिप्रेत्य तत्पदद्वयतात्पर्यमाह ॥ अङ्घ्रिस्थेति । अङ्घ्रिस्थतुलसीत्यनेन धाम्न इत्यन्तस्य तात्पर्यमुक्तमित्यवगन्तव्यम् । स्थानमङ्घ्रिरूपम् । अनेन धन्यैरर्पितमङ्घ्र्योर्यत्तुलस्या नव दाम तद्धाम्नस्तत्स्वरूपस्य लोकसंस्थानमिति मूलं व्याख्येयमिति सूचयति । धामशब्दस्य स्वरूपार्थकत्वद्योतनायैवाङ्घ्रितुलसीत्येवोक्तम् । विभूतिरित्यत्र योग्यताबललब्धमध्याहारं दर्शयति ॥ उरसि स्थाऽपीति । इव शब्दस्याध्याहृतस्पर्धयेत्यनेनान्वयमभिप्रेत्य योजयति ॥ स्पर्धयेवेति । अस्या एवमुत्तमस्थानं कुत इति स्पर्धयेवेत्यर्थः । कामयाना कामयमाना । अत्र प्रमाणसंवादमाह ॥ लब्ध्वाऽपीति । लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टमित्यादिरूपं वचनं यतोस्त्यत उक्त एवार्थः ॥ ततश्चायं श्लोकार्थः ॥ यमिति यच्छब्दस्य सत्त्वमित्युत्तरेणान्वयः । वैशब्दः प्रमाणप्रसिद्धिद्योतकः ।

विभूतिर्महालक्ष्मीरुरसि स्थिताऽपि मधुव्रतपतेः सारग्राहिणां पत्युस्तवधन्यैर्भक्तैरर्पितमङ्घ्र्योर्विद्यमानं यत्तुलस्या नव दाम तद्धाम्नस्तत्स्वरूपस्य दामरूपणाङ्घ्रिस्थतुलस्या इति यावत् । दामग्रहणं चरणोयोर्बहु तुलसीसमावेशाय । लोकं संस्थानम् । अङ्घ्रियुगलस्पर्धयेव । न वस्तुतस्तस्याः स्पर्धाऽस्तीति सूचनायेवशब्दः । कामयाना कामयमाना सती यमनुवेलं प्रति प्रातरादिकालं सेवितमुपयाति । कथं भूता । अर्थार्थिभिश्चतुर्विधपुरुषार्थार्थिभिर्ज्ञानभक्त्याद्यर्थिभिर्वा ब्रह्मादिभिः स्वशिरसा धृतः पादरेणुर्यस्याः सा । अनेन ब्राह्मणसेव्यरमासेव्यस्य तव ब्राह्मणपादरेणुसेवया श्रीर्मां न विजहातीति वचनं न प्रतीतार्थमित्युपपादितमिति ज्ञातव्यम् । तर्हि श्रीर्मां कुतो न विजहातीत्यतः स्वभावादेवेति वक्तुं यं वा इत्यादि शिष्टं वाक्यम् । अत्रैवमुत्प्रेक्षा । ब्रह्माद्युत्तमा लक्ष्मीः स्वयमुरसि संस्थिताऽपि तुलसी स्थानमङ्घ्रिमुरोलक्षणस्वस्थानवदधिकमिति मत्वाऽङ्घ्रिस्थानमपि तुलसी स्पर्धयेव कामयाना सती स्वभावादेव भगवन्तमनुवेलं सेवितुमुपयातीति । लक्ष्म्याः स्वस्थानवत्तुलसीस्थानस्याङ्घ्रेः कथमुत्तमुत्तमत्वं ज्ञातं येन तदपेक्षया सेवितुमुपयातीत्यत उक्तम् ॥ मधुव्रतपतेरिति । इदमुक्तं भवति । भगवता हि तुलस्या अङ्घ्रियुगलं स्थानं दत्तम् । अत एव भक्तैः सा तत्रैव दामादिस्वरूपाऽर्प्यते तुलसी चातीवभगवतः प्रिया प्रसिद्धा तस्य सारग्राहिपतित्वात् । तुलस्याश्च तस्य ग्राह्यसारवत्वात् । न हि तस्या अनुत्तमं स्थानं भगवान्दास्यति । अतोऽङ्घ्रिलक्षणं तुलसीस्थानं मत्स्थानवदुत्तममेव भवितुमर्हतीति ज्ञातव्यमिति ॥ २० ॥

**यस्तां विविक्तचरितैरनुवर्तमानां**
**नात्याद्रियत् परमभागवतप्रसङ्गः ।**
**स त्वं द्विजानुपथपुण्यरजःपुनीतिः**
**श्रीवत्सलक्ष्म किमगा भगभाजनत्वम् ॥ २१ ॥**

**तात्पर्यम्– परमभागवतत्वेन तस्यामत्यादरः । न तु कामात् । 'हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः । अधिकारे च मुक्तौ च ब्रह्मवाय्वोश्च तत्स्त्रियोः । शेषवीन्द्रहराणां च तत्स्त्रीणां वासवादिनाम् । यथाक्रमं तु विज्ञेया भूमौ कारणतोऽन्यथा । देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत् । ब्रह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणम् । श्रियोऽधिका गुणाः सर्वे सर्वेभ्यो नियमेन तु । उक्ताश्चैवाप्यनुक्ताश्च ततो विष्णोर्न संशय' इति तत्त्वनिर्णये ॥ २१ ॥**

**प्रकाशिका–** यदपि विरक्तमपीति रमायां वैराग्यवचनं तदपि तस्यां न सर्वथा रागाभावपरं किन्तु कामप्रयुक्तरागाभावपरमेवेत्याहुः ॥ यस्तामिति । अत्र परमभागवतेषु प्रसङ्गः प्रकृष्टस्नेहो यस्य स भगवान् तान् अत्याद्रियदितीतरभगवद्भक्तापेक्षया रमायां भगवत आदराभावः प्रतीयतेऽतोऽत्र विवक्षितं तात्पर्यं दर्शयति ॥ परमेति । परमभागवतत्वेन निमित्तेन । अनेन परमभागवतपदं

भावप्रदानं तृतीयान्तं समस्तमिति दर्शितम् । तस्यां रमायामित्यनेन परमभागवतपदं नेतरभागवतपरं किन्तु रमापरमेवेति सूचितम् । प्रसङ्गशब्दस्य व्याख्यानम् ।। अत्यादर इति ।। ततश्चायमर्थः ।। यो भवान्विविक्तरचितैरसाधारणपरिचरणैरनुवर्तमानां तां श्रियं नात्याद्रियत्स्त्रैणवन्न कामितयाऽऽद्रितवान् । ननु तर्हि रमायां भगवदादरसद्भावप्रतिपादकवाक्यविरोध इत्यत उक्तम् ।। परमभागवतत्वेनेति । परमभागवतत्वेन सर्वोत्तमभगवद्भक्तत्वेन तस्यां प्रसङ्गः प्रकृष्टस्नेहो यस्य स तथोक्तः । तथाचादरप्रतिपादकवाक्यानां तादृशादरपरत्वान्न विरोध इति भावः । स्यादेवं यदि परमभागवतत्वप्रयोजकगुणवत्त्वं तस्याः प्रसिद्धं स्यात्तदेव कुत इत्यतोऽत्र प्रमाणमाह ।। हरिभक्तिरिति । अधिकारे पारमेष्ठ्यादिपदाधिपत्यकाले । यथाक्रमं तु यथाक्रममेव । नन्वेतेषामवतारेषु भक्त्यादिगुणव्यत्यासोऽपि दृश्यतेऽतः कथमुक्तनियम इत्यत आह ।। भूमाविति । कारणतो मानुषान्नोपभोगादिकारणतः । अन्यथोक्तगुणव्यत्यासे । दृश्यत इति शेषः । ननु भूमौ तेषां ज्ञानादिह्रासवल्लक्षणह्रासोऽपि भवति किं नेत्याह ।। देहस्येति । लक्षणं द्वात्रिंशल्लक्षणेषु येषां यावत्क्लृप्तं तावदित्यर्थः । अन्यथा व्यत्यस्तम् । लक्षणमपि ब्रह्मादिषु तारतम्येनैवास्तीति प्रसङ्गादाह ।। ब्रह्मादिष्विति । तुशब्दो भूम्यादौ सर्वत्रेत्यर्थकः । एवशब्दस्य विष्णोरित्यनेन संबन्धः । अपि शब्दोऽधिका इत्यस्यानुकर्षणार्थकः । अनेन विविक्तचरितैरनुवर्तमानामित्येतद्विविक्तैः सेवकतारतम्यान्तगैरचितैर्भक्त्यादिपूर्वकपरिचरणैरिति व्याख्यानेन रमायाः परमभागवतत्वोपपादकमिति सूचयति । इदानीं विप्राणां पादपद्मरेणोः सेवया प्रतिलब्धशीलमित्येतदपि न प्रतीतार्थपरमित्याहुः ।। स त्वमिति । यो द्विजानामनुपथेनानुगमनेन । पथ गताविति धातोः । पुण्यं यत्स्वलाञ्छनवत्स्वभावं भगभाजनत्वमैश्वर्यादिगुणपात्रस्वभावं वाऽगा अगच्छः । किमित्याक्षेपः । अत इदं भगवदुक्तं सर्वमस्मत्स्तुतिपरमसुरजनमोहनपरं चेत्येव वयं जानीम इति भावः ।। २१ ।।

**धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः**
**पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।**
**नूनं भृतं तदभिघातिरजस्तमश्च**
**सत्त्वेन नो वरदया तनुवा निरस्य ।। २२ ।।**

**तात्पर्यम्– 'धारणाद्भगवान्धर्मो यमनाद्यम उच्यत' इति शब्दनिर्णये । 'अनन्तासनवैकुण्ठक्षीरसागरगैस्त्रिभिः । रक्षां करोति भगवान्कपिलः सत्ववर्धनात् । असत्वोऽपि रजश्चैव तमश्चापि निरस्य त्वि'ति मूर्तिभेदे ।। 'कपिलो वरदश्चैव विकलश्चे'ति कथ्यत' इति च । अतः सत्वस्य कारणत्वमात्रं कपिलो वरदा तनुः ।। २२ ।।**

**प्रकाशिका–** कुतो भवत्स्तुतिर्मया कर्तव्येत्यपेक्षायां ब्राह्मणानां जगद्धारकधर्मप्रवर्तकत्वादित्याशयेनाहुः ॥ धर्मेति । अत्र धर्मस्य त इति सामानाधिकरण्येन भगवतो धर्मशब्दवाच्यत्वमुक्तम् । तत्केन निमित्तेनेत्यपेक्षायां तत्र निमित्तं प्रमाणेनाह ॥ धारणादिति । त्रिभिः स्वैः पद्भिस्तपःशौचदयारूपैरिति नो वरदया सत्त्वेन सत्त्वमूर्त्येति च व्याख्यानं प्रमाणविरुद्धमित्याशयेन श्लोकं प्रमाणेनैव व्याख्याति ॥ अनन्तासनेति । त्रिभिः । स्वरूपांशैरिति शेषः । अनेन त्रिभिः स्वपद्भिरित्येतदुक्तार्थम् । भृतमित्यस्यतात्पर्यम् ॥ रक्षां करोतीति । वरदया तनुवेत्यस्य तात्पर्यम् ॥ कपिल इति । सत्त्वेनेत्यस्य सत्त्वात्मकमूर्त्येति व्याख्यानमसदिति भावेनाह । असत्त्वोऽपि सत्त्वगुणात्मकशरीररहितोऽपि सत्त्ववर्धनादिति । रजस्तमश्च निरस्येत्यस्य व्याख्यानम् ॥ रजश्चैवेति । च शब्दौ परस्परसमुच्चये । एवशब्दस्य निरस्यैवेति संबन्धः । अपिशब्दः सत्त्वाविघातित्वरूपविशेषणसमुच्चायकः । तुशब्दस्तदुभयकार्यनिरासरूपविशेषसूचकः । वरदया तनुवेत्यत्र वरदशब्दः कपिलपर एवेत्याशयेन तत्राभिधानं पठति ॥ कपिल इति । वरदादिशब्देन कपिल एव कथ्यत इत्यन्वयः । प्रमाणोदाहरणफलं दर्शयति ॥ अत इति । यतः प्रमाणेऽपि सत्त्वोऽपि सत्त्ववर्धन इत्युक्तम् । यतश्च वरदशब्दः कपिलपरत्वेनाभिधानसिद्धोऽत इत्यर्थः । सत्त्वस्य सत्त्वेनेति तृतीयान्तपदेनोक्तस्य कारणत्वमात्रमुच्यते । रजस्तमोनिरसन इति शेषः । ननु मूर्त्येत्यर्थकस्य वरदया तनुवेत्यत्र विशेषणत्वमित्यर्थः । कपिलो वरदा तनुवेत्यत्रोक्तः कपिल एवाङ्गीकार्यः स एव कर्तेत्याशयः ॥ ततश्चायं श्लोकार्थः ॥ त्रिष्वेव युगेष्ववतारकारणात्त्रियुगस्तत्संबन्धि हे त्रियुग । धारणाद्धर्मनामकस्य ते स्वैः स्वरूपभूतैस्त्रिभिः पद्भिरनन्तासनवैकुण्ठक्षीरसागरगतैरंशैश्चराचरमिदं विश्वं द्विजानां देवानामर्थं प्रयोजनमुद्दिश्य । द्विजैर्देवतोद्देश्यकधर्मप्रवृत्त्यर्थमिति यावत् । नूनं निश्चयेन भृतं पालितम् । धर्मोपयोगिकृतमिति यावत् । किं कृत्वा । तदभिघातिदेवतोद्देशेन द्विजैः क्रियमाणधर्माभिघातिरजस्तमश्च राजसांस्तामसांश्च वरदया तनुवा कपिलाख्येनावतारेण कर्त्रा-नोऽस्माकं ब्राह्मणानां सत्त्वेन सत्त्वगुणवर्धनरूपेण करणेन निरस्य निरासं कृत्वेति ॥ २२ ॥

**न त्वं द्विजोत्तमकुलं यदिहात्मगोपं**
**गोप्ता वृष स्वर्हणेन ससूनृतेन ।**
**तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था**
**लोकोऽग्रहीष्यदृषभस्य हि यत् प्रमाणम् ॥ २३ ॥**

**तात्पर्यम्– आत्मैव गोपो गोपको यस्य तदात्मगोपम् ॥ २३ ॥**

**प्रकाशिका–** धर्मप्रवर्तकानां द्विजानां यदिस्तोत्रादिकं त्वं न करोषि तर्हि बाधकमाहुः ॥ न त्वमिति । अत्रात्मगोपमित्येतदात्मनः स्वस्य गोपं गोप्त्रिति प्रतीतिनिरासाय व्याख्याति ॥

आत्मैवेति । गोपो गोप्ता रक्षकः ।। ततश्चायमर्थः ।। हे वृष हे श्रेष्ठ हे देव क्रीडादिगुण । त्वमात्मैव गोपो यस्य तदात्मगोपम् । द्विजोत्तमकुलमिह जगति सुशोभनं सूनृतं मधुरभाषणं यस्मिंस्तेन स्वर्हणेन समीचीनसत्कारेण यदि न गोप्ता रक्षिता तर्हि तदानीमेव तव शिवः शुद्धः पन्थाः स्वप्रीतिसाधनो धर्ममार्गो नक्ष्यत्युत्सन्नो भविष्यति । हि यस्माल्लोक इतरे जनो ऋषभस्य सद्धर्मप्रवर्तकस्य यत्प्रमाणं यद्वाक्यमूलकमाचरणं तदेवागृहीष्यत् । यद्यदाचरति श्रेष्ठ इत्यादेः । अतस्त्वया ब्राह्मणानर्हणे कृते लोकोऽपि तथैव करिष्यति । ततश्च धर्ममार्गोच्छेदो भविष्यतीति भावः ।। २३ ।।

**तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः**
**क्षेमं जनाय निजशक्तिभिरुद्धतारेः ।**
**नैतावता त्र्यधिपतेर्बत विश्वभर्तु-**
**स्तेजःक्षतिस्त्ववनतस्य स ते विनोदः ।। २४ ।।**

**तात्पर्यम्– 'असुरा अप्रियाश्चापि नित्यानन्दान्न लोकवत् । निषेध्यवृद्धिविषयमप्रियं हि हरेर्मतमि'ति च । तस्मादनभीष्टमिव ।। २४ ।।**

**प्रकाशिका–** नश्यतु को दोष इत्यत आहुः ।। तत्तेनेति । तद्धर्ममार्गनाशनम् । अनभीष्टमिवाप्रियमिव । अत्र वस्तुतोऽभीष्टमेवेति प्रतीतिवारणायेवशब्दसूचितमर्थं दर्शयितुं प्रमाणं पठति ।। असुरा इति । चापि शब्दौ यद्यपि तथाऽपीत्यर्थौ । नित्यानन्दात् । हरेर्नित्यानन्दस्वरूपात् । न लोकवत् । अप्रिया इति शेषः । लोके यथा दुःखजनका अप्रिया इत्युच्यन्ते न तथा हरेरसुरा अप्रिया दुःखप्रसक्तेरेवाभावादिति भावः । तर्ह्यसुरेषु हर्यप्रियत्वं कीदृशमित्यत आह ।। निषेधेति । इदं मा भूदिति निषेध्यत्वेन निषेध्यबुद्धिविषयत्वमेवाप्रियं हर्यप्रियशब्दवाच्यं मतं संमतमित्यर्थः । इदानीमनभीष्टमिवेत्यत्रत्येवशब्दं व्याख्याति ।। तस्मादिति । यस्मात्प्रमाणे हर्यप्रियशब्दवाच्यमन्यदेवोक्तं तस्मादित्यर्थः । तथाच धर्ममार्गनाशनं वस्तुतो निषेधबुद्धिविषयरूपमप्रियं भवत्येव । तथाऽपि लोकवद्दुःखजनकरूपमप्रियं न भवतीति सूचनाय मूले इवशब्द इति भावः । मूले सत्त्वनिधेर्बलज्ञानपूर्णस्य सुखपूर्णस्येति वा । विधित्सोर्विधातुमिच्छोर्निजशक्तिभिः स्वाभाविकज्ञानबलरूपशक्तिमद्भिर्व्यासकपिलरामकृष्णाख्याभिरुद्धतारेर्विनाशितधर्मप्रतिपक्षस्य तेऽनभीष्टमिव दुःखजनकमिवानन्दपूर्णस्य तव दुःखाभावेऽपीदं मा भूदिति निषेधबुद्धिविषयं भवत्येवातस्तव ब्राह्मणसत्कारो युक्त एवेति भावः । नन्वेवंविधस्य तव नीचेषु विप्रेषु प्रणामादिर्मानभङ्गकर इत्यत आहुः ।। नैतावतेति । धर्मरक्षणप्रयोजनेनावनतस्य प्रणतस्य तेजःक्षतिर्मानभङ्गो न । कुतः । यतः स प्रणामादिस्ते विनोदः क्रीडारूपः । तुशब्दोऽवधारणे । विनोद एवेत्यन्वयः ।। २४ ।।

यं वानयोर्दममधीश भवान् विचष्टे
वृत्तिं च वा तदनु मन्महि निर्व्यलीकम् ।
अस्मासु वा य उचितो ध्रियतां स दण्डो
येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण ॥ २५ ॥

**प्रकाशिका–** शापाग्रहं परित्यज्य विज्ञापयन्ति ॥ यं वेति । भो अधीश अखण्डेश । भवान् अनयोर्यं दमं दण्डं अस्मत्कृतमन्यं वा विचष्टे उचिततया पश्यसि । वृत्तिं वाऽत्रैव स्थितिलक्षणां वा । यदि विचष्टे तत्सर्वं वयं निर्व्यलीकं यथा स्यात्तथाऽनुमन्महि अनुमन्यामहे । ये वयमनागसौ निरपराधौ त्वत्पार्षदौ किल्बिषेण शापेन युंक्ष्महि योजितवन्तस्तेष्वस्मासु वा य उचितो योग्यो दण्डः स ध्रियतां क्रियताम् ॥ २५ ॥

भगवानुवाच–
एतौ सुरेतरगतिं प्रतिपद्य सद्यः
संरम्भसम्भृतसमाध्यनुबद्धयोगौ ।
भूयः सकाशमुपयास्यत आशु यो वः
शापो मयैव विहितस्तदवैत विप्राः ॥ २६ ॥

**तात्पर्यम्–** अन्तर्भक्ता बहिःक्रुद्धा हिरण्याद्या हरिं प्रति । सर्वक्रुद्धाः शम्बराद्या अन्तः क्रोधवशास्तथे'ति च ॥ २६ ॥

**प्रकाशिका–** सर्वप्रेरकेण मयैव शापस्य कारितत्वान्न युष्माकमपराध इत्याश्वासयन्मोक्षं प्रार्थयते ॥ एताविति । सुरेतरगतिमसुरदेहम् । समुदायापेक्षयैकवचनम् । संरम्भो द्वेषोत्कर्षस्तेन सम्भृतः सम्पादितो यः समाधिश्चित्तैकाग्र्यतादिरूपस्तेनानुबद्धो दृढीकृतो योग उपायो ययोस्तौ तथा । उपयास्यत उपयातां यो वो युष्मत्कर्तृकशापः सोऽपि मयैव विहितः प्रेरित इति तच्छापदानमवैत जानीत । अत्र संरम्भसमाध्यनुबद्धयोगयोः कथमेकदैकत्रावस्थानमुच्यते तयोर्विरोधादित्याशङ्कायां समाधानं प्रमाणेनैवाह ॥ अन्तर्भक्ता इति । अन्तः स्वरूपमनसि । बहिर्बाह्ये जडमनसि । ऋद्धद्वेषिणः । आद्यशब्देन बल्यादीनां ग्रहणम् । सर्वक्रुद्धाः सर्वत्रान्तर्बहिश्च क्रुद्धा इत्यर्थः । क्रोधवशाः क्रोधवशानामानोऽसुरा अन्तः स्वरूपमनसि तथा क्रुद्धाः । बहिर्भक्ता इत्यपि ग्राह्यम् । तथा च भक्तिद्वेषाधिकरणयोर्मनसोरत्र भेदान्नविरोध इति भावः ॥ २६ ॥

**ब्रह्मोवाच–**

**अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ।**
**वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयम्भुवम् ॥ २७ ॥**

**भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ।**
**प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥**

**तात्पर्यम्– 'स्वरूपश्रीस्तथा भार्या द्वेधा श्रीस्तु हरेर्मते'ति च ॥ २८ ॥**

**प्रकाशिका–** अनुमान्य सम्यङ्ज्ञानयित्वा वैष्णवीं विष्णुसम्बन्धिनीं श्रियं शंसन्तः सन्तः । अत्र श्रीशब्देन लक्ष्मीग्रहणेऽसङ्गतमालोच्यान्यां तद्वाच्यां श्रियं प्रमाणेनैव दर्शयति ॥ स्वरूपश्रीरिति । सौन्दर्यमित्यर्थः । भार्या लक्ष्मीः । द्वेधेत्यतः पूर्वमितिशब्दोऽध्याहार्यः । हरेः हरिसंबन्धित्वेनोच्यमाना श्रीः अनेन वैष्णवीमित्येतदुक्तार्थम् । तुशब्दो भार्यापेक्षया स्वरूपश्रियो विशेषसूचकः । तथा च विष्णुसंबन्धिनीं स्वरूपश्रियं शंसन्त इति मूलं व्याख्येयमिति भावः ॥ २७,२८ ॥

**भगवाननुगावाह यातं मा भैष्टमस्तु शम् ।**
**ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥**

**प्रकाशिका–** मा भैष्टं भयं न कुरुत । नेच्छे नेच्छामि । यतस्तन्मे मतं संमतम् ॥ २९ ॥

**एतत् पुरैव निर्दिष्टं रमया क्रुद्धया यदा ।**
**तदापवारिता द्वारि विशन्ती मय्युपारते ॥ ३० ॥**

**प्रकाशिका–** कुतो मतमित्यतस्तत्र कारणान्तरमप्याह ॥ एतत्पुरैवेति । एतद्भवद्दण्डनम् । अपवारिता निवारिता उपारते योगनिद्रामुपागते सति ॥ ३० ॥

**मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ।**
**प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥**

**तात्पर्यम्– 'अन्तर्भक्ता बहिर्वैरा हिरण्याद्या हरेर्मताः । तत्र भक्त्याऽभवन्पूता द्वेष आवेशकान्गताः । ब्रह्मजा असुरा ये तु विष्णोः पार्षदतां गताः । कल्याद्याश्च हरेर्द्वेषमन्तः कृत्वा तमोगता' इति च ॥ तस्मात्संरम्भोऽल्पफलः कथ्यत एव । भक्तियोग एव ब्रह्महेलननिस्तारकः ॥ ३१ ॥ इति तृतीयतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥**

**प्रकाशिका–** संरम्भयोगेन द्वेषपूर्वकभक्तियोगेन । प्रत्येष्यतं प्रत्येष्यथः । निकाशं समीपम् । अत्र ब्रह्महेलननिस्तरणकारणत्व भक्तियोगवत्संरम्भस्यापि कथ्यत इति भाति अन्यथा द्वेषस्य फलान्तरा-वचनेनात्रोक्तासंभवादित्यतोऽत्र प्रमाणोदाहरणपूर्वकं तात्पर्यं दर्शयति ।। अन्तर्भक्ता इति । भक्त्या स्वरूपभूतभक्त्येव पूता ब्रह्महेलनं निस्तीर्य शुद्धा जाता इत्यर्थः । तर्हि बाह्यमनसि विद्यमाने द्वेषस्य वैफल्यमित्यत आह ।। द्वेष इति । आवेशकान् आविष्टकान् गतः । प्राप्तफलदानायेति शेषः । के ते आविष्टा इत्यत आह ।। ब्रह्मजा इति । तुशब्दः प्रसिद्धार्थः । पार्षदौ जयविजयौ प्रविष्टा बल्यादींश्च गता यत एवं बाह्यमनसि विद्यमानसंरंभ आवेशकान् गतो न भक्तेषु फलप्रदस्तस्माद्योग एव भक्तियोग एव ब्रह्महेलननिस्तारक इत्यन्वयः । नन्वेवमसुरावेशप्रयुक्त बाह्यमनोगतद्वेषेण भक्तानां फलाभावे मूले शुभफलसाधनतया तदुक्तिः कथमित्यत आह ।। तस्मादिति । संरंभो भक्तानामसुरावेशेन जायमानो द्वेषो यतोऽल्पफलोऽल्पकाले ज्ञानभक्त्यादिह्रासफलकोऽतोऽल्पत्वात्तदपेक्षया द्वेषस्यापि शुभफलहेतुत्वमेव कथ्यतेऽसुरजनमोहनार्थमेवेति भावः । कथ्यत एवेत्येवकारेण कथनस्य स्वार्थे तात्पर्यमिति सूचयति ।। ३१ ।।

**द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणम् ।**
**सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ।। ३२ ।।**

**तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः ।**
**हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ।। ३३ ।।**

**प्रकाशिका–** गीर्वाणा देवा ऋषभाः श्रेष्ठा ययोस्तौ दुस्तराद्ब्रह्मशापादित्यन्वयः । हरिलोकतो हरिलोक एव । विगतस्मयौ नष्टगर्वौ ।। ३२,३३ ।।

**तदा विकुण्ठधिषणात् तयोर्निपतमानयोः ।**
**हाहाकारो महानासीद् विमानाग्र्येषु पुत्रकाः ।। ३४ ।।**

**प्रकाशिका–** विमानाग्र्येषु । स्थितानामिति शेषः । पुत्रका देवाः ।। ३४ ।।

**तावेव ह्यधुना प्राप्तौ पार्षदावृषभौ हरेः ।**
**दितेर्जठरमाविष्टं काश्यपं तेज उल्बणम् ।। ३५ ।।**

**प्रकाशिका–** काश्यपं तेजोवीर्यं प्राप्तौ ।। ३५ ।।

**तयोरसुरयोरद्य तेजसा यमयोर्हि वः ।**
**आक्षिप्तं तेज एतर्हि भगवांस्तद् विधित्सति ॥ ३६ ॥**

**प्रकाशिका–** तेजसा प्रभावेनाक्षिप्तं तिरस्कृतं तेजः सूर्यादिकम् । एतर्हीदानीं तत्तस्य प्रतीकारं विधत्सति कर्तुमिच्छति ॥ ३६ ॥

**विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो**
**योगेश्वरैरपि दुरत्ययोगमार्गः ।**
**क्षेमं विधास्यति स नो भगवांस्त्र्यधीश-**
**स्त्रातास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥**

**इति श्रीमद्भागवते सप्तदशोऽध्यायः ॥**

**प्रकाशिका–** अधुनैव भवतैव कश्चिदुपायोऽत्र विचारणीय इत्यत आह ॥ विश्वस्येति । विश्वस्येत्यनेन तस्यैव प्रकृतेः कार्यकर्तृत्वं मुख्यमिति सूचयति । योगेश्वरैर्ब्रह्मादिभिर्दुरत्ययो दुर्ज्ञेयो योगमार्ग उपायप्रकारो यस्येत्यनेनोपायाभिज्ञत्वम् । क्षेमं प्राप्तरक्षां विधास्यतीत्यनेन नायमवसर इति सूचयति । उत्तरकालेऽपि करिष्यतीति कथं निश्चय इत्यत उक्तम् ॥ त्रातेति । त्राणशीलत्वात्करिष्यत्येवेति निश्चय इति भावः । हेत्वन्तरं चाह ॥ त्र्यधीश इति । त्रयाणां लोकानामीश्वरा इन्द्रादयस्तेषामपीश्वर इत्यर्थः । भवत्पालन एव बद्धदीक्ष इति यावत् । फलितमाह ॥ अस्मदीयेति । विमृशेनोपायविचारेण जायमानोऽर्थः कियानल्प एवेत्यर्थः ॥३७॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥३-१७॥

## अथ अष्टादशोऽध्यायः

**मैत्रेय उवाच–**

**निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः ।**
**ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥**

**प्रकाशिका–** आत्मभुवा ब्रह्मणा गीतं कथितम् ॥ १ ॥

**दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी ।**
**पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥**

**प्रकाशिका–** अपत्यपरिशङ्किनी अपत्ययोर्हरेर्नाशशङ्कावती । यमौ यमलौ ॥ २ ॥

**उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ।**
**दिवि भुव्यन्तरिक्षे च लोकस्य च भयावहाः ॥ ३ ॥**

**प्रकाशिका–** तत्र तदा निपेतुरुद्बभूवुः ॥ ३ ॥

**सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ।**
**सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥**

**प्रकाशिका–** सहाचलाः सपर्वता भुवः प्रदेशाः सोल्का उल्कापातसहिता अशनयोर्निर्घाताः केतवश्च । उदयाश्चक्रुरिति शेषः । आर्तिहेतवो दुःखसूचकाः ॥ ४ ॥

**ववौ वायुः सुदुस्पर्शः फट्कारारावबान् मुहुः ।**
**उन्मूलयन् नगपतीन् वात्यानीको रजोध्वजः ॥ ५ ॥**

**तात्पर्यम्– 'फट्कारश्चैव फूत्कारस्तथा किलकिलादयः । अनुकारशब्दा विज्ञेया ये चान्ये तादृशा मता' इत्यभिधानम् ॥ ५ ॥**

**प्रकाशिका–** फट्कारारावबानित्येतत् फट्कार इति शब्दवानिति प्रतीतिवारणाय प्रमाणेनैव व्याख्याति फट्कार इति । अनुकरणशब्दा एवेत्यन्वयः । विज्ञेयाः । वायुसंबन्धेनोक्ता इति शेषः । ये चान्ये सृगालादिसंबन्धित्वेनोक्ताः टङ्कारादयस्तेऽपि तादृशाः फट्कारादिशब्दसदृशा अनुकारशब्दा एवेत्यर्थः । अनेनाग्रेतनं टङ्कारस्वात्कार शब्दव्याख्यानमपि प्रमापितमिति ज्ञातव्यम् । मूले नगपतीन्महान्वृक्षान् वात्यानां चक्रवातानामनीकं समूहो यस्य स तथा । रज एव ध्वजो यस्य स तथा ॥ ५ ॥

**उल्लसत्तडिदम्भोदघटया नष्टभागणे ।**
**व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥**

**प्रकाशिका–** उल्लसंत्यो तटितो येषु ते तथा । उल्लसत्तडितस्ते च तेंऽभोदा मेघाश्च तेषां घटया समूहेन नष्टो भानां सूर्यादिप्रभाणां गणो यस्मिंस्तत्तथा । तस्मिन्पदं स्थानं न व्यादृश्यते स्म ॥ ६ ॥

**चुक्रोश विमना वार्धिरुदूर्मिक्षुभितोदरः ।**
**सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥**

**प्रकाशिका–** वार्धिः समुद्रो विमान इवोदयानैर्वापीकूपादिभिः सहिताः शुष्काणि पङ्कजानि यासु ॥ ७ ॥

**मुहुः परिधयोऽभूवन् सराह्वोः शशिसूर्ययोः ।**
**निर्घातरवनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥**

**प्रकाशिका–** परिधयः परिवेषाः सराह्वो राहुग्रस्तयोर्निर्घातरवा निर्मेघगर्जितानि तेषां निर्ह्रादाः प्रतिध्वनयो विवरेभ्यः पर्वगुहाभ्यः ॥ ८ ॥

**अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ।**
**सृगाला अपि टङ्कारैः प्रणेदुरशिवाः शिवाः ॥ ९ ॥**

**तात्पर्यम्– टङ्कारोऽप्यनुकारशब्दः । 'नाशस्तत्र सृगालानां शिवानां चान्यथास्वर' इत्याग्नेये ॥ ९ ॥**

**प्रकाशिका–** शिवा अपीत्यन्वयः । अत्र टङ्कारशब्दमप्रतीत्या व्याख्याति ॥ टङ्कारोऽपीति । न केवलं पूर्वोक्त फट्कारादिरेवेत्यर्थः । ननु शिवानामपि सृगालत्वात्कथं पुनरुक्तिरित्यत आह ॥ सृगाला इति । तत्र सृगालशिवयोर्मध्ये अतो न पुनरुक्तिरिति शेषः । कुत इत्यतोऽन्यत्रापि सहप्रयोगदर्शनादित्यभिप्रेत्य सृगालादीनामन्यथा स्वारस्यानिष्टसूचकत्वे समाख्यां दर्शयति ॥ नाश इति । जातिस्वरापेक्षयाऽन्यथा स्वरे टङ्कारादिरूपे नाशः । विज्ञेय इति शेषः । तथाच टङ्कारैः स्वजातिस्वरापेक्षयाऽन्यथाभूतटङ्काररूपानुकारशब्दैरिति मूलं व्याख्येयमिति भावः ॥ ९ ॥

**संगीतवद् रोदनवदुन्नमय्य शिरोधरान् ।**
**व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥**

**प्रकाशिका–** ग्रामसिंहाः श्वानः शिरोधराः कण्ठास्तानुन्नमय्योर्ध्वीकृत्य ॥ १० ॥

**खरोष्ट्राः कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ।**
**खात्काररभसा मत्ताः पर्यधावन् वरूथशः ॥ ११ ॥**

**तात्पर्यम्– खात्कारोऽप्यनुकारशब्दः ॥ ११ ॥**

**प्रकाशिका–** खराश्चोष्ट्राश्च खरोष्ट्राः । खात्कारेत्यस्याप्रतीत्याऽर्थमाह ॥ खात्कारोऽपीति । तथाच खात्काररूपानुकारशब्देन रभसो हर्षे वेगो वा येषां ते तथेति मूलार्थ सति भावः ॥ ११ ॥

**रुदन्तो रासभत्रस्ता नीडादुदपतन् खगाः ।**
**घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥**

**प्रकाशिका–** रासभत्रस्ता रासभध्वनित्रस्ता इत्यर्थः ॥ १२ ॥

**गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ।**
**व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनानिलम् ॥ १३ ॥**

**प्रकाशिका–** गावोऽत्रसन् भीता असृग्दोहाश्च बभूवुः । देवलिङ्गानि प्रतिमाः । व्यरुदन्प्रतिमानामश्रुपात आसीदित्यर्थः ॥ १३ ॥

**ग्रहान् पुण्यतमानन्ये भगणाश्चपि दीपिताः ।**
**अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥**

**प्रकाशिका–** पुण्यतमान् ग्रहान् बृहस्पत्यादीन् । भगणान् बहूनि नक्षत्राणि च । अन्ये क्रूरा ग्रहा मङ्गलादयोऽतिचेरुरतिक्रम्य जग्मुः । वक्रगत्या परावृत्य परस्परं युयुधुश्च ॥ १४ ॥

**दृष्ट्वान्यांश्च महोत्पातान् नतत्तत्त्वविदः प्रजाः ।**
**ब्रह्मपुत्रानृते भीताः मेनिरे विश्वसम्प्लवम् ॥ १५ ॥**

**प्रकाशिका–** तेषां दुर्निमित्तानां तत्त्वं निमित्तं विदन्तीति विदः । ब्रह्मपुत्रान्सनकादीन् । ऋते विना ॥ १५ ॥

**तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ ।**
**ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥**

**प्रकाशिका–** आदिदैत्यौ आदिदैत्याभ्यामाविष्टौ सहायबलेन पौरुषं पराक्रमः । अश्मसारेणाश्मसार इव दृढेन ॥ १६ ॥

**दिविस्पृशौ हेमकिरीटकोटिभि-**
**र्निरुद्धकाष्ठौ स्फुरदङ्गदैर्भुजैः ।**
**गां कम्पयन्तौ चरणैः पदे पदे**
**कट्या सुकाञ्च्यार्कमतीत्य तस्थतुः ॥ १७ ॥**

**प्रकाशिका**– कोटिभिरिति बहुवचनं किरीट्योश्चतुष्कोणत्वाभिप्रायेणेत्याहुः । वस्तुतस्तु जाताविदं बहुवचनम् । तेन कोटिभ्यामित्यर्थलाभः । काष्ठा दिशः ॥ १७ ॥

**प्रजापतिर्नाम तयोरकार्षीद्**
**यः प्राक् स्वदेहाद् यमयोरजायत ।**
**तं वै हिरण्यकशिपुं विदुः प्रजाः**
**यं तं हिरण्याक्षमसूत सा ततः ॥ १८ ॥**

**प्रकाशिका**– प्रजापतिः कश्यपो यः स्वदेहात्स्ववीर्यात्प्रागजायत । योनिपुष्पं प्राविशत् । तन्नामकरणानन्तरं हिरण्यकशिपुनामानं विदुः सा दितिर्यं वीर्यद्वारा पश्चात्स्वयोनिपुष्पं प्रविष्टमग्रतोऽसूत तं हिरण्याक्षनामानं विदुः । गर्भाधानसमये यो योनिपुष्पं प्रविष्टः स एव प्रथमं प्रसूयते । पूर्वं प्रविष्टः प्रश्चादिति हि स्थितिस्तदभिप्रायेण प्राक् स्वदेहादजायताग्रतः साऽसूतेत्युक्तमिति ज्ञातव्यम् ॥ १८ ॥

**चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ।**
**वशे सपालान् लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥**

**प्रकाशिका**– ब्रह्मवरेणाकुतोऽपि मृत्युः ॥ १९ ॥

**हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ।**
**गदापाणिर्दिवं यातो युयुत्सुर्मृगयन् रणम् ॥ २० ॥**

**प्रकाशिका**– रणं युद्धम् ॥ २० ॥

**तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम् ।**
**वैजयन्त्या स्रजा जुष्टमसंन्यस्तमहागदम् ॥ २१ ॥**

**प्रकाशिका**– पुष्पैश्चतुर्गुणैर्मालां वैजयन्तीं विदुर्बुधा इति वचनात्पुष्पैश्चतुर्गुणी कृता या वैजयन्ती ॥ २१ ॥

**मनोवीर्यमहोत्सिक्तमधृष्यमकुतोभयम् ।**
**भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥**

प्रकाशिका– मनसा धैर्येण वीर्यमदेन वोत्सिक्तमुद्रिक्तं निलिल्यिरे निलीनाः। तार्क्ष्यो गरुडः । ॥ २२ ॥

स वै तिरोहितान् दृष्ट्वा सहसा स्वेन दैत्यराट् ।
सेन्द्रान् देवगणान् क्षीबानपश्यद् व्यनदद् भृशम् ॥ २३ ॥

**प्रकाशिका–** सहसा बलेन ॥ २३ ॥

ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिस्वनः ।
विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥

**प्रकाशिका–** विजगाह विलोडयामास ॥ २४ ॥

तस्मिन् प्रविष्टे वरुणस्य सैनिकाः
यादोगणाः सन्नधियः ससाध्वसाः ।
अहन्यमाना अपि तस्य वर्चसा ।
प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥

**प्रकाशिका–** सन्नधियो नष्टबुद्धयः ससाध्वसा भयसहिताः प्रधर्षिता अभिभूताः सतः ॥ २५ ॥

स वर्षपूगानुदधौ महाबल-
श्चरन् महोर्मीः श्वसनेरिता मुहुः ।
गुर्व्याभिजघ्ने गदया विभावरी-
मासेदिवांस्तात पुरं प्रचेतसः ॥ २६ ॥

**प्रकाशिका–** हे तात विदुर । प्रचेतसो वरुणस्य विभावरीं विभावरीनामवतीं पुरीमासेदिवान्प्राप्तः ॥ २६ ॥

तत्रोपलभ्यासुरलोकपालको
यादोगणानामृषभं प्रचेतसम् ।
स्मयन् प्रलब्धुं प्रणिपत्य नीचव-
ज्जगाद मे देह्यधिराज सङ्गरम् ॥ २७ ॥

**प्रकाशिका–** प्रलब्धुमुपहसितुं स्मयन् गर्वयुक्तः सन् नीचवन्म्लेच्छवत्प्रणिपत्यैकेनैव हस्तेन नत्वा ॥ २७ ॥

त्वं लोकपालाधिपतिर्बृहच्छ्रवा
वीर्यावहो दुर्मदवीरमानिनाम् ।
विजित्य लोकेऽखिल दैत्यदानवान्
यद् राजसूयेन पुराऽयजत् प्रभो ॥ २८ ॥

**प्रकाशिका–** बृहच्छ्रवा व्याप्तकीर्तिर्दुष्टो मदो दुर्मदस्तेन वीरान् आत्मनो मन्यन्ते इति वीरमानिनस्तेषां वीर्यमावहत्यपहरतीति वीर्यावहः । राजसूययज्ञेन भवानयजत इति यद्यस्मात्तस्माद्वीर्यावह इत्यन्वयः ॥ २८ ॥

स एवमुत्सिक्तमदेन विद्विषा
दृढं प्रलब्धो भगवानपां पतिः ।
रोषं समुत्थं शमयन् स्वया धिया
व्यवोचदङ्गोपशमं गता वयम् ॥ २९ ॥

**प्रकाशिका–** हे अङ्ग । उपशमं युद्धादिकौतुकादुपरमम् ॥ २९ ॥

पश्यामि नान्यं पुरुषात् पुरातनाद्
यः संयुगे त्वां रणरङ्गकोविदम् ।
आवारयिष्यत्यसुरर्षभाहितं
मनस्विनो यं वृणुते भवादृशाः ॥ ३० ॥

**प्रकाशिका–** अहितं वैरिणम् । असुरर्षभाहितमिति पाठे एहि गच्छेति व्याख्येयम् ॥ ३० ॥

तं वीरमारादभिपद्य विस्मयः
शयिष्यसे वीरशये श्वभिर्वृत्तः ।
यस्त्वद्विधानामसतां प्रशान्तये
रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे अष्टादशोऽध्यायः ।

**तात्पर्यम्–** 'न देवानां प्रजापानां विजेता वरतो विना । बलेन विद्यया वापि न समस्तत्पतीन्विना । वरोऽपि तादृशो यावच्छरीरं नान्यदेहग' इति तत्त्वनिर्णये ॥ ३१ ॥ इति तृतीयतात्पर्ये अष्टादशोऽध्यायः ॥ १८ ॥

**प्रकाशिका–** आराच्छीघ्रं विस्मयो विगतगर्वो वीराः शेरतेऽस्मिन्निति वीरशयो रणांगणस्तस्मिन्। अत्र स्वर्गस्थानां देवानां वरुणस्य च हिरण्यात्पराभव उक्तः स कथं देवानां पार्षदापेक्षयोत्तमत्वात्तदैत्ययोश्चातो दुर्बलत्वादतोऽत्राभिप्रायं प्रमाणेनैवाह ॥ न देवानामिति । वरतो वरम् । प्रसङ्गादाह ॥ वरोऽपीति । तादृशः सर्वदेवजयप्रदो नान्यदेहगः । दैत्यविषयमेतत् । अतः सर्वैरजेयः स च कुंभकर्णः पुरातने जन्मनि धातुरेव वरादिति भारततात्पर्यनिर्णयविरोधो नेति ध्येयम् । तस्य पार्षदविषयत्वात् । तथाचात्र हिरण्याक्षस्य वरेणैव जय उक्तो न स्वाभाविकबलेनातो न विरोध इति भावः ॥ ३१ ॥ इति श्रीभागवतटिप्पण्यामष्टादशोऽध्यायः ॥ ३-१८ ॥

## अथ एकोनविंशोऽध्यायः ।

**मैत्रेय उवाच–**

**तदेवमाकर्ण्य जलेशभाषितं**
**महामनस्तद् विगणय्य दुर्मदः ।**
**हरेर्विदित्वा गतिमङ्ग नारदाद्**
**रसातलं संविविशे त्वरान्वितः ॥ १ ॥**

**प्रकाशिका–** प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यत इति यदुक्तं तद्विगणय्यागणयित्वा । अवज्ञायेति यावत् । यतो दुर्मदः । नारदाद्धरेः रसातलं प्रति गतिं गमनं विदित्वा श्रुत्वा ॥ १ ॥

**ददर्श तत्राविजितं धराधरं**
**प्रोन्नीयमानावनिमग्रदंष्ट्रया ।**
**मुष्णन्तमक्ष्णाम्बुरुहारुणश्रियं**
**जहास चाहो वनगोचरो मृगः ॥ २ ॥**

**प्रकाशिका–** धराधरमित्येतदेव विवृणोति ॥ अग्रदंष्ट्रयेति । दंष्ट्राग्रेण प्रकर्षेणोर्ध्वं नीयमानाऽवनिर्येन स तथा तम् । अम्बुरुहारुणश्रियं रक्तपद्मकान्तिं मुष्णन्तं चोरयन्तम् । तिरस्कुर्वन्तमिति यावत् । वनगोचरो वनभूचरो मृगो वराहः । अहो विचित्रम् । अयं कथं मम प्रतिवीरत्वेनोक्त इति जहासेत्यर्थः ॥ २ ॥

आहैनमेह्यज्ञ महीं विमुञ्च नो
रसौकसां विश्वसृजेयमर्पिता ।
न स्वस्ति यास्यस्यमुया मयेक्षितः
सुराधमासादितसूकराकृते ॥ ३ ॥

**प्रकाशिका–** रसौकसां रसातलवासिनां नोऽस्माकं विश्वसृजा ब्रह्मणाऽर्पिता दत्ता यतोऽमुया भूम्या इहेक्षतः सतः । हे सुराधम । यतस्त्वमस्मद्वंचनार्थं प्राप्तसूकराकृतिरित्यभिप्रेत्याह ॥ आसादितेति ॥ ३ ॥

त्वं नः सपत्नैरभयाय किं वृतो
यो मायया हंस्यसुरान् परोक्षजित् ।
त्वां योगमायाबलमल्पपौरुषं
संस्थाप्य मूढं प्रमृजे सुहृच्छुचः ॥ ४ ॥

**प्रकाशिका–** सपत्नैः शत्रुभिर्देवैरभयाय वृतः किं यस्त्वं मायया सूकरादिरूपधारणेनासुरान्हंसि । अप्रत्यक्षतया चौर्येणैव जयतीति परोक्षजिद्योगमायाबलं कपटोपायबलम् । अत एवाल्पपौरुषं त्वां संस्थाप्य हत्वा सुहृदां शुचः शोकान्प्रमृजे नाशयामि ॥ ४ ॥

त्वयि स्थिते गदया शीर्णशीर्ष-
ण्यस्मद्भुजच्युतया ये च तुभ्यम् ।
बलिं हरन्त्यृषयो ये च देवाः
स्वयं सर्वे न भविष्यन्त्यमूलाः ॥ ५ ॥

**प्रकाशिका–** शीर्णशीर्षणि ध्वस्तमस्तके त्वयि स्थिते संस्थिते । मृत इति यावत् । स्वयं स्वयमेव फलं विनैव भविष्यन्ति मृता भविष्यन्ति । अमूला मूलाश्रयरहिताः सन्तः ॥ ५ ॥

स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलभ्य भीताम् ।
तोदं मृषन् निरगादम्बुमध्याद् ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥

**प्रकाशिका–** स हरिररेर्दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रतां पृथ्वीं तोदं दुरुक्तिव्यथां मृषं सहमानः । निरगान्निर्गतः । सकरेणुर्हस्तिनीसहितः ॥ ६ ॥

तं निःसरन्तं सलिलादनुद्रुतो
हिरण्यकेशो द्विरदं यथा झषः ।
करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्
गतह्रियां किं न्वसतां विगर्हितम् ॥ ७ ॥

**प्रकाशिका–** हिरण्यकेशो हिरण्याक्षो द्विरदं गजं गतह्रियां गतलज्जानामसतां विगर्हितं निन्दितं किं नु किमपि निन्दितमपि तेषामनिन्दितमेवेत्यर्थः । प्रकृते च युद्धे तव पलायनं निन्दितमिति भावः ॥ ७ ॥

स गामुदस्तात् सलिलस्य गोचरे
विन्यस्य तस्यामदधात् स्वसत्त्वम् ।
अभिष्टुतो विश्वसृजां प्रसूनै-
रापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥

**प्रकाशिका–** स हरिर्गां भूमिं सलिलस्य जलस्योदस्तादुपरि गोचरे भुवो वासयोग्यस्थले विन्यस्य संस्थाप्य स्वसत्त्वं स्वबलं जलमध्येऽचाञ्चल्येनावस्थानायादधात्स्थापितवान् । विबुधैरभिष्टुतः पश्यतः सतः ॥ ८ ॥

परानुषक्तं तपनीयोपकल्प-
महागदं काञ्चनचित्रिताङ्गम् ।
मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः
प्रचण्डमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥

**प्रकाशिका–** परानुषक्तं वैरिणमनुयान्तं तपनीयोपकल्पमहागदं सुवर्णाभरणभूषिता महती गदा यस्य तस्य तथा तम् । काञ्चनैराभरणैश्चित्रान्यलङ्कृतान्यङ्गान्यवयवा यस्य स तथा तम् । प्रतुदन्तं व्यथयन्तम् । प्रहसन्नित्यनेन कोपाच्छादनं कृत्वेति लभ्यते ॥ ९ ॥

भगवानुवाच–

सत्यं वयं भो वनगोचरा मृगा
युष्मद्विधान् मृगये ग्रामसिंहान् ।

न मृत्युपाशैः प्रतियुक्तस्य वीराः
विकत्थनं तव गृह्णन्त्यभद्र ॥ १० ॥

**प्रकाशिका–** ग्रामसिंहान् शुनः । प्रतियुक्तस्य बद्धस्य विकत्थनमसंबद्धभाषणम् । अश्लाघ्यं वा ॥ १० ॥

एते वयं न्यासहरा रसौकसां
गतह्रियो गदया द्राविताऽस्ते ।
तिष्ठामहेऽथापि कथञ्चिदाजौ
स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥

**प्रकाशिका–** न्यासहरा निक्षेपहारिणो द्राविताः पलायनं कारिताः । अथाऽपि तिष्ठामहे । यतो गतह्रियः ॥ ११ ॥

त्वं यद् रथानां किल यूथपाधिपो
घटस्व नोऽस्वस्तय आश्वदुद्रुहः ।
संस्थाप्य चास्मान् प्रमृजाश्रु स्वकानां
यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥ १२ ॥

**प्रकाशिका–** रथानामिति रथिनो लक्ष्यन्ते । यस्त्वं नोऽस्मान् अदुद्रुहो दुरुक्त्यादिना द्रोहमकार्षीः स त्वं यद्यस्माद्रथिनां यूथाधिपः किल । तस्मान्नोऽस्माकमस्वस्तयेऽमङ्गलायाशु घटस्व यतस्व । संस्थाप्य हत्वाऽतिपिपर्ति पूरयति पालयति वा ॥ १२ ॥

सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ।
आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥

**प्रकाशिका–** अधिक्षिप्तः सत्यं वयं भो इति श्लोकेनोक्तरीत्या । प्रलब्ध उपहसितश्चैते वयमिति द्वाभ्यामुक्तप्रकारेण क्रीड्यमानोऽनिष्टक्रीडां कार्यमाणः । पीड्यमान इति वा पाठः ॥ १३ ॥

विसृजन्नहिवच्छ्वासं मन्युप्रचलितेन्द्रियः ।
आसाद्य तरसा दैत्यो गदयाभ्यहनद्धरिम् ॥ १४ ॥

प्रकाशिका– मन्युना प्रचलितानि क्षोभितानीन्द्रियाणि यस्य ॥ १४ ॥

भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ।
अवञ्चयत् तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥

प्रकाशिका– अन्तकं मृत्युम् ॥ १५ ॥

पुनर्गदां स्वामादाय भ्रामयन्तमभीक्ष्णशः ।
अभ्यधावद्धरिः क्रुद्धः संरम्भाद् दष्टदच्छदः ॥ १६ ॥

प्रकाशिका– दष्टोदच्छदोऽधरोष्ठो येन स तथा ॥ १६ ॥

ततः स्वगदयारातिं दक्षिणांसभुवि प्रभुः ।
आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत् ॥ १७ ॥

प्रकाशिका– अंसभुवि अंसप्रदेशे । भो सौम्य विदुर । तां गदामप्राप्तमेवाहनत् । कोविदो गदायुद्धमार्गनिपुणः ॥ १७ ॥

एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ।
जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥

प्रकाशिका– हर्यक्षो हिरण्याक्षः । जिगीषयैवेत्यन्वयः ॥ १८ ॥

तयोः स्पृधोः स्तिग्धगदाहताङ्गयोः
क्षतस्रवाघ्राणविवृद्धयुद्धयोः ।
विचित्रमार्गांश्चरतोर्जिगीषया
व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥

प्रकाशिका– स्पृधोः स्पर्धमानयोः क्षतस्रवस्य रक्तस्याघ्राणेन विवृद्धं युद्धं ययोस्तौ तयोरिलायां निमित्तभूतायां शुष्मिणोर्वीर्यवतोर्वृषभयोरिव मृधो युद्धं व्यभाद्विशेषेण प्रकाशितम् । दार्ष्टान्तिक इला भूमिः ॥ १९ ॥

दैत्यस्य यज्ञावयवस्य मायया
गृहीतवाराहतनोर्महात्मनः ।

**कौरव्य मह्यां द्विषतोर्विमर्दनं**
**दिदृक्षुरागाद् ऋषिभिर्वृतः स्वराट् ॥ २० ॥**

**प्रकाशिका–** यज्ञास्तत्साधनानि चावयवेषु यस्य स तता मायया स्वेच्छया मह्यां निमित्तभूतायां द्विषतोः । स्वराडूर्ध्वलोकपालो ब्रह्मा ॥ २० ॥

**आसन्नशौण्डीरमपेतसाध्वसं**
**कृतप्रतीकारमहार्यविक्रमम् ।**
**विलक्ष्य दैत्यं भगवान् सहस्रणी-**
**र्जगाद नारायणमादिसूकरम् ॥ २१ ॥**

**तात्पर्यम्– अनेककल्पजननेतृत्वात्सहस्रणीः ॥ 'अक्षतः क्षतवद्विष्णुरसमः समवत्तथा । अजितो जितवच्चैव ज्ञोऽज्ञवच्च प्रकाशयेत् । सर्वरूपेष्वनन्तोऽपि ब्रह्माद्याश्चैव तन्मतेः । अनुसारितया ब्रूयुः कुर्युश्च स न दुःखभागि'ति ब्रह्माण्डे ॥ २१ ॥**

**प्रकाशिका–** आसन्नशौण्डीरमुपात्तं युद्धकौशलं येन । अपेतसाध्वसं गतभयम् । अहार्योऽपहर्तुमशक्यो विक्रमो यस्य स तथा । तं विलक्ष्य दृष्ट्वा भगवान् ब्रह्मा । सहस्रणीशब्दाप्रतीत्या व्याख्याति ॥ अनेकेति । अत्र कल्पशब्दो दैनन्दिनपरः । अत्र क्षतस्रवेत्युक्त्या भगवतोऽपि क्षतशुष्मिणोरिवेत्युक्त्या वैरिसमत्वमुत्तराध्याये सा हता तेन गदया विगता भगवत्करादिना पराजितत्त्वं जगाद नारायणमित्यादिना भगवतश्चतुर्मुखोपदेशोक्त्याऽज्ञत्वं च प्रतीयतेऽतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ अक्षत इति । क्षतवत्क्षतवानिवाज्ञ इवेत्यन्वयः । अनुसारतयैवेत्यन्वयः । असुरजनमोहनार्थमिति भावः । तथा च मूले जगाद नारायणमित्यादिकं हर्यभिप्रायानुसारेणासुरजनमोहनायैवेत्युक्तं क्षतादिकं च तदर्थमेव प्रदर्शितमिति भावः ॥ २१ ॥

**ब्रह्मोवाच–**
**एष ते देव देवानामङ्घ्रिमूलमुपेयुषाम् ।**
**विप्राणां सौरभेयीणां भूतानामप्यनागसाम् ॥ २२ ॥**

**प्रकाशिका–** दैत्यस्य वध्यत्वप्रयोजकान्दोषानाहुः ॥ एष इति । हे देव । द्रव्यदाराद्यपहारेणागस्कृद्वधादिना भयकृदग्निहोत्रादिनाशेन दुष्कृत् । तत्र निमित्तमाहुः ॥ अस्मल्लब्धेति । अन्वेषन् । प्रतिभटमिति शेषः । कण्टकः कण्टकवद्दुःखप्रदः ॥ २२ ॥

आगस्कृद् भयकृद् दुष्कृदस्मल्लब्धवरोऽसुरः ।
अन्वेषयन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥

मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम् ।
आक्रीड बालवद् देव यदाशीविषमुत्थितम् ॥ २४ ॥

**प्रकाशिका–** मा आक्रीड । यद्यस्मादाशीविषमित्यत्र विषशब्दस्यावृत्तिः सर्पविषमुत्थितमुज्व-लितं तस्मात् ॥ २३,२४ ॥

न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ।
स्वां देवमायामास्थाय तावज्जह्येनमच्युत ॥ २५ ॥

एषा घोरतमा सन्ध्या लोकशम्बट्करी प्रभो ।
उपसर्पति सर्वात्मन् सुराणां जयमावह ॥ २६ ॥

**तात्पर्यम्–** 'आदरं तु मुखं विन्द्याच्छम्बट्कारं तु भक्षणमि'त्यभिधानम् ॥ २६ ॥

**प्रकाशिका–** स्वामासुरीम् । हे देव मायां महिमानम् । आसुरीं वेलामेवाह ॥ एषेति । अत्र लोक शंबट्करीत्यस्यार्थाप्रतीतेस्तज्ज्ञापनायाभिधानं पठति ॥ आदरमिति । भक्षणं नाशनं विद्यादित्यन्वयः। तथा च नाशकरीति तदर्थ इति भावः ॥ २५,२६ ॥

अधुनैवाभिजिन्नाम योगो मौहूर्तिकोऽभ्यगात् ।
शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥

दिष्ट्या त्वा विहितं मृत्युमयमासादितः स्वयम् ।
विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥ २८ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे एकोनविंशोऽध्यायः ।

**तात्पर्यम्–** 'मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च । श्रवणस्यापि पूर्वार्धो विषुवं चाभि-जित्स्मृतमि'ति च ॥ २७ ॥ इति तृतीयतात्पर्ये एकोनविंशोऽध्यायः ॥ १९ ॥

**प्रकाशिका–** अयमेव वधे समीचीनः काल इत्याह ॥ अधुनैवेति । अस्मिन्नेव समये मौहूर्तिकः सुमुहूर्तसंबन्धी योगोऽभिजिन्नामकालविशेषोऽभ्यगात्प्राप्तः । अतः सुहृदां नः शिवाय दुस्तरमेनं निस्तर जहि । अत्राभिजिच्छब्दार्थं प्रमाणेनैव दर्शयति ॥ मध्यान्हस्त्विति । आषाढोत्तर

उत्तराषाढोत्तरार्धः । एवशब्दोऽत्रोक्त एव कालोऽभिजिन्नामा नान्य इत्यर्थकः । विषुवं विषुवकालः । दिवारात्र्योः साम्यवान्काल इति यावत् । तथाचात्र मध्यान्ह एवाभिजिच्छब्देन विवक्षित इति भावः ॥ २७,२८ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥ ३-१९ ॥

## अथ विंशोऽध्यायः ।

**मैत्रेय उवाच–**

**अवधार्य विरिञ्चस्य निर्व्यलीकमृतं वचः ।**
**प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥**

**प्रकाशिका–** निर्व्यलीकं निष्कपटाभिप्रायम् । ऋतं सत्यार्थः । कालनियामकस्यापि मम मुहूर्तबलमुपदिशतीति प्रहस्य । अपाङ्गेन कटाक्षेण ॥ १ ॥

**ततः सपत्नं मुखतश्चरन्तमकुतोभयम् ।**
**जघानोत्पत्य गदया हनावसुरमक्षतः ॥ २ ॥**

**प्रकाशिका–** मुखतः पुरतो हनौ कपोलस्याधोभागे ह्रस्वेन वराहेणोन्नतस्यासुरस्य हनौ कथं हननं कृतमित्यत उक्त ॥ उत्पत्येति ॥ २ ॥

**सा हता तेन गदया विहिता भगवत्करात् ।**
**विघूर्णिता भृशं रेजे तदद्भुतमिवाभवत् ॥ ३ ॥**

**प्रकाशिका–** विघूर्णिता विशेषेण भ्रमेण युता ॥ ३ ॥

**स तदा लब्धवीर्योऽपि न बबाधे निरायुधम् ।**
**मानयन् स मृधे धर्मं विश्वक्सेनं प्रकोपयन् ॥ ४ ॥**

**गदायामपविद्धायां हाहाकारे च निर्गते ।**
**मानयामास तं धर्मं सुनाभं चास्मरद् विभुः ॥ ५ ॥**

**तात्पर्यम्–** 'धर्मः सत्य इति प्रोक्तो धर्मश्चापि हरेः प्रिय' इति ब्राह्मे ॥ 'यथेच्छयैव सर्वं तु मनसा देहतोऽपि वा । कर्तुं शक्तोऽपि शस्त्राद्या लीलैवानन्तशक्तित' इति वाराहे ॥ ५ ॥ इति तृतीयतात्पर्ये विंशोऽध्यायः ॥ २० ॥

**प्रकाशिका–** तद्गदापतनं तेन तस्य लब्धवीर्यो लब्धावसरो मृधे धर्मं निरायुधः सायुधेतरेण न प्रवर्तव्यमिति धर्मं मानयन् । स्थित इति शेषः । तेन वाक्यभेदात्स इत्यस्यापौनरुक्त्यम् । स चासौ धर्मश्चेति तद्धर्मस्तम् । मानयामासेदं साध्विति पूजयामास । ननु पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरेः प्रिय इति वचनात्कथं चाभक्तकृतस्य धर्मत्वमत्रोक्तमित्यतोऽत्र तात्पर्यं प्रमाणेनैव दर्शयति ॥ धर्म इति । सत्यं साधु विध्यनुसारितोक्तः । ज्ञानिभिरिति शेषः । असाध्विति प्रोक्तोऽपि यो हरेः प्रियः सोऽपि धर्म इत्यर्थः ॥ तथा च नाभक्तकृतमपि प्रकृतं निरायुधेऽप्रहरणं हर्यप्रियमपि धर्म इत्युच्यते प्रेक्षावद्भिः । हरिणा च युद्धमर्यादासंरक्षणार्थं साध्विति प्रोक्तत्वात् । अत एव मानयामासेत्युक्तम् । न तु मम प्रियमिति भावः । सुनाभं सुदर्शनम् । अत्र सुनाभमस्मरदित्युक्त्या हरेरायुधाभावे वैरिहनने त्वसामर्थ्यं प्रतीयतेऽतोऽत्र तात्पर्यं प्रमाणेनैवाह ॥ यथेच्छयैवेति । तुशब्दोऽवधारणे । मनसैव देहत एवेति संबन्धः । शस्त्रशब्देन तदादानं लक्ष्यते । तथाचानन्तशक्तितः स्वेच्छयैव मनसैव देहत एव वा कर्तुं शक्तो यो हरिस्तस्यैषा शस्त्रादानाद्या लीलैवेत्यर्थः । तथा च लीलैवास्मरदिति मूलार्थ इति भावः ॥ ५ ॥

**तं व्यग्रचक्रं दितिपुत्राधमेन**
**स्वपार्षदमुख्येन विषज्जमानम् ।**
**चित्रा वाचस्तद्विदां खेचराणां**
**तत्र स्मासन् स्वस्ति तेऽमुं जहीति ॥ ६ ॥**

**प्रकाशिका–** व्यग्रं चञ्चलम् । भ्रमदिति यावत् । चक्रं यस्य तं विषज्जमानं विशेषेण सङ्गं प्राप्नुवन्तम् । तद्विदां तत्प्रभावज्ञानाम् ॥ ६ ॥

**स तन्निशम्यात्तरथाङ्गमग्रतो**
**व्यवस्थितं पद्मपलाशलोचनम् ।**
**विलोक्य चामर्षपरिप्लुतेन्द्रियो**
**रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥**

**प्रकाशिका–** स हिरण्याक्षस्तत्खेचरणां वचनम् । परिप्लुतानि क्षुभितानीन्द्रियाणि यस्य । स्वदन्तच्छदं स्वाधरोष्ठमादशद्दष्टवान् ॥ ७ ॥

**करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव ।**
**अभिद्रुत्य स्वगदया हतोऽसीत्यहनद्धरिम् ॥ ८ ॥**

**प्रकाशिका–** सञ्चक्षाणः पश्यन्हतोऽसीत्युक्त्वा ॥ ८ ॥

**पदा सव्येन तां साधो भगवान् यज्ञसूकरः ।**
**लीलया मिषतः शत्रोः प्राहरद् वातरंहसा ॥ ९ ॥**

**प्रकाशिका–** शत्रोस्तां गदां वातरंहसा वायुवेगेन पदा प्राहरदित्यन्वयः ॥ ९ ॥

**आह चायुधमादत्स्व घटस्व त्वं जिगीषसि ।**
**इत्युक्तः स तया भूयस्ताडयन् व्यनदद् भृशम् ॥ १० ॥**

**प्रकाशिका–** घटस्वोद्यमं कुरु । यतस्त्वं जिगीषसि जेतुमिच्छसि ॥ १० ॥

**तां स आपततीं वीक्ष्य भगवान् समवस्थितः ।**
**जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥**

**स्वपौरुषे प्रतिहते हतमानो महासुरः ।**
**नैच्छद् गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥**

**जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ।**
**यज्ञाय धृतरूपाय विप्रायाभिचरन् यथा ॥ १३ ॥**

**प्रकाशिका–** हतमानो नष्टगर्वः । यज्ञाय विष्णवे । अकार्यकरत्वे दृष्टान्तो विप्राय विप्रमुद्दिश्याभिचरन् । कृत्यां प्रयुंजानः ॥ १३ ॥

**तदौजसा दैत्यमहाभटार्पितं**
**चकासदन्तः ख उदीर्णदीधिति ।**
**चक्रेण चिच्छेद निशातनेमिना**
**हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥**

**प्रकाशिका–** खेंऽत आकाशमध्ये । निशातनेमिना शितधारेण । हरिरिन्द्रस्तार्क्ष्यस्य गरुडस्य पतत्रं पक्षम् । ननु तत्र गरुडस्येंद्रापेक्षयाऽतिसमर्थत्वात्कथं तत्पत्रच्छेदनमिन्द्रेण कृतमित्यत उक्तम् ॥ उज्झितमिति । गरुडेन स्वयमेव त्यक्तमित्यर्थः । देवान्विजित्य स्वमात्रेऽमृतं नयता गरुडेन दधीचेर्महामुनेरस्थिभिर्निर्मितस्य वज्रस्य मोघत्वे कृते मुनेरवज्ञानिमित्तकोपभयाद्वज्रस्यामोघत्वसंपादनाय स्वयमेव त्यक्तं पतत्रं पुनरिन्द्रोऽच्छिनदिति भावः ॥ १४ ॥

वृक्णे च शूले बहुधारिणा हरेः
प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ।
प्रवृद्धरोषः सकठोरमुष्टिना
नदन् प्रहृत्यान्तरधीयतासुरः ॥ १५ ॥

प्रकाशिका– अराः सन्त्यस्येति अरि चक्रं तेन वृक्णे छिन्ने प्रत्येत्याभिमुखमागत्य विभूतिर्लक्ष्मीरस्यास्तीति विभूतिमत् ॥ १५ ॥

तेनेत्थमाहते क्षत्तर्भगवानादिसूकरः ।
नाकम्पत मनाग् वापि स्रजाहत इव द्विपः ॥ १६ ॥

प्रकाशिका– मनागीषदपि कार्त्स्न्ये । द्वाभ्यां पिबतीति द्विपो गजः ॥ १६ ॥

अथोरुधाऽसृजन्मायां योगमायेश्वरे हरौ ।
यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥

प्रकाशिका– योगमायेश्वरे योगसामर्थ्यवतामीश्वरे । अनेनासुर्या माया हरावकिञ्चित्करा इति सूचयति । अस्य विश्वस्योपसंयमं प्रलयम् ॥ १७ ॥

प्रववुर्वायवश्चण्डास्तमः पांसवमीरयन् ।
दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥

प्रकाशिका– पांसवं धूलिमयम् । ईरयन्प्रेरितवन्तः क्षेपणैः पाषाणक्षेपणयन्त्रैः प्रहिता इव प्रेरिता इव दिग्भ्यो ग्रावाणः शिलाः ॥ १८ ॥

द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः ।
वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥

प्रकाशिका– द्यौः व्योमाभ्रौघैर्मेघसमूहैर्विद्युतस्तटितः स्तनयित्नवो गर्जनानि तैः सहितैः ॥१९॥

गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ ।
दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥

प्रकाशिका– दिग्वाससो नग्नाः ॥ २० ॥

**बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः ।**
**आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥**

**प्रकाशिका–** हिंस्रा हिंसाविषयाः । छिन्धि भिन्धीत्येवंरूपा अतिवैशसा अतिक्रूराः । अश्रूयन्तेति शेषः ॥ २१ ॥

**प्रादुष्कृतानां मायानामासुरीणां विनाशनम् ।**
**सुदर्शनास्त्रं भगवान् प्रायुङ्क्त च ततस्त्रिपात् ॥ २२ ॥**

**प्रकाशिका–** विनाशं विनाशकारणं त्रिपादमृतं क्षेममभयमिति स्वरूपभूतांशत्रयवान् ॥ २२ ॥

**तदा दितेः समभवत् सहसा हृदि वेपथुः ।**
**स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥**

**प्रकाशिका–** भर्तुरादेशं त्वत्पुत्रो भगवान्हनिष्यतीत्येवंभूतम् ॥ २३ ॥

**व्युदस्तासु स्वमायासु भूयश्चाव्रज्य केशवम् ।**
**उपोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥**

**प्रकाशिका–** उपोपात्यन्तसमीपे वर्तमानममुं भगवन्तं गूहमानः स्वबाह्वन्तर्गतं कुर्वाणः स्वहस्तबन्धाद्बहिरवस्थितम् ॥ २४ ॥

**तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः ।**
**करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥**

**प्रकाशिका–** अहन् जघान । त्वाष्ट्रं त्वष्टुः पुत्रं वृत्रं मरुत्पतिरिन्द्रः ॥ २५ ॥

**समाहतो विश्वसृजा ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ।**
**विकीर्णबाह्वङ्घ्रिशिरोधरोऽपतद् यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥**

**प्रकाशिका–** विश्वसृजा हरिणाऽवज्ञया करताडनमात्रेण परितो भ्रमद्गात्रं शरीरं यस्य । उदस्ते बहिर्निर्गते लोचने यस्य । विशीर्णा बाह्वादयोयस्य । नगेन्द्रो वृक्षो लुलित उन्मूलितो नभस्वता वायुना ॥ २६ ॥

क्षितौ शयानं तमकुण्ठवर्चसं
करालदंष्ट्रं परिदष्टदच्छदम् ।
अजादयो वीक्ष्य शशंसुरागता
अहो इमां को नु लभेत संस्थितिम् ॥ २७ ॥

प्रकाशिका– संस्थितिं मरणम् ॥ २७ ॥

यं योगिनो योगसमाधिना हरे-
ध्यायन्ति लिङ्गादसतो मुमुक्षवः ।
तस्यैष दैत्यऋषभः पदा हतो
मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥

प्रकाशिका– असतोऽमङ्गलाल्लिङ्गात्सूक्ष्मदेहाद्वराहस्य पूर्वपादयोरेव करत्वात्करेणाहन्नित्युक्त्वेऽपि पदा हत इत्येतद्युज्यत इति ध्येयम् ॥ २८ ॥

एतौ हि पार्षदावस्य शापाद् यातावसद्गतिम् ।
पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मनि ॥ २९ ॥

प्रकाशिका– असद्गतिमसुराविष्टदेहम् । समुदायाभिप्रायमेकवचनम् । कतिपयैस्त्रिभिर्जन्मभिः शापफलम् । भुक्त्वेति शेषः । स्थानं वैकुण्ठं पुनः प्रपत्स्येते । हेति प्रमाणप्रसिद्धिं सूचयति ॥२९॥

नमो नमस्तेऽखिलयज्ञतन्तवे
स्थितौ गृहीतामलसत्त्वमूर्तये ।
दिष्ट्या हतोऽयं जगतामरुन्तुद-
स्त्वत्पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥

प्रकाशिका– अखिलयज्ञानां तन्तुर्विस्तारो यस्मात्स्थितौ स्थित्यर्थं सत्त्वं ज्ञानबलसमाहारस्तदात्मकमूर्तये । अरुन्तुदो मर्मभेत्ता । निर्वृता आनन्दभरिताः । अभूमेति शेषः ॥ ३० ॥

मैत्रेय उवाच–

एवं हिरण्याक्षमसह्यविक्रमं
संसादयित्वा हरिरादिसूकरः ।

**प्रकाशिका–** स्वभावात्मा स्वः स्वतन्त्रो भावो यस्य स स्वभावो हरिस्तस्मिन्नात्मा मनो यस्य स तथा ॥ १२ ॥

**कर्दम उवाच–**

**जुष्टं बताद्याखिलसत्त्वराशेः संसिद्धमक्ष्णोस्तव दर्शनान्नः ।**
**यद् दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥**

**प्रकाशिका–** हे ईड्य सर्ववेदस्तुत्य । अखिलसत्त्वराशेर्बलज्ञानसमुद्रस्य तवाद्य दर्शनान्नोऽस्माकमक्ष्णोर्जुष्टं त्वत्प्रतिमादिदर्शनरूपं सेवनं तदिदानीं संसिद्धम् । बत आश्चर्यम् । कथमाश्चर्यमित्यत आह ॥ यदिति । रूढयोगा निरन्तरध्यानादिमन्तो योगिनो भक्तिपूर्वका एवमादिवेसाधनवन्तः सद्भिर्वेदाद्यधिकारोपेतैर्जन्मभिर्यत्तव दर्शनमाशासते तस्माद्दर्शनादित्यन्वयः । महता कालेन प्रयतमानानां योगिनां यद्भवति दर्शनं तद्दर्शनं तदल्पेनैव कालेनास्माकं जातमत आर्श्चमिदमिति भावः ॥ १३ ॥

**ये मायया ते हतचेतसस्त्वत्पादारविन्दं भवसिन्धुपोतम् ।**
**उपासते कामलवाय तेषां रासीश कामान् निरयेऽपि ये स्युः ॥ १४ ॥**

**प्रकाशिका–** मोक्षप्रदोऽहं कथं स्त्रीकामनया त्वया सेवित इत्याशङ्कायाम् सत्यम् त्वं मुमुक्षूणां मोक्षप्रद इतरपुरुषार्थकामनानां तत्प्रदोऽपि भवसि किन्तु ते निन्द्या इत्याह ॥ ये माययेति । ये निरयेऽपि स्युस्तेषां कामानां लवाय भवसिन्धुपोतं संसारसमुद्रस्योत्तरणे तरीभूतम् । मोक्षसाधनमिति यावत् । ये त्वत्पादारविन्दमुपासते ते मायया बन्धकशक्त्या हतचेतसो विनष्टबुद्धयः । त्वं तु तेषां तानपि कामान् रासि ददासि ॥ १४ ॥

**तथा स चाहं परिवोढुकामः समानशीलां गृहमेधिधेनुम् ।**
**उपेयिवान् मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥**

**प्रकाशिका–** अत इदानीमहमपि तथाविधोऽस्मीत्याह ॥ तथेति । ते यथा कामलवा यत्त्वत्पादारविन्दमुपासते तथेत्यर्थः । स चाहं निष्कामनया भजन्नेवाहं गृहमेधो गृहाश्रमस्तत्र धेनुमिव त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्दुराशयो दुरशोभने विषये आशयो यस्य स तथा । दुरशोभनदुःखयोरित्यभिधानात् । कामदुघाङ्घ्रिर्यस्य कल्पतरुवदभीष्टसमस्तप्रदस्य वाऽशेषमूलमशेषपुरुषार्थकारणं मूलं पादमूलमुपेयिवाननुगतोऽस्मि ॥ १५ ॥

प्रजापतेस्ते वचसाऽधीश तन्त्या
लोकः किलायं कामहेतोर्निबद्धः ।
अहं च लोकानुगतो वहामि
बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥

**प्रकाशिका–** ननु निष्कामनया भजतस्तव कुत एवं कामनया भजने बुद्धिरित्यत आह ॥ प्रजापतेरिति । हे अधीश । प्रजापतेर्ब्रह्मान्तर्यामिणस्तव वचसा गृहाश्रमं प्राप्य प्रजाः सृजतः । तत्र मामर्चतेत्येवं वचनरूपया तंत्याऽयं लोको मरीच्यादिऋषिलोकः कामहेतोस्त्वदुक्तविषयसंपादनार्थं नितरां बद्धस्त्वदाज्ञाया अनुल्लङ्घनीयत्वात् । अहं च तल्लोकानुगतस्तद्वदेव तदाज्ञया बद्धो यतोऽतः । हे शुक्ल परमशुद्ध । अनिमिषाय सकलपदार्थनिरीक्षकाय कालनाम्ने तुभ्यं बलिं पूजां वहामि प्रजाश्च सृक्ष्य इति चार्थः । किलेत्यनेनैवं कामनादिकमाधिकारिकत्वात्तेषां न निषिद्धमिति सूचयति । अनिमिषायेत्यनेन विध्यतिक्रमेण कर्मकरणे भगवांस्तेषां भयप्रद इति सूचितम् ॥ १६ ॥

लोकांश्च लोकानुगतानसूंश्च
हित्वा श्रितास्ते चरणातपत्रम् ।
परस्परं त्वद्गुणवादसीधु-
पीयूषनिर्यापितदेहधर्माः ॥ १७ ॥

**प्रकाशिका–** कालनामकोऽयमनिमेषः केषां सर्वथा भयप्रदो न भवतीत्यपेक्षायामाह लोकांश्चेति । लोकानुक्तरूपदेहान्वा लोकानुगतान्पुत्रादीनसून् जडेन्द्रियाणि च हित्वा ते तव चरणरूपमातपत्रं श्रितास्त्वत्सामीप्यादिलक्षणां मुक्तिं प्राप्ताः । त्वद्गुणवाद एव सीधु पीयूषं सिन्धुरमृतसमुद्रस्तदवगाहनेन निर्यापिता नितरां नाशिता देहधर्मा जरामरणादयो येषां ते तथा ॥ १७ ॥

न तेऽजराक्षभ्रमिरायुरेषां
त्रयोदशारं त्रिशतं षष्ठिपर्व ।
षण्णेम्यनन्तच्छिदि यत् त्रिनाभि
करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥

तात्पर्यम्–अनन्तछि(छ)दि अनन्तावयवम् । 'तृतीयोऽतिशय' इति महाव्याकरणे । 'मथनान्मिथिलो जात' इत्यादिवच्च ॥ १८ ॥

**प्रकाशिका–** यत्रिनाभि त्रीणि चातुर्मास्यानि नाभिर्यस्य तत्त्रिनाभि कालचक्रं तज्जगदाच्छिद्य तदायुरपहृत्य धावदपि येषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथं भूतम् । अजरे जरादिदोषरहिते परब्रह्मरूपेऽक्षे भ्रमतीति भ्रमिः । गिरिशब्दवन्नियतलिङ्गत्वान्नपुंसकत्वाभावेऽपि न दोषः । अधिमासेन सह त्रयोदशमासा अराणि दलानि यस्य तत्तथा । त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि ग्रन्थयो यस्य । शतशब्दविभक्तेरलोपश्छान्दसः । षड्ऋतवो नेमयश्चक्रप्रान्तदेशा यस्य तत् षण्णेमिकरालस्रोतः क्रूरवेगम् । अनन्तच्छिदीत्येतदप्रतीत्या व्याख्याति ॥ अनन्तच्छिदीति । तथाच छदशब्दश्चक्रधारास्थानीयपरमाणुद्व्यणुकादिरूपावयवपर इति भावः । नन्वेवं छदमिति स्यात् । छिदीति कथमुक्तमित्यत आह ॥ तृतीयोऽतिशय इति । अतिशये द्योत्ये स्थान्यपेक्षया तृतीयो वर्णो भवतीति सूत्रार्थः । एवंचात्र छदानामानंत्येऽतिशयद्योतनायाकारस्थाने इकारस्तदपेक्षया तृतीयो जात इति भावः । अस्योदाहरणं दर्शयन्प्रयोगोऽप्यत्र साधक इत्याशयेनाह ॥ मथनादिति । मथानान्मथिल इति वक्तव्येऽतिशयद्योतनाय यथाकारस्येकारस्तृतीयो जातस्तद्वदित्यर्थः । एवं चातिशयेनानन्ताः छदाश्चक्रधारास्थानीयाः परमाण्वादिरूपावयवा यस्य तदनन्तच्छदीति व्याख्येयमिति भावः ॥१८॥

**एकः स्वयं सन् जगतः सिसृक्षया**
**द्वितीययात्मन्नधियोगमायया ।**
**सृजस्यदः पासि पुनर्ग्रहीष्यसे**
**यथोर्णनाभिर्भगवन् स्वशक्तिभिः ॥ १९ ॥**

**प्रकाशिका–** जन्मादिकर्तृत्वादिसकलगुणपूर्णमप्राकृतविग्रहं भगवन्तमवलोक्य श्रुत्यादौ यद्भगवत् प्रतीकतयोक्तं ब्रह्माण्डादिकं तन्न भगवतो वास्तवं शरीरमित्याह ॥ एक इत्यादि श्लोकद्वयेन । स्वयमेक एव सन्नपि सिसृक्षया द्वितीयो वासुदेवनामा सन् आत्मन् आत्मन्यधिको योगो यस्याः साऽधियोगा सा च सा माया च तया नित्यावियोगिन्या मायारूपया श्रियेत्यर्थः । अदो विश्वं स्वशक्यत्वाच्छक्तिभिः सत्त्वादिगुणैः ॥ १९ ॥

**नैतद् बताधीश पदं तवेप्सितम्**
**यन्मायया जगृहे भूतसूक्ष्मम् ।**
**अनुग्रहाय त्वयि यर्हि मालया**
**लसत्तुलस्या भगवान् विलक्षितः ॥ २० ॥**

**प्रकाशिका–** एवं जगज्जन्मादिकर्तृत्वविशिष्टमिदं त्वद्रूपं यतो यर्हि यस्मात्त्वय्यसाधारण्येन विद्यमानया लसन्ती तुलसी यस्यां सा तथा तया मालया भगवानयमेव भगवानिति मया त्वं विलक्षित

इतरविलक्षणतया ज्ञातः । अतः । हे अधीश । अनुग्रहाय भक्तानामुपासनार्थं मायया स्वेच्छयैव यद्भूतसूक्ष्ममुपलक्षणया महदाद्यात्मब्रह्माण्डाख्यं पदं स्थानं भगवान् जगृहे । एतत्तवेप्सितमिष्टम् । स्वरूपभूतमिति यावत् । न किन्तु प्रतिमास्थानीयमेवेति ज्ञातव्यमित्यर्थः ॥ २० ॥

**तं त्वानुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम् ।**
**नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥**

**प्रकाशिका–** एतादृशरूपं दर्शयतो भगवतो नमनमेव प्रतिक्रियेत्याशयेनाह ॥ तंत्वेति । अनुभूत्या स्वरूपानुभावेनोपरतो नित्यनिवृत्तः क्रियार्थो देहाद्यापादककर्मफलविशेषो यस्य स तथा तम् । स्वमायया स्वेच्छया वर्तितं प्रवर्तितं लोकप्रवृत्तिसाधनं येन स तथा तम् । अभीक्ष्णं पुनः पुनर्नमनीयपादसरोजं यस्य तम् । एतदुपपादनायैवेतरविशेषणानि । अल्पीयसि भक्ते भजने वा कामान्वर्षतीति तथा तम् ॥ २१ ॥

**ऋषिरुवाच–**

**इत्यव्यलीकं प्रणतोऽब्जनाभस्तमाबभाष वचसामृतेन ।**
**सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥**

**प्रकाशिका–** अव्यलीकमप्रियं यथा न भवति तथा प्रणतोऽमृतेन सुखकरेण प्रेमस्मिताभ्यां यदुद्वीक्षणमुत्कृष्टं निरीक्षणं तेन विभ्रमन्ती स्फुरन्ती भ्रूर्यस्य स तथोक्तः ॥ २२ ॥

**भगवानुवाच–**

**विदित्वा तव चैत्त्यं मे पुरैव समयोजितम् ।**
**यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥**

**प्रकाशिका–** प्रेमया तव चैत्यं चित्तस्थं भावं विदित्वैव समयोजितं संघटितम् । तत्किमित्यतआह ॥ यदर्थमिति । यदर्थमेवेत्यन्वयः ॥ २३ ॥

**न वै जातु मृषेदं स्यात् प्रजाध्यक्ष मदर्हणम् ।**
**भवद्विधेष्वतितरां मयि संगृहितात्मनाम् ॥ २४ ॥**

**प्रकाशिका–** मृषा वृथा संगृहीत एकाग्रीकृत आत्मा मनो यैस्ते तथा तेषाम् ॥ २४ ॥

**प्रजापतिपतिः सम्राट् मनुर्विख्यातमङ्गलः ।**
**ब्रह्मावर्तं योऽधिवसंञ्छास्ति सप्तार्णवां महीम् ॥ २५ ॥**

**प्रकाशिका–** पुरा मया समयोजीत्युक्तमेव दर्शयति ॥ प्रजापतीति । प्रजापतीनां मरीच्यादीनां पतिः । विख्यातं मङ्गलमभ्युदयं सदाचारादिलक्षणं यस्य स तथा ॥ २५ ॥

**स चेह विप्र राजर्षिर्महिष्या शतरूपया ।**
**आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदम् ॥ २६ ॥**

**प्रकाशिका–** हे विप्र कर्दम । महिष्या सह ॥ २६ ॥

**आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् ।**
**मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभुः ॥ २७ ॥**

**प्रकाशिका–** असितापाङ्गीं नीलांजनेन विनाऽपि नीलद्युतिनेत्रां ताम् ॥ २७ ॥

**समाहितं ते हृदयं यत्रेमान् परिवत्सरान् ।**
**सा त्वां ब्रह्मन् नृपवधूः काममाशु भजिष्यति ॥ २८ ॥**

**प्रकाशिका–** यत्र यस्यां भार्यायां समाहितमभिसन्धानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥

**या त आत्मधृतं वीर्यं नवधा प्रसविष्यति ।**
**वीर्ये त्वदीय ऋषय आधास्यंस्तेज आत्मनः ॥ २९ ॥**

**प्रकाशिका–** याऽऽत्मनि धृतं ते वीर्यं रेतोर्नवधा नव कन्यारूपेण प्रसविष्यति । त्वदीये वीर्ये त्वद्वीर्यप्रसूतासु नवसु कन्यासु ऋषयो मरीच्याद्या आत्मनस्तेजोगर्भलक्षणमाधास्यन्धास्यन्ति ॥२९॥

**त्वं च सम्यगनुष्ठाय निर्देशं म उशत्तर ।**
**मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यते ॥ ३० ॥**

**प्रकाशिका–** निर्देशमाज्ञामपि समर्पणेन पवित्रीकृताया अशेषक्रियास्तासां फलं यस्य ॥ ३० ॥

**कृत्वा दयां च जीवेषु दत्वा चाभयमात्मवान् ।**
**मय्यात्मानं सहजगद् द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥**

**प्रकाशिका—** गार्हस्थानन्तरं चतुर्थाश्रमोऽपि त्वया स्वीकार्य इत्याशयेनाह ॥ कृत्वेति । दत्वा । भूतेभ्य इति शेषः । आत्मवान् जितमनस्कमप्यात्मानं स्वात्मानं जगच्च सह युगपदेव द्रक्ष्यसि मदाधारं पश्यसीत्यर्थः । आत्मनि स्वात्मनि स्थितं मा मां पश्यसि ॥ ३१ ॥

**संभूय स्वांशकलया त्वद्वीर्येण महामते ।**
**तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥**

**प्रकाशिका—** क्षेत्रे भार्यायां स्वांशशकलया स्वरूपभूतांशविभागेन त्वद्वीर्येण संभूत इव प्रदश्य तत्त्वसंहितां परापरतत्त्वप्रतिपादकं सांख्यशास्त्रं प्रणेष्ये करिष्ये ॥ ३२ ॥

**एवं तमनुभाष्याथ भगवान् प्रत्यगक्षगः ।**
**जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् ॥ ३३ ॥**

**प्रकाशिका—** प्रत्यगक्षगः प्रत्यग्भूतेन्द्रियविषयः सरस्वत्या नद्यः परिश्रितात्परिवेष्टितात् ॥ ३३ ॥

**निरीक्षतस्तस्य यथावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ।**
**आकर्णयन् पत्ररथेन्द्रपत्रैरुच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥**

**प्रकाशिका—** सिद्धैर्मृग्यत इति सिद्धमार्गः । अशेषसिद्धेश्वरैर्ब्रह्मादिभिरभिष्टुतश्चासौ सिद्धमार्गश्चेति विग्रहः । पत्ररथाः पक्षिणस्तेषामिन्द्रो गरुडस्तस्य पत्रैरुच्चरितमभिव्यक्तं सामाधारभूतऋक्समुदायरूपं स्तुतिविशेषं तदारूढमुदीर्णमुत्कृष्टं साम चाकर्णयन् । उच्चारितस्तोममिति पाठे उच्चारिताः स्तोमाः स्तुतिविशेषा यस्य सामाधारभूतास्त उदीर्णसामाकर्णयन्निति व्याख्येयम् ॥ ३४ ॥

**एवं संप्रस्थिते शुक्ले कर्दमो भगवान् ऋषिः ।**
**आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥**

**प्रकाशिका—** शुक्ले भगवत्येवं ब्रुवति सति तं कालं परश्व इत्युक्तं कालं प्रतिपालयन्प्रतीक्षमाणः । ॥ ३५ ॥

**मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ।**
**आरोप्य स्वां दुहितरं सभार्यः पर्यटन् महीम् ॥ ३६ ॥**

**प्रकाशिका—** शातकौंभाः सौवर्णाः परिच्छदाः परिकरा यस्मिन् तम् । वरान्वेषणार्थं पर्यटन् । ॥ ३६ ॥

**तस्मिन् सुधन्वन्नहनि भगवान् यत् समादिशत् ।**
**उपायादाश्रमपदं मनुः शान्तव्रतस्य तत् ॥ ३७ ॥**

**प्रकाशिका–** हे सुधन्विन्विदुर ॥ ३७ ॥

**यस्मिन् भगवतो नेत्रादपतन् हर्षबिन्दवः ।**
**कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥**

**प्रकाशिका–** कर्दमाश्रमस्थसरसः बिन्दुसर इति कस्मान्नामेत्यतस्तत्र निमित्तमाह ॥ यस्मिन्निति । यस्मिन्सरसि । प्रपन्ने शरणागते कर्दमे ॥ ३८ ॥

**तद् वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् ।**
**पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥**

**प्रकाशिका–** तदाश्रमं वर्णयति ॥ पुण्यमित्यादिना । शिवमारोग्यकरममृतवत्स्वादुजलं यस्मिन् । ॥ ३९ ॥

**पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ।**
**सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥**

**प्रकाशिका–** कूजन्तः पुण्या मृगा द्विजाः पक्षिणश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैः । युक्तमिति शेषः । अन्वितमित्यस्यात्रापि संबन्ध इति वा ॥ ४० ॥

**मत्तद्विजगणोद्घुष्टं मत्तभ्रमरविभ्रमम् ।**
**मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥**

**प्रकाशिका–** उद्घुष्टमाघोषितं मत्तानां भ्रमराणां विभ्रमो विविधं भ्रमणं यस्मिन् बर्हा येषां सन्तीति बर्हिणो मयूरास्त एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । मिथ आव्हयन्तो मत्तकोकिला यस्मिन् ॥ ४१ ॥

**कदम्बचम्पकाशोककरञ्जबकुलासनैः ।**
**कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥**

**प्रकाशिका–** कदम्बादिभिर्वृक्षैरलङ्कृतम् ॥ ४२ ॥

कारण्डवैर्बकैर्हंसैः कुररैर्जलकुक्कुटैः ।
सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥ ४३ ॥

**प्रकाशिका–** कारण्डवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥

शशकैर्हरिणैः क्रोडैः श्वविड्गवयकुञ्जरैः ।
गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥ ४४ ॥

**प्रकाशिका–** हरिणादिभिर्मृगैर्वृतम् । तत्र क्रोडाः सूकराः श्वविशो वृका गवया वन्या गावो गोपुच्छैश्चमरीभिर्हरिभिः सिंहैः कपिभिर्वा मर्कैर्वनमार्जारैर्मर्कटैर्वा नाभिभिः कस्तूरीमृगैः ॥ ४४ ॥

प्रविश्य तत् तीर्थवरमादिराजः सहानुगः ।
ददर्श मुनिमासीनं तस्मिन् हुतहुताशनम् ॥ ४५ ॥

विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ।
नातिक्षामं भगवतः स्निग्धापाङ्गविलोकनात् ॥ ४६ ॥

**प्रकाशिका–** उग्रो युक् योगो यस्य तेन वपुषा विद्योतमानम् । अतिक्षामत्वाभावे हेतुद्वयमाह ॥ भगवत इत्यादि ॥ ४५,४६ ॥

तद्व्याहृतामृतकलापीयूषश्रवणेन च ।
प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ।
उपसंसृत्य मलिनं यथार्हणमसंस्कृतम् ॥ ४७ ॥

**प्रकाशिका–** तस्य भगवतो व्याहृतं वचनं तदेवामृतकलापीयूषममृतकलशश्चन्द्रस्तद्गतं समीचीनममृतं भगवतः प्रकाशरूपत्वेनाल्हादकत्वेन च चन्द्रस्थानीयत्वेन तद्वचनस्य तद्गतामृतस्थानीयत्वम् । तस्य श्रवणेन तल्लक्षणपानेन चेत्यर्थः । प्रांशुमुन्नतं दीर्घमर्हणं यथा स्यात्तथोपसंसृत्य ददर्शेति पूर्वेणान्वयः । असंस्कृतमभ्यंजनादिसंस्कारवर्जितमत एव मलिनम् ॥ ४७ ॥

अथोटजमुपायान्तं नृदेवं प्रणतं पुरः ।
सपर्यया प्रत्यगृह्णात् प्रतिनन्द्यानुरूपया ॥ ४८ ॥

**प्रकाशिका–** उटजं पर्णशालामाशीर्भिः प्रतिनन्द्यानुरूपया राजयोग्यया सपर्यया पूजया प्रत्यगृह्णात् सत्कृतवान् ॥ ४८ ॥

**गृहीतार्हणमासीनं संयतं प्रीणयन् मुनिः ।**
**स्मरन् भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥**

**प्रकाशिका–** संयन्तं सम्यङ्नम्रं श्लक्ष्णया मधुरया ॥ ४९ ॥

**नूनं चङ्क्रमणं देव सतां संरक्षणाय ते ।**
**वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥**

**प्रकाशिका–** हे देव नृप । चङ्क्रमणं पर्यटनं हि यस्माद्यतस्त्वम् । सप्तसु प्रथमेति सूत्रात् । यस्मिंस्त्वयि पालिनी जगत्पालना गुणशक्तिरस्ति तस्मादित्यर्थः ॥ ५० ॥

**योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ।**
**रूपाणि स्थान आधत्से तस्मै शुक्लात्मने नमः ॥ ५१ ॥**

**तात्पर्यम्– स्वायम्भुवो मनुश्चैव पृथुश्चैवार्जुनावपि । ब्रह्मशेषविषा रुद्र इन्द्र ऋष्यादयस्तथा । विष्ण्वावेशयुताः सर्वे न तु विष्णुस्वरूपका' इति तत्त्वनिर्णये ॥ ५१ ॥ इति तृतीयतात्पर्ये द्वाविंशोऽध्यायः ॥ २२ ॥**

**प्रकाशिका–** ऋषिर्मन्वाविष्टं राजराजेश्वराख्यं हरिरूपं स्वोपास्यशुक्लाभिन्नं ज्ञात्वा प्रणमति । योऽर्केति । यस्त्वमिति वर्तते । रूपाणि धर्मान् अर्कस्य प्रकाशकत्वमिन्दोराल्हादकत्वमग्नेरधृष्यत्वमिन्द्रस्यैश्वर्यवत्वं वायोर्वेगं यमधर्मस्य पुण्यापुण्यविवेकपूर्वकं शिक्षकत्वं प्रचेतसो वरुणस्य गांभीर्यमित्येतानीति यावत् । स्थाने तत्तदवसरे प्राप्ते सति आधत्से धारयसि । तस्मै शुक्लात्मने शुक्लनामकहर्याविष्टदेहाय । अत्रैवमावेशपरत्वेनैव व्याख्येयं नाभेदपरत्वेनेत्याशयेन स्वायंभुवमनौ हरेर्विशेषावेशसद्भावे हर्यभावे च प्रमाणमाह ॥ स्वायंभुव इति । एवकारयोस्तु शब्दस्य च तु विशेषेण विष्ण्वावेशयुता एव विष्णुस्वरूपका नैवेति संबन्धः । अर्जुनौ कार्तवीर्यपाण्डवौ ॥ ५१ ॥

**न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ।**
**विस्फुरच्चण्डकोदण्डो रथेन त्रासयन्नघात् ॥ ५२ ॥**

**प्रकाशिका–** हरेः पालिनी शक्तिस्त्वय्यप्यस्तीत्युक्तं व्यतिरेकमुखेनोपपादयति ॥ न यदेति । जैत्रं जयशीलम् । मणिगणा अर्पिता यस्मिन् विस्फुरन्नादं कुर्वच्चण्डकोदण्डं धनुर्यस्य ॥ ५२ ॥

**स्वसैन्यचरणक्षुण्णं वेपयन् मण्डलं भुवः ।**
**विकर्षन् बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥**

प्रकाशिका– स्वसैन्यस्य चरणैः क्षुण्णं सङ्घुष्टं वेपयन्कंपयन् अंशुमान्सूर्यः ॥ ५३ ॥

**तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ।**
**भगवद्रचिता राजन् भिद्येरन् बत दस्युभिः ॥ ५४ ॥**

प्रकाशिका– वर्णाश्रमाणां निबन्धनं नियमनं यैः । वर्णाश्रमधर्मनियमननिमित्ता इति यावत् । बत अहो ॥ ५४ ॥

**अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ।**
**शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥**

प्रकाशिका– व्यङ्कुशैर्निरङ्कुशैः । ततश्च किमित्यत आह ॥ शयान इति । न्यायान्यायविचारशून्य इत्यर्थः । न वर्णाश्रमधर्ममात्रविनाशः किन्तु सर्वोऽप्ययं लोको दस्युग्रस्तश्चोरापहृतार्थः सन्विनं-क्ष्यति ॥ ५५ ॥

**अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः ।**
**तद् वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे द्वाविंशोऽध्यायः ।**

प्रकाशिका– यद्यप्येवं धर्ममार्गरक्षार्थं तव सर्वत्र पर्यटनं सम्भवत्यथाऽपि कार्यविशेषार्थमत्र तवागमनमित्यतो यदर्थं यस्य कार्यस्य सिद्ध्यर्थं त्वमिहागतस्तत्किमिति त्वां पृच्छे तदुच्यताम् । वयम् । तत्त्वया कथितं कार्यं निर्व्यलीकेन हृदा प्रीतियुतेनान्तःकरणेन प्रतिपद्यामहे स्वीकुर्महे ॥५६॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥ ३-२२ ॥

## अथ त्रयोविंशोऽध्यायः ।

**मैत्रेय उवाच–**

**एवमाविष्कृताशेषगुणकर्मोदयं मुनिम् ।**
**सव्रीड इव तं सम्राट् उपारतमुवाच ह ॥ १ ॥**

प्रकाशिका– एवमाविष्कृतोऽशेषाणां गुणानां कर्मणां चोदयम् । विनयविशेषप्रदर्शनाय सव्रीड इवेत्युक्तम् । उष समीपे स्वहृदये स्थितो यो अः परमात्मा तत्रैव रतम् । वचनावसाने हरिम् । ध्यायन्त इति यावत् । हेत्यनेन मनोर्विनयमभिनन्दति ॥ १ ॥

मनुरुवाच–

**ब्रह्मासृजत् स्वमुखतो युष्मानस्मत्परीप्सया ।**
**छन्दोमयांस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥**

**प्रकाशिका–** मनुः स्वचिकीर्षितं विज्ञापयिष्यन् त्वं धर्मसेतू रक्षक इति मुनिवचनस्य भवद्रक्षिता एव वयं धर्मसेतुरक्षका एवमस्माकं युष्माकं च परस्परमुपजीव्योपजीवकभावो हरिणैव पूर्वं कृतः । स एव भगवताऽस्माकं मुख्यरक्षक इत्युत्तरं तावदाह ॥ ब्रह्माऽसृजदित्यादिना । ब्रह्मा ब्रह्मान्तगतो हरिर्युष्मान् ब्राह्मणान् अस्मत्परीप्सयाऽस्मद्रक्षणेच्छया छन्दोमयान्वेदप्रधानान्योगो भगवद्भक्त्यादिलक्षणः ॥ २ ॥

**तत्त्राणायासृजच्चास्मान् दोःसहस्रात् सहस्रपात् ।**
**हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥**

**प्रकाशिका–** अस्मान्क्षत्रियान् ब्रह्म ब्राह्मणजातिस्तस्य हरेर्हृदयं हृदयरूपांगस्थानीयम् । क्षत्रं क्षत्रजातिः । अङ्गमितराङ्गस्थानीयं प्रियं प्रधानमङ्गममप्रधानमिति वा ॥ ३ ॥

**अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ।**
**रक्षत्यस्मान् द्वयं देवः सदा सदसदात्मकः ॥ ४ ॥**

**प्रकाशिका–** सदसदात्मकः कार्यकारणव्यापी ॥ ४ ॥

**तव सन्दर्शनादेव च्छिन्ना मे संशया हृदः ।**
**यत् स्वयं भगवान् प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥**

**प्रकाशिका–** इदानीं स्वविज्ञापितकार्यस्वीकाराय तद्दर्शनादिकं तावदभिनन्दति ॥ तवेत्यादिश्लोकत्रयेण । धर्मं राज्यपालनादिरूपम् ॥ ५ ॥

**दिष्ट्या मे भगवान् दृष्टो दुर्दर्शो योऽकृतात्मनाम् ।**
**दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा ये भवतः शिवम् ॥ ६ ॥**

**प्रकाशिका–** अकृतात्मनामजितमनस्कानाम् ॥ ६ ॥

**दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान् ।**
**अपावृत्तैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥**

**प्रकाशिका–** अपावृतैरपगतावरणैर्जुष्टाः सेविताः सादरं श्रुता उशतीरुशत्यो निर्मलाः ॥ ७ ॥

**स भवान् दुहितुः स्नेहपरिक्लिष्टात्मनो मम ।**
**श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥**

**प्रकाशिका–** एवं तमभिनन्द्येदानीं स्वाभीष्टं विज्ञापयति ॥ स भवानितिसप्तभिः । श्रावितं विज्ञापितम् ॥ ८ ॥

**प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ।**
**अन्विच्छन्ती पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥**

**प्रकाशिका–** भ्रातृमतीत्वप्रदर्शनायाह ॥ प्रियव्रतेति ॥ ९,१० ॥

**यदा तु भवतः शीलश्रुतरूपवयोगुणान् ।**
**अशृणोन्नारदात् सैषा त्वय्यासीत् कृतनिश्चया ॥ १० ॥**

**तत् प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां मया ।**
**सर्वात्मनानुरूपां ते गृहमेधेषु कर्मसु ॥ ११ ॥**

**प्रकाशिका–** तत्तस्मात्प्रतीच्छ स्वीकुरु । गृहमेधेषु गृहस्थाश्रमयोग्येष्वनुरूपामनुकूल- स्वभावां सौन्दर्ये च स्वभावे च रूपमित्यभिधानात् ॥ ११ ॥

**उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ।**
**अपि निर्भुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥**

**प्रकाशिका–** न प्रतिगृहीष्ये इति निराकरणं तव नोचितमित्याह ॥ उद्यतस्येति । उद्यतस्येति स्वतः प्राप्तस्य कामस्य विषयस्य प्रतिवादः प्रत्याख्यानं न शस्यते न धर्मशास्त्रानुकूलः । निर्मुक्त-संगस्यापि विषयापेक्षाशून्यस्यापि ब्रह्मचर्यादेरित्यर्थः ॥ १२ ॥

**य उद्यतमनादृत्य कीनाशमभियाचते ।**
**क्षीयते तद् यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥**

**प्रकाशिका–** दातुमुद्यते मादृशे प्राप्तेऽन्योऽस्माकं दाता भविष्यतीत्यपि वचनं न भवादृशां यशोधनानां युक्तमित्याह ॥ उद्यतमिति । दातुमुद्यतं मादृशं राजानं कीनाशं कदर्यम् । हतः स्यादिति शेषः ॥ १३ ॥

**अहं त्वाशृणवं विद्वन्नुद्वाहार्थं समुद्यतम् ।**
**अतस्त्वमुपकुर्वाणः प्रत्ता प्रतिगृहाण मे ॥ १४ ॥**

**प्रकाशिका–** भवांस्तु सकामः । अतस्तदप्रत्याख्यानमनुचितमित्याशयेनाह ॥ अहं त्वेति । उपकुर्वाणो विवाहकामो वेदानधीत्य यो वर्णी विवाहार्थं गुरोः कुलात्कृतानुज्ञो निवर्तेत उपकुर्वाण उच्यत इति वचनात् ॥ १४ ॥

**ऋषिरुवाच–**

**बाढमुद्वोढुकामोऽहमप्रमत्ता तवात्मजा ।**
**आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥**

**प्रकाशिका–** बाढमित्युक्तमेव विशदयति ॥ उद्वोढुकाम इति । तव पुत्री च बाढं योग्या इत्याह ॥ अप्रमत्तेति । पतिशुश्रूषणेयत्ता विषयासक्तिवर्जिता । धर्मार्थकामहेतुर्या त्वप्रमत्तेति तां विदुरिति स्मृत्युक्तप्रकारेणाप्रमत्तेत्यर्थः । अप्रदत्तेति पाठेऽन्यस्मै वाच्याऽप्यदत्तेत्यर्थः । तथा च परामृष्टत्व-शङ्काभावाद्विवाहयोग्येति भावः । चतुर्णां विवाहविधीनां मध्येऽयमाद्यः प्रथमो ब्राह्मः शक्त्या कन्यामलंकृत्यागताय वराय यत्र सा प्रदीयत स ब्राह्मः । विधिरस्त्विति शेषः ॥ १५ ॥

**कामः स भूयान्नरदेव तेऽस्याः**
**पुत्र्याः समाम्नायविधौ प्रतीतः ।**
**क एव ते तनयां नाद्रियेत स्वयैव**
**कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥**

**तात्पर्यम्– स्वया कान्त्याऽन्याः क्षिपन्ती श्रीर्यथा तद्वत्स्थिताम् ॥ १६ ॥**

**प्रकाशिका–** हे नरदेव नृपते । अस्याः पुत्र्या यः समाम्नायविधौ "दशास्यां पुत्रानाधेहि पतिमेकादशं कृधी"त्यादिवेदवाक्ये प्रतीतः प्रसिद्धः कामः सुप्रजावत्वादिरूपः । स भूयाद्भवेत् । य उक्तरूपो मम कामः स तेऽस्याः पुत्र्याः सकाशाद्भूयादिति वा । अत्र स्वांगकांत्या श्रियं क्षिपतीमिव स्थितामिति प्रतीतार्थस्य बाधितत्वादबाधितां योजनां दर्शयति ॥ स्वयेति । तथा चान्याः स्थितामिति पदद्वयमध्याहृत्य योजनीयमिति भावः ॥ १६ ॥

**यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां**
**विक्रीडतीं कन्दुकविह्वलाक्षीम् ।**

विश्वावसुर्न्यपतत् स्वाद् विमानाद्
विलोक्य संमोहविमूढचेताः ॥ १७ ॥

**प्रकाशिका–** विश्वावसुर्गन्धर्वः संमोहेन कालकृतकश्मलेन विमूढं व्याकुलं चेतो यस्य ॥ १७ ॥

तां प्रार्थयन्तीं ललनाललामामसेवितश्रीचरणैरदृष्टाम् ।
सुतां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभिजातः ॥ १८ ॥

**प्रकाशिका–** ललनानां स्त्रीणां ललामां भूषणभूतामसेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्ते तथा तैः पुरुषैरदृष्टामित्यनेन लक्ष्मीप्रसादवद्भिरेव प्राप्यत्वमुक्तमिति ज्ञातव्यम् । मनोः सुतामिति मूलम् । उच्चपद उत्तानपादस्य स्वसारं भगिनीमित्यनेन भ्रातृमतीत्वम् । अभिजातः सत्कुलीनः । अनेनात्मनस्तद्वरणयोग्यतामाह ॥ १८ ॥

अतो भजिष्ये समयेन साध्वीं
यावत् तेजो बिभृयादात्मनो मे ।
अतो धर्मान् पारमहंस्यमुख्यान्
शुक्लोपदिष्टान् बहुमन्येऽविहिंस्रान् ॥ १९ ॥

**प्रकाशिका–** भजिष्ये स्वीकरिष्ये समयेन कालविशेषावधिकेन सङ्केतेन । तमेवाह ॥ यावदिति । इयं तव पुत्रीति यावत् । यावता कालेन मे आत्मनो मद्देहाच्युतं तेजोवीर्यं बिभृयात् । अपत्यवती स्यादिति यावत् । तावन्तमेव कालं भजिष्ये । अत एतस्मात्कालादनन्तरं पारमहंस्याः परमहंसाश्रम-संबन्धिनो अत एव मुख्या ये धर्मास्तान् शुक्लेन शुद्धेन भगवतोपदिष्टान् अहिंस्रान्यागीय-पशुहिंस्रादिवर्जितान् बहुमन्येऽनुतिष्ठामि ॥ १९ ॥

यतोऽभवद् विश्वमिदं विचित्रं संस्थास्यते यत्र च वावतिष्ठते ।
प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः ॥ २० ॥

**प्रकाशिका–** इदं न मया स्वबुद्ध्योच्यतेऽपि तु भगवतैवमुपदिष्टमित्याह ॥ यत इति । यत्र यस्मिन्नवतिष्ठते प्रलये । एतानि विशेषणानि तदाज्ञाया अनुल्लङ्घ्यत्वसूचकानि । पतिर्ब्रह्मान्तर्यामी परं प्रमाणं मुख्योपदेष्टा । अस्मिन्नर्थे इति शेषः ॥ २० ॥

मैत्रेय उवाच–

स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविन्दनाभम् ।
धियोपगृह्णन् स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥

**प्रकाशिका–** हे उग्रधन्वन् विदुर । इयदेवैतावदेवोपगृण्हन्ध्यायन् । अनेन यावता प्रयोजनसिद्धिस्तावदेव योगिभिर्वक्तव्यं नाधिकमिति सूचयति । मुखेन स्वमुखेन देवहूत्याश्चेतो लुलुभे प्रलोभितवान् । अयमेव मत्पतित्वयोग्य इति तस्या भावमुत्पादितवानित्यर्थः ॥ २१ ॥

सोऽनुज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ।
तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥

**प्रकाशिका–** स मनुरनु एवमृषिवचनानन्तरं महिष्याः शतरूपाया दुहितुश्च व्यवसितं निश्चयं ज्ञात्वा ददावित्यन्वयः ॥ २२ ॥

शतरूपा महाराज्ञी पारिबर्हान् महाधनान् ।
दम्पत्योः पर्यदात् प्रीत्या गृहवासःपरिच्छदान् ॥ २३ ॥

**प्रकाशिका–** पारिबर्हान्विवाहकाले वरवध्वोर्दीयमानानि द्रव्याणि गृहवासपरिच्छदान् गृहाश्रमोपयुक्तोपकरणानि च ॥ २३ ॥

प्रत्वा दुहितरं सम्राट् सदृक्षाय गतव्यथः ।
उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥

**प्रकाशिका–** प्रत्वा दत्वा सदृक्षाय सदृशाय गता व्यथा चिन्ता यस्य ॥ २४ ॥

अशक्नुवंस्तद्विरहं मुञ्चन् बाष्पकलां मुहुः ।
आसिञ्चन्नम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥

**प्रकाशिका–** शिखाः केशानासिंचन् ॥ २५,२६ ॥

आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः ।
प्रतस्थे रथमास्थाय सभार्यः स्वपुरं नृपः ॥ २६ ॥

उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ।
ऋषीणामुपशान्तानां पश्यन्नाश्रमसम्पदः ॥ २७ ॥

**प्रकाशिका–** ऋषिकुल्याया ऋषिकुलप्रियाया रोधसोस्तीरयोः स्थितानामुपशान्तानामतिशयेन भगवन्निष्ठानां ब्रह्मावर्तप्रजाः ब्रह्मावर्तनामकदेशस्थाः प्रजाः । पतिं स्वामिनम् ॥ २६,२७ ॥

**तमायान्तमभिप्रेत्य ब्रह्मावर्तं प्रजाः पतिम् ।**
**गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥**

**बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता ।**
**न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥**

**प्रकाशिका–** कोऽसौ ब्रह्मावर्तदेश इत्यत आह ॥ बर्हिष्मती नाम पुरीति । सेतरपुरीभ्योऽपि पुण्यतमेत्याशयेनाह ॥ न्यपतन्निति । यत्रेत्यस्यापि सम्बन्धः । यत्र बर्हिष्मतीप्रान्तदेशे यज्ञस्य यज्ञवराहस्य रोमाण्यपतन् ॥ २८,२९ ॥

**कुशकाशास्त एवासन्छश्वद्धरितवर्चसः ।**
**ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥**

**तात्पर्यम्–** **'ज्ञानानन्दस्वरूपेभ्यो रोमभ्योऽस्य कुशादयः । विधुन्वतः प्रयागे तु वराहवपुषोऽभवन् । रोमाणि तानि देवस्य रूपाण्यासन्सहस्रश'** इति स्कान्दे । **त एवासन् तेभ्य एवासन् । 'सप्तसु प्रथमे'ति सूत्रात्** ॥ ३० ॥

**प्रकाशिका–** रोमाणि तत्र पतितानीत्यत्र ज्ञापकमाह ॥ कुशा इति । कुशकाशसंज्ञा दर्भविशेषाः। त एव रोमाण्येव । विधेयलिङ्गापेक्षया त एवेत्युक्तम् । रोमाणां तत्र पतितत्वादेव कुशकाशसमृद्धिस्तत्र जातेति भावः । अत्र हरिरोम्णां कुशकाशाभेदः प्रमाणविरुद्धः कथमुच्यत इत्याशङ्कायां प्रमाणेनैवात्र विवक्षितं तात्पर्यं दर्शयति ॥ ज्ञानानन्देति । अनेन प्रतीतार्थग्रहणे बाधकं सूचितम् । वराहवपुषोऽस्य विष्णोरित्यनेन यज्ञस्येत्येतदुक्तार्थम् । आदिपदेन काशा धुन्वतः । स्वाङ्गमिति शेषः । प्रयाग इत्यनेन प्रयाग एव बर्हिष्मतीति सूचयति । तुशब्देन तत्र कुशकाशादीनां बाहुल्यं सूचयति । आसन्नित्यस्यार्थः ॥ अभूवन्निति । तथा चात्र रोम्णां कुशादीनां जन्यजनकभाव एव विवक्षितो नाभेदः । ज्ञानान्दरूपैस्तैर्जडानां कुशादीनामभेदायोगादिति तात्पर्यमुक्तमिति ज्ञातव्यम् । ननु तर्हि तत्र पतितानां रोमाणां किं तथैव स्थितिर्नेत्याह ॥ रोमाणीति । अत एव तत्क्षेत्रं पुण्यतममिति भावः । ननु तर्हि त एवासन्निति कथमित्यत उक्तप्रमाणानुसारेण तद्योजनां दर्शयति ॥ त एवासन्निति । तथाच प्रथमा पञ्चम्यर्थे व्याख्येयेति भावः । अत्र नियामकं सूत्रं पठति ॥ सप्तस्विति । सप्तसु विभक्त्यर्थेषु प्रथमा विभक्तिर्भवतीति सूत्रार्थः । भगवद्रोमोत्पन्नानां तत्रत्यानां

कुशकाशानां माहात्म्यं दर्शयन्नाह ॥ ऋषय इति । यज्ञघ्नान्यज्ञविघ्नकरान् राक्षसादीन् । यज्ञं विष्णुम् ॥ ३० ॥

**कुशकाशमयं बर्हिरास्तीर्य भगवान् मनुः ।**
**अयजद् यज्ञपुरुषं लब्धं स्थानं यतो दृढम् ॥ ३१ ॥**

**प्रकाशिका–** इदानीं बर्हिष्मतीनामनिरुक्तिं दर्शयन्नाह ॥ कुशेति । कुशकाशमयं कुशकाशनिर्मितं यतो बर्हिषो गुणाद्दृढस्थानमक्षयं अनेनोत्तमफलसाधनबर्हिष्मत्वेन निमित्तेनास्या बर्हिष्मतीशब्द-वाच्यत्वमिति सूचयति ॥ ३१ ॥

**बर्हिष्मतीं नाम पुरीं निर्विश्य सुखमावसत्**
**तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ।**
**सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः ॥ ३२ ॥**

**प्रकाशिका–** बर्हिष्मतींनामेति । उक्तनिमित्तेनेति शेषः । तस्यां विद्यमानं भवनमन्येषां धर्मार्थमो-क्षाणामविरोधेनेत्यनेनेतरपुरुषार्थानुकूलानेव कामानेव बुभुज इति सूचयति ॥ ३२ ॥

**संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ।**
**प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन् हरेः कथाः ॥ ३३ ॥**

**प्रकाशिका–** प्रत्यूषेषु उषस्सु । अनुबद्धेन भक्तियुक्तेन ॥ ३३ ॥

**निष्णातं योगमायासु मुनिं स्वायुम्भुवं मनुम् ।**
**यदा स्रंसयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥**

**प्रकाशिका–** योगमायासु योगप्रभावाल्लब्धाणिमादिसामर्थ्येषु निष्णातं नितरां स्थितम् । तद्युक्त-मिति यावत् । संस्रयितुं हरिकथाश्रवणादिना श्लथयितुम् ॥ ३४ ॥

**अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ।**
**शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥**

**तात्पर्यम्– 'गतसारं यातयामं यामः सार इहोच्यत' इति नारदीये ॥ ३५ ॥**

**प्रकाशिका–** एतदेवोपपादयितुं तस्य विशेषणान्याह ॥ शृण्वत इति । एतदेवाह ॥ अयातयामा इति । अत्रायातयामपदान्तर्गतयातयामशब्दस्य प्रकृतसङ्गतमर्थविशेषं प्रमाणेनैवाह ॥ गतसारमिति ।

गतसारं निष्फलम् । यातयामं यातयामपदवाच्यम् । यत इह यातयामशब्देन यामो याम इति शब्देन सार उच्यत इत्यर्थः । तथा च तस्य मनोः स्वान्तरं स्वस्वामिकं मन्वन्तरं यापयन्ति स्वान्तरयापना यामाः कालावयवविशेषा अयातयामा अगतसारा अनिष्फला आसन्निति मूलार्थ इति भावः॥३५॥

**स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम् ।**
**वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥**

**प्रकाशिका–** स्वान्तरं स्वकालावधिम् । परिभूतं दूरीकृतं गतित्रयं तिर्यग्यातनातमोरूपं येन स तथा ॥ ३६ ॥

**शारीरा मानसा दिव्याः पर्यासे ये च मानुषाः ।**
**भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥**

**तात्पर्यम्–पर्यासे मानुषत्वेनावस्थानेऽपि ॥३७॥ इति तृतीयतात्पर्ये त्रयोविंशोऽध्यायः॥२३॥**

**प्रकाशिका–** ननु मनुष्यत्वेन स्थितस्य मनोः शरीरादिक्लेशसंभवे कथं यातयामानामगतसारत्वमित्यत आह ॥ शारीरा इति । दिव्या अन्तरिक्षप्रभवा मानुषाः शत्रुप्रभवा भौतिकाः शीतोष्णादिप्रभवाः । अत्र पर्यास इत्येतदप्रतीत्या व्याख्याति ॥ पर्यास इति । तथा च देवत्वापेक्षया पर्यासो विपर्यासो वैपरीत्यं मानुषत्वेनावस्थानं तदपीत्यर्थः ॥ ३७ ॥

**यः पृष्टो मुनिभिः प्राह धर्मान् नानाविधान् शुभान् ।**
**नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥**

**प्रकाशिका–** धर्मशास्त्रप्रणेतृत्वाल्लोकहितकारित्वाच्च न तस्य क्लेश इत्याशयेनाह यः पृष्ट इति । नृणां वर्णाश्रमाणां च धर्मानिति संबन्धः ॥ ३८ ॥

**एतत् त आदिराजस्य मनोश्चरितमद्भुतम् ।**
**वर्णितं वर्णनीयस्य तदपत्योदयं श्रृणु ॥ ३९ ॥**

**इति श्रीमद्भागवते तृतयस्कन्धे त्रयोविंशोऽध्यायः ।**

**प्रकाशिका–** तदपत्योदयं तस्य मनोरपत्यं देवहूतिस्तस्योदयं प्रभावं ॥ ३९॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ३-२३ ॥

## अथ चतुर्विंशोऽध्यायः ।

**मैत्रेय उवाच–**

**पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा ।**
**नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥**

**प्रकाशिका–** पितृभ्यां मातापितृभ्यां प्रस्थिते गमने कृते सति । इंगितं चित्तस्थितम् । तत्ज्ञाने कोविदा निपुणा भवानी पार्वती ॥ १ ॥

**विस्रम्भेणात्मशौचेन गौरवेण दमेन च ।**
**शुश्रूषया सौहृदेन वाचा मधुरया प्रभो ॥ २ ॥**

**प्रकाशिका–** विस्रम्भेणैतत्तोषणे ममाभीष्टसिद्धिर्भविष्यत्येवेति विश्वासेन । आत्मशौचं मनसो देहस्य वा शुद्धिः ॥ २ ॥

**विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् ।**
**अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥**

**प्रकाशिका–** दम्भोऽविद्यमानमाहात्म्यप्रकटनम् । अघं निषिद्धाचरणम् । तेजीयांसं ब्रह्मापरोक्षज्ञानिनम् ॥ ३ ॥

**स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ।**
**दैवाद् गरीयसः पत्युराशासानां महाशिषः ॥ ४ ॥**

**प्रकाशिका–** महाशिषोऽपत्यादिरूपाः ॥ ४ ॥

**कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ।**
**प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ ५ ॥**

**प्रकाशिका–** क्षामां ग्लानिं प्राप्तां कर्शितां कृशतां प्राप्तां पीडित आर्द्रीकृतचित्तः ॥ ५ ॥

**तुष्टोऽहमद्य तव मानिनि मानदायाः**
**शुश्रूषया परमया परया च भक्त्या ।**
**यो देहिनामयमतीव सुहृत् स्वदेहो**
**नापेक्षितः समुचितं क्षयितुं यदर्थे ॥ ६ ॥**

**प्रकाशिका–** यो देहिनामतीव सुहृत् । अयं स्वदेहः । समुचितं स्नानालंकारभोजनादिलक्षणं स्वयोग्यं कर्तव्यम् । कर्तव्यं प्रति नावेक्षितो न गणितः । उपेक्षित इति यावत् । यदर्थे यस्य मम प्रीत्यर्थं क्षपितुं कृशीकृतुं कृशदेहदर्शनेनैवायं तुष्टः स्यादिति बुद्ध्येति यावत् । सोऽहमित्यन्वयः ॥६॥

**या मे स्वधर्मनिरतस्य तपःसमाधि-**
**विद्यात्मयोगविजिता भगवत्प्रसादात् ।**
**तामेव ते मदनुभावनयावरुद्धां**
**दृष्टिं प्रपश्य वितराम्यभयामशोकाम् ॥ ७ ॥**

**प्रकाशिका–** आत्मयोगो भगवद्भक्तिलक्षणस्तैर्विजिता प्राप्ता । मदनुभावनया मत्सेवयाऽवरुद्धां फलदानाय स्वाभिमुखीकृतां दृष्टिमपरोक्षज्ञानसामर्थ्यं प्रपश्य । फलस्य सन्निकृष्टत्वाभिप्रायेणैव-मुक्तम् । वितरामि प्रकटीकरोमि । कथंभूतां दृष्टिम् । अभयां पतनभयरहितफलदामशोकां शोकराहित्यप्रदाम् । मोक्षहेतुभूतामिति यावत् । येन मदीयेनापरोक्षज्ञानसामर्थ्येन मोक्षो भवति तत्ज्ञानसामर्थ्यं तुभ्यमैहिकपुरुषार्थप्रदमपि यथा स्यात्तथा प्रकटीकरोमीति भावः ॥ ७ ॥

**अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भ-**
**विभ्रंशितार्थरचनाः किमुरुक्रमस्य ।**
**सिद्धासि भुङ्क्ष्व विभवान् निजधर्मदोहान्**
**दिव्यान् नरैर्दुरधिगान् नृपविक्रियाभिः ॥ ८ ॥**

**प्रकाशिका–** ननु मदभीष्टदानाय ज्ञानसामर्थ्यमेव कस्मात्प्रकटनीयम् । काम्यकर्मभिरपि तत्प्राप्ति-सम्भवादित्यत आह ॥ अन्य इति । अन्ये पुनः काम्यकर्मविशेषाः किं न किमप्यतितुच्छा इत्यर्थः । कुतः यत उरुक्रमस्य भगवतो भ्रुव उद्विजृंभो वक्रीभावस्तेन विभ्रंशिता विनाशिता अर्थरचना मनोरथा येषु ते तथा । भगवान्स्वभ्रूविलासेन कर्मलब्धान्मनोरथान्नाशयति । न ज्ञानसामर्थ्य-लब्धानिति भावः । अतो निजधर्माणां गार्हस्थ्योचितधर्माणां देहो येभ्यस्तान्विक्रियाभि-रप्यश्वमेधादिरूपविशिष्टकर्मभिरपि दुरधिगमान्प्राप्तुमशक्यान् अत एव दिव्यान् लोकविलक्षणान्विभ-वान्विविधान्विषयान् भुंक्ष्व यतः सिद्धासि मदनुभावनया दिव्यविभवयोगयोग्यासि ॥ ८ ॥

**मैत्रेय उवाच–**
**एवं ब्रुवाणमबलाखिलयोगमाया-**
**विद्याविचक्षणमवेत्य गताधिरासीत् ।**

**सप्रश्रयप्रणयविह्वलया गिरैषा**
**व्रीडावलोकविलसद्धसितानना॑ह ॥ ९ ॥**

**प्रकाशिका—** अखिलयोगमाया योगसामर्थ्यलभ्या अणिमादयः सिद्धयस्तत्साधनभूतासु विद्यासु विचक्षणं निपुणं गताधिर्निश्चिंता संप्रश्रयो विनयः प्रणयः प्रेमस्ताभ्यां विह्वला गद्गदा तया गिरा व्रीडासहितोऽवलोकस्तेन विलसद्धसितं चाननं यस्याः सा ॥ ९ ॥

**देवहूतिरुवाच—**
**राद्धं तव द्विजवृषैतदमोघयोग-**
**मायाधिपे त्वयि विभो तदवैमि भर्तः ।**
**यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो**
**भूयाद् वरीयसि गुणप्रसवः सतीनाम् ॥ १० ॥**

**प्रकाशिका—** हे द्विजवृष ब्राह्मणश्रेष्ठ हे भर्तः । यद्ब्रवीष्येतत्सर्वं तव राद्धं सम्यक् सिद्धम् । अमोघयोगमायानाममोघयोगसामर्थ्यवतां योगिनामधिपे त्वयि तद्योगसामर्थ्यमहमवैमि जानामि । किंतु यस्ते त्वया समयोऽभिहितो यावत्तेजो बिभृयादात्मनो म इत्येवं रूपः सः सकृत्सकृद्गर्भाधानपर्यन्तः । यतः सतीनां वरीयसि पत्यौ अङ्गसङ्गो गुणप्रसवः पुण्यकरः । अनेनान्यस्य नीचस्यांगसङ्गः पापकर इति सूचयति ॥ १० ॥

**तत्रेतिकृत्यमुपशिक्ष यथोपदेशं**
**येनैष मे कर्शितोऽतिरिरंसयात्मा ।**
**सिध्येत ते कृतमनोभवधर्षितायाः**
**कामस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥**

**प्रकाशिका—** अङ्गसङ्गार्थं च प्रथममितिकर्तव्यतां सम्पादयेत्याह ॥ तत्रेति । हे ईश । तत्राङ्गसङ्गविषये । इति कृत्यं साधनं यथोपदेशं कामशास्त्रविधिमनतिक्रम्योपशिक्षोपकल्पय । येन साधनेनाभ्यङ्गभोजनपानादिना मे कर्शित एष आत्मा सिद्ध्येत रतिसमर्थो भवेत् । अतिरिरंसयाऽतीव रन्तुमिच्छया ते त्वया । त्वद्दर्शनेनेति यावत् । कृतोऽभिवृद्धो मनोभवः कामस्तेन धर्षिताया मे कामोऽन्योऽपि मनोरथः सिद्ध्येत तदुपशिक्षयेत्यन्वयः । आदौ तावत्सदृशं सार्वभौमपुत्र्या मम योग्यं भवनं विचक्ष्व विचारय ॥ ११ ॥

मैत्रेय उवाच–
प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः ।
विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥

प्रकाशिका– योगं तदुपायभूतोपासनाविशेषमास्थितः कुर्वन् । तर्ह्येव तदानीमेवाविरचीकरत्प्रकाशयामास ॥ १२ ॥

सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ।
सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥

प्रकाशिका– सर्वासामृद्धानामुपचयः समाहारस्तेन नोदर्कमुत्कृष्टमुपस्कृतं शोभितम् ॥ १३ ॥

दिव्योपस्करणोपेतं सर्वकालसुखावहम् ।
पट्टिकाभिर्विचित्राभिः पताकाभिरलंकृतम् ॥ १४ ॥

प्रकाशिका– दिव्यान्यलौकिकान्युपस्कराणि भाण्डादिगृहोपकरणानि तैरुपेतं युक्तं पट्टिकाभिः पट्टवस्त्रनिर्मिताभिः ॥ १४ ॥

स्रग्भिर्विचित्रमालाभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ।
दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥

प्रकाशिका– विचित्राणि माल्यानि पुष्पाणि यासु ताभिर्मंजु मधुरं यथा भवति तथा सिंजंतः षडंघ्रयो भ्रमरा यासु ताभिः स्रग्भिर्मालाभिः ॥ १५ ॥

उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ।
क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥

प्रकाशिका– विन्यस्तनिलयेषु विरचितप्रासादेषु कशिपुभिः शय्याभिः कान्तं कमनीयं पर्यंको मंचस्तदादिभिश्च कान्तम् ॥ १६ ॥

तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ।
महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥
द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटिमत् ।
शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिष्ठितम् ॥ १८ ॥

**तात्पर्यम्–** **देहली द्वारबन्धः ॥ १८ ॥**

**प्रकाशिका–** द्वास्सु द्वारेषु । विद्रुमदेहलीत्यत्र देहली शब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ देहलीति । तथा च विद्रुमनिर्मितद्वारसम्बन्धेन भातं शोभितमिति मूलार्थ इति भावः । वज्ररचिताः कपाटयोऽस्य सन्तीति वज्रकपाटिमत् ॥ १७,१८ ॥

**चक्षुष्मत्पद्मरागाद्यैर्वज्रभित्तिषु निर्मितैः ।**
**जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥**

**प्रकाशिका–** चक्षुष्मन्तो दीप्तिमन्तः पद्मरागाद्या मणयो निर्मितैः खचितैर्वैतानैर्वितानसमूहैः । ॥ १९ ॥

**हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ।**
**कृत्रिमान् मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥**

**तात्पर्यम्–** **कृत्रिमान् शोभार्थं कृतान् ॥ २० ॥**

**प्रकाशिका–** ननु कृत्रिमानां तत्राप्रसक्तिरित्यतः प्रसक्तिं दर्शयन् कृत्रिमानित्येतद्व्याख्याति ॥ कृत्रिमानिति । तथा च कृत्रिमान् शोभार्थं कृतान्हंसादीन्स्वान्ज्ञातीन्मन्यमानैरिति व्याख्येयमिति भावः ॥ २० ॥

**विहारस्थानशयनसंवेशप्राङ्गणाजिरैः ।**
**यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥**

**प्रकाशिका–** विहारस्थानं क्रीडाप्रदेशो विश्रामः शयनगृहम् । संवेश उपभोगस्थानं प्रांगणं गृहद्बहिरजिरं प्राकाराद्बहिर्यथोपजोषं यथासुखम् । आत्मनः स्वस्यापि विस्मयकरमिव स्थितम् ॥ २१ ॥

**ईदृग् गृहं तत् पश्यन्तीं नातिप्रीतेन चेतसा ।**
**सर्वभूताशयाभिज्ञः प्रावोचत् कर्दमः स्वयम् ॥ २२ ॥**

**प्रकाशिका–** अस्मिन्ह्रदे बिन्दुसरसि ॥ २२ ॥

**निमज्ज्यास्मिन् ह्रदे भीरु विमानमिदमारुह ।**
**इदं शुक्लकृतं तीर्थमाशिषामाप्तये नृणाम् ॥ २३ ॥**

प्रकाशिका– नातिप्रीतेन मलिनदेहत्वात्परिचारिकाऽभावाच्चा आरुह अधिरोह । शुक्लेन भगवता कृतम् आशिषामाशास्यानामर्थानाम् ॥ २३ ॥

**सा तद् भर्तुः समादाय वचः कुवलयेक्षणा ।**
**सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥**

प्रकाशिका– समादायाहृत्य सरजं धूलिधूसरं वेणीभूतान् जटायितान् । मूर्धजान्केशान् ॥ २४ ॥

**अङ्गं च मलपङ्केन संच्छन्नं शबलस्तनम् ।**
**आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥**

प्रकाशिका– अङ्गं च बिभ्रत्यभ्यङ्गाभावादभिवृद्धं देहसम्बद्धं यत्कल्मषं तन्मलं तदेव पङ्कं तेन संच्छन्नमाच्छादितनिजवर्णमत एव शबलौ विवर्णौ स्तनौ यस्य तत्सरस्वत्या नद्याः शुभानां जलानामाशयमाश्रयभूतम् । शुभजलाशया जलचरा यस्मिन्निति वा ॥ २५ ॥

**सान्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ।**
**सर्वाः कैशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥**

प्रकाशिका– सरस्यंतर्निमग्ना सती दशशतानि सहस्रसंख्याकाः कैशोरवयसः षोडशवर्षवयस उत्पलगन्धवद्गन्धो यासां ताः स्त्रियः प्रोचुरित्यन्वयः ॥ २६ ॥

**तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ।**
**वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥**

**स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ।**
**दुकूले निर्मले नूत्ने ददुरस्यै च मानद ॥ २८ ॥**

प्रकाशिका– वयं कर्मकरीरतः शाधि आज्ञापय महत्या राज्ञा अर्हणयोग्येन स्नानेनाभ्यङ्गेन मनस्विनीं प्रसन्नमनसां नूत्ने नूतने ॥ २७,२८ ॥

**भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ।**
**अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥**

प्रकाशिका– सर्वगुणैर्भक्ष्यभोज्यचोष्यलेह्यलक्षणैर्मधुरादिषड्रसैर्वोपेतममृतलक्षणमासवं मदकरममृतासवं पानं पेयम् ॥ २९ ॥

**अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ।**
**विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥**

**तात्पर्यम्–** आदर्शे ददर्श ॥ ३० ॥

**प्रकाशिका–** आदर्शे दर्पणे । अत्रापेक्षितं क्रियापदं पूरयति ॥ आदर्शे ददर्शेति । अन्यथा दृष्ट्वेत्यनुवादासम्भवादिति ध्येयम् । आदर्श इति न सप्तम्यन्तं दर्पणवाचि किन्तु छान्दसं रूपमित्यभिप्रेत्य ददर्शेति तद्व्याख्यानमित्यप्याहुः । स्वमात्मानं स्वीयं देहं कृतं स्वस्त्ययनं मङ्गलं यस्य । लसन्मुखमित्यंतैर्विशेषणैर्विशिष्टमात्मानं ददर्श दृष्ट्वा च यदा सस्मारेत्यन्वयः ॥ ३० ॥

**स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ।**
**निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥ ३१ ॥**

**प्रकाशिका–** कुलस्त्री तु शिरः स्नानमुत्सवे स्नातुतैलतः । वारे वा पैत्रके कर्मण्यन्यदा कण्ठसंप्लवा इति स्मार्ताः । कृतं शिरः स्नानमभ्यंगो येन । भूषितत्वमेवाह ॥ निष्केति । निष्कं पदकम् कण्ठे ग्रीवायां यस्य ॥ ३१ ॥

**श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया ।**
**हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥**

**प्रकाशिका–** श्रोण्योः पूर्वपश्चिमश्रोणीभागयोः । रुचकेन कण्ठाभरणविशेषेण मङ्गलद्रव्येण कुङ्कुमादिना वा । रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोरित्यभिधानात् ॥ ३२ ॥

**सुभ्रुवा सुदता श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा ।**
**पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥**

**प्रकाशिका–** सुभ्रुवा सुदता चक्षुषेत्येकवचनानि जात्यपेक्षाणि । एतैरलकान्तैर्लसन्मुखं यस्य तम् । कथं भूतेन चक्षुषा । श्लक्ष्णो मनोहरः स्निग्धः स्नेहयुक्तोऽपाङ्गो नेत्रप्रांतेनावलोकनं यस्य तेन । पद्मकोशं स्पर्धत इति पद्मकोशस्पृत् तेन ॥ ३३ ॥

**यदा सस्मार ऋषभमृषीणां दयितं पतिम् ।**
**तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥ ३४ ॥**
**भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ।**
**निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥**

**प्रकाशिका**– निशाम्य दृष्ट्वा योगगतिं योगमार्गम्। सामर्थ्यमिति यावत्। संशयं, विस्मयम्
॥३४,३५॥

**स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत्।**
**आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनम्॥ ३६ ॥**

**प्रकाशिका**– संवीतौ कंचुकादिना परिवृतौ रुचिरौ च स्तनौ यस्य तत्॥ ३६ ॥

**विद्याधरीसहस्रेण सेव्यमानां सुवाससम्।**
**जातभावो विमानं तदारोहयदमित्रहन्॥ ३७ ॥**

**प्रकाशिका**– जातभावो जातस्नेहः। हे अमित्रहन्॥ ३७ ॥

**तस्मिन्नलुप्तमहिमा प्रिययानुषक्तो**
**विद्याधरीभिरुपचीर्णवपुर्विमाने।**
**बभ्राज उत्कचक उद्गुणपानवीच्य-**
**स्ताराभिरावृत इवोडुपतिर्नभस्स्थः॥ ३८ ॥**

**तात्पर्यम्**– **उद्गुणपानवीच्यः उत्तमामृतवीचीयुक्तः॥ ३८ ॥**

**प्रकाशिका**– तस्मिन्विमाने मुनिर्बभ्राजे। अलुप्तमहिमाऽपरिच्छिन्नमाहात्म्यः। उपचीर्णं शुश्रूषितं वपुर्यस्य। उत्कचक उद्गतदोष उत्कृष्टकुंतलो वा। कचः कलं दोषे च कुन्तले भ्रमरे तथेत्यभिधानात्। उद्गुणपानवीच्य इत्येतदप्रतीत्या व्याख्याति॥ उद्गुणेति। उद्गुणेत्यस्य तात्पर्यम्॥ उत्तमेति। पानेत्यस्य॥ अमृतेति। वीचयुक्तस्य। वीचीयुक्त इति। मत्वर्थे यत्प्रत्यय इति भावः। तथाचोत्कृष्टा गुणा माधुर्यादयो यस्य तद्गुणमुत्तमं पानं पेयममृतं तस्य वीच्यस्तरङ्गास्ता अस्य सन्तीति तथा। तथैष्ममृतपानकर्तेति यावदिति मूलार्थ इति भावः। अत्र दृष्टान्तमाह॥ ताराभिरिति। उत्कच इत्युद्गुणपानेति च विशेषणद्वयं दृष्टान्तोऽपि चन्द्रे यथायोग्यं योज्यम्। अत्र चन्द्रवन्मुनिर्नभ इव विमानं तारा इव स्त्रियः॥ ३८ ॥

**तेनाष्टलोकपविहारकुलाचलेन्द्र-**
**द्रोणीष्वनङ्गसखमारुतसौभगासु।**
**सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु**
**रेमे चिरं धनदवल्ललनावरूथी॥ ३९ ॥**

**प्रकाशिका**– तेन विमानेनाष्टलोकपानामिन्द्रादीनां विहारो यस्मिन्कुलाचलेन्द्रे मेरौ तस्य द्रोणीषु दरीष्वनङ्गः कामस्तस्य सखा यो मारुतः शीतसुगन्धमन्दानिलस्तेन सौभगं सौरतखेदपरिहारजं सुखं यासु। नुतः स्तुतो द्युधुनिः स्वर्गनदी गङ्गा तस्याः पातेन शिवः स्वनो यासुतासु रेमे ललनावरूथी स्त्रीसमूहवान् ॥ ३९ ॥

**वैस्रम्भके सुरवने नन्दने पुष्पभद्रके।**
**मानसे चैत्ररथ्ये च स रेमे रामया सह ॥ ४० ॥**

**प्रकाशिका**– वैस्रंभकानि देवोद्यानानि तेषु मानसे च सरसि ॥ ४० ॥

**भ्राजिष्णुना विमानेन कामगेन महीयसा।**
**वैमानिकानत्यशेत चरन् लोकान् यथानिलः ॥ ४१ ॥**

**प्रकाशिका**– अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥

**किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्।**
**यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥**

**प्रकाशिका**– कुत इत्यतः श्रीहरिचरणशरणानामसाध्यस्याभावादित्याह ॥ किं दुरापादनमिति। उद्दामचेतसामुत्कृष्टबुद्धीनां तीर्थं गङ्गा पदोर्यस्य स तीर्थपत्तस्य हरेः ॥ ४२ ॥

**प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया।**
**बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥**

**प्रकाशिका**– गोलं मण्डलं स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावन्तम् ॥ ४३ ॥

**विभज्य नवधात्मानं मानवीं सुरतोत्सुकाम्।**
**रामां निरमयन् रेमे वर्षपूगान् मुहूर्तवत् ॥ ४४ ॥**

**प्रकाशिका**– आत्मानं योगसामर्थ्यान्नवधाविभज्य नवशरीराणि गृहीत्वा मानवीं रामामपि नवधा विभज्यनिरमयन्नितरां रमयन्रेमे ॥ ४४ ॥

**तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता।**
**न चाबुद्ध्यत तं कालं पत्यापीच्येन सङ्गता ॥ ४५ ॥**

**तात्पर्यम्– 'प्राप्तषोडशवर्षः सन्नावीच्य इति कथ्यत' इत्यभिधानम् ॥ ४५ ॥ इति तृतीयतात्पर्ये चतुर्विंशोऽध्यायः ॥ २४ ॥**

**प्रकाशिका–** आपीच्ये पत्या सङ्गतेत्यत्रापीच्यशब्दार्थं प्रमाणेनैवाह ॥ प्राप्तेति । पुमानिति शेषः। तथा च प्राप्तषोडशवर्षेण यौवनावस्थामापन्नेन पत्येति मूलार्थ इति भावः ॥ ४५,४६ ॥

**एवं योगानुभावेन दम्पत्यो रममाणयोः ।**
**शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥**

**तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित् ।**
**नवधा विधाय रूपं स्वं सत्यसंकल्पविद् विभुः ॥ ४७ ॥**

**प्रकाशिका–** आत्मना स्वमनसाऽऽत्मवित्परमात्मानुसन्धानवान्मुनिः स्वरूपं नवधा विधाय तामपि नवधा भावयंस्तस्यां नवधा विभक्तायां रेतो गर्भमाधत्त । कुत एवं चकारेत्यत उक्तम् ॥ सत्यसङ्कल्पेति । हरेः सत्यसङ्कल्पं वेत्तीति सत्यसङ्कल्पविद्धरिसङ्कल्पं ज्ञात्वैवं कृतवानिति भावः॥४६,४७॥

**ततस्ताः सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ।**
**सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥**

**प्रकाशिका–** स्त्रियः प्रजाः स्त्रीरूपाः प्रजा अपत्यानि प्रसवानन्तरमुभावप्येकैकरूपवन्तौ जाताविति द्रष्टव्यम् ॥ ४८ ॥

**पतिं सा प्रव्रजिष्यन्तं तदालक्ष्योशती सती ।**
**स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥**

**प्रकाशिका–** प्रव्रजिष्यन्तं चतुर्थाश्रमस्वीकर्तुमिच्छन्तमुशती पुत्रेच्छावती पतिव्रता स्मयमाना बहिः । अन्तस्तु विक्लवेन व्याकुलेन विदूयता सन्तप्यमानेन ॥ ४९ ॥

**लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ।**
**उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥**

**सर्वं तद् भगवान् मह्यमुपोवाह प्रतिश्रुतम् ।**
**अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥**

**प्रकाशिका–** उपोवाह सम्पादितवान् । अभयमैहिकमामुष्मिकं च ॥ ५०,५१ ॥

**ब्रह्मन् दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ।**
**कश्चित् स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥**

**प्रकाशिका–** एतदेवाह ॥ ब्रह्मन्निति । दुहितृभिः समा दुहितृयोग्याः । एवमैहिकमभयं प्रार्थयित्वाऽऽमुष्मिकं तत्प्रार्थयते ॥ कश्चिदिति । कश्चित्पुत्रो विशोकाय मोक्षाय ॥ ५२ ॥

**एतावतालं कालेन व्यतिक्रान्तेन मे प्रभो ।**
**इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥**

**प्रकाशिका–** परित्यक्तो विस्मृतः परमात्मा हरिर्यथा सा तथा तस्याः ॥ ५३ ॥

**इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः ।**
**अजानन्त्या परं भावं तथाप्यस्त्वभवाय मे ॥ ५४ ॥**

**प्रकाशिका–** परं भावं तवोत्तमं योगसामर्थ्यम् । तथाप्येवं मदीयदोषसद्भावेऽपि यतः परमभागवते त्वयि प्रसङ्गः कृतोऽतः सोऽभवाय मोक्षायास्तु ॥ ५४ ॥

**संयोगः संसृतेर्हेतुरसत्सु विहितो धिया ।**
**स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥**

**प्रकाशिका–** एतदेवोपपादयति ॥ संयोग इति । निःसंगत्वाय वैराग्याय तद्द्वारा मोक्षायेत्याशयः। ॥ ५५ ॥

**नेह यत् कर्म धर्माय न विरागाय कल्पते ।**
**न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥**

**प्रकाशिका–** यो धर्मं मोक्षं वा न सम्पादयति तस्य जन्म व्यर्थमित्याह ॥ नेहेति । इह भारते वर्षे । धर्माय धर्माख्यपुरुषार्थप्रयोजनाय कर्म क्रियमाणम् । यस्य देहिनो व्यापारः स देही ॥ ५६ ॥

**साहं भगवतो नूनं वञ्चिता मायया दृढम् ।**
**या त्वां विमुक्तिदं प्राप्य न मुमुक्षे ह बन्धनात् ॥ ५७ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे चतुर्विंशोऽध्यायः ।**

**प्रकाशिका–** न मुमुक्षे मोक्तुमिच्छां न कृतवती ॥ ५७ ॥ इति श्रीभागवतटिप्पण्यां चतुर्विंशोऽध्यायः ॥ ३-२४ ॥

## अथ पञ्चविंशोऽध्यायः

मैत्रेय उवाच–

निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ।
दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥

तात्पर्यम्– 'मालिनी शालिनी माल्या चार्या भार्येति चोच्यत' इति च ॥ १ ॥

प्रकाशिका– निर्वेदं वैराग्यं वदितुं शीलमस्यास्तीति निर्वेदवादिनी ताम् । अत्र शालिनीमित्यस्यार्थं प्रमाणेनैव दर्शयति ॥ मालिनीति । तथा च शालिनीं भार्यामिति व्याख्येयमिति भावः । शुक्लस्य भगवतो यदभिव्याहृतं सम्भूय स्वांशकलयेत्यादिरूपं वचनम् ॥ १ ॥

ऋषिरुवाच–

मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ।
भगवांस्तेऽक्षरो गर्भमदूरात् संप्रपत्स्यते ॥ २ ॥

प्रकाशिका– आत्मानं त्वां मां च प्रति । अक्षरो देहनाशशून्यः ॥ २ ॥

धृतव्रता सुभद्रं ते दमेन नियमेन च ।
तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥

स त्वयाराधितः शुक्लो वितन्वन् मामकं यशः ।
छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥

प्रकाशिका– स शुक्लस्त्वयाऽऽराधितः सन् ते औदर्यः पुत्रतयाऽवतीर्णो हृदयग्रन्थिमहंकारममकाररूपं संसारबीजं छेत्स्यति । ब्रह्म चतुर्मुखं भावयतीति ब्रह्मभावनः । ब्रह्म परं ब्रह्म भावयत्युपदिशतीति वा ॥ ३,४ ॥

मैत्रेय उवाच–

देवहूत्यपि संदेशं गौरवेण प्रजापतेः ।
सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद् गुरुम् ॥ ५ ॥

प्रकाशिका– श्रद्धाय विश्वस्य ॥ ५ ॥

**तस्यां बहुतिथे काले भगवान् मधुसूदनः ।**
**कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥**

**तात्पर्यम्– 'नावतारेष्वपि हरेर्देहः शुक्लादिसम्भवः । तथापि शुक्लसंस्थः सन्मातृदेहं प्रविश्य च । विलाप्य शुक्लं तत्रैव केवलज्ञानरूपकः । उदेति भगवान्विष्णुः काले लोकं विमोहयन्नि'ति महावाराहे ॥ अग्निरिव दारुणीति व्यक्तिस्थानमात्रत्वे दृष्टान्तः ॥ ६ ॥**

**प्रकाशिका–** बव्हस्तिथयोऽवयवभूता यस्य कालस्य बहुतिथिस्तस्मिन्काले गते सति । कार्दमं वीर्यं रेत आपन्नः प्रविष्टस्तस्यां देवहूत्यां जज्ञे । अत्र शुक्लशोणितसंबन्धेनास्मदादिदेहवद्भगवद्देहो जात इति प्रतीयते । न चाप्राकृतविग्रहे तत्संभवति । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ नावतारेष्वपीति । काले दशमे मासि । तथाच लोकमोहनाय भगवतैवं प्रदर्शितम् । यत्तत्रानूदितं न तु वास्तवमुक्तमतो न कोऽपि दोष इति भावः । नन्वग्नेर्दारुव्यतिरेकेणानवस्थानवत् कपिलस्य देवहूतिव्यतिरेकेणावस्थानाभावात्कथं दारुण्यग्निरिवेति दृष्टान्त इत्यतोऽस्य तात्पर्यमाह ॥ अग्निरिव दारुणीति । मात्रशब्देन तद्व्यतिरेकेण स्थित्यभावं व्यावर्तयति । अत एव जज्ञ इति व्यक्त्यर्थक-जनिधातुप्रयोग इति भावः ॥ ६ ॥

**अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ।**
**गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥**

**प्रकाशिका–** घनाघना इत्येकं पदं वर्षन्तो मेघा इत्यर्थः। जगर्जुरिति शेषः ॥ ७ ॥

**पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ।**
**प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥**

**प्रकाशिका–** अपवर्जिताः प्रक्षिप्ताः ॥ ८ ॥

**तत् कर्दमाश्रमपदं सरस्वत्या परिप्लुतम् ।**
**स्वयम्भूः सार्धमृषिभिर्मरीच्यादिभिरभ्यगात् ॥ ९ ॥**

**प्रकाशिका–** परिप्लुतं चेष्टितम् ॥ ९ ॥

**भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ।**
**तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥**

तात्पर्यम्– 'महागुणाभिपूर्णत्वं सत्वमित्युच्यते बुधैरि'ति वामने ॥ १० ॥

प्रकाशिका– सत्त्वेनेत्यस्य सत्त्वगुणेनेत्यन्यथाप्रतीतिवारणायात्र विवक्षितमर्थं प्रमाणेनैव दर्शयति महागुणाभिपूर्णत्वमिति । चशब्दो वामने पूर्वकृतसमुच्चयार्थः । तथाच सत्त्वेन महागुणपूर्णेनांशेन स्वरूपांशेन जातमभिव्यक्तमिति व्याख्येयमिति भावः । स्वः परमात्मना राजत इति स्वराट् ॥१०॥

**सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ।**
**प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥ ११ ॥**

प्रकाशिका– तस्य हरेश्चिकीर्षितम् कर्तुमिष्टं सांख्यशास्त्रनिर्माणं सभाजयन्पूजयन् । साध्विति बहुमानयन्निति यावत् । अत एव प्रकर्षेण हृष्यमाणैरसुभिरिन्द्रियैः । चकाराद्देवहूतिं च ॥ ११ ॥

**ब्रह्मोवाच–**

**त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ।**
**यन्मे सञ्जगृहे वाक्यं भवान् मानद मानयन् ॥ १२ ॥**

**एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ।**
**बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥**

प्रकाशिका– तत्र त्वयेति पञ्चभिः कर्दमं प्रत्याह । अपचितिः पूजा ॥ १३ ॥

**इमा दुहितरः सत्यस्तव वत्स सुमध्यमाः ।**
**सर्गमेताः प्रभावैः स्वैर्बृंहयिष्यन्ति नैकधा ॥ १४ ॥**

प्रकाशिका– सत्यः पतिव्रताः । हे वत्स कर्दम । बृंहयिष्यन्ति वर्धयिष्यन्ति ॥ १४ ॥

**अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ।**
**आत्मजाः परिदेह्यङ्ग विस्तृणीहि यशो भुवि ॥ १५ ॥**

प्रकाशिका– ऋषिमुखेभ्यो मरीच्यादिभ्यः । विस्तृणीहि विस्तृतं कुरु ॥ १५ ॥

**वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ।**
**भूतानां शेवधिं देहं बिभ्राणं कपिलं मुनिम् ॥ १६ ॥**

**प्रकाशिका–** स्वमायया स्वेच्छया भूतानां मुक्तियोग्यानां शेवधिं पुरुषार्थसाधने निधिं शेवधिस्थानीयं देहं बिभ्राणम् ॥ १६ ॥

**ज्ञानविज्ञानयोगेन कर्मणामुद्धरंश्च यः ।**
**हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥**

**प्रकाशिका–** इदानीं देवहूतिं प्रत्याह त्रिभिः । ज्ञानेति । ज्ञानविज्ञानाख्ययोगेन मोक्षोपायेन कर्मणां संसारमूलभूतानि कर्माण्युद्धरन् उत्पाटयिष्यन् । हिरण्यकेशादिस्वलक्षणलक्षितः ॥ १७ ॥

**एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ।**
**अविद्यासंशयग्रन्थिं च्छित्त्वा गां विचरिष्यति ॥ १८ ॥**

**प्रकाशिका–** ते तवाविद्याऽज्ञानमूलो भ्रमः संशयः परापरतत्त्वविषयकस्तयोर्ग्रंथिं मूलकारणभूतं जडान्तःकरणं तत्त्वविज्ञापनेन छित्वा गां भूमिमन्येषामपि भक्तानां तत्त्वविज्ञापनाय विचरिष्यति ॥ १८ ॥

**अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसम्मतः ।**
**लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥ १९ ॥**

**तात्पर्यम्– 'सम्यग्ज्ञानं तु साङ्ख्यं स्यात्तदर्थो योग उच्यत' इति कापिलेये ॥ १९ ॥**

**प्रकाशिका–** नायं दुष्टकपिल इत्याह ॥ अयमिति । सिद्धगणानां ज्ञानिसमूहानामधीशः कुतः । यतः सांख्याचार्यैः सुसंमतः । अत्र दुष्टकपिलस्यापि सांख्याचार्यसंमतत्वात्तद्व्यावर्तनाय सांख्य शब्दार्थं प्रमाणेनैव दर्शयति ॥ सम्यग्ज्ञानं त्विति । तुशब्दोऽवधारणे । तदर्थस्तज्जनको यमनियमादिः । तथा च सांख्याचार्यैः सम्यग्ज्ञानप्रवर्तकैः सुसंमतः स्वगुरुत्वेन सम्यङ्निश्चित इत्यर्थः । दुष्टस्तु नैतादृश इति भावः ॥ १९ ॥

**मैत्रेय उवाच–**

**तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः ।**
**हंसो हंसेन यानेन स्वधाम प्रत्यपद्यत ॥ २० ॥**

**प्रकाशिका–** कुमारैः सनकादिभिः । सहेत्यस्य पूर्वोत्तरत्र च सम्बन्धः । हंसो निर्मलो ब्रह्मा । ॥ २० ॥

गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ।
यथोदितं स्वदुहितॄः प्रादाद् विश्वसृजां ततः ॥ २१ ॥

प्रकाशिका– शतधृतौ शतसंख्याकगुणावधितारतम्यावधिभूते ब्रह्मणि विश्वसृजां मरीच्यादीनाम् ॥ २१ ॥

मरीचये कलां प्रादादनसूयामथात्रये ।
श्रद्धामङ्गिरसेऽयच्छत् पुलस्त्याय हविर्भुवम् ॥ २२ ॥

प्रकाशिका– एतदेव विविच्याह ॥ मरीचय इति । कलां कलानाम्नीम् । एवमुत्तरत्रापि ॥ २२ ॥

पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ।
ख्यातिं च भृगवेऽयच्छद् वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥

प्रकाशिका– युक्तां योग्यामिति सर्वत्र विशेषणम् ॥ २३ ॥

अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ।
विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत् ॥ २४ ॥

प्रकाशिका– वितन्यते संबद्धः क्रियते । समलालयद्धनमानाभ्यां सन्तोषितवान् ॥ २४ ॥

ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम् ।
प्रातिष्ठन् नन्दमापन्नाः स्वं स्वमाश्रममण्डलम् ॥ २५ ॥

प्रकाशिका– कृतदारा विवाहितभार्याः । नन्दं तोषमापन्नाः प्राप्ताः सन्तः ॥ २५ ॥

स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ।
विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥

तात्पर्यम्– 'युगत्रयावतारेण त्रियुगश्चेति कथ्यत' इति पाद्मे ॥ २६ ॥

प्रकाशिका– पुनः कर्दमचरितशेषं वक्ति ॥ स चेति । चशब्दार्थः प्रकृतत्वानुसन्धनार्थः । अत्र त्रियुगमित्येतदप्रतीत्या प्रकृतसङ्गततया प्रमाणेनैव व्याख्याति ॥ युगत्रय इति । तथा च कृतादीनि त्रीणि युगान्यवतारार्थं यस्य स त्रियुगस्तमिति व्याख्येयमिति भावः । विविक्ते रहसि ॥ २६ ॥

**अहो पापच्यमानानां निरये स्वैरमङ्गलैः ।**
**कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥**

**प्रकाशिका–** स्वाभीष्टं प्रष्टुं कपिलमभिनन्दयन्नाह ॥ अहो इत्यादि सप्तभिः । निरये नरकतुल्ये संसारे पापच्यमानानां पुनःपुनर्भृशं दह्यमानानां स्वैः स्वीयैरमङ्गलैः ॥ २७ ॥

**बहुजन्मविपक्केन सम्यग् योगसमाधिना ।**
**द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥**

**प्रकाशिका–** बहुषु जन्मसु विपक्केन सुप्रसिद्धेन । विपाकेनेति पाठे बहुभिर्जन्मभिर्विपाकः सिद्धिर्यस्य तेनेति व्याख्येयम् । सम्यग्योगः समीचीनो भक्तियोगः । अष्टाङ्गयोगो वा । तेन जातेन समाधिना चित्तैकाग्र्येण शून्यागारेषु विविक्तस्थलेषु ॥ २८ ॥

**स एव भगवानद्य हेलनं नगणय्य नः ।**
**गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥**

**प्रकाशिका–** हेलनमवज्ञां न गणय्यागणयित्वा । उचितमेव तस्यैतदित्याह ॥ यः स्वानां भक्तानां पक्षमभीष्टं पुष्णातीति पक्षपोषण इति ॥ २९ ॥

**स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ।**
**चिकीर्षुर्भगवञ्छर्म भक्तानामभिवर्धनः ॥ ३० ॥**

**प्रकाशिका–** भक्तानां ज्ञानमभिवर्धनस्तेषामेव शर्म सुखं चिकीर्षुस्त्वं तव पुत्रत्वेनावतरिष्यामीति स्वीयवाक्यमृतं सत्यं कर्तुं मे गृहे भार्यायामवतीर्णोऽसीत्यन्वयः । भक्तशर्मकरणाय तमभिवर्धनाय स्ववाक्यसत्यत्वकरणाय चेत्यवतार इति गम्यते ॥ ३० ॥

**तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ।**
**यानि यानीह रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥**

**तात्पर्यम्– यानि यानि ब्रह्मादिरूपाणि रोचन्ते स्वजनानां तान्येव ते व्यक्त्यर्थमभिरूपाणि । 'व्यक्तो भवेद्धरिस्तत्र यत्स्थानं रचितं सतामि'ति कौर्मे ॥ ३१ ॥**

**प्रकाशिका–** एतदेव विशदयति ॥ तान्येवेति । अस्य श्लोकस्य प्रकृतसङ्गतां योजनां दर्शयति ॥ यानीति । यानि ब्रह्मादिरूपाणि ब्राह्मणादिशरीराणि स्वजनानां ब्रह्मादिदेवानाम् । व्यक्त्यर्थमिति

शेषपूरणम् । अवतारार्थं प्रवेशायाभिरूपाणि प्रियाणि भवन्ति । अत्र प्रमाणसंवादमाह ॥ व्यक्त इति । स्थानमित्यनेन रूपशब्द उक्तार्थः । सतां ब्रह्मादीनाम् । ततश्चायं श्लोकार्थः ॥ अरूपिणः प्राकृतशरीररहितस्य तवावताराय प्रवेष्टुं स्वजनानां ब्रह्मादीनां भक्तानामिह भूमौ यानि यानि रूपाण्यत्रिपराशरादिब्राह्मणशरीराणि वा दशरथवासुदेवादिक्षत्रियशरीराणि वा रोचन्तेऽभीष्टानि भवन्ति । तान्येव तेऽभिरूपाणि प्रियाणि भवन्ति । अत इदानीमवताराय ब्राह्मणे मयि प्रवेशस्य ब्रह्मद्यभीष्टत्वान्मां प्रविश्य मद्गृहेऽवतीर्णोऽसीति भावः ॥ ३१ ॥

**त्वां सूरिभिस्तत्त्वबुभुत्सयाद्धा सदाभिवादार्हणपादपीठम् ।**
**ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रियापूर्णमहं प्रपद्ये ॥ ३२ ॥**

**प्रकाशिका–** ऐश्वर्यमीश्वरत्वम् । वैराग्यमितरस्यासारताज्ञानम् । श्रीःसंपत् । ताभिः आ सम्यक् पूर्णम् ॥ ३२ ॥

**परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम् ।**
**आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥**

**तात्पर्यम्– वेदैर्वृतत्वाद्भगवांस्त्रिवृदित्युच्यते बुधैरि'ति च ॥ ३३ ॥**

**प्रकाशिका–** त्रिवृतमित्येतत्त्रिभिः सत्त्वादिगुणैर्वृतमित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति ॥ वेदैरिति । वृतत्वात् प्रतिपादितत्वात् । तथाच त्रिभिर्वेदैर्वृतं तात्पर्यतः प्रतिपादितमिति मूलार्थ इति भावः । आत्मानुभूत्या स्वरूपज्ञानेनानुगतोऽवगतो विषयीकृतः प्रपञ्चो येन स तथा तम् । स्वच्छन्दशक्तिं स्वेच्छानुसारिजगत्सृष्ट्यादिशक्तियुतम् । नाम्ना कपिलम् ॥ ३३ ॥

**तं त्वाभिपृच्छेऽद्य पतिं प्रजानां त्वयावतीर्णेन उताप्तकामः ।**
**परिव्राजां पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन् विशोकः ॥ ३४ ॥**

**प्रकाशिका–** इदानीं स्वाभीष्टं कर्तुमाज्ञां पृच्छति ॥ तन्त्वेति । उतशब्दोऽप्यर्थः । आप्तकामोऽपि परिव्राजां संन्यासिनां पदवीं मार्गं हृदि त्वां युंज्यन् त्वामुद्दिश्य मनोयोगं कुर्वन् ॥ ३४ ॥

**भगवानुवाच–**

**मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ।**
**अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥**

तात्पर्यम्– सत्यलौकिके यथार्थज्ञानविषये । आभासो ज्ञानमालोको लोकाभासश्च कथ्यत' इत्यभिधानम् ॥ ३५ ॥

**प्रकाशिका–** त्वं कस्मान्मद्गृहे जात इत्याशङ्कायां तत्र निमित्तमाह ॥ मयेति । अत्र सत्यलौकिक इत्यस्याप्रतीत्याऽर्थमाह ॥ सत्यलौकिक इति । सत्येत्यस्यार्थः यथार्थेति । अबाध्येत्यर्थः । विषयविशेषणमेतत् । न तु ज्ञानविशेषणम् । तथात्वे सत्यलोकशब्दात्प्रत्ययोत्पत्तौ सत्यपदे आदिवृद्धिप्रसङ्गात् । लोकपदस्यार्थः ॥ ज्ञानेति । प्रत्ययार्थः ॥ विषय इति । तथाच सत्योऽबाध्यश्चासौ लौकिको ज्ञानविषयश्च तस्मिन्निति मूलं योज्यमिति भावः । यथार्थशब्दस्यार्थानतिक्रमार्थस्य ज्ञानविशेषणत्वे तु उक्तमूलयोजनालब्धार्थप्रदर्शनमेवेदं न व्याख्यानमिति द्रष्टव्यम् । भवेदेवं व्याख्यानं यदि लोकशब्दो ज्ञानवाची स्यादित्यतस्तत्राभिधानं दर्शयति ॥ आभास इति । ततश्चायं श्लोकार्थः ॥ हे मुने । तुभ्यं पुत्रस्तेऽहं भविष्यामीति यदवोचं तद्दतं सत्यं कर्तुं मयाजनि । ननूक्तमपि कस्मात्सत्यं कर्तव्यमित्यत उक्तम् । हि यस्माल्लोकस्य सत्यलौकिकेऽबाध्ये ज्ञानविषये श्रुत्यादिप्रतीतार्थस्य अबाध्यत्वनिर्णयायेति यावत् । मया प्रोक्तं मदीयवचनमितिहासपुराणादिरूपं प्रमाणं निर्णायकमथ तस्मान्ममानृतवादित्वे लोके मद्वचनेन श्रुत्यर्थं न कुर्यादिति भावः ॥ ३५ ॥

**एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।**
**प्रसंख्यानाय तत्त्वानां समत्वायात्मदर्शिनाम् ॥ ३६ ॥**

**प्रकाशिका–** त्वद्गृहे मे जन्म न तवैवोपकारकं किन्तु सर्वेषां सतामित्याह ॥ एतन्म इति । दुराशयाद्दुःखस्थानात्संसारात् । स्थानेऽभिप्राय आशय इत्यभिधानात् । प्रसङ्ख्यानाय सम्यग्ज्ञापनायात्मदर्शिनां परमात्मापरोक्षज्ञानिनां समत्वाय साहित्याय । विशेषज्ञानलाभायेति यावत् ॥३६॥

**एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ।**
**तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥**

**प्रकाशिका–** नन्वात्मज्ञानमार्गः पूर्वसिद्ध एवास्त्यतः पुनस्तत्प्रदर्शनं तव किमर्थमित्यत आह ॥ एष इति । आत्मपथ आत्मज्ञानमार्गोऽव्यक्तः संप्रदायप्रवर्तकाभावात्तिरोहितः ॥ ३७ ॥

**गच्छ कामं मयाऽऽपृष्टो मयि संन्यस्तकर्मणा ।**
**जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥ ३८ ॥**

**प्रकाशिका–** कामं यथेच्छमापृष्टोऽनुज्ञातः संन्यस्तेनार्पितेन कर्मणा मृत्युं संसारकारणं मनः । ॥ ३८ ॥

**मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ।**
**आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥ ३९ ॥**

**प्रकाशिका–** आत्मनि स्वरूपदेहे आत्मना मनसाऽभयं मोक्षमृच्छसि प्राप्स्यसि ॥ ३९ ॥

**विश्वमेतद्धि शास्त्रेण विज्ञायात्मानमीश्वरम् ।**
**मुनिः शान्तमनोवाक्यस्तदा नख्यात्युपप्लवः ॥ ४० ॥**

**तात्पर्यम्– विश्वमेतदेतादृशं असारं यतः । अत ईश्वरं विज्ञाय । नाख्यात्युपप्लवः दुःखाज्ञानाद्युपद्रवो न ॥ ४० ॥**

**प्रकाशिका–** मोक्षे वैराग्यं मुख्यसाधनमित्याशयेनाह ॥ विश्वमिति । अत्र विश्वमात्मानं चेश्वरं विज्ञायेत्यन्यथाप्रतीतिवारणाय योजनां दर्शयति ॥ विश्वमिति । एतदित्यस्यार्थः ॥ एतादृशमिति । एतादृशं इत्युक्तमेव विवृणोति ॥ असारमिति यत इत्यनयोरध्याहारः । अन्यथा वैराग्यस्येश्वरज्ञानसाधनत्वाभावात् । उपप्लवशब्दार्थं दर्शयन् नाख्यातीत्यस्य तात्पर्यमाह ॥ दुःखाज्ञानादीति । उपप्लवशब्द एवोपद्रववाची । दुःखाज्ञानादीत्येतद्योग्यतालब्धमुक्तम् । नवा ख्यातीत्यस्य तात्पर्यम् ॥ नेति । स्वरूपेणैवेत्यर्थः । अन्यथा न ख्याति न भासत इति तदनुभवनिषेध एव स्यान्न तु तस्येत्थं तात्पर्यमुक्तमित्यवगन्तव्यम् । मूले तु दुःखाद्यनुभवस्यैवानर्थत्वमभिप्रेत्य तत्परिहाराकथनाय न । ख्यातीत्युक्तम् ॥ ततश्चायमर्थः ॥ विश्वमेतदेतादृशमसारं यतोऽतस्तत्परित्यज्यात्मानमादानादिकर्तारमीश्वरं सर्वेश्वरं शास्त्रेण विज्ञाय मुनिर्मननशीलः शान्तमनोवाक्यो निवृत्तान्यविषयकमनोवाग्व्यापारो यदा भवति तदोपप्लवो दुःखाज्ञानाद्युपद्रवो न ख्याति न भासते पुनस्तद्नुभवो न भवति उपद्रवस्वरूपमेव न भवतीत्यर्थः ॥ ४० ॥

**मात्र आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ।**
**वितरिष्ये यया चासौ भयं चातितरिष्यति ॥ ४१ ॥**

**प्रकाशिका–** मम मातुश्चिन्ता तव माभूदित्याह ॥ मात्र इति । आध्यात्मिकीं परमात्मादितत्त्वविषयां शमनीमुन्मूलनीं वितरिष्ये उपदेक्ष्यामि । असौ माता ययाचेत्यत्र चकारस्त्वच्छिक्षासमुच्चायकः परमानन्दं च प्राप्स्यसीति द्वितीय चशब्दार्थः ॥ ४१ ॥

**मैत्रेय उवाच–**

**एवं समुदितस्तेन कपिलेन प्रजापतिः ।**
**दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४२ ॥**

**व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ।**
**निःसङ्गो व्यचरत् क्षोणीमनग्निरनिकेतनः ॥ ४३ ॥**

प्रकाशिका– मौनं मुनीनां संबन्धि व्रतमहिंसालक्षणं मठादिनिकेतनरहितः ॥ ४३ ॥

**मनो ब्रह्मणि युञ्जानो यत् तत् सदसतः परम् ।**
**गुणावभासे विगुण एकभक्त्यानुभाविते ॥ ४४ ॥**

प्रकाशिका– यत्सदसतो मूर्त्तामूर्त्तात्प्रपञ्चाद्विलक्षणं तत्तस्मिन् ब्रह्मणि श्रुत्यादिभिर्गुणानामवभासो यस्य स तथा । तस्मिन् गुणैर्ज्ञानान्दादिभिरवभास इति गुणावभासस्तस्मिन्निति वा । विगुणे विगतगुणत्रये । एकभक्त्या केवलभक्त्याऽनुभाविते ध्याते ॥ ४४ ॥

**निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ।**
**प्रत्यग्रः शान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४५ ॥**

तात्पर्यम्– 'अनन्याधीनशक्तित्वाद्धरिः स्व इति चोच्यत' इति मात्स्ये । प्रत्यग्रः प्रत्यग्रतिः ॥ ४५ ॥

प्रकाशिका– पुनः कर्दमस्थितिमाह ॥ निरहङ्कृतिरिति । अहं कर्तेति बुद्धिशून्यः । इदं देहादि ममेति बुद्धिशून्यो निर्मानो निर्द्वंद्वः शीतोष्णद्वंद्वकृतोपद्रवरहितः समदृग्योग्यतानुसारेण तत्तदर्थ-ज्ञानी । स्वदृगित्यत्र स्वशब्दः स्वात्मवाची न स्वात्मज्ञानस्य मोक्षसाधनत्वाभावात्किन्तु परमात्म-वाच्येवेत्यभिप्रेत्य तस्य परमात्मवाचकत्वे निमित्तं प्रमाणेनैव दर्शयति ॥ अनन्येति । स्वातन्त्र्यादित्यर्थः । चशब्दस्तद्ग्रन्थोक्तसमुच्चायकः । तथाच स्वतन्त्रं हरिं पश्यतीति स्वदृगिति मूलार्थ इति भावः । प्रत्यग्र इत्यस्यापि प्रकृतसङ्गतमर्थं दर्शयति ॥ प्रत्यग्रतिरिति । तथा च प्रत्यक् स्वान्तर्यामिणि रतिः दर्शनाविर्भूतं सुखं यस्य स प्रत्यग्रतिरिति मूलं व्याख्येयमिति भावः । शान्तधीर्निश्चलबुद्धिः धीरः संपद्यापदि चैकप्रकारेण हरिबुद्धावेवाचलरमणशीलः ॥ ४५ ॥

**आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।**
**अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥**

**वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।**
**परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥ ४७ ॥**

तात्पर्यम्– 'भूतगर्भश्च भूतस्थः पूर्ण एवंद्विरूपवान् । अत आत्मेति तं प्राहुः सदैवाप्तगुणो यत' इति च ॥ ४७ ॥ इति तृतीयतात्पर्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

**प्रकाशिका–** तस्यापरोक्षज्ञानप्रकारमाह ॥ आत्मानमिति । अत्रात्मशब्दद्वयं भगवत्परमेव न स्वात्मपरमित्यभिप्रेत्य समाख्याप्रमाणं पठति ॥ भूतगर्भश्चेति । भूतानि गर्भे यस्येत्यनेन भूतानि चात्मनीत्येतदुक्तार्थम् । द्विरूपवानित्यनेनान्योन्याश्रयत्वशङ्का परिहृतेति ज्ञेयम् । पूर्ण एव यतः । ननु पूर्णत्वेऽप्यात्मशब्दवाच्यत्वं कुत इत्यतस्तस्यैव तच्छब्दनिरुक्तिलभ्यत्वादित्याह ॥ सदैवाप्तगुण इति । प्राप्तगुण इत्यर्थः । आङ् पूर्वकात्तनोतेर्डमन् प्रत्यये ह्यात्मेतिपदं पूर्णता पर्यायविस्तृतिवाचि विस्तृतिश्च देशतः कालत इव गुणतोऽपि विवक्षितेति भावः । तथा चात्मानं गुणपूर्णं भगवन्तं सूक्ष्मरूपेण नियामकतयाऽवस्थितमात्मनि व्याप्तरूपे वासुदेवे सर्वत्र स्थित्वाक्रीड इति । सर्वज्ञे अशेष विशेषाकारेण सर्वं जानाति । प्रत्यगात्मनि स्वान्तर्यामिणि भक्तिभावेन लब्धात्मा वशीकृत आत्ममनोयस्य अत एव मुक्तबन्धनः मुक्तदेहाभिमानः ॥ ४६,४७ ॥

**इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।**
**भगवद्भक्तियोगेन प्राप्तो भागवतीं गतिम् ॥ ४८ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे पञ्चविंशोऽध्यायः ।**

**प्रकाशिका–** मुक्तावन्तरङ्गसाधनानि दर्शयन्नाह ॥ इच्छाद्वेषेति ॥ ४८ ॥ इति श्रीभागवत-टिप्पण्यां पञ्चविंशोऽध्यायः ॥ ३-२५ ॥

## अथ षड्विंशोऽध्यायः

**राजोवाज–**

**कपिलस्तत्त्वसंख्याता भगवानात्ममायया ।**
**जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥**

**प्रकाशिका–** मैत्रेयेणोक्तं शुकमुखात् श्रुत्वा राजा देवहूत्यै कपिलेनोपदिष्टं श्रोतुकाम उक्तमनूद्य प्रशस्यावशिष्टं कपिलोपदिष्टप्रकारं कथयेति प्रार्थयते ॥ कपिल इत्यादिना । तत्त्वसङ्ख्याता तत्त्व-गणनपरशास्त्रनिर्माता । साक्षादनुपचारेणाजो विष्णुः स्वयमेव जातो न तु पृथ्वादाविवाविष्टः। नृणा-मधिकारिणामात्मप्रज्ञप्तये स्वस्वरूपज्ञापनायात्ममायया स्वस्वरूपेच्छया जातो यः कपिलः ॥१॥

**अर्हस्य धर्मिणां पुंसां गरिम्णः सर्वयोगिनाम् ।**
**विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥**

**प्रकाशिका–** यः कपिलस्तस्य धर्मिणां निवृत्तधर्मवतां पुंसामर्हस्य सामान्यस्य गरिम्णो गुरुतमस्य विश्रुतौ विशेषेण श्रवणे सति श्रुतो देवो हरिर्येन तस्यापि मेऽसव इन्द्रियाणि भूरि यथा तथा तृप्यन्ति परमानन्दं प्राप्नुवन्ति ॥ २ ॥

**यद् यद् विधत्ते भगवान् स्वच्छन्दात्मात्ममायया ।**
**तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥**

**प्रकाशिका–** स्वच्छन्दः स्वेच्छाधीन आत्मा स्वरूपं यस्य । स्वतन्त्र इति यावत् । आत्ममायया स्वेच्छया प्रकृत्या वा कीर्तन्यानि कीर्तनयोग्यानि ॥ ३ ॥

**शुक उवाच–**
**द्वैपायनसखश्चैवं मैत्रेयो भगवांस्तथा ।**
**प्राहैनं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥**

**प्रकाशिका–** एवं यथा त्वयाऽहं प्रचोदित एवं विदुरेणान्वीक्षिक्यां ब्रह्मविद्यायां प्रचोदितः सन् प्रीत इदं वक्ष्यमाणं यथा येन प्रकारेण विदुरं प्रत्याह तथा तेनैव प्रकारेण । तदेवेति यावत् । त्वां प्रत्यहम् । वक्ष्यामीति शेषः ॥ ४ ॥

**पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ।**
**तस्मिन् बिन्दुसरेऽवात्सीद् भगवान् कपिलः किल ॥ ५ ॥**

**प्रकाशिका–** अरण्यं प्रति प्रस्थिते गते सति । बिन्दुसरसि ॥ ५ ॥

**तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ।**
**स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥**

**प्रकाशिका–** धातुर्ब्रह्मणो वच एष मानवि गर्भं ते प्रविष्ट इत्यादिरूपम् ॥ ६ ॥

**देवहूतिरुवाच–**
**निर्विण्णातितरां भूमन्नसदिन्द्रियतर्पणात् ।**
**येन संभाव्यमानेन प्रपन्नाऽन्धतमः प्रभो ॥ ७ ॥**

**प्रकाशिका–** असद्भिरमङ्गलैर्विषयैरिन्द्रियाणां तर्पणात्संभाव्यमानेन लोल्यमानेन येनेन्द्रियगणे-नान्धयतीत्यन्धतमोऽज्ञानं प्रपन्ना प्राप्ताऽस्मि ॥ ७ ॥

**तस्य त्वं तमसोऽन्धस्य दुष्परस्याद्य पारगः ।**
**सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥**

**प्रकाशिका–** दुष्पारस्य पारगमनवर्जितस्य पारं गमयतीति पारगं त्वमेव सच्चक्षुः सत्त्वलक्षणं निर्दुष्टं चक्षुर्मे मया बहूनां जन्मनामन्ते जातं त्वदनुग्रहाल्लब्धम् ॥ ८ ॥

**य आद्यो भगवान् पुंसामीश्वरो वै भवान् किल ।**
**लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥**

**प्रकाशिका–** न केवलं ममैव त्वं चक्षुः किन्तु सर्वस्यापि सज्जनस्येत्याह ॥ य इति । आद्य इत्यादिविशेषणानि सच्चक्षुष्ट्वोपपादकानि ॥ ९ ॥

**अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि ।**
**योऽवग्रहोऽहंममेतीत्येतस्मिन् योजितस्त्वया ॥ १० ॥**

**प्रकाशिका–** अथ तस्मादपाकृष्टुमुन्मूलयितुम् । संमोहमेव दर्शयति ॥ य इति । एतस्मिन्देहगेहादौ यो ममेत्यवग्रहो दुष्टाभिमानस्त्वयैव योजित उत्पादितस्तं संमोहमित्यन्वयः त्वमेवोक्तरूपसंमोहेन बन्धकोऽतस्त्वमेव तमपाकृत्य मोचय । त्वत्कृतविनाशेऽन्यस्य सामर्थ्याभावादिति भावः ॥ १० ॥

**तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ।**
**जिज्ञासया प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥**

**तात्पर्यम्– नारायणो ब्रह्मवायू वीन्द्रशेषौ हरस्तथा । कामः शक्रो गुरुर्दक्षो मन्वाद्या भास्करादयः । सर्वजीवाश्च क्रमशः पुरुषाख्याभिशब्दिताः । एतत्पत्न्यो बन्धशक्तिः स्त्रियः सर्वास्तथा जडम् । क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्विप्रमुच्यत' इति दत्तात्रेययोगे ॥ ११ ॥**

**प्रकाशिका–** उपसन्नाय शिष्याय वक्तव्यं ब्रह्म शाश्वतमिति वचनात् । तव चोपसत्त्यभावात्कथमुपदिशामीति नाशङ्कनीयमिति भावेनाह ॥ तं त्वेति । शरणंगता उपसन्ना । केन निमित्तेन प्रकृतेः पुरुषस्य च जिज्ञासया ज्ञातुमिच्छया । ननु यदि देवहूत्याः प्रकृतिपुरुषस्वरूपमेव मोक्षार्थं जिज्ञासितं तर्ह्युत्तरत्र नारायणाख्यं परतत्त्वमपरतत्त्वमपि चेतनाचेतनात्मकं तत्र चेतना रमाब्रह्माद्यास्तारतम्योपेता हरेर्बन्धकशक्तिर्महदादिजडं चेत्येतत्सर्वं मोक्षार्थं कपिलेन कथमुपदिष्टमित्याशङ्कायां तत्सर्वं प्रकृतिपुरुषशब्दार्थतयाऽत्र विवक्षितमतो नाजिज्ञासितोक्तिरित्याशयेन प्रकृतिपुरुषशब्दयोस्तावदर्थकत्वे प्रमाणं दर्शयति ॥ नारायण इति । जडमव्यक्तं महदादिकम् । उपदेशांगं नमनमपि करोति ॥ नमामीति ॥ ११ ॥

**मैत्रेय उवाच–**

**इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गचोदनम् ।**
**धियाभिनन्द्यात्मवतां सतांगतिर्बभाष ईषत् स्मितशोभिताननः ॥ १२ ॥**

**प्रकाशिका–** ईप्सितमिष्टमपवर्गचोदनं मोक्षसाधनोपदेशप्रार्थनम् । पुंसामित्यनेन देवहूत्या लोको-
कारायेदं प्रार्थनं कृतमिति सूचयति । आत्मवतां वशीकृतमनसाम् ॥ १२ ॥

**भगवानुवाच–**

**योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।**
**अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य वै ॥ १३ ॥**

**तात्पर्यम्– 'परमात्मादिकं देहे यदध्यात्मं तदीरितमि'ति च । 'सुखं शरीरभोग्यं तु दुःखं सर्वं व च । मुक्तौ विलयमायाति नित्यानन्दस्तु भुज्यत' इति च ॥ १३,१४ ॥**

**प्रकाशिका–** मोक्षसाधनमेवादौ निष्कृष्याह ॥ योग इति । ननूक्तरीत्या परापरतत्त्वस्योक्त-
दानीं प्रकृतिपुरुषशब्दवाच्यानां नारायणादिस्वरूपाणामेव मोक्षार्थं जिज्ञासितत्वस्योक्तत्वेनेदानीं
र्थमाध्यात्मिकयोगनिरूपणेऽसङ्गतिरित्यतोऽत्राध्यात्मिकपदेन पूर्वोक्तनारायणादिस्वरूपमेव विव-
मतो नासङ्गतिरित्याशयेनाध्यात्मिकपदार्थं प्रमाणेनैव दर्शयति ॥ परमात्मादिकमिति । तथा
यात्मिकं देहमधिकृत्य वर्तमानानां परमात्मादितत्त्वानां स्वरूपं ज्ञानलक्षणो वा तज्जनकलक्षणो
योग उपायो मतः संमतः । निःश्रेयसस्वरूपं दर्शयन् कारणताग्राहकमन्वयं दर्शयति ॥
न्तेति । यत्र यस्मिन्नाध्यात्मिकयोगे सति । भवतीति शेषः । अत्र सुखस्यापि दुःखवदत्यन्तोप-
च्यते न च तत्संभवति । तथात्वे मोक्षस्यापुरुषार्थत्वप्रसङ्गादतोऽत्र दुःखसमकक्षतयोक्तं सुखं
गेनैव दर्शयति ॥ सुखमिति । शरीरे सति भोग्यमन्तःकरणपरिणतरूपम् । चशब्दस्तुशब्दार्थः ।
त्विति संबन्धः । सर्वमविशेषितं सामान्यत एव दुःखं विलयमायातीत्यर्थः । कुत एवं सुखे
च इत्यत उक्तम् ॥ नित्यानन्द इति । तुशब्दो यस्मादित्यर्थे । भुज्यते । मुक्तैरिति शेषः । तथा
ले नित्यसुखानुभवश्चेति पूरणीयमिति भावः ॥ १३ ॥

**तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे ।**
**ऋषीणां श्रोतुकामानां योगमुर्वङ्गनैपुणम् ॥ १४ ॥**

**चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।**
**गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥**

**प्रकाशिका–** उर्वंगनैपुणं ऊरुभिरंगैर्यमनियमादि साधनैर्नैपुणं पाथ्वगुणोपेतम् । तत्र मनोवशीकरणं प्रथमसाधनमित्याह ॥ चेतः खल्विति । अस्यात्मनो जीवस्य गुणेषु विषयेषु ॥ १४, १५ ॥

**अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ।**
**वीतं यदाऽऽत्मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥**

**तात्पर्यम्– 'बाह्ये सुखे त्वनासक्तेरसुखं दुःखवर्जनात् । अदुःखं हरिभक्त्यैव नित्यानन्दं यदा मनः । तदा तं परमात्मानं पश्यत्यात्मप्रसादत' इति कापिलेये । अभेदात्स्वावतारेषु निरन्तर उदाहृतः । गुणदेहेन्द्रियाभेदात्केवलोऽसदृशत्वतः । अखण्डपूर्णशक्तित्वादहमेकः सदा मत' इति च । 'बन्धशक्तिः प्रकृत्याख्या विष्णुशक्त्या वियुज्यत' इति च ॥ १६-१८ ॥**

**प्रकाशिका–** ननु मुक्तेर्हर्यपरोक्षज्ञानमात्रसाध्यत्वात्कथमतद्युक्तं विमुक्तय इत्युक्तमित्यतस्तेनापरोक्षज्ञानमपि भवतीत्याह ॥ अहंममेत्यादि श्लोकत्रयेण । अत्र भगवद्भजनकालेऽदुःखमसुखमिति दुःखवत्सुखस्यापि सर्वात्मनाऽभाव उच्यते नासौ संभवति । अनिषिद्धबाह्यसुखानुभवदर्शनात् । ध्यानादिना च स्वरूपसुखाभिव्यक्तेः प्रमाणसिद्धत्वादतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ बाह्य इति । तथा च शरीरधारणार्थं बाह्यसुखानुभवसत्वेऽपि तत्र सक्त्यभावाभिप्रायमेतदिति भावः । कुत एवं सुखे सङ्कोच इत्यतोऽत्र बाधकं सूचयन्नाह ॥ हरिभक्त्यैवेति । नित्यानन्दमभिव्यक्तनित्यानन्दम् । अनेन प्रथमश्लोकतात्पर्यमुक्तम् । द्वितीयश्लोके आत्मानमित्येतत्परमात्मानमिति व्याख्यानम् । परिपश्यतीति तृतीयश्लोकस्थस्य व्याख्यानम् ॥ पश्यतीति । अत्र स्वात्मनेत्यस्य तात्पर्यम् ॥ आत्मप्रसादत इति । द्वितीयश्लोकस्थानां निरन्तरं केवलाखण्डितशब्दानां योग्यमर्थं प्रमाणेनैव दर्शयति ॥ अभेदादिति । केवल उदाहृत इत्यन्वयः । असदृशत्वतोऽहमेको मत इत्यन्वयः । हरिवाक्यमिदम् । तृतीयश्लोके प्रकृतिं च हतौजसमित्युच्यमाना प्रकृतिः केत्यपेक्षायामत्र योग्यां प्रकृतिं प्रमाणेनैव दर्शयति ॥ बन्धकशक्तिरिति । परमाच्छादिका दुष्टा प्रकृतिः । हतौजसमुदासीनमित्यस्य तात्पर्यम् ॥ विष्णुशक्त्या वियुज्यत इति ॥ ततश्चायं श्लोकत्रयार्थः ॥ गुणेषु सक्तं बन्धायेत्येतदुपपादनायोक्तम् ॥ अहंममेति । तेन गुणेषु विषयेष्वहं ममाभिमानजन्यैः कामादिभिर्युतं मनोबन्धायेत्युक्तं भवति । तैर्मलैर्यदावीतं रहितम् । अभिमानत्यागेनेति शेषः । तदा शुद्धं निर्दुष्टं सर्वथा दुःखापादककाम्यनिषिद्धपरित्यागाद्दुःखरहितमदुःखमुक्तरीत्या बाह्यसुखे आसक्त्यभावेनासुखमत एव शीतोष्णादिसंबन्धेऽपि समं निर्विकारं ॥ १६ ॥

**तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।**
**निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥ १७ ॥**

**प्रकाशिका–** पुरुषो जिज्ञासुरात्मानं परमात्मानं केवलं स्वगुणदेहेन्द्रियाद्यभिन्नम् । प्रकृतेश्चेतनाचेतनारूपायाः परमुत्तमम् । निरन्तरं स्वावतारभेदरहितं स्वयंज्योतिः स्वप्रकाशमणिमानं परमसूक्ष्मं स्वबिंबभूतमखंडितमव्याहतशक्तिम् ।। १७ ।।

**ज्ञानवैराग्ययुक्तेन भक्तियोगेन चात्मना ।**
**परिपश्यत्युदासीनां प्रकृतिं च हतौजसम् ।। १८ ।।**

**प्रकाशिका–** ज्ञानं परोक्षनिश्चयो भक्तियोगेन भक्तियुतध्यानेनात्मना भगवत्प्रसादेन च परिपश्यति स्वयोग्यतानुसारेण पश्यति । ननु परमाच्छादिकायाः प्रकृतेः सत्वे कथं पश्यतीत्यत उक्तम् ।। प्रकृतिं चेति । परमाच्छादिकां दुष्टां चेतनरूपां बन्धकशक्त्यपरपर्यायां प्रकृतिं च हतौजसां विष्णुशक्त्या हतसामर्थ्यामुदासीनामधिकारिणं विहायान्यत्र स्थितां यः पश्यति । तथा चातद्युक्तं विमुक्तय इति यदुक्तं तदुक्तरीत्याऽपरोक्षज्ञानवैराग्यद्वारैवाभिप्रेतमतो न कोऽपि दोष इति भावः ।। १८ ।।

**न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।**
**सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ।। १९ ।।**

**प्रकाशिका–** ननु विषयमुक्तस्य मनसो हर्यपरोक्षज्ञानजननाय किं मुख्यसहकारीत्यतो भक्तिरेवेत्याह ।। न युज्यमानयेति ।। १९ ।।

**प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।**
**स एव साधुषु कृतो मोक्षद्वारमपावृतम् ।। २० ।।**

**प्रकाशिका–** इदानीं ब्रह्मज्ञानोत्पत्तौ प्रतिबन्धकमाह ।। प्रसङ्गमिति । असद्भार्यादिप्रसङ्गमतिस्नेहमजरं पुनर्नवत्वेनाक्षयम् । ननु विषयेष्वासक्तस्य मनसोऽकस्मात्कथं तत्रासक्त्यभावः स्यादित्यतोऽत्र मूलकारणं साधुसङ्गं दर्शयति ।। साधुष्विति । आत्मनोऽधिकारिणो यं प्रसङ्गं प्रकृष्टं स्नेहं विषयेषु जातमजरं पुनरभिवृद्ध्याऽक्षयं पाशं पाशवद्बन्धकम् । स एव प्रसङ्गः । अपावृतमपगतावरणम् ।। २० ।।

**तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।**
**अजातशत्रवः शान्ताः साधवः साधुभूषणाः ।। २१ ।।**

प्रकाशिका– के ते साधव इत्यपेक्षायां साधूनां लक्षणमाह ॥ तितिक्षव इति चतुर्भिः । तितिक्षवः स्वोत्तमकृतापराधसहिष्णवो नीचेषु सत्सु कारुणिकाः स्वसमानां सर्वदेहिनां सुहृदः सत्सु न जातःशत्रुर्येषां ते तथा । साधु प्रशस्तं कर्मभूषणं येषां त एव साधवः ॥ २१ ॥

**मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।**
**मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥**

**तात्पर्यम्– 'यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात्सा ययैव तरेत्सृतिमि'ति च ॥ २२ ॥**

प्रकाशिका– अनन्येन भावेन भक्तिमित्यत्र भक्तेरनन्यभावो नामान्यत्राविद्यमानतेति प्रतीयते न चासौ संभवति । ब्रह्मादिभक्तेरपि मोक्षसाधनत्वादतोऽत्र विवक्षितमनन्यभक्तिशब्दार्थं दर्शयति ॥ यादृशीति । मत्पुद्रेकान्माहात्म्यातिशयाद्यादृशी सर्वोत्कृष्टा भक्तिः । अन्यत्र ब्रह्मादौ । मूले मत्कृते मत्प्रसादार्थं त्यक्तानि काम्यानि निषिद्धानि च कर्माणि यैः ॥ २२ ॥

**मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ।**
**तपन्ति विविधांस्तापानैकात्म्यगतचेतसः ॥ २३ ॥**

**तात्पर्यम्– 'एकः पूर्णो हरिर्नान्यस्तदन्ये तद्वशा मताः । इति ज्ञानं स्थिरं यत्तदैकात्म्यज्ञानमुच्यत' इति ब्रह्माण्डे ॥ २३ ॥**

प्रकाशिका– मदाश्रया मत्प्रतिपादिकास्तापांस्तपांसि । ऐकात्म्यगतचेतस इत्येतज्जीवेश्वराभेदज्ञानिन इत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति ॥ एक इति । आत्मशब्दार्थः ॥ पूर्ण इति । देशतः कालतो गुणतश्चेति शेषः । आङ्पूर्वात्तनोतेर्डमन्प्रत्यये आत्मेत्यस्य निष्पन्नत्वात् । अवधारणार्थस्यैकशब्दस्य व्यावर्त्यं दर्शयति ॥ नान्य इति । प्रत्ययार्थकथनम् ॥ तद्वशा इति । चेतःशब्दार्थनिरूपणम् ॥ ज्ञानमिति । स्थिरमिति गतशब्दतात्पर्यप्रदर्शनम् । ततश्चैकः केवलः स्वयमेवात्मा पूर्ण एकात्मा तस्येदमधीनमित्यैकात्म्यम् । तत्र विषये गतमेकप्रकारेण स्थितं चेतो ज्ञानं येषामिति व्याख्येयमिति भावः ॥ २३ ॥

**त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ।**
**सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥**

**प्रकाशिका–** दुष्टसर्वसंगवर्जिताः अथ तस्मात्सङ्गो विषयासक्तिस्तत्कृतदोषहरा इत्यर्थः ॥ २४ ॥

**सतां प्रसङ्गान्मम वीर्यसम्पदो भवन्ति हृत्कर्णरसायनाः कथाः ।**
**तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धावती भक्तिरनुक्रमिष्यति ॥ २५ ॥**

**प्रकाशिका–** सत्सङ्गस्य मनसो विषयासक्त्यभावजनकत्वं न साक्षात्किन्तु भक्तिजननद्वारेणैवे-त्याशयेनाह ॥ सतां प्रसङ्गादिति । प्रसङ्गात्प्रकृष्टसङ्गात् । मम वीर्यैः पराक्रमैः लब्धाः संपदो यासु हृत्कर्णयो रसायनाः सुखदा जोषणात्सेवनादपवर्गस्य वर्त्म ज्ञानादिकं यस्मात्तस्मिन्हरौ श्रद्धावत्या-स्तिक्यबुद्धिसहिताऽनुक्रमिष्यत्युत्पत्तुमारंभं करिष्यति ॥ २५ ॥

**भक्त्या पुमान् जातविराग ऐन्द्रियाद् दृष्टश्रुतात्मद्रविणानुचिन्तया ।**
**चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥**

**प्रकाशिका–** भक्त्यनन्तरं जायमानापवर्गस्य साधनक्रमं दर्शयति ॥ भक्त्येति । पुमान् अधिकारी दृष्टाः श्रुताश्च ये आत्मनः परमात्मादिचेतनास्तेषां यानि द्रविणानि गोप्यतया द्रविणस्थानीयानि स्वरूपाणि तदनुचिन्तया येषां सारासारत्वादिविमर्शेनैन्द्रियादिन्द्रियोपभोग्याद्विषयाज्जातो विरागो यस्य चित्तस्य ग्रहणे परमात्मन्येव स्थापनार्थं योगयुक्तः कथाश्रवणादिरूपयोगयुक्तो ऋजुभिः स्वदेहानुकूलैर्योगमार्गैर्यमादिभिः ॥ २६ ॥

**असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ।**
**योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥**

**प्रकाशिका–** प्रकृतेर्जातानां गुणानां विषयाणामसेवयेति पुनर्वैराग्यवचनं तस्यावश्यकत्वद्योत-नाय । वैराग्यविजृंभितेन वैराग्याभिवृद्धेन ज्ञानेन । परोक्षज्ञाननिश्चयेन जातेन योगेन ध्यानादि-रूपेण । प्रत्यगात्मानं जीवस्वरूपान्तर्गतं तद्भिन्नं स्वयोग्यं वा हरिं इह देहेऽवरुन्धे वशीकृतवत्पश्यति ॥ २७ ॥

**देवहूतिरुवाच–**

**का चित् त्वय्यर्पिता भक्तिः कीदृशी मम गोचरा ।**
**यया पदं ते निर्वाणमञ्जसा प्राप्नुयामहम् ॥ २८ ॥**

**प्रकाशिका–** भक्तेर्ज्ञानसाधनेषु प्राधान्योक्तौ जिज्ञासया देवहूतिः पृच्छति ॥ का चिदिति । अधिकारिणो द्विविधाः । मोक्षकामास्तदकामाश्चेति । तत्र किं मोक्षकामानां भक्तिरुत्तमा । उत

तदकामानाम् । यदि तदकामानामपि भक्तिरेवोत्तमा तर्हि सा कीदृशी किं लक्षणा मम गोचरा मया [illegible] कर्तव्या वा । निर्वाणं मोक्षख्यमञ्जसा मोक्षकामेभ्योऽप्याधिक्येन ॥ २८ ॥

**यो योगा भगवत्प्राप्तौ निर्वाणात्मंस्त्वयोदितः ।**
**कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥**

प्रकाशिका– निर्वाणात्मन्परमानन्दमूर्ते ॥ २९ ॥

**तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे ।**
**सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥**

प्रकाशिका– तद्भक्तिलक्षणमेतद्योगलक्षणं च विजानीहि विशेषेण ज्ञापय सुखं यथा स्यात्तथा । ॥ ३० ॥

**मैत्रेय उवाच–**

**विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजातः ।**
**तत्त्वाम्नायं यत् प्रवदन्ति साङ्ख्यं प्रावोचद् वै भक्तिवितानयोगम् ॥ ३१ ॥**

तात्पर्यम्– 'शुक्लेन जनिरन्येषां हरेः स्वतनुवैव तु । नित्योदितज्ञानतनोः कुतः स्याच्छुक्लतो जनिरि'ति गारुडे ॥ ३१ ॥

प्रकाशिका– अर्थमर्यत इति व्युत्पत्त्या ज्ञेयम् । जातस्नेहो जातानुग्रहः । अनुग्रहे निमित्तमाह ॥ [illegible]त्रेति । अत्र यत्र तन्वाभिजात इत्युक्त्या शुक्लशोणितसंबन्धेन भगवतो देहोत्पत्तिरुच्यत इति प्रतीय-[illegible]त्र विवक्षितां जनिं प्रमाणेनैव दर्शयति ॥ शुक्लेनेति । अन्येषां हरिरमाव्यतिरिक्तानाम् । [illegible]तनुवैव स्वस्वरूपभूततन्वैव । तुशब्दो ज्ञानानन्दादिरूपविशेषणार्थः । जनिः प्रादुर्भाव इत्यर्थः । [illegible]स्वीकारे बाधकमाह ॥ नित्येति । नित्योदिता ज्ञानरूपा तनुर्यस्य । तथा च यत्र यस्यां तन्वा [illegible]दिरूपनित्योदितदेहेनाभिजातः प्रादुर्भूत इति मूलं व्याख्येयमिति भावः । तत्त्वाम्नायं परमात्मादि [illegible]चान्याम्नायन्ते पुनः पुनरुच्यन्ते यस्मिंस्तत्तथा । तत्सांख्यं शास्त्रम् । कथं भूतम् । भक्तिवितानयोगं [illegible] विस्तारेण स्वश्रवणेन योजयतीति भक्तिवितानयोगम् ॥ ३१ ॥

**भगवानुवाच–**

**देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥**

**तात्पर्यम्–** 'आनुश्राविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेदि'ति भविष्यत्पर्वणि । 'सदा सर्वगुणाढ्यत्वात्सत्वो विष्णुरुदीर्यत' इति कापिलेये ॥ ३२ ॥

**प्रकाशिका–** मोक्षकामाधिकारिभक्त्यपेक्षया तदकामानामेव भक्तिरुत्तमेति सैव या त्वया ज्ञातव्या कर्तव्या चेत्याशयेन तस्या लक्षणं दर्शयति ॥ देवानामिति । अत्रानुस्राविककर्मणामित्येतदप्रतीत्या प्रमाणेनैव दर्शयति ॥ आनुस्राविकेति । य इन्द्रियगणो गुरोरुच्चारणमनुश्रूयत इत्यनुस्रावा श्रुतिः । तद्विहितमानुस्राविकं तदेव कर्म कार्यं यस्य स तथा । तस्येदं तात्पर्यं श्रुत्युक्तं यो नलंघयेदिति । सत्व एवैकमनसं इत्यत्र प्रकृतसङ्गतं सत्वशब्दार्थं प्रमाणेनैवाहा । सदेति ॥ ततश्चयं श्लोकार्थः ॥ सत्त्व एव सदा सर्वगुणाढ्ये विष्णावेवैकं मुख्यं मनो यस्य शुद्धसात्त्विकस्य पुंसो देवानां द्योतनात्मकानामिन्द्रियाणां गुणलिङ्गानां गन्धादिकगुणोपलब्धिलक्षणकार्यानुमेयानां तथा वचनादिक्रियानुमेयानां चानुस्राविककर्मणां श्रुत्युक्तानुष्ठाने करणानाम् ॥ ३२ ॥

**अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।**
**जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥**

**तात्पर्यम्–** अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति । अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी'ति च ॥ ३३ ॥

**प्रकाशिका–** या भगवत्यनिमित्ता फलोद्देशरहिता केवलं स्वाभाविकी निरवधिकस्नेहरूपस्वभावनिर्वृता वृत्तिः सा भक्तिः सिद्धेर्मुक्तेर्गरीयसी । नन्विदं साधनस्य साध्यापेक्षयोत्तमत्त्वं बाधितं कथमुच्यत इत्यतोऽत्राभिप्रायं प्रमाणेनैव दर्शयति ॥ अपूर्णभक्तेरिति । अनिमित्तत्वरूपांगाभावेना पूर्णा सकामा भक्तिर्यस्य तस्याधिकारिणो मुक्तौ सत्वात् । तु विशेषेण पूर्तिमुत्तमाधिकारिभक्त्याऽभिव्यक्तसुखपूर्तिसमां पूर्तिं नेष्यति । भक्तिरुत्तमाधिकारिणामनिमित्ता भक्तिर्गरीयसी । इदानीमेवाधिकसुखाभिव्यक्तिहेतुत्वादुत्तमा । न च तदेव कुत इति वाच्यम् । यतः पूर्णा सांगाऽनिमित्तत्वरूपांगोपेतत्वात् । ततश्च साऽनिमित्ता भक्तिः सिद्धेः सकामतया व्यंगभक्तिसाध्यायाः परममुक्तेः सकाशाद्गरीयसी । अनिमित्तत्वरूपांगलाभेनेदानीमेव तदपेक्षयाऽधिकसुखाभिव्यक्तिहेतुत्वादिति मूलाभिप्राय इति भावः । नन्वियं भक्तिरनुद्देशितत्वान्न मुक्तिं जनयेदित्यतोऽनुद्देशितामपि मुक्तिं स्वभावादेव जनयतीति सदृष्टान्तमाह ॥ जरयतीति । कोशं लिङ्गशरीरं निगीर्णं भुक्तमन्नम् । अनलो जाठरः ॥ ३३ ॥

**नैकात्म्यतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।**
**येऽन्योन्यतो भागवताः प्रसज्य संभाजयन्ते मम पौरुषाणि ॥ ३४ ॥**

तात्पर्यम्– 'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते । तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यती'ति च । आदानादिकर्तृत्वादात्मा ।। ३४ ।। इति तृतीयतात्पर्ये षड्विंशोऽध्यायः ।। २६ ।।

प्रकाशिका– अनिमित्तभक्तिकर्तारः कीदृशा इत्यपेक्षायां तेषां स्थितिं दर्शयति ।। नैकात्म्यतामिति पञ्चभिः । अत्रैकात्म्यताशब्दार्थं न स्पृहयन्तीत्यत्र विवक्षितमध्याहारं च प्रमाणेनैव दर्शयति ।। नेच्छन्तीति । सायुज्यमपीत्यनेनैकात्म्यतामित्येतदुक्तार्थम् । तर्हि तेषां श्रुत्याद्युक्तसायुज्यप्राप्तिः कथमित्यत उक्तम् ।। आज्ञात्वेनेति । सुखाधिक्यं यावत्स्वरूपाविर्भावः । पूर्वमपि बहुतरस्य जातत्वात्पुनरिति वचनम् । पञ्चमे येषामहमात्मेति वचनेनैक्यं प्रतीयतेऽतस्तत्र विवक्षितमात्मशब्दार्थं दर्शयति ।। आदानादीति । न तु स्वरूपमित्यर्थः । प्रमाणविरुद्धत्वादिति भावः ।। ततश्चायं श्लोकपञ्चकस्यार्थः ।। केचिदुत्तमाधिकारिणो मे मया भक्तिफलत्वेन दीयमानामेकात्मतां सायुज्यमपि न स्पृहयन्ति नेच्छन्ति । किं त्वाज्ञात्वेन गृह्णते । मदीहा मद्विषयकसर्वव्यापारवन्तः प्रसज्य मिलित्वा सभाजयन्ते संभाव्य वदन्ति शृण्वन्ति ।। ३४ ।।

**पश्यन्ति मे ते रुचिराण्येव सन्तः प्रसन्नवक्त्रारुणलोचनानि ।**
**रूपाणि दैत्यासुविनाशनानि साकं वाचं स्पृहणीयां वदन्ति ।। ३५ ।।**

प्रकाशिका– यानि रूपाणि पश्यन्ति तैः साकं सह स्पृहणीयामिष्टां वाचं वदन्ति ।। ३५ ।।

**तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।**
**हृतात्मनो हृतप्राणस्य भक्तिमन्विच्छतो गतिमण्वीं प्रयुङ्क्ते ।। ३६ ।।**

प्रकाशिका– तैर्दृष्टै रूपैर्दर्शनीया मनोहरा अवयवा येषु । वामान्यनुकूलानि सूक्तानि शोभनवचनान्युदाराणि विलासादीनि येषां तैः । हृतात्मनोऽपहृतमनसो हृतप्राणस्यापहृतेन्द्रियवृत्तेर्भक्तिमेवान्विच्छतोऽपि पुंसः प्रसन्नोऽहमण्वीं सूक्ष्मां सायुज्यलक्षणां गतिं मुक्तिं प्रयुङ्क्ते ददामि ।। ३६ ।।

**अथो विभूतिं मम मायया चितामैश्वर्यमष्टाङ्गमनुप्रवृत्तम् ।**
**श्रियं न देवीं स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते हि लोके ।। ३७ ।।**

प्रकाशिका– न केवलं सायुज्यमेव प्राप्नुवन्ति किन्तु विभूत्यादिकमपीत्याह । अथो इति ।। अथो मुक्त्यनन्तरं ये विभूतिं छत्रचामरादिलक्षणाम् । माययेच्छया चितां निर्मिताम् । अष्टाङ्गमैश्वर्यमणिमादिरूपमनुप्रवृत्तं भक्तिफलत्वेन दीयमानं तथा भद्रां सर्वांगसम्पन्नाम् । श्रियं देवीं द्योतमानां शरीरशोभां च परस्य मे सकाशान्मे लोकेऽश्नुवते मदाज्ञाया अनुल्लङ्घ्यत्वाद्भुंजते ।।३७।।

**न कर्हिचिन्मत्पराः शान्तरूपा नङ्क्ष्यन्ति मे नोऽनिमिषो लेढि हेतिः ।**
**येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥**

**प्रकाशिका–** मद्दत्तान् भोगान्नाशयितुं तत्र कोऽपि न समर्थ इत्याशयेनाह ॥ न कर्हिचिदिति । अहमेव परः सर्वोत्तमो ज्ञेयो येषां ते मत्पराः शान्तरूपाः सुखपूर्णस्वरूपा न नंक्ष्यन्ति कुतोऽपि भोगहीना न भविष्यन्ति । ननु तत्रापि कालस्य सत्वात्तेन विनाशः स्यादित्यत उक्तम् । मे मदीयोऽनिमिषो हेतिः कालाख्यमायुधं तान्नो लेढि न ग्रसति । तत्र हेतुर्येषामिति । आत्माऽऽदानादिकर्ता सुत इव स्नेहविषयो विश्वसनीयत्वात्सखोपदेष्टृत्वाद्गुरुर्हितकारित्वात्सुहृदः पूज्यत्वाद्दैवमिष्टम् ॥ ३८ ॥

**इमं लोकं तथैवामुमात्मानमुभयायिनम् ।**
**आत्मानमनु ये चेमे ये रायः पशवो गृहाः ॥ ३९ ॥**

**प्रकाशिका–** वैराग्यविवृद्ध्या भक्त्या भजतां मोक्षप्रदोऽहमेवेत्याह ॥ इमं लोकमिति । उभयायिनं लोकद्वयसंचारिणमात्मानं स्वात्मानमनुये चेमे पुत्रकलत्रादयो रायो धनानि ॥ ३९ ॥

**विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् ।**
**भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये ॥ ४० ॥**

**नान्यत्र मद् भगवतः प्रधानपुरुषेश्वरात् ।**
**आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥**

**प्रकाशिका–** अन्यो मोक्षप्रदो नेत्याह ॥ नान्यत्रेति । प्रधानपुरुषेश्वरात्प्रकृतिहिरण्यगर्भो-त्तमादात्मन आदानादिकर्तुर्भगवतो मदन्यत्रान्यस्मात्सर्वभूतानामधिकारिणां तीव्रं भयं संसाररूपं न निवर्तत इत्यन्वयः ॥ ४१ ॥

**मद्भयाद् वाति वातोऽयं सूर्यस्तपति मद्भयात् ।**
**वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥**

**प्रकाशिका–** कुत इत्यतो ममैवेतरसर्वदेवनियामकत्वादित्याह ॥ मद्भयादिति ॥ ४२ ॥

**ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।**
**क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ४३ ॥**

**प्रकाशिका–** मद्भजनेनैव मुक्तिरित्यत्र पुराकल्परूपार्थवादमाह ॥ ज्ञानेति । योगिनो ज्ञानिनः सन्तः ॥ ४३ ॥

**एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।**
**तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थितम् ॥ ४४ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे षड्विंशोऽध्यायः ।**

**प्रकाशिका–** भक्तिरेव मोक्षे मुख्यसाधनं नान्यदिति निगमयति ॥ एतावानेवेति । मय्यर्पितं सन्मनः स्थिरं भवतीति य एतावानेव ॥४४॥ इति श्रीभागवतटिप्पण्यां षड्विंशोऽध्यायः ॥३-२६॥

## अथ सप्तविंशोऽध्यायः

**भगवानुवाच–**

**अथ ते सम्प्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ।**
**यद् विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥**

**प्रकाशिका–** अथ देवहूत्या पृष्टाया भक्तेर्द्वांशौ स्नेहो माहात्म्यज्ञानं चेति । तत्र स्नेहरूपमंशं निरूप्य सन्माहात्म्यज्ञानरूपांशोपपादनाय तत्त्वाम्नायं यत्प्रवदन्ति सांख्यं प्रवोचदित्युक्तं तत्प्रपञ्चयति ॥ अथेति । अथ भक्त्यंशस्नेहनिरूपणानन्तरम् । गुणैः सत्त्वादिभिः ॥ १ ॥

**ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।**
**यदाहुर्वर्णये तत् ते हृदयग्रन्थिभेदनम् ॥ २ ॥**

**प्रकाशिका–** ननु मुक्तिः परमात्मज्ञानादेव न तत्त्वज्ञानलक्षणादतः कथमेतदित्यत आह ॥ ज्ञानमिति । आत्मानं परमात्मानं दर्शयतीति परमात्मदर्शनं ज्ञानं तत्त्वानां ज्ञानमतो हृदयग्रन्थिविभेदनमहङ्कारममकारनिवर्तकं पुरुषस्याधिकारिणो निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णये वर्णयामि । तत्त्वविविक्ततया तत्सृष्ट्यादिकर्तृत्वेन च परमात्मज्ञानं मुक्तिसाधनमिदं च न तत्त्वानां स्वरूपज्ञाने भविष्यति । अतस्तत्त्वानां ज्ञानमपि मोक्षसाधनतयोक्तमिति भावः ॥ २ ॥

**अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।**
**प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥**

**प्रकाशिका–** तत्त्वं द्विविधम् । स्वतन्त्रमस्वतन्त्रं चेति विभागमभिप्रेत्य स्वतन्त्रतत्त्वस्वरूपं दर्शयति ॥ अनादिरिति । जननमरणशून्य इत्यर्थः । सर्वानादत्त इत्यात्मा स्वतन्त्र इत्यर्थः । पुरु अभीष्टं सनोतीति पुरुषः सत्त्वादिविकाराभावान्निर्गुणः प्रकृतेश्चेतनाचेतनरूपायाः पर उत्तमः प्रत्यगन्तः स्थितं जीवस्वरूपं धाम गृहं यस्य । सर्व जीवान्तर्यामीत्यर्थः । स्वयंज्योतिरन्यानपेक्षया सर्वज्ञं विश्वं सर्वजगद्येन समन्वितं व्याप्तं केवलमन्तरेव नियामकः न केवलमन्तरेणैव किन्तु बहिरपि व्याप्त इत्यर्थः ॥ ३ ॥

**न जातो न म्रियेतात्मा स हि देहाद्युपाधिभिः ।**
**निमित्तैरात्ततद्धर्मा यथा स्वप्ने तदीक्षिता ॥ ४ ॥**

**तात्पर्यम्– स परमो न जायते न म्रियत इति प्रसिद्धं हि । देहाद्युपाधिभिरात्तधर्मो जीवोऽपि स्वप्नवद्भ्रान्त्या जायते म्रियते च । भ्रान्तित्वाद्देहात्मत्वस्य । किमु सर्वज्ञत्वस्वतन्त्रत्वादिवैलक्षण्ययुक्त ईश्वरः । 'परस्य जन्ममृत्याद्याः स्युः स्वतन्त्रस्य किं पुनः । जीवस्यापि यतो भ्रान्त्या जन्ममृत्यादिसङ्गतिरि'ति महाकौर्मे ॥ ४ ॥**

**प्रकाशिका–** भगवत उक्तरूपानादित्वे किं मानमित्यपेक्षायां जननमरणाभावप्रतिपादकश्रुतिप्रसिद्धमेतदित्याह ॥ न जात इति । श्रुत्यर्थानुवाद एवायं न श्रुतिरित्याशयेन श्रुतिस्वरूपं स्वयमेवाह ॥ स परम इति । परम इत्यस्यार्थः ॥ आत्मेति । हीत्यनुवादेन प्रसिद्धमिति व्याख्यानम् । इतीति शेषपूरणम् । तथा च स आत्मा न जायते न म्रियत इत्येतदर्थकश्रुतिस्वरूपं हि प्रसिद्धमिति मूलं योज्यमिति भावः । ननु नोदाहृतश्रुत्या भगवतो जन्ममरणाभावसिद्धिः । तदवतारेषु जन्ममरणयोर्दर्शनादित्याशङ्कायां तद्दर्शनं भ्रम एवेति कैमुत्यन्यायेनैव सिद्धमित्याशयेनाह ॥ देहाद्युपाधिभिरिति । अत्र कैमुत्यन्यायो न प्रतीयतेऽतो जीवोऽपीति पदमध्याहृत्य योजयति ॥ देहाद्युपाधिभिरिति । आत्तधर्म इत्यस्य विशेष्यप्रदर्शनाय जीव इति । अपीति कैमुत्यसूचकाध्याहारः । यथा स्वप्न इत्यस्यार्थः ॥ स्वप्नवदिति । भ्रान्त्या जायते म्रियते चेत्यप्यध्याहार्यप्रदर्शनम् । इति प्रतीयत इति शेषः । अपिशब्दसूचितं कैमुत्यं स्पष्टयति ॥ किम्विति । सर्वज्ञत्वं स्वयंज्योतिःशब्दोक्तं स्वतन्त्रत्वमात्मशब्दोक्तम् आदिपदेन निर्गुणत्वाद्यनुवादः । ईश्वरो भ्रान्त्या जायते म्रियते चेति प्रतीयत इति किं वाच्यमित्यभिप्राय इति शेषः । न हि प्रेक्षावान्स्वाधीनैः करणैरात्मनो दुःखमापादयतीति युक्तमित्याशयः । ननु चार्वाग्वादेन देहस्यैवात्मत्वावगमाज्जीवे जननमरणे पारमार्थिक एव न भ्रान्तिकल्पिते इत्यत आह ॥ भ्रान्तित्वादिति । देहात्मत्वस्य तद्वादस्य भ्रान्तिमूलत्वादित्यर्थः । ननु कुत एवमध्याहारेण व्याख्यानमित्यतः समाख्याप्रमाणबलादित्याशयेन समाख्याप्रमाणं पठति ॥

परस्येति । भ्रान्त्येत्यस्य पूर्वार्धेऽपि संबन्धः । तथा च स्वतन्त्रस्य परस्य जन्ममृत्याद्या भ्रान्त्या प्रतीताः स्युरिति किं पुनर्वक्तव्यं यतो जीवस्याप्यस्वतन्त्रतया प्रसिद्धस्य भ्रान्त्या जन्ममृत्यादिसङ्गतिः प्रतीयत इति योज्यम् ॥ ततश्चायं मूलार्थः ॥ देहाद्युपादिभिरस्वाभाविकैर्देहेन्द्रियादिभिर्निमित्तै-रात्ततत्तद्धर्माः स्वीकृतदेहादिधर्मा भूतजननादिधर्माः । अस्वतन्त्रतयाऽस्वाभाविकदेहादिनिमि-त्तजननमरणप्रसक्तिमान्न स्वत इत्यर्थः । अत्र दृष्टान्तमाह ॥ यथा स्वप्न इति । स्वप्नेऽस्वाभाविक-वासनामयदेहधर्मवत्तद्धर्मत्वेन पश्यति तथैवेत्यर्थः । तथा च भूतान् जननमरणादीन् तदीक्षिता स्वाप्नपदार्थद्रष्टा । स्वदेहेऽविद्यमानानेव तद्धर्मत्वेन पश्यति तथैवेत्यर्थः । तथा चैवं विधो जीवोऽपि यदा भ्रान्त्या जातो मृत इति प्रतीयते स्वरूपेण तस्य नित्यत्वात् । तदोक्तरीत्या सार्वज्ञस्वातन्त्र्यादिजीववैलक्षण्ययुक्तः । अस्वाभाविकदेहसंबन्धाभावेन तद्धर्मप्रसक्तिशून्य इति यावत् । ईश्वरो भ्रान्त्या जायते म्रियत इति प्रतीयत इति किं वाच्यमिति भावः ॥ ४ ॥

**स एव प्रकृतिं सूक्ष्मां देवीं गुणमयीं विभुः ।**
**यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ५ ॥**

**तात्पर्यम्–** उपागतां समीपस्थाम् ॥ ५ ॥

**प्रकाशिका–** एवमनादिपदोक्तं जननमरणाभावं श्रुत्यादिभिरुपपाद्येदानीं स्वतन्त्रलक्षणतयोक्तं यन्निर्गुणत्वं प्रकृतिपरत्वं तस्यातिव्याप्तिपरिहाराय जीवस्य प्रकृतितद्गुणबद्धत्वं वक्तुमाह ॥ स एवेति । यः पूर्वमनादिरात्मेति श्लोके स्वतन्त्रतयोक्तः स एवेत्यर्थः । प्रकृतिमुभयरूपाम् । सूक्ष्मामव्यक्तां द्योतमानां गुणमयीं सत्त्वादिगुणात्मिकां तदभिमानिनीं च । यदृच्छया स्वेच्छयैव प्राप्तमित्यन्य-थाप्रतीतिवारणाय गतामित्येतद्व्याख्याति ॥ उपगतामिति । सर्वदा समीपस्थामित्यर्थः । एतत्प्रदर्श-नायैव विभुरिति विशेषणम् । अभ्यपद्यत सृष्ट्यादिव्यापाराभिमुखीं चकार । किं स्वप्रयोजनाय नेत्याह ॥ लीलयेति ॥ ५ ॥

**गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।**
**विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ६ ॥**

**तात्पर्यम्– मुमुहे मोहयामास । तदेतन्मे विजानीहि । कृत्वा विवाहमित्यादिवत् । 'यत्र कार-यितातीवस्वतन्त्रस्तत्र कर्तृता । प्रोच्यते तु यथा ब्रह्म त्वज्ञं संसारभागिती'ति च । 'लये वाप्य-थवा सृष्टौ त्वन्तरालेऽपि न कचित् । प्रकृत्या रहितं ब्रह्म कदाचिदपि तिष्ठती'ति कापिलेये ॥६॥**

**प्रकाशिका–** तामेव लीलां दर्शयति ॥ गुणैरिति । अत्र मुमुह इत्यनेन भगवत एव मोह उच्यत इति प्रतीतिवारणाय तद्व्याख्याति ॥ मुमुह इति । अन्तर्णीतणिजर्थोऽयं प्रयोग इति भावः । अत्र

प्रयोगान्तरं दृष्टान्ततया दर्शयति ।। तदेतन्म इति । विजानीहीत्यस्य विज्ञापयेत्यर्थकत्वस्य तत्र सिद्धत्वादिति भावः । कृत्वा विवाहं तु कुरुप्रवीरा इत्यत्रापि कृत्वेत्यस्य कारयित्वेत्येवार्थः । तत्तु कर्तृत्वं पाण्डवानामभिमन्युविवाहकारयितृत्वस्यैव प्रमाणसिद्धत्वादिति भावः । तद्वदत्रापि ज्ञेय इत्यर्थः । नन्वेवं प्रयोगे किं निमित्तमित्यपेक्षायां तत्र निमित्तं प्रमाणेनैवाह ।। यत्रेति । कारयिता प्रयोजककर्ताऽतीवस्वतन्त्रोऽतिशयेनैव स्वतन्त्रस्तज्ज्ञापनाय तत्र प्रयोजककर्तरि कर्तृवाचकशब्दः । तु विशेषेण बाहुल्येन । प्रोच्यते प्रयुज्यते । अस्य प्रकृतं मुमुह इति वचनमेवोदाहरणमित्याशयेनाह ।। यथेति । मुमुह इत्यस्यार्थकथनम् ।। अज्ञमिति । भ्रान्तमित्यर्थः । संसारभागितीत्युत्तरश्लोकापातप्रतीतार्थानुवादरूपशब्दः अन्यत्र ग्रन्थतो वा । चापि शब्दौ परस्परसमुच्चयौ । पूर्वश्लोके उपगतामित्यस्य सदा समीपस्थामिति व्याख्यानसमर्थनाय प्रमाणं पठति ।। लये वाऽपीति । अन्तराले स्थितिकालेऽपि क्वचित्कदाचिन्नावतिष्ठत इत्यन्वयः ।। ततश्चायं श्लोकार्थः ।। गुणैः सत्त्वादिभिः सात्त्विकादिभेदेन विचित्राः सरूपाः समानरूपाः प्रजाः कार्याणि सृजन्तीं प्रकृतिमवलोक्य तया जातां जगत्सृष्टिमवलोक्येत्यर्थः । सः स्वतन्त्रतत्त्वरूपो हरिरिह संसारे ज्ञानगूहया जीवस्वरूपज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया प्रकृत्या । तज्जन्यस्थूलदेहेनेति यावत् । सद्यः स्थूलदेहप्राप्त्यनन्तरमेव मुमुहे तत्र स्थितं जीवं मोहयामास । तत्र कर्तृत्वाभिमानमुत्पादितवानित्याशयः ।। ६ ।।

**एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।**
**कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ।। ७ ।।**

**तात्पर्यम्– एवं पराभिध्यानेन परमात्मेच्छया । प्रकृतेः कर्तृत्वं जीव आत्मनि मन्यते ।। ७ ।।**

**प्रकाशिका–** एतदेव विशयदति ।। एवमिति । प्रकृतिगुणैरिति शेषः । पुमानित्यस्यार्थः ।। जीव इति ।। ७ ।।

**तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।**
**भवत्यकर्तुरीशस्य साक्षिणो विर्वृतात्मनः ।। ८ ।।**

**तात्पर्यम्– 'विष्णोः सुराणां गुरूणां नित्या जीवस्वतन्त्रता । यत्तु तस्यान्यतन्त्रत्वं तज्ज्ञानाद्विनिवर्तत' इति च । अकर्तुरीशस्य स्वकाशात् । 'अक्लिष्टत्वादकर्तासावकार्यत्वादथापि वे'ति च । 'एष कर्ता न क्रियते कारणं च जगत्प्रभुरि'ति भारते ।। ८ ।।**

**प्रकाशिका–** ततश्च किमित्यत उक्तम् ।। तदस्येति । तत्तस्मादविद्यमानकर्तृत्वाभिमानादस्य जीवस्य संसृतिर्जन्ममरणप्रवाहः । बन्धः सुखदुःखभोगरूपः । न केवलमेतावत्किन्तु पारतन्त्र्यं

पराधीनत्वं च । तत्कृतमभिमानकृतं भवति । अत्र जीवस्य पारतन्त्र्यं पराधीनत्वरूपं न स्वाभाविकं किन्तु बन्धवदभिमाननिमित्तमिति प्रतीयते न चेदं संभवति जीवस्य सुरगुर्वधीनत्वस्य स्वाभाविकत्वादतोऽत्र विवक्षितं पारतन्त्र्यं प्रमाणेनैव दर्शयति ॥ विष्णोरिति । गुरूणां च तन्त्रताऽधीनता जीवस्य नित्यस्वाभाविकी । यत्तु तस्य जीवस्यान्यतन्त्रत्वं उक्तविष्ण्वाद्यन्याधीनत्वम् । स्वापेक्षया नीचाधीनत्वमिति यावत् । तत्तु तदेव ज्ञानाद्विष्ण्वादिज्ञानाद्विशेषेण निवर्तते । अस्वाभाविकमिति यावत् । तथा चात्राभिमानकृततयोच्यमानं पारतन्त्र्यमुक्तरूपमस्वाभाविकमेव विवक्षितमिति भावः । संसृत्यादिकं कस्मात्प्रयोजकाद्भवतीत्यपेक्षायामुक्तम् ॥ अकर्तुरित्यादि । तदस्येति प्रकृतजीवविशेषणतया भात्यतोऽपेक्षितमध्याहृत्य व्याख्याति ॥ अकर्तुरिति ॥ इदं सर्वथा कर्ता न भवतीति प्रतीतिनिरासाय प्रमाणेनैव व्याख्याति ॥ अक्लिष्टत्वादिति । करणकाले क्लेशशून्यत्वात् । अकर्तोच्यत इति शेषः । अकार्यत्वात्कर्त्रन्तराजन्यत्वात् । अनेन न विद्यते कर्ता यस्येति व्याख्यानं सूचयति । प्रतीतार्थ एव किं न स्यादित्यतोऽत्र बाधकप्रमाणं पठति ॥ एष कर्तेति । एष जगत्प्रभुः कर्ता । ननु तर्ह्यकर्तृत्ववचनविरोध इत्यत आह ॥ न क्रियत इति । अन्येन कर्त्रेति शेषः । तथा चाकर्तृत्ववचनं तदर्थकमिति भावः । ननु कुतोऽन्येन न क्रियत इत्यतोऽत्र युक्तिमाह ॥ कारणमिति । सर्वस्यापि स्वयमेव कारणं यत इत्यर्थः । तथा च जीववत्क्लेशेनाकर्तृत्वात्कर्तृजन्यत्वाद्वा कर्तुः साक्षिणो जीवसंबन्धि पुण्यपापादिकं साक्षादीक्षमाणस्य निर्वृतात्मनः स्वत आनन्दपूर्णस्येश्वरस्य सकाशादस्य जीवस्य संसृत्यादिकं भवतीति मूलं व्याख्येयमिति भावः ॥ ८ ॥

**कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।**
**भोक्तृत्वे सुखदुःखानां पुरुषः प्रकृतेः परः ॥ ९ ॥**

**तात्पर्यम्– 'ब्रह्मादिभिः सर्गकरी श्रीर्विष्णुबलसंश्रयात् । सुखदुःखप्रदो विष्णुः स्वयमेव सनातनः । कर्तृत्वं सुखदुःखानामन्येषां तु तदाज्ञया । भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् । भोक्तृत्वमात्रहेतुत्वं जीवे नान्यत्र कुत्रचिदि'ति भविष्यत्पर्वणि ॥ 'प्रकृतिं पुरुषं चैव विध्यनादी' इति च ॥ ९ ॥**

**प्रकाशिका–** नन्वेवं प्रकृतिपुरुषयोरुभयोरपि जीवबन्धकत्वेऽविशेषात्कुतः पुरुषस्य प्रकृतिपरत्वमित्यतः प्रकृतिपरत्वोपपादनाय पुरुषस्य जीवबन्धकत्वे विशेषमाह ॥ कार्यकारणकर्तृत्व इति । अप्रतिपत्तिविप्रतिपत्तिनिरासाय श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ ब्रह्मादिभिरिति । स्वोत्पादितकर्तृत्ववद्भिरिति शेषः । अनेन कार्यं शरीरं कारणमिन्द्रियं तत्कर्तृत्वं तद्ब्रह्मादिजीवगतं तस्मिन्विषये प्रकृतिं श्रियं विष्णुबलाश्रयेणैव कारणं विदुरिति मूलयोजनां सूचयति । तथा च

ब्रह्मादिजीवगतकर्तृत्वरूपबन्धं प्रति प्रकृतेः कारणत्वं न स्वातन्त्र्येण किन्तु हर्यधीनतयैवातो विशेषात्पुरुषस्य प्रकृतिपरत्वं युक्तमिति भावः । विशेषान्तरं च प्रतिपादयत उत्तरार्धस्य तात्पर्यमाह ॥ सुखदुःखप्रद इति । जीवानामिति शेषः । अन्येषां चान्येषामपि श्रीब्रह्मादीनां जीवगतसुखदुःखकर्तृत्वं तदाज्ञयैव न स्वातन्त्र्येण । तथाऽपि यत्सर्वजीवगतं सुखदुःखानां भोक्तृत्वं तद्धरिः स्वयमेक एव करोति । अतस्तस्य प्रकृतिपरत्वं युक्तमित्याशयः । ननु जीवानामपि स्वस्वसुखदुःखभोक्तृत्वं प्रति हेतुत्वात्कथमयं विशेष इत्यत आह ॥ भोक्तृत्वमात्रेति । मात्रशब्दार्थः कात्स्नर्यार्थः सर्वभोक्तृत्वकर्तृत्वमित्यर्थः । इदं चान्यत्र कुत्रचिज्जीवे नास्तीत्यर्थः । प्रकृतेर्भोक्तृत्वदानेऽल्पप्रवृत्तिरित्यत्रोक्तत्वात्कथमत्र नास्तीत्युक्तमिति शङ्कापरिहाराय जीव इत्युक्तम् । प्रकृतेः कर्तृत्व इवात्राधिकप्रवृत्त्यभावादयं पुरुषस्य विशेषो भवतीति ज्ञातव्यम् । अनेन सुखदुःखानां कर्तृत्वे प्रकृतिमन्यद्वा कारणं विदुः । भोक्तृत्वे तु परं केवलं प्रकृतेः परं पुरुषं कारणं विदुरिति मूलयोजनां सूचयति । अत्र गीतासंमतिमप्याह ॥ प्रकृतिं पुरुषं चैवेति । कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत इत्यन्तग्रहणस्यात्र विवक्षितत्वात्प्रकृतिसिद्धिः । प्रकृतिं पुरुषं चैवेत्येतदादित्वेनोदाहरणं तु प्रकृतिपुरुषयोः प्रसक्तिप्रदर्शनायेति ज्ञातव्यम् । अनेनास्वतन्त्रत्वस्यापि चेतनाचेतनभेदेन द्वैविध्यम् । चेतनानामपि दुःखस्पृष्टत्वास्पृष्टत्वभेदेन द्वैविध्यं युक्तमिति ज्ञातव्यम् । ॥ ९ ॥

**देवहूतिरुवाच–**

**प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ।**
**ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ १० ॥**

**प्रकाशिका–** एवं प्रकृतिपुरुषयोर्जगत्कारणत्वे उक्ते विवित्सया देवहूतिः पृच्छति ॥ प्रकृतेः पुरुषस्यापीति । लक्षणं स्वरूपम् । अस्य जगतः सदसद्व्यक्ताव्यक्तरूपं जगद्यदात्मकं याभ्यां व्याप्तं प्रकृतिपुरुषयोस्तावज्जगति व्याप्तिं तत्कारणत्वं च श्रुत्यादिसिद्धं त्वयाऽपि सूचितम् । तत्र किमुभयोर्व्याप्तिराकाशादिवदुतान्यथा । कारणत्वं चोभयोः किमेकरूपमुतानेकरूपमिति प्रश्नाशयः ॥१०॥

**भगवानुवाच–**

**यत् तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।**
**प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ ११ ॥**

**तात्पर्यम्–** व्यक्ताव्यक्तात्मकं यत्तद्द्विधात्सदसदात्मकम् । असर्गा केवलाव्यक्ता सिसृक्षुरुभयात्मिका । व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मता । कार्यतः सा प्रधानत्वात्प्रधानमिति

**कीर्त्यते । अविशेषा ह्यकार्यत्वात्स च श्रीर्विष्णुसंश्रये'ति हरिवंशेषु ॥ 'विशेषः कार्यमुद्दिष्टं विशेषाद्दृश्यते यत' इति पाद्मे ॥ ११ ॥**

**प्रकाशिका–** तत्र प्रकृतेरुपादानतयैव कारणत्वं पुरुषस्य तु तन्निमित्तेनैवेति वक्तुं प्रकृतिस्वरूपं तावद्दर्शयति ॥ यत्तत्त्रिगुणमिति । व्याप्तिरिति प्रकृतेः स्वकार्येषूपादानतयैव पुरुषस्य तु तन्नियामकत्वेन विवक्षिता । अत्र श्रीसंज्ञाचेतनप्रकृतिरप्यचेतनप्रकृत्यभिमानिप्रतिपाद्यतया विवक्षिता । त्रैविध्यं वा प्रकृतेरुच्यते । अव्यक्तमित्यव्यक्तत्वं सदसदात्मकमिति व्यक्ताव्यक्तत्वरूपत्वं विशेषवत् । कार्यात्मकमिति वक्तव्यम् । एतदप्युभयसाधारणमित्याशयेन प्रमाणं पठति ॥ व्यक्ताव्यक्तात्मकमिति । न प्रलयकालगं नापि सृष्टिसमयगं किन्तु तदुभयमध्यकालगम् । सृष्ट्युन्मुखं प्रधानं सदसदात्मकं व्यक्ताव्यक्तात्मकं विद्यात् । अव्यक्तमित्येतदुभयत्र व्याख्याति ॥ असर्गेति । असर्गा न विद्यते सर्गो यस्याः सकाशात्सा तथा । अत एव केवला कार्यरहिता । सा चोभयविधाऽपि प्रलयकालीनैवाव्यक्तेत्युच्यत इत्यर्थः । व्यक्ताव्यक्तात्मकत्वं प्रकारेण चेतनप्रकृतौ दर्शयति ॥ सिसृक्षुरुभयात्मिकेति । सिसृक्षा च न प्रलयकालीनायामव्यक्तायां नापि सृष्टिकालीनायां व्यक्तायामिति भावः । विशेषवदित्यस्य तात्पर्यमाह ॥ व्यक्तैवेति । तुशब्दोऽवधारणे । चेतनप्रकृतौ कार्यरूपत्वं कार्यं रूप्यतेऽनयेति व्युत्पत्त्या कार्यनियामकत्वादिरूपं ज्ञेयम् । प्रकृतिरुभयरूपा । प्रधानमित्यस्य व्याख्यानम् ॥ कार्यत इति । अविशेषमित्येतद्व्याख्याति ॥ अविशेषेति । अनेन विशेषः कार्यो न विशेषोऽविशेष इति व्याख्यानं सूचयति । तथा च यत्तत्त्वं सत्त्वादिगुणत्रयरूपमव्यक्तं सूक्ष्मं नित्यमविनाशि सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञानिनस्तत्त्वं प्रधानं नाम्ना प्रकृतिमाहुरित्यन्वयः । सा च श्रीर्विष्णुसंश्रयेत्यनेन प्रकृतेर्यतः श्रेष्ठः स भगवानित्येतद्वक्ष्यमाणमुक्तार्थमिति ज्ञातव्यम् । विशेषशब्दस्य कार्यवाचकत्व एवैतद्व्याख्यानं संभवति तदेव कुत इत्यतोऽत्र प्रमाणं पठति ॥ विशेष इति ॥ ११ ॥

**पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ १२ ॥**

**प्रकाशिका–** विशेषवदित्युक्तान्विशेषान्दर्शयति ॥ पञ्चभिरिति । ब्रह्मपूरितमेतच्च विंशतिकं गणं प्राधानिकं प्रधानकार्यं विदुरित्यर्थः ॥ १२ ॥

**महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।**
**तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १३ ॥**

**प्रकाशिका–** पञ्चभिः पञ्चभिरित्यादिनोक्तचतुर्विंशतितत्त्वानि स्वयमेव दर्शयति ॥ महाभूतानीति । तावन्ति पञ्च ॥ १३ ॥

**इन्द्रियाणि दश श्रोत्रं त्वग् दृग् रसन नासिकम् ।**
**वाक् करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १४ ॥**

**मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः ।**
**चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १५ ॥**

**तात्पर्यम्– बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमानो ह्यहङ्कारश्चित्तं स्मरणकारणमि'ति स्कान्दे ॥ १५ ॥**

**प्रकाशिका–** अन्तरात्मनोऽन्तःकरणस्य लक्षणरूपया लिङ्गरूपया वृत्त्येत्यर्थः । लक्ष्यते ज्ञायते । भेदः प्रभेदः । जात्यभिप्रायमेकवचनम् । चतुसृभिस्तद्वृत्तिभिस्ते ते येऽन्तःकरणप्रभेदा ज्ञायन्त इति मूलार्थः । तत्र का वृत्तिः कस्यान्तःकरणप्रभेदस्य ज्ञापिकेत्यपेक्षायां चतुःर्विधान्तःकरणसाध्या वृत्तीः प्रमाणेनैवाह ॥ बुद्धिरिति। अध्यवसानं निश्चयः । अहङ्कारः । हेतुरिति शेषः ॥ १४,१५ ॥

**एतावानेव संख्यातो ब्रह्मणः सगुणस्य हि ।**
**सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १६ ॥**

**तात्पर्यम्– 'हरिस्तु निर्गुणं ब्रह्म श्रीर्ब्रह्म सगुणं स्मृता । तदङ्गजानि तत्त्वनि तमात्तद्रूपमुच्यत' इति हरिवंशेषु ॥ १६ ॥**

**प्रकाशिका–** साक्षात्प्रकृतिकार्येष्वेतेभ्योऽधिका सङ्ख्या न ज्ञानिसंमतेत्याह ॥ एतावानेवेति । सगुणस्य ब्रह्मणः संन्निवेशो विस्तारः । यावान्मया प्रोक्त एतावानेव सङ्ख्या तत्त्वज्ञैः । अत्र सगुणब्रह्मशब्देन प्रधानमेव विवक्षितमित्याशयेन तत्र प्रमाणं पठति ॥ हरिस्त्विति । हरिरेवेत्यर्थः । श्रीरिति सगुणं ब्रह्म सत्त्वादिगुणात्मकं प्रकृत्यभिमानिनी । नन्वेवं प्रकृतेरेव सगुणब्रह्मत्वे सगुणस्य ब्रह्मणः सन्निवेश एतावानिति चतुर्विंशतितत्त्वानामपि कथं सगुणब्रह्मरूपत्वमुच्यत इत्यतस्तदभिप्रायमाह ॥ तदङ्गजानीति । तदंशजानीत्यर्थः । तद्रूपं तत्त्वरूपमुच्यते । सगुणब्रह्मेति शेषः । कार्यकारणयोरभेदात्प्रकृतिसूक्ष्मभागोपादकानां तत्त्वानां प्रकृत्यात्मकसगुणब्रह्मसन्निवेशत्वोक्तिर्युक्तेति भावः । नन्वेवं स्वतन्त्रतत्त्वतयोक्तस्य पुरुषस्यात्रापरिसङ्ख्यानां न्यूनतेत्याशङ्कां परिहरन्हरेर्जिज्ञासितां व्याप्तिं तावदाह ॥ यः काल इत्यादिना । अनेनास्वतन्त्रतत्त्वानामेवेदं चतुर्विंशतितत्त्वेन परिसङ्ख्यानं न तत्त्वमात्रस्यातो न न्यूनतेत्युक्तं भवति ॥ १६ ॥

**प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।**
**अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १७ ॥**

**तात्पर्यम्– 'पुरुषो हृदिस्थः परमः कालः सर्वगतो हरिः । अथवा रुद्रदेहस्थो हरिः काल इतीरित' इति ब्राह्मे ॥ पौरुषं प्रभावम् । पुरुषस्य प्रकर्षेण भावं व्याप्तं रूपम् । एके सम्यग्ज्ञानिनः । अप्राकृताः ॥ १७ ॥**

**प्रकाशिका–** नन्वेवमपि पुरुषो न सङ्गृहीत इत्यतः काल इति पुरुषस्यैव रूपान्तरमित्याह ॥ प्रभावमिति । एतत् श्लोकतात्पर्यं प्रमाणेनैव दर्शयति ॥ पुरुष इति । पौरुषशब्दान्तर्गतपुरुष शब्दव्याख्यानम् ॥ पुरुषो हृदि स्थित इति । यो जीवमोहकतयोक्त इत्यर्थः । परमो विष्णुः । एके यतोभयमित्यस्य तात्पर्यम् ॥ अथवा रुद्रदेहस्थ इति । एवं प्रमाणेन तात्पर्यं प्रदर्श्य पौरुषं प्रभावमिति पदद्वयलब्धमर्थं दर्शयति ॥ पौरुषमिति । पुरुषस्य हृदिस्थस्य व्याप्तं रूपमिति । अनेन प्रकर्षेण सर्वदेशसंबन्धित्वेन रूपेण भवतीति प्रभावमिति व्याख्यानं सूचयति । एक इत्युक्त्या न मिथ्याज्ञानिन इत्याह ॥ एक इति । कुत इत्यत आह ॥ अप्राकृता इति । तेषां प्राकृतत्वे प्रकृतिमीयुषोऽहङ्कारविमूढस्य यतो भयं भवति स काल इति ज्ञानासंभवात् । अप्राकृताः प्रकृतिकृताज्ञानादिवर्जिता एवैते वाच्या इति भावः ॥ ततश्चायं मूलार्थः । यः कालः पञ्चविंशतिकस्तं कालं पौरुषं हृदिस्थितपरमात्मसंबन्धि प्रकर्षेण सर्वदेशसंबन्धित्वरूपेण भवतीति प्रभावम् । हृदिस्थस्य व्याप्तं रूपमिति यावत् । प्राहुर्ज्ञानिनः । एकेऽन्ये तु ज्ञानिनः प्रकृतिमीयुषः प्रकृतिकृताज्ञानादिबद्धस्यात एवाहङ्कारविमूढस्य कर्तुः कर्तृत्वाभिमानवतो जीवस्य यतो रुद्रान्तर्गताद्भयं संसारविच्छेदरूपं भवति तं कालमाहुरित्यर्थः ॥ १७ ॥

**प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ।**
**चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ १८ ॥**

**प्रकाशिका–** तर्हि त्वन्मते कः काल इत्यपेक्षायामाह ॥ प्रकृतेरिति । गुणसाम्यस्य प्रलयकालीनाया निर्विशेषस्य कार्योदासीनायाः प्रकृतेरुभयविधाया यतश्चेष्टा जगत्सृष्ट्याद्यनुकूलक्रिया भवति स काल इत्यस्माभिरुपलक्षितो ज्ञातः । प्रलयकालीनप्रकृतिप्रवर्तको निरवधिकव्याप्तिमान् शून्यनामा विष्णुरेव काल इति ममापि संमतमित्याशयः ॥ १८ ॥

**अन्तः पुरुषरूपेण कालरूपेण यो बहिः ।**
**समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १९ ॥**

**प्रकाशिका–** नन्वयं व्याप्तः कालाख्यो भगवान्हृदिस्थात्पुरुषाख्याद्रूपाद्भिन्नश्चेत्तत्त्वानां पञ्चविंशतित्वोक्त्ययोगः । अभिन्नश्चेदेकस्मिन्परिच्छिन्नापरिच्छिन्नपरिमाणद्वयासंभव इत्यतोऽभेदेऽप्यघटितघटकैश्वर्ययोगेन विरुद्धपरिमाणद्वयसंभव इत्याशयेनाह ॥ अन्तरिति । आत्ममायया स्वसामर्थ्येन । सत्त्वानामिति कर्मणि षष्ठी । सर्वान्प्राणिनो यः समन्वेति व्याप्नोति स भगवानेक एवेत्याशयः॥१९॥

**दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।**
**आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ २० ॥**

**तात्पर्यम्– 'प्रकृतेः क्षोभकं रूपं दैवं नारायणात्मकम् । प्रकृतौ महतः स्रष्टा परमः पुरुषो मतः। 'तदेव वासुदेवाख्यं महत्तत्त्वनियामकम् । सङ्कर्षणाख्यस्तु हरिः सूक्ष्माहङ्कारयामकः । स्थूलाहङ्कारनियमी विष्णुः प्रद्युम्ननामकः। अनिरुद्धो मनस्तत्त्वनियन्ता भगवान्हरिः । महत्तत्त्वादिजीवास्तु ब्रह्मशेषाङ्गजास्तथा । सूक्ष्मस्थूलविभेदेन कामजश्चानिरुद्धक' इति कापिलेये ॥२०॥**

**प्रकाशिका–** एवं पुरुषस्य प्रकृतिव्याप्तिविलक्षणां व्याप्तिमभिधायेदानीं प्रकृतिकारणत्वविलक्षणं कारणत्वे कर्तृत्वरूपं दर्शयंस्तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह ॥ दैवादिति । अत्र दैवशब्दो जीवादृष्टपर इति प्रतीयते । उत्तरत्र च वासुदेवसङ्कर्षणानिरुद्धा एव महदहङ्कारमनोनियामकतया कथ्यन्ते न प्रद्युम्नः । महदादिशब्दाश्च जडपरा एवेति च प्रतीयन्तेऽत एतत्प्रकरणतात्पर्यं प्रमाणेनैवाह ॥ प्रकृतेरिति । दैवमित्यनूद्य नारायणात्मकमिति व्याख्यानम् । प्रलयजलशायीत्यर्थः । क्षोभकं सृष्ट्याभिमुख्ये कारकम् । चेतनायास्तु सिसृक्षत्वावस्थाप्रापकम् । योनावित्यस्य व्याख्यानम् ॥ प्रकृताविति । परः पुमानित्यस्यार्थः ॥ परमः पुरुषोत्तम इति । नन्वयं किं प्रलयवर्ती नेत्याह ॥ तदेवेति । यो महतः स्रष्टा तत्तु महत्तत्त्वनियामकं च रूपं वासुदेवाख्यमेव । मूले तूत्तरत्र सहस्रशिरसमिति विशेषणात् । सङ्कर्षणाख्यमित्यत्र शेष एव प्रतिपाद्यत इति प्रतीतिवारणाय तत्तात्पर्यमाह ॥ सङ्कर्षणाख्य इति । तु शब्दोऽवधारणे । हरिरेवेति संबध्यते । यामको नियामकः । मूले उपलक्षणतयेदमपि ग्राह्यमित्याशयेनाह ॥ स्थूलेति । अनिरुद्धाख्यमिति मूलेऽनिरुद्धो न कामपुत्रो विवक्षितः किन्तु हरिरेवेत्याह ॥ अनिरुद्धेति । महदादितत्त्वनियामकहरिमूर्तिकथनप्रसङ्गात्तदभिमानिनो देवानप्याह ॥ महत्तत्त्वादीति । महत्तत्त्वादीनामभिमानिनो जीवा इति विशेषसूचनाय तुशब्दः । अङ्गजः कामः । तथाच कामजश्चानिरुद्धक इत्येते चत्वारो विवक्षिता इति शेषः । नन्वभिमानिनश्चत्वारोऽभिमन्यमानानि महदहङ्कारमनांसि त्रीण्येवातः कथं घटतेत्यत उक्तम् ॥ सूक्ष्मस्थूलविभेदेनेति । अहङ्कारस्येति शेषः । ततश्च शेषः सूक्ष्माहङ्काराभिमानी स्थूलाहङ्काराभिमानी काम इति विवेको ज्ञातव्यः ॥ २० ॥

**विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।**
**स्वतेजसाऽपिबत् तीव्रमात्मप्रस्वापनं तमः ॥ २१ ॥**

**तात्पर्यम्– 'अङ्के रमयते यस्मात्केशवो जगदङ्कुरः । महान्तं योऽसृजज्जीवमोहकं च तमोऽग्रसदि'ति च ॥ २१ ॥**

**प्रकाशिका–** ननु प्रलयकालीने तमसि स्वसृष्टतत्त्वसाक्षात्कारप्रतिबन्धके सति कथं तत्र विश्वसृष्टिरित्यतस्तत्प्रदेशस्थं तमो भगवता पीतमित्याह ॥ विश्वमिति । अत्र जगदङ्कुरशब्देन महत्तत्त्वस्यैव पानकर्तृतया गृहणे कूटस्थ इति विशेषणानुपपत्तिरतो यौगिकोऽयं जगदङ्कुरशब्दो महत्तत्त्वजनकतया प्रकृतहरिपर एवेत्याशयेनात्र प्रमाणं पठति ॥ अङ्क इति । जगदङ्के रमयते यस्मात्तस्माज्जगदङ्कुरः । इत्युच्यते इति शेषः । महान्तं योऽसृजज्जीव इत्यनेन तस्य पूर्वप्रकृतत्वं सूचयति । आत्मप्रस्वापनमित्यस्य तात्पर्यम् ॥ मोहकमिति । साक्षात्कारप्रतिबन्धकमित्यर्थः । अपिबदित्यस्यार्थः ॥ अग्रसदिति ॥ ततश्चायं श्लोकार्थः ॥ उक्तरीत्या जगदङ्कुरः स एव परः पुमान्विश्वमुत्पत्स्यमानं महदादिकं व्यञ्जयन् अन्येषामपि साक्षात्कारविषयतां प्रापयन्स्वतेजसा स्वप्रभया तीव्रं निबिडम् । आत्मनां चतुर्मुखादीनां प्रस्वापनं मोहकम् । साक्षात्कारप्रतिबन्धकमिति यावत् । अपिबदग्रसीत् । अपसारितमकरोदिति यावत् ॥ २१ ॥

**यत् तत् सत्वगुणं स्वच्छं शान्तं भगवतः पदम् ।**
**यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २२ ॥**

**तात्पर्यम्– यद्वासुदेवाख्यं भगवद्रूपं ततो महदात्मकं चित्तं जायते । 'सत्वशब्देन चोच्यन्ते पूर्णानन्दादयो गुणा' इति च । महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः । स चित्तजनकः प्रोक्तः प्राणिनां च पृथक्पृथगि'ति च ॥ २२ ॥**

**प्रकाशिका–** अत्र प्रसङ्गान्महत्तत्त्वगतस्य वासुदेवस्याध्यात्ममहत्तत्त्वात्मकचित्तजनकत्वमप्यस्तीत्याह ॥ यत्तत्सत्त्वगुणमिति । अत्र यद्वासुदेवाख्यं तदेव चित्तमिति सामानाधिकरण्येनाभेदप्रतीतिवारणायापेक्षितमध्याहृत्य योजनां दर्शयति ॥ यद्वासुदेवाख्यमिति । भगवतः पदमित्यस्यार्थः ॥ भगवत्स्वरूपमिति । सत्त्वगुणं सत्त्वगुणप्राचुर्योपेतमित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव सत्त्वशब्दार्थमाह ॥ सत्त्वशब्देनेति । हरिप्रकरणगतेनेति शेषः । तु मुख्यवृत्त्यैव । एवमेव योजनेत्यत्र ज्ञापकं समाख्याप्रमाणं पठति ॥ महत्तत्त्वगत इति । हिशब्देन श्रुत्यादिप्रसिद्धिं दर्शयति ॥ ततश्चायं श्लोकार्थः ॥ यत्तत्सर्ववेदप्रसिद्धं सत्त्वगुणं पूर्णानन्दादिगुणं स्वच्छं धवलं शान्तं प्रसन्नं यद्वासुदेवाख्यं भगवतः

पदं स्वरूपं तत्तस्मान्महदात्मकं महत्तत्त्वोपादानकं चित्तमन्तःकरणप्रभेदरूपकम् । ज्ञायत इति शेषः ॥ २२ ॥

**स्वच्छत्वमविकारित्वं शान्तत्त्वमिति चेतसः ।**
**वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २३ ॥**

**तात्पर्यम्– चित्तस्य स्वच्छत्वादयः पृथग्गुणा उच्यन्ते स्वच्छत्वमित्यादि । 'स्तिमितोदकचित्तादेरविकारोऽल्पविक्रिये'ति तत्त्वविवेके । 'वृत्तिः स्वभावो वृत्तं च स्थितिरित्यभिधीयत' इति शब्दनिर्णये । वृत्तिभिर्लक्षणं प्रोक्तमिति स्वाभाविकं लक्षणमित्यर्थः ॥ २३ ॥**

**प्रकाशिका–** चित्तस्य स्वाभाविकानि लक्षणान्याह ॥ स्वच्छत्वमिति । ननु स्वच्छत्वादयो वासुदेवगुणतयोक्तास्तेषामेव कथं चित्तगुणत्वेनोक्तिरित्यतः शब्दसाम्येऽप्यर्थभेदोऽस्तीत्याह ॥ चित्तस्य स्वच्छत्वादय इति । पृथग्वासुदेवगुणभूतस्वच्छत्वाद्यपेक्षयाऽन्य इत्यर्थः । नन्वविकारित्वमसंभवि चित्तस्य विकारित्वादित्यतस्तत्र तात्पर्यं प्रमाणेनैवाह ॥ स्तिमितोदकेति । यत्र पुराणादौ स्तिमितं निश्चलमुदकं चित्तमादिपदात्तादृशं वाय्वादिकं वाऽविकारमित्युच्यते । तत्राल्पविक्रिया बहुतरविकाराभाव एव व्याख्येयो न सर्वथा विकाराभाव इत्यर्थः । ननु स्वच्छत्वादीनां चित्तवृत्तिरूपत्वाभावात्कथं वृत्तिभिर्लक्षणमित्यतोऽत्र विवक्षितं वृत्तिशब्दार्थं प्रमाणेनैव दर्शयति ॥ वृत्तिरिति । वृत्तिरित्यादिभिः शब्दैः स्वभावोऽभिधीयत इत्यर्थः । एवं वृत्ति शब्दस्य स्वभावार्थत्वे प्रकृते को वाक्यार्थो लब्ध इत्यतस्तं दर्शयति ॥ वृत्तिभिरिति । वृत्तिभिः स्वभावैः स्वरूपभूतैर्धर्मैः । लक्षणं प्रकृत्या चरत्सुरित्यादिवत्तृतीया । तादृशधर्मा एव लक्षणमित्यर्थः । एकवचनं समुदायापेक्षम् ॥ ततश्चायं श्लोकार्थः ॥ स्वच्छत्वं निर्मलत्वविकारित्वं बहुतरविकाराभावः । शान्तत्वं निश्चंचलत्वं चेतसः सच्चित्तस्य वृत्तिभिः स्वभावैर्लक्षणम् । तादृशस्वभावात्मकान्येव लक्षणानि शास्त्रोक्तानीत्यर्थः। ननु स्वच्छत्वादिकमनुपलभ्यतेऽतः कथमिदं तल्लक्षणमित्यत आह ॥ यथेति । प्रकृतिः स्वभावः । परा पश्चात्कालीना दृश्यते । तद्वदिति शेषः । यथा प्रावृट्कालेऽपां मृत्तिकादिना कालुष्यं बहुतरफेनतरङ्गादिरूपो विकारश्चाञ्चल्यं दृश्यते । अथ प्रावृट्कालगमनानन्तरं शरीरादिनैर्मल्यं फेनतरङ्गादिरूपेण विकाराभावो ह्रदादिषु निश्चलत्वं स्वभावभूतं दृश्यते । तथा सच्चित्तेष्वपि श्रवणाद्यभावकाले स्वच्छत्वाद्यदर्शनेऽपि श्रवणादिसंपत्तिप्राप्त्यनन्तरं दृश्यत एवातो नासंभव इति भावः ॥ २३ ॥

**महत्तत्त्वाद् विकुर्वाणाद् भगवद्वीर्यसम्भवात् ।**
**क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत ॥ २४ ॥**

**तात्पर्यम्– 'ज्ञानप्रधानस्तु महानहङ्कारः क्रियाधिकः । इतरापेक्षया सोऽपि ज्ञानाधिक इतीरित' इति च ।। २४ ।।**

**प्रकाशिका–** अहंकारस्योत्पत्तिपूर्वकं विभागादिकमाह ।। महत्तत्त्वादित्यादिना । क्रियासु स्वविहितासु शक्तिर्यस्य स तथा । नन्वेवं महति न क्रियाऽहङ्कारे च न ज्ञानमित्यागतमित्यतोऽत्र तात्पर्यं प्रमाणेनैव दर्शयति ।। ज्ञानप्रधान इति । तुशब्दोऽनुक्तसमुच्चायकः । स्वगतज्ञानापेक्षयाऽल्पक्रियावानित्यर्थः । क्रियाधिकः स्वगतज्ञानापेक्षयाऽधिकक्रियावानित्यर्थः । कुत एवं तत्र ज्ञानाभाव किं न स्यादित्यत आह ।। इतरेति । उमाद्यपेक्षयेत्यर्थः । ईरितः । वेदादाविति शेषः । तथा चोमाद्यपेक्षयाऽधिकज्ञानत्वे सति स्वगतज्ञानापेक्षयाऽधिकक्रियावत्त्वमहङ्कारलक्षणमनेनोक्तं भवतीति ज्ञातव्यम् ।। २४ ।।

**वैकारिकस्तैजसश्च तामसश्च यतो भवः ।**
**मनसश्चेन्द्रियाणां च भूतानां महतामपि ।। २५ ।।**

**प्रकाशिका–** त्रैविध्यं दर्शयति ।। वैकारिक इति । वैकारिकादीनां कार्याण्याह ।। यत इति । यतो यस्मान्मनसो भवः स वैकारिकः । एवं यत इन्द्रियाणां भवः स तैजसो यतो भूतानां भवः स तामस इति त्रिविध इत्यन्वयः ।। २५ ।।

**वैकारिकोऽधिदैवं तु बुद्धिः प्राणश्च तैजसः ।**
**तामसस्त्वर्थमात्रं च गुणव्यतिकरस्त्रिवृत् ।। २६ ।।**

**तात्पर्यम्– 'देवताधिकृतं यत्तदधिदैवमिति स्मृतमि'ति च । वैकारिकोऽधिदैवमित्यादि पञ्चम्यर्थे । 'सप्तसु प्रथमा यत्र स्वातन्त्र्यं यद्विवक्षितमि'ति शब्दनिर्णये ।। २६ ।।**

**प्रकाशिका–** वैकारिकादीनां कार्यान्तराणि दर्शयति ।। वैकारिक इति । अत्राधिदैवमित्यस्य प्रकृतसङ्गतमर्थं प्रमाणेनैवाह ।। देवताधिकृतमिति । तथा च देवताभिरिन्द्रियदेवताभिरधिकृतमधिष्ठित यच्छरीरजातं तदिहाधिदैवशब्देनोच्यत इत्युक्तं भवति । नन्वेवमिन्द्रियदेवतादेहानां वैकारिकाहङ्कारजातत्वे वैकारिकोऽधिदैवमिति कथं प्रथमाप्रयोग इत्यत आह ।। वैकारिक इति ।। इत्यादि पञ्चम्यर्थ इति । इत्यादिषु वाक्येषु विद्यमानाः प्रथमाः पञ्चम्यर्थे व्याख्येया इत्यर्थः । कुत एवं प्रयोग इत्यतोऽत्र नियामकं प्रमाणं पठति ।। सप्तस्विति । यद्यत्र कारणे स्वातन्त्र्यं विवक्षितं तत्र कारणे सप्तसु विभक्त्यर्थेषु प्रथमैक भवतीत्यर्थः । प्रकृते च वैकारिकादीनां कारणानां स्वातन्त्र्यं द्योतयितु प्रथमायोग इति भावः ।। ततश्चायं मूलार्थः ।। वैकारिको वैकारिकात् । तुशब्द इन्द्रियसंबन्धित्व-

रूपविशेषार्थः । अधिदैवमिन्द्रियसंबन्धिदेवताधिष्ठितं देहजातमित्यर्थः । बुद्धिर्बुद्धितत्त्वं तदभिमान्युमा च प्राणोऽहङ्कारिकः तैजसस्तैजसाज्जाता इत्यर्थः । तामसं तु तामसादेवार्थमात्रं मीयत इति मात्राः शब्दादिरूपं मेयम् । जातमिति शेषः । कुत एवं विभागेन कार्यजनकत्वमहङ्कारस्येत्यत आह ॥ गुणव्यतिकर इति । गुणानां सत्त्वादीनां व्यतिकरो व्यत्यासो वैषम्यं यस्मिन्स तथा । यतो गुणव्यतिकरोऽहङ्कारस्तस्मादुक्तरीत्या त्रीणि कार्याणि वृणोतीति त्रिवृत् । स्वप्रविष्टसत्त्वादिगुणानुसारेणोक्तं कार्यत्रयमहङ्कारमुत्पादितवानिति भावः ॥ २६ ॥

**सहस्रशिरसं साक्षाद् यमनन्तं प्रचक्षते ।**
**संकर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २७ ॥**

**प्रकाशिका–** अहङ्काराभिमानिनं देवं तन्नियामकं भगवद्रूपं चाह ॥ सहस्रशिरसमिति । यं सूक्ष्माहङ्कारमनन्तं शेषाभिमन्यमानं प्रचक्षते ज्ञानिनः सङ्कर्षणाख्यं पुरुषं भगवन्तं भूतेन्द्रियमनोमयं भूताद्यात्मकसूक्ष्माहङ्कारनियामकं प्रचक्षत इत्यन्वयः । उपलक्षणं चैतत् । स्थूलाहङ्कारकामाभिमन्यमानं तन्नियामकं भगवन्तं प्रद्युम्नाख्यं प्रचक्षत इत्यपि ग्राह्यम् ॥ २७ ॥

**कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।**
**शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ २८ ॥**

**तात्पर्यम्– 'मनोरूपेण कर्तृत्वं देहरूपेण कार्यता । इन्द्रियात्मतया चैव करणत्वमहङ्कृतेः । यतो मनस्यहंभावस्तस्मात्कर्तृ मनः स्मृतम् । स्वभावकर्तृर्जीवस्य त्वासन्नोपाधि तद्यतः । कर्मज्ञाने करणता यतः करणमिन्द्रियम् । कार्यं देहः समुद्दिष्ट उत्पाद्यत्वात्पुनःपुनरि'ति तत्त्वविवेके ॥ 'शान्तरूपो देवपिता घोरः करणसृड्गतः । तावज्ज्ञानस्याप्रकाशान्मूढो भूतपिता स्मृतः । त्रिरूपोऽयमहङ्कारः शेष इत्येव तं विदुरि'ति तत्त्वविवेके ॥ २८ ॥**

**प्रकाशिका–** अहङ्कारलक्षणान्याह ॥ कर्तृत्वमिति । अहङ्कृतेरिति वक्ष्यमाणमत्रापि संबध्यते । अत्रैकस्याहङ्कारस्य कथं विरुद्धकर्तृत्वादिकमित्यतस्तद्धटनां प्रमाणेनैव दर्शयति ॥ मनोरूपेणेति । वैकारिकाहङ्कारस्य मनोरूपेण परिणतत्वादिति भावः ॥ देहरूपेणेति । तामसाहङ्कारस्य भौतिकदेहाकारेण परिणतत्वादित्याशयः । इन्द्रियात्मतयैवेत्येवकारसंबन्धः । तैजसाहङ्कारस्येन्द्रियाकारेण परिणतत्वादित्याशयः । मनोरूपेण कर्तृत्वमित्युक्तमुपपादयति ॥ यत इति । मनसि सत्यहंभावोऽहं कर्तेत्यभिमानो जायते । तस्मात्कर्तृत्वाभिमानजनकत्वात् । ननु जीवे कर्तृत्वं स्वाभाविकं तदनुभवोऽपि साक्षिरूपो नित्योऽतः कथं तत्र जडमनस उपयोग इत्यत आह ॥ स्वभावेति । तन्मनः । तु

विशेषेणासन्नोपाधिस्थूलदेहापेक्षया सन्निहितोपाधिरूपमित्यर्थः । कर्तृत्वादेः स्वाभाविकत्वेऽपि देहादावहंममाभिमानरूपस्य ज्ञानस्य बाह्योपाधिसंबन्धं विनोत्पादासंभवादित्याशयः । इन्द्रियात्मतया करणत्वमित्युक्तमुपपादयति ॥ कर्मज्ञान इति । कर्मसहितं ज्ञानं तस्मिन् । कर्मशब्दः कर्मेन्द्रियसाध्यवचनादिक्रियापरः । इन्द्रियमित्येकवचनं सुमुदायापेक्षम् । तथा च कर्मसु ज्ञानेषु च यत इन्द्रियाणां करणताऽत इत्यर्थः । ननु कार्यत्वस्येन्द्रियादिसाधारण्यात्कथं देहरूपेण कार्यतेत्युक्तमित्यतस्तदभिप्रायमाह ॥ कार्यं देह इति । सत्यमिन्द्रियादिकमपि कार्यमिति तथाऽप्येकादशेन्द्रियाणि लिङ्गशरीरात्मनोऽनादिसंबद्धानि पुनः पुनरुपचीयन्ते । देहस्तु कर्मवशादविद्यमान एव पुनः पुनर्नूतनो जायतेऽतोऽसाधारण्येन देहस्य कार्यरूपत्वमुक्तमित्याशयः । लक्षणान्तरमाह ॥ शान्तेति । एकस्मिन्नहङ्कारे विरुद्धं शान्तत्वादिकं कथमित्यतोऽत्रापि प्रमाणेनैव तद्विवेकं दर्शयति ॥ शान्तरूप इति । देवपिता वैकारिकः । शान्तरूपः शान्तरूपदेवजनकत्वादेवेत्याशयः । करणस्रगिन्द्रियस्रष्टा तैजसो घोरो घोररूपसंसारसाधनेन्द्रियजनकत्वादेवेत्यर्थः । भूतपिता तामसोऽप्रकाशादप्राकट्याद्यावद्वैकारिके तैजसे वा स्थितस्याभिमानिनो ज्ञानप्रकटनं न तावत्तामसाहङ्कारे स्थितस्यातोऽयं मूढ इत्युच्यते इत्यर्थः । ननु कोऽत्राभिमानी यस्य ज्ञानादिप्रसक्तिरित्यत आह ॥ त्रिरूप इति । योऽयं त्रिरूप इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ अहंकृतेरहङ्कारस्य कर्तृत्वं वैकारिककार्यं मनोरूपेण देहादावहंममेत्यादिरूपं कर्तृत्वाभिमानजनकत्वात्तैजसमिन्द्रियरूपेण ज्ञानक्रियाकरणत्वं तामसं कार्यभूतात्मकदेहरूपेण पुनः पुनर्जननात्कार्यत्वं च लक्षणं ज्ञातव्यमित्यर्थः । लक्षणान्तरमाह ॥ शान्तेति । वैकारिकरूपेण शान्ते देवदेहजनकत्वाच्छान्तत्वं तैजसरूपेण घोरसंसारजनकेन्द्रियजनकत्वाद्धोरत्वम् । तामसरूपस्य शेषस्य पूर्ववज्ज्ञानप्राकट्याभावान्मूढत्वमिति वा लक्षणं ज्ञातव्यमित्यर्थः ॥ २८ ॥

**वैकारिकाद् विकुर्वाणान्मनस्तत्त्वमजायत ।**
**यत् सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः ॥ २९ ॥**

**प्रकाशिका–** वैकारिकाद्यहङ्कारेभ्यो मन आदीनामुत्पत्तिरुक्ता ॥ तामधुना प्रपञ्चयति ॥ वैकारिकादित्यादिना । तल्लक्षणमाह ॥ यत्संकल्पेति । यद्यस्मात्संकल्पविकल्पवृत्तिविशेषाभ्यां कामसंभवो वर्तते भवति । तन्मनस्तत्त्वमजायतेत्यन्वयः । सङ्कल्पविकल्पद्वारा नानाविधकामजनकं मन इति लक्षणमुक्तं भवति ॥ २९ ॥

**यद् विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ।**
**शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ ३० ॥**

**प्रकाशिका–** मनस्तत्त्वस्याभिमानिनं देवं नियामकं भगवद्रूपं चाह ॥ यद्विदुरिति । यदनिरुद्ध इत्याख्या यस्य कामपुत्रस्य तत्तदभिमन्यमानं विदुः । अनिरुद्ध इत्याख्या यस्य भगवद्रूपस्य तत्तन्नियम्यमिति वा । हृषीकाणामिन्द्रियाणामधीश्वरं श्रेष्ठम् । अत एव वैकारिकाज्जननं न तैजसात् । अनिरुद्धस्य वर्णमाह ॥ शारदेति । शारदं शरत्कालीनमिन्दीवरम् । नीलोत्पलं तद्वच्छामम् । इदमुपलक्षणम् । सङ्कर्षणस्य रक्तत्वं प्रद्युम्नस्य पीतत्वं च द्रष्टव्यम् । योगिभिः संराध्यं मनोजयाय सम्यगाराध्यम् । मनः परत्वे तु योगिभिः प्रत्याहारादिरूपयोगवद्भिः शनैः संराध्यं वशीकर्तुं योग्यं नान्यथा दुर्ग्रहत्वात् ॥ ३० ॥

**तैजसात् तु विकुर्वाणाद् बुद्धितत्त्वमभूत् सति ।**
**द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहात् ॥ ३१ ॥**

**तात्पर्यम्– द्रव्यस्फुरणे यद्विशेषज्ञानम् ॥ ३१ ॥**

**प्रकाशिका–** हे सति । द्रव्यस्फुरणविज्ञानमित्येतदप्रतीत्या व्याख्याति ॥ द्रव्यस्फुरण इति ॥ तथा चेन्द्रियाणां चक्षुरादीनामनुग्रहादनुप्रवेशनान्मनसा द्रव्यस्य स्फुरणे सामान्याकारेण ज्ञाने जाते सतीन्द्रियाणामनुग्रहाद्बुद्ध्या यद्विशेषं ज्ञानं जायते तद्बुद्धेर्लक्षणमिति मूलार्थ इति भावः ॥ ३१ ॥

**संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।**
**स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३२ ॥**

**तात्पर्यम्– 'सामान्यं मनसा जातं (ज्ञानं) विशेषाद्बुद्धिजं भवेत् ॥ 'अचलः संशयो बुद्धेश्चलो मानस उच्यते । चञ्चला तु स्मृतिर्बुद्धेश्चित्तजैव स्थिरास्मृतिरि'ति च ॥ 'येन यज्ज्ञायते वस्तु तत्तल्लक्षणमुच्यते । तत्स्वरूपं पृथक्चेति द्विविधं कवयो विदुरि'ति कापिलेये ॥ ३२ ॥**

**प्रकाशिका–** लक्षणान्तरमप्याह ॥ संशय इति । अत्र मनसा द्रव्यस्फुरणे सति बुद्धेर्विशेषज्ञान-जनकत्वमित्येतत्प्रपञ्चयत्संशयादिजनकत्वं मनसः साधारणस्मृतिजनकत्वं च चित्तेऽतिव्याप्तमिति शङ्कापरिहाराय बुद्धिसाध्यान्संशयादीन्प्रदर्शयितुं प्रमाणं पठति ॥ सामान्यमिति । सामान्यं सामान्या-कारविषयम् । विशेषाद्विशेषमवग्राह्यम् । अचलो विशेषदर्शनानिवर्त्यः । चलो विशेषदर्शने निवर्त्यः । चञ्चलाऽदृढा । विमर्शे सति बाध्येति यावत् । तुशब्दोऽवधारणे । बुद्धेः । जायत इति शेषः । ननु बुद्धिकार्याणां संशयादीनां कथं बुद्धिलक्षणत्वमित्याशङ्कापरिहाराय मूले बुद्धेः पृथक् लक्षणमित्युक्तम् । लक्ष्यस्वरूपानात्मकं लक्षणमित्यर्थः । तत्र लक्षणस्वरूपानात्मकस्य लक्षणत्वं कथमित्यतः प्रमाणेनैव तदुपपादयति ॥ येनेति । ज्ञायते । इतरव्यावृत्तत्वादिनेति शेषः । तथा च पृथक् लक्षणस्यापीतरव्या-

वृत्ततया लक्ष्यज्ञानजनकत्वाल्लक्षणमुपपन्नमिति भावः ।। तथा चायमर्थः ।। विशेषदर्शनानिवर्त्यः संशयस्तादृशो विपर्यासो विपरीतनिश्चयः । निश्चय इदमित्थमेवेति प्रमाणजन्यः । स्मृतिश्चश्चला विमर्शबाह्या । एवशब्देन चित्तजां स्मृतिं व्यावर्तयति । स्वापो निद्रा । इत्येवं रूपाभिर्वृत्तिभिः कार्यैः पृथक् स्वरूपानन्तर्गतं लक्षणमुच्यते शास्त्रे । इतरव्यावृत्तत्वेन लक्ष्यज्ञानजनकत्वादिति । अत्र वृत्तिभिरिति वचनं कार्यकारणभावेन संबन्धेनोक्तलक्षणानां लक्ष्यधर्मत्वप्रदर्शनायेति ज्ञातव्यम् ।।३२।।

**तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ।**
**प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ।। ३३ ।।**

**तात्पर्यम्– 'प्रधानवायुः सूत्रात्मा महता सह जायते । तैजसश्च खजः स्पर्श इत्याद्यास्तत्सुताः स्मृताः । तदाविष्टा अन्यजीवास्तदाधाराश्च तद्वला' इति च ।। ३३ ।।**

**प्रकाशिका–** इन्द्रियाण्येवेत्येवकारेण तदभिमानिदेवतादेहव्यवच्छेदः । कथं भूतानीन्द्रियाणि । क्रियाज्ञानविभागशः क्रियाज्ञानरूपकार्यविभागेन । विभक्तानीति शेषः । तथा च क्रियाजनकानि विज्ञानजनकानि चेत्युक्तं भवति । बुद्धिः प्राणश्च तैजस इति बुद्धिप्राणयोस्तैजसत्वमुक्तम् । तयोरपि किमिन्द्रियत्वं न किन्तु तदभिमानित्वमेवेत्याशयेनाह ।। प्राणस्येति । क्रियाशक्तिः कर्मेन्द्रियप्रेरकतया क्रियाजनने शक्तिरित्यर्थः । बुद्धेरुमाया विज्ञानशक्तिता न किन्तु तदभिमानित्वमेवेत्याशयेनाह ।। प्राणस्येति । क्रियाशक्तिः कर्मेन्द्रियप्रेरकतया क्रियाजनने शक्तिरित्यर्थः । बुद्धेरुमाया विज्ञानशक्तिता ज्ञानेन्द्रियप्रेरकतया विज्ञानजननशक्तिमत्वमित्यर्थः । अत्र प्राणशब्देन न मुख्यप्राणग्रहणम् । तस्य पूर्वमेवोत्पन्नत्वादतोऽन्य एव प्राणो ग्राह्य इति प्रमाणेनैव दर्शयति ।। प्रधानवायुरिति । महता सह जायतेऽतो नात्र विवक्षित इति भावः । तैजसस्तैजसाहंकारकार्यः । खज आकाशाद्वायुरित्युक्तो भूताभिमानी प्रवहः । स्पर्शस्त्वगिन्द्रियाभिमानी प्राणः । तत्सुताः प्रधानवायुसुताः । तथा चात्र तैजसाहंकारिकप्राण एव ग्राह्य इति भावः ।। ३३ ।।

**तामसाच्च विकुर्वाणाद् भगवद्वीर्यचोदितात् ।**
**शब्दमात्रमभूत् तस्मान्नभः श्रोत्रं तु शब्दगम् ।। ३४ ।।**

**प्रकाशिका–** शब्दमात्रं शब्द एव श्रोत्रमिन्द्रियं तस्मान्नभसोऽभूदिति संबन्धः । तुशब्दः पूर्वमुत्पन्नमपि तन्नभसा पुनरुपचितं भवतीति वक्ष्यमाणविशेषसूचनार्थकः । शब्दं गमयतीति शब्दगम् ।।३४।।

**अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ।**
**तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ।। ३५ ।।**

**तात्पर्यम्– अर्थाश्रयत्वम् अर्थविषयत्वम् । 'शब्देनैव यतो ज्ञेयो हरिर्लिङ्गं तु तस्य तत् । स्पर्शाद्यभावात्तन्मात्रा नभसश्चेति कीर्त्यते । स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थितेः । तिष्ठत्येको गुणो भूते प्रत्येकं पञ्चसु स्थितः । शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः । आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते । स एव व्यज्यमानस्तु भवेत्कर्णैकगोचर' इति च ॥ ३५ ॥**

**प्रकाशिका–** शब्दलक्षणमाह ॥ अर्थाश्रयत्वमिति । अर्थो विषयो यस्य स तथा तस्य भावस्तत्वम् । अर्थप्रतिपादकत्वमित्यर्थः । द्रष्टुर्लिङ्गत्वमित्यस्य कुड्यादिव्यवहितस्य वक्तुरनुमापकत्वमिति व्याख्यानमसदिति भावेन प्रमाणेनैव तद्व्याख्याति ॥ शब्देनैवेति । अनेन हरिज्ञापकत्वं लक्षणं नातिव्याप्तमिति दर्शितं भवति । लिङ्गं ज्ञापकम् । तुशब्दस्तस्मादित्यर्थे । तथा च द्रष्टुः सर्वज्ञस्य लिङ्गत्वं ज्ञापकत्वं च शब्दस्य लक्षणं विदुरिति मूलार्थ इति भावः । एवकारः परकीयव्याख्याननिरासार्थः । नभसस्तन्मात्रत्वं च शब्दस्य लक्षणमित्युच्यते । तदुपपादयति ॥ स्पर्शाद्यभावादिति । शब्द इति शेषः । न केवलं लिङ्गमिति कीर्त्यते नभसस्तन्मात्रश्चेति कीर्त्यत इति संबन्धः । यद्वा अत्र मात्रशब्द इतरगुणाभावसमानाधिकरणगुणपर इत्यभिप्रेत्य प्रमाणेनैव तदुपपादयति ॥ स्पर्शाद्यभावादिति । तथाच शब्दस्य नभसस्तन्मात्रत्वमितरगुणाभावसमानाधिकरणगुणत्वं च लक्षणमिति मूलार्थ इति भावः । नन्वेवं वाय्वादौ त्वक् शब्दादीनामपि सत्वेन स्पर्शादीनां कथं मूले वक्ष्यमाणं तन्मात्रत्वमित्यत आह ॥ स्पर्शादयश्चेति । तन्मात्रा उक्तरूपतन्मात्रा इति कीर्त्यन्ते । यतः पञ्चसु भूतेषु प्रत्येकं स्वभावतः स्थित एको गुण स इतरे स्वाश्रयादन्यस्मिन् भूते पूर्वसंस्थितेः पूर्वभूतानुषंगादेव तिष्ठति । न स्वभावतः । अतः स्वाभाविकेतरगुणाभावसमानाधिकरणगुणत्वरूपतन्मात्रत्वं स्पर्शादावपि युक्तमेवेत्याशयः । ननु शब्दमात्रमभूदिति शब्दस्य तामसाहंकारकार्यत्वमुक्तम् । तत्किं वर्णात्मकशब्दस्योत ध्वन्यात्मकस्य । नाद्यः । तस्य नित्यत्वात् । न द्वितीयः । तस्याकाशजन्यत्वेन तामसाहङ्कारकार्यत्वाकाशोपादानत्वयोरसंभवादित्याशङ्क्य परिहरति ॥ शब्द इत्यादिना । तु शब्दोऽप्यर्थको यद्यपि तथाऽपीत्यर्थे वर्तते । तथा च यद्यपि शब्दो वर्णात्मक इत्यादि तथाऽपि सूक्ष्मध्वनिरेवाकाश आकाशात्मना विकृतः स एव तामसाहङ्कारकार्यत्वादिना शब्द्यत इत्यर्थः । ननु तर्हि तस्याव्यक्तत्वेन कथं कर्णग्राह्यत्वमित्यत आह ॥ स एवेति । स एव सूक्ष्मरूप एव ध्वनिः । तु शब्दः स्थूलत्वरूपविशेषद्योतकः । स्थूलतया व्यज्यमानो भेर्याद्याघातादिनाऽऽकाशसंभूतः कर्णैकगोचरो भवेदित्यर्थः । ध्वनिर्द्विविधः । एक आकाशसूक्ष्मभागोपचायकः । अपरः स्थूलतया पुनराकाशसंभूतः । तत्राद्य एव तामसाहङ्कारकार्यम् । द्वितीय आकाशगुणः कर्णगोचरश्चेति विवेकः । एवं स्पर्शादावपि द्वैविध्यं ज्ञातव्यम् ॥ ३५ ॥

**भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ।**
**प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ३६ ॥**

**प्रकाशिका–** आकाशलक्षणं वक्ति ॥ भूतानामिति । छिद्रदातृत्वं गमनाद्यर्थमवकाशदातृत्वं बहिर्देहाद्बहिर्विद्यमानानां प्राणिनां प्राणापानादीनामिन्द्रियाणामात्मनो मनसश्च नाड्यादिछिद्ररूपेण धिष्ण्यत्वमाश्रयत्वं चान्तरमन्तर्विद्यमानमेव वृत्तिलक्षणं स्वाभाविकं लक्षणमित्यर्थः । बहिरन्तरिति व्यवहारास्पदत्वमपरं लक्षणमित्यप्याहुः ॥ ३६ ॥

**नभसः शब्दतन्मात्रात् कालगत्या विकुर्वतः ।**
**स्पर्शोऽभवत् ततो वायुस्त्वक् स्पर्शस्य च संग्रहः ॥ ३७ ॥**

**तात्पर्यम्– नभसः शब्दतन्मात्राच्छब्दतन्मात्रगुणात् । 'स्पर्शादयोऽपि वाय्वादेः सूक्ष्मावस्था प्रकीर्तिता' इति च । 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः । भूतेभ्यश्चोपचीयन्ते पुनर्ब्रह्मशरीरत' इति च ॥ ३७ ॥**

**प्रकाशिका–** नभसः स्पर्शद्वारावायूत्पत्तिमाह ॥ नभस इति । शब्दतन्मात्रादित्यस्य शब्दलक्षण-सूक्ष्मरूपादित्यन्यथाप्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ नभस इति । तथा च तन्मात्राशब्दो न सूक्ष्मरूपपरः किन्तु इतरगुणाभावसमानाधिकरणाकाशकार्यगुणपरः । शब्दाख्यं तन्मात्रमुक्तविधो गुणो यस्य तस्मादित्युक्तं भवति । आकाशोत्पन्ने वायौ ध्वनिलक्षणानुगतिप्रदर्शनायेदं विशेषणम् । एवमेव वायोश्च स्पर्शतन्मात्रादित्यदिर्व्याख्यानं विशेषणकृत्यं च द्रष्टव्यम् । ततो वायोस्त्व-गभवदित्यन्वयः । स्पर्शस्य सङ्ग्रहः समीचीनं ज्ञानं ततोऽभवदित्यर्थः । ननु स्पर्शादिर्वाय्वादिगुणस्य कथं वाय्वादिजनकत्वमत्रोच्यत इत्याशङ्कां प्रमाणेनैव परिहरति ॥ स्पर्शादय इति । तथा चात्र वाय्वादिजनकतयोच्यमानस्पर्शादयो वाय्वादीनां सूक्ष्मावस्थाः सूक्ष्मरूपोपचायका एव विवक्षिता न तत्कार्यगुणभूता अतो न विरोध इत्याशयः । ननु तैजसाहंकार्यकार्याणामिन्द्रियाणां श्रोत्रं तु शब्दगं त्वक् स्पर्शस्य सङ्ग्रहश्चक्षू रूपोपलंभनमित्यादिना कथं पुनर्भूतैरुत्पत्तिरुच्यते । उत्पन्नस्य पुनरुत्पत्त्ययोगादित्याशङ्कायां अत्र विवक्षितामुत्पत्तिं प्रमाणेनैव दर्शयति ॥ सूक्ष्मेति । संत्येव । अनादित इति शेषः । अहंकृतेस्तैजसाहंकारात् । ब्रह्मशरीरतो ब्रह्माण्डान्तविराट्शरीरात् । तथा च तैजसाहङ्कारेणोपचितानां पुनः स्थूलतया भूतैरुपचय एवात्रोच्यते न पुनरभूतानामतो न दोष इति भावः ॥ ३७ ॥

**मृदुत्वं कठिणत्वं च शैत्यमुष्णत्वमेव च ।**
**एतत् स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३८ ॥**

**प्रकाशिका–** स्पर्शलक्षणमाह ॥ मृदुत्वमिति । एतदेवैतदन्यतमत्वमेव स्पर्शस्य स्पर्शत्वं स्पर्श-शब्दवाच्यत्वे निमित्तम् । लक्षणान्तरमाह ॥ तन्मात्रत्वमिति । न स्वतो वायोस्तन्मात्रत्वमुक्तरीत्या स्वाभाविकेतरगुणाभावसमानाधिकरणगुणत्वं च स्पर्शवत्वमिति संबंधः ॥ ३८ ॥

**चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।**
**सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३९ ॥**

**तात्पर्यम्– 'प्राप्नोति वायुः सर्वं तु स्वत एव हरेस्तथा । अतः प्राप्तिरिति प्राहुर्वायुं भूतपतिं प्रभुम् । प्रधानवायुरन्येषु नित्याविष्टो यतस्ततः । तद्गुणास्तेषु चोच्यन्ते नीचता नास्य तत्कृते'ति ब्रह्मवैवर्ते । 'स्वरूपमपि कर्मेति विषयत्वादुदीर्यत' इति शब्दनिर्णये ॥ ३९ ॥**

**प्रकाशिका–** वायुलक्षणमाह ॥ चालनमिति । चालनं वृक्षशाखादेः । व्यूहनं पृथक् स्थितानां तृणादीनामेकीकरणम् । प्राप्तिः सर्वज्ञानादिशुभप्राप्तिः । द्रव्यशब्दयोर्नेतृत्वं द्रव्यस्य गन्धवतो घ्राणं प्रति । तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य श्रोत्रं प्रति नेत्रत्वं सर्वेन्द्रियाणामात्मत्वं स्वामित्वम् । नन्वत्र वायोर्जडस्य कथं सर्वशुभप्राप्त्यादिकमुच्यत इत्याशङ्कां प्रमाणेनैव परिहरति ॥ प्राप्नोतीति । तु शब्दः सर्वस्य शुभत्वरूपविशेषसूचकः । स्वत एव स्वयोग्यताबलादेव । हरेस्तथा हर्यनुग्रहाच्च । भूतपतिं प्रवहम् । तथाच जनिमात्रविवक्षाऽत्रेति भावः । ननु तथाऽपि सर्वेन्द्रियाणामात्मत्वं तत्राप्यसंभवीत्यत आह ॥ प्रधानवायुरिति । अन्येषु वायुषु । नन्वेवं तस्य नीचे प्रवेशेन नीचता स्यादित्यत आह ॥ नीचतेति । अस्य प्रधानवायोस्तत्कृता नीचप्रवेशकृता नीचता न । हरिवत्तत्प्रेरणाय प्रविष्टत्वादित्याशयः । कर्माभिलक्षणमित्यस्य क्रियारूपं लक्षणमित्यर्थो न संभवति । प्राप्तेः स्वामित्वस्य च क्रियारूपत्वाभावादतोऽत्र विवक्षितं कर्मशब्दार्थं प्रमाणेनैव दर्शयति ॥ स्वरूपमिति । तथा च कर्माभिलक्षणं स्वरूपमभिव्याप्य स्थितं लक्षणं स्वरूपभतं लक्षणमिति यावदिति भावः ॥ ३९ ॥

**वायोश्च स्पर्शतन्मात्राद् रूपं दैवेरितादभूत् ।**
**समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥ ४० ॥**

**प्रकाशिका–** स्पर्शतन्मात्रात्स्पर्शगुणकात्ततस्तेजसश्चक्षुः समुत्थितमित्यपि योज्यम् । रूपस्योप-लम्भनं यस्मात्तथा ॥ ४० ॥

**द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ।**
**तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥ ४१ ॥**

**तात्पर्यम्–** व्यक्तिसंस्थात्वं व्यक्तत्वेन स्थितिः । गुणता प्रकाशत्वम् । 'आलोको गुण इत्येव प्रकाशश्चेति कथ्यत' इत्यभिधानम् । 'तेजस्त्वमथ चोग्रत्वं क्रौर्यमित्यपि चोच्यत' इत्यभिधानम् ॥ ४१ ॥

**प्रकाशिका–** रूपलक्षणमाह ॥ द्रव्याकृतित्वमिति । अत्र व्यक्तिसंस्थात्वमित्यस्य जात्यादिव्यावृत्तमर्थान्तरं दर्शयति ॥ व्यक्तिसंस्थात्वमिति । व्यक्तत्वेनालोकान्तरानपेक्ष्य चाक्षुषा प्रतीतिकत्वेन स्थितिर्विद्यमानत्वमित्यर्थः । तथा च व्यक्त्याऽऽलोकान्तरानपेक्षप्रतीत्या संस्थात्वं स्थितिः । त्व प्रत्ययः स्वार्थ इत्युक्तं भवति । ननु कुत उक्तरूपस्य व्यक्तत्वमित्यतोऽत्र हेतुत्वेन गुणतेत्युक्तमित्याशयेन तदिदानीं व्याख्याति ॥ गुणतेति । प्रकाशत्वं शुक्लभास्वरात्मकप्रभारूपत्वम् । प्रभा हि तेजसो रूपमिति हि प्राचां वादः । उक्तार्थे प्रमाणमाह ॥ आलोक इति । तर्हि तेजस्त्वमित्यस्य कोऽर्थ इत्यतोऽत्राभिधानं पठति ॥ तेजस्त्वमिति । उग्रत्वं सम्यग्द्रष्टुमशक्यत्वम् । एतच्च सूर्यादितेजसि प्रभौत्कट्येनानुभवसिद्धम् । तथा च तेजसस्तेजसस्त्वमुक्तविधोग्रत्वप्रदत्वमपरं रूपं लक्षणमित्यर्थः । द्रव्याकृतित्वं द्रव्याकारवत्त्वेनैव प्रतीयमानत्वम् । इदं च न शब्दादावस्त्यतो भवति रूपलक्षणमिति स्पष्टत्वान्न व्याख्यातम् । रूपमात्रस्य तेजोगुणभूतरूपस्य वृत्तयः स्वभावलक्षणानि ॥ ४१ ॥

**द्योतनं पचनं पानमदनं हिममर्दनम् ।**
**तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडुद्भवः ॥ ४२ ॥**

**प्रकाशिका–** तेजसो लक्षणमाह ॥ द्योतनमिति ॥ द्योतनं प्रकाशनम् । पचनं तण्डुलादेः पाककरणम् । पानं रसादनम् । अदनं स्वसंबद्धसर्वभक्षणम् । हिममर्दनं शीतनिवारणम् । शोषणं शुष्कीकरणम् । क्षुत्तृडुद्भवः क्षुतृड्जनकत्वम् । वृत्तयः स्वभावलक्षणानि ॥ ४२ ॥

**रूपमात्राद् विकुर्वाणाद् तेजसो दैवचोदितात् ।**
**रसमात्रमभूत् तस्मादम्भो जिह्वा रसग्रहः ॥ ४३ ॥**

**प्रकाशिका–** रूपमात्राद्रूपगुणकात् । रसमात्रमंभसः सूक्ष्मावस्थारूपं तस्मादंभसो जिह्वाऽभूत् । जिव्हाया रसग्रहः । भवतीति शेषः ॥ ४३ ॥

**कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा ।**
**भौतिकानां विकारेण रस एको विभिद्यते ॥ ४४ ॥**

**प्रकाशिका–** जलरसस्य मधुरत्वमेव स्वभावसिद्धं लक्षणं प्रसिद्धमिति तदनुक्त्वौपाधिकं तद्विभागमाह ॥ कषाय इति । अत्र लवणोऽपि ग्राह्यः ॥ ४४ ॥

**क्लेदनं पिण्डनं तृप्तिः प्राणनाप्ययनोन्दनम् ।**
**तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४५ ॥**

**तात्पर्यम्– 'उदनं बिन्दुभावः स्यात्स्यन्दनं स्रवणं स्मृतिमि'त्यभिधानम् । पृथिव्यग्न्यपेक्षया भूयस्त्वं देहे । ४५ ॥**

**प्रकाशिका–** उदकलक्षणमाह ॥ क्लेदनमिति । क्लेदनमार्द्रीकरणम् । पिण्डनं मृदादेः पिण्डीकरणं तृप्तिस्तृप्तिजनकत्वम् । प्राणनं प्रकृष्टचेष्टाहेतुत्वं जीवनप्रदत्वं वा । आप्यायनं तृट्पीडानिवर्तकत्वम् । उन्दनमित्यस्यार्थं प्रमाणेनैवाह ॥ उन्दनमिति । तथा चोन्दनं बिन्दुभावो बिन्दुरूपेण भवनं लक्षणमित्यर्थः । तापापनोदस्तापनिवर्तकत्वम् । भूयस्त्वामित्यस्य कूपादावुद्धृतस्यापि पुनः पुनरुद्गम इति व्याख्यानसांप्रदायकमित्याशयेन स्वयं व्याख्याति ॥ पृथिव्यग्न्यपेक्षयेति । देहे पार्थिवादिदेहेषु । भूयस्त्वं पृथिव्यग्निभागापेक्षया भूयोभिर्भागैर्विद्यमानत्वम् । तथा हि पार्थिवशरीरेष्वर्धे पृथिवी । इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः । तैजसशरीरेष्वर्धं तेजः । इतरार्धे त्रिभागिन्य आपः । भोगेन पृथिवी । आप्यशरीरेष्वर्धमापः । इतरार्धे त्रयो भागाः । तैजस एकः पृथिवीभागः । तथा च पार्थिवादिशरीरेषु संभूय पृथिव्यादिभागापेक्षयाऽपां दशभिर्भागैः प्रविष्टत्वाद्भूयस्त्वमिति ज्ञेयम् । वृत्तयो लक्षणानि ॥ ४५ ॥

**रसमात्राद् विकुर्वाणादम्भसो दैवचोदितात् ।**
**गन्धमात्रमभूत् तस्मात् पृथ्वी घ्राणस्तु गन्धगः ॥ ४६ ॥**

**प्रकाशिका–** रसमात्राद्रसगुणकाद्गन्धमात्रं पृथिवी सूक्ष्मावस्थारूपम् । तुशब्दोऽप्यर्थकः । पृथिव्या घ्राणोऽप्यभूदित्यर्थः । गन्धं गमयति ज्ञापयतीति गन्धगः ॥ ४६ ॥

**करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् ।**
**द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते ॥ ४७ ॥**

**प्रकाशिका–** अत्रापि पृथिवीगन्धस्य सौरभ्यं स्वभावसिद्धं लक्षणं प्रसिद्धमिति तदनुक्त्वौपाधिकतद्विभागमेवाह करंभेति । करंभो दुर्गन्धविशेषः । दग्धपार्थिवादिनिष्ठः । पूतिरपि तादृशः क्लिन्नक्षतादिनिष्ठः । सौरभ्यमतिशयेन सुरभि कर्पूरादिनिष्ठम् । शान्तः सुरभिविशेषः ।

तामरसादिनिष्ठः । उग्रो वचादेराम्ल आरनालादिनिष्ठः । आदि शब्दाद्दुर्गन्धसुगन्धप्रभेदा ग्राह्याः । पृथग्द्रव्यावयव-वैषम्यात् । पृथिवीसंबन्धानां नानाविधानां द्रव्यांशानां वैचित्र्यात् ॥ ४७ ॥

**भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।**
**सर्वसत्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४८ ॥**

**तात्पर्यम्– भावनमुत्पादकत्वम् । 'ब्रह्मस्थानं तु पृथिवी शरीरे ब्रह्मदर्शनादि'ति कापिलेये । सद्विशेषणं विशेषेणव्यक्तत्वम् । 'असदव्यक्तनाम स्याद्व्यक्तं सदिति चोच्यत' इति ब्राह्मे । सर्व-सत्वगुणोद्भेदः शरीरे हि सर्वप्राणिनां गुणा व्यज्यन्ते संसारावस्थायाम् । 'शरीरं पार्थिवं ज्ञेयमि-न्द्रियाण्यौदकानि तु । तैजसः कोष्ठगो वह्निश्छिद्रमाकाशसम्भवम् । प्राणा वायुमयाः सर्वे प्रत्येकं प्रश्चधा पुनरि'ति कापिलेये ॥ ४८ ॥**

**प्रकाशिका–** पृथिवीलक्षणमाह ॥ भावनमिति । अत्र भावनमित्यस्यानतिप्रसक्तमर्थं दर्शयति ॥ भावनमिति । उत्पादकत्वम् । ओषध्यादेरिति शेषः । ब्रह्मणः स्थानमित्यस्यार्थमसाधारण्याय प्रमाणेनैवाह ॥ ब्रह्मस्थानमिति । तु असाधारण्येन पृथिवी ब्रह्मस्थानमित्युच्यते । कुत इत्यत उक्तम् ॥ शरीर इति । प्राथमिकब्रह्मदर्शनस्य पार्थिवशरीर एव जननादित्याशयः । सद्विशेषणमित्यस्याप्यन-तिप्रसक्तमर्थमाह ॥ सद्विशेषणमिति । विशेषणशब्दो विशेषणपर्यायः । सच्छब्दोऽव्यक्तवाची । भावप्रधानस्तृतीयातत्पुरुषे विशेषणशब्दस्य परनिपातः । तस्येदं तात्पर्यम् ॥ विशेषेण व्यक्तत्वमिति । पृथिव्या इति शेषः । पञ्चसु भूतेषु तेजःप्रभृति व्यक्तिमित्युच्यते । तत्र तेजो रसगन्धत्वे-नाव्यक्तत्वादंभश्च गन्धवत्त्वेनाव्यक्तत्वात् न सम्यग्व्यक्तम् । पृथिवी तु शब्दादिगुणपञ्चकवत्तया व्यक्तत्वाद्विशिष्य व्यक्तेति ज्ञेयम् । सच्छब्दोऽव्यक्तवाचीत्यत्र प्रमाणमाह ॥ असदव्यक्तमिति । चशब्दस्तुशब्दार्थः । व्यक्तमित्यन्वयः । सर्वसत्त्वगुणोद्भेद इत्येतदनूद्य लक्ष्ये दर्शयन्व्याचष्टे ॥ सर्वेति । हि शब्दः प्रसिद्ध्यर्थकः । प्राणिनामित्यनेन सत्त्वशब्द उक्तार्थः । सर्वगुणा ज्ञानभक्त्यादयः। उद्भेदशब्दव्याख्यानम् ॥ व्यज्यन्त इति । मुक्तिकालीनव्यक्तौ शरीरानपेक्षणात् संसारावस्थायामित्युक्तम् । ननु ब्रह्मस्थानत्वं सर्वगुणोद्भेदश्च शरीरनिष्ठतया व्याख्यातः । अतः कथं तदुभयं पृथिवीलक्षणं स्यादित्यतः शरीरस्य पार्थिवत्वे प्रमाणं दर्शयति ॥ शरीरमिति । अस्मदादीनामिति शेषः । ननु शरीरस्य तर्हि पञ्चभूतात्मकत्वोक्तिविरोध इत्यत उक्तम् ॥ इन्द्रियाणीत्यादि । कोष्ठगो जाठरश्छिद्रं द्वाराणि । प्राणाः प्राणापानादयः पञ्च । तथा चेन्द्रियाद्यङ्गसहितस्यैव पञ्चभूतात्मकत्वेन तथा व्यवहारो न त्वंगिनः शरीरस्येति भावः । नन्विदमपि न संभवति । प्रत्येकमङ्गानामङ्गिनश्च पञ्चभूतात्मकत्वादित्याशङ्क्याह ॥ प्रत्येकमिति

पुनरित्यनेनेदमाचष्टे ॥ सत्यमेवं प्रत्येकं पञ्चधेति । तथाऽपि पार्थिवशरीरेऽङ्गिनि पृथिवीभागानां बाहुल्यादंगेष्विन्द्रियादिष्वबादिभागानां बाहुल्यादुक्तव्यवस्थोपपत्तिरिति । मूले धारणमित्यस्य गुरुपदार्थधारकत्वमित्यर्थः । एतत्सर्वं पृथिव्याः स्वाभाविकं लक्षणमित्यर्थः ॥ ४८ ॥

**नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ।**
**वायोर्गुणविशेषोऽर्थो यस्य तत् स्पर्शनं विदुः ॥ ४९ ॥**

**प्रकाशिका–** श्रोत्रादीन्द्रियलक्षणान्याह ॥ नभ इति । नभसो गुणः शब्दः सोऽर्थो विषयो यस्य तच्छ्रोत्रम् । एवमग्रेऽपि व्याख्येयम् । मनसः सर्वोपलब्धिसाधनत्वात् । तत्रातिव्याप्तिवारणाय सर्वत्र विशेषपदमसाधारणार्थकम् । तथा च नभ आदेर्गुणः शब्दादिविशेषोऽर्थोऽसाधारणो विषयो यस्य तच्छ्रोत्रादिकमित्यर्थो द्रष्टव्यः ॥ ४९ ॥

**तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ।**
**अम्भोगुणविशेषोऽर्थो यस्य तद् रसनं विदुः ॥ ५० ॥**

**भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ।**
**परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात् ॥ ५१ ॥**

**प्रकाशिका–** भावनमिति श्लोकोक्तं पृथिव्यां सद्विशेषणमिति लक्षणमुपपादयति ॥ परस्येति श्लोकेन । परस्य पूर्वस्य कारणस्य शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयाद्दृश्यते । अतो भावानामाकाशादीनां विशेषो गुणः सर्वोऽपि भूमावेवोपलक्ष्यते । तथा च पृथिव्यामुक्तरूपत्वं सद्विशेषणत्वं सिद्धमित्याशयः ॥ ५०,५१ ॥

**अतो विशेषो भावानां भूमावेवोपलक्ष्यते ।**
**एतान्यसंहत्य यदा महदादीनि सप्त वै ॥ ५२ ॥**

**प्रकाशिका–** एवमुत्पन्नानि तत्त्वानि ब्रह्माण्डरूपस्य कार्योत्पादने स्वत एव समर्थानीति साङ्ख्यमतनिरासायाह ॥ एतानीति । एतानि महदादीनि सप्ततत्त्वान्यसंहत्यामिलित्वा । मेलनाभावादिति हेतुसूचनायेदम् । भोगायतनं ब्रह्माण्डं तदन्तर्गतब्रह्मशरीरं च जगदादिः श्रीनारायणोंऽजसा कार्यजननशक्त्युद्बोधकरूपेणाविशत् । महदादीनिति वर्तते । अत्र सप्तेति प्राधान्यविवक्षयोक्तम् । इन्द्रियादीन्यपि ग्राह्याणि ॥ ५२ ॥

**न शेकुः पुरुषं स्रष्टुं भोगायतनमञ्जसा ।**
**कालकर्मगुणोपेतो जगदादिरूपाविशत् ॥ ५३ ॥**

**प्रकाशिका–** तेन भगवतोऽनुविद्धेभ्यः प्रेरितेभ्यो युक्तेभ्योंऽशैर्मिलितेभ्यः । भगवद्रेतोरूपेण परिणतेभ्य इति यावत् ॥ ५३ ॥

**ततस्तेनानुविद्धेभ्यस्तत्त्वेभ्योऽण्डमचेतनम् ।**
**उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५४ ॥**

**तात्पर्यम्– 'अचेतनाद्यतस्त्वण्डाद्ब्रह्मा समजनि स्फुटम् । अतो ब्रह्माण्डमित्याहुर्विराड्ब्रह्मा प्रकाशनादि'ति च ॥ ५४ ॥**

**प्रकाशिका–** उत्थितम् उत्पन्नम् । नन्वेवमस्य ब्रह्माण्डत्वप्रसिद्धिः कुत इत्यतोऽत्र निमित्तमाह ॥ पुरुष इति । असौ विराट्पुरुषो ब्रह्मा यस्मादचेतनादण्डादुदतिष्ठत् । तदचेतनमण्डमिति पूर्वेणान्वयः। तथा च विराण्णामकब्रह्मशरीरकारणत्वादिदं ब्रह्माण्डमित्युच्यत इति भावः । अत्र विराट्पुरुषो ब्रह्मैवेत्यत्र समाख्यामाह ॥ अचेतनादिति । आहुरचेतनम् । अण्डमिति शेषः । विराट् शब्दं ब्रह्मणि निर्वक्ति ॥ विराडिति । विराड् विराट्शब्दवाच्यः । प्रकाशनाद्विशेषेण प्रकाशनादित्यर्थः । राजृ दीप्ताविति धातोरिति भावः ॥ ५४ ॥

**एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ।**
**तोयादिभिः परिवृतं प्रधानेनावृतं बहिः ।**
**यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५५ ॥**

**प्रकाशिका–** इदमुत्पन्नमण्डं बाह्यान्तरपदार्थसहितं भगवतः प्रतिमेति मन्तव्यमित्याशयेनाह ॥ एतदण्डमिति । ननु तोयादिभिरिति वचनात्पृथिवी न संगृहीतेत्यत उक्तम् ॥ विशेषाख्यमिति । पृथिव्याख्यमित्यर्थः । तथा च पृथिव्या अण्डखर्परसंलग्नत्वात्पृथिवी शब्दोंऽडेऽपि वर्तते । ततश्चाण्डपृथिव्योरेकशब्दप्रतिपाद्यत्वेनाण्डग्रहणेऽपि पृथिव्यपि गृहीतेति भावः । क्रमवृद्धैरित्यस्यैव विवरणम् ॥ दशोत्तरैति ॥ प्रधानेन गुणत्रयेण प्रकृत्या वा । यत्र यदन्तर्लोकवितानः पातालादि-लोकविस्तारो यद्विशेषाख्यं यत्तोयादिभिः परिवृत्तं यत्र च लोकवितानः । एतदण्डं भगवतो हरे रूपं प्रतिमेत्यन्वयः ॥ ५५ ॥

**हिरण्मयादाण्डकोशादुत्थाय सलिले शयात् ।**
**तमाविश्य महादेवो बहुधा निर्बिभेद स्वम् ॥ ५६ ॥**

**प्रकाशिका–** इदानीं यस्मादुदतिष्ठदसौ विराडित्युक्तं विवृणोति ॥ हिरण्मयादिति । सलिले बहिरावरणे जलेशयाद्भिद्यमानाद्धिरण्मयादण्डकोशादण्डकोशं प्रविश्य तदन्तस्थसलिले सहस्रवर्ष-पर्यन्तं योगनिद्रां विधाय तदनन्तरमुत्थाय स्ववीर्येण ब्रह्मदेहं सृष्ट्वा तं समाविश्य तस्य खं छिद्रं बहुधा नवधा निर्बिभेद चकार ॥ ५६ ॥

**निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ।**
**वाण्या वह्निरथो नासे घ्राणोऽतः प्राण एतयोः ॥ ५७ ॥**

**प्रकाशिका–** तत्राध्यात्माधिदैवोत्पत्तिमाह ॥ निरभिद्यतेति । निरभिद्यत व्यक्तमभूत् । मुखं तन्नामकं गोलकं वाणी वागिन्द्रियं तन्नामा तदभिमानी देवो वाण्या वाङ्नामकेनेन्द्रियेणाधिदैवं वन्हिनामदेवो नासे नासापुटे गोलकरूपे घ्राण इन्द्रियमतोघ्राणेन्द्रियात्प्राणस्तदभिमानी नासिक्य एतयोर्नासापुटयोः । सप्तमीयम् ॥ ५७ ॥

**प्राणाद् वायुरभिद्येतामक्षिणी चक्षुरेतयोः ।**
**तस्मात् सूर्योऽन्वभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५८ ॥**

**प्रकाशिका–** वायुरधिदैवं वायुनामाऽक्षिणीगोलके चक्षुरिन्द्रियं तन्नामा तदभिमानी चैतयोर्गोल-कयोर्दिशोऽधिदैवं दिङ्नामानः ॥ ५८ ॥

**निर्बिभेद विराजस्त्वग् रोमश्मश्र्वादयस्ततः ।**
**ततश्चौषधयः पश्चाच्छिश्नं निर्बिभिदे ततः ॥ ५९ ॥**

**प्रकाशिका–** विराजो ब्रह्मणस्त्वग्गोलकभूता रोमश्मश्र्वादयस्तन्नामकं त्वगिन्द्रियं देवाश्च । ततस्त्वगिन्द्रियादोषधयोऽधिदैवं तन्नामानो देवाः । ततो ब्रह्मदेहात् शिश्नं गोलकमिन्द्रियं च ॥५९॥

**रेतस्तस्मादाप आसन् निरभिद्यत वै गुदम् ।**
**गुदादपानोऽपानच्च मृत्युर्लोकभयङ्करः ॥ ६० ॥**

**हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ।**
**पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ६१ ॥**

**तात्पर्यम्– 'यज्ञनामातु देवोऽन्यो विज्ञेयः पाददेवता । तदाविष्टो हरिर्नित्यं तमाहुः पाददै-वतम् । तस्येन्द्रियाभिमानित्वं कुतः पूर्णामलात्मन' इति च ॥ ६१ ॥**

**प्रकाशिका–** तस्माच्छिश्नात्तन्नामा गुह्येन्द्रियाभिमान्यापः । अधिदैवं तन्नामानो देवाः । गुदं गोलकं पायुनामकमिन्द्रियं च ग्राह्यम् । अपानो वाय्वभिमानी स एवाधिदैवं मृत्युः बलं हस्तेन्द्रियं तदभिमानी च । स एवाधिदैवं स्वराडिन्द्रः । गतिः पादनामकमिन्द्रियं तदभिमानी च । तत इन्द्रियात्स एवाधिदैवं हरिरुपेन्द्रः । ननु हरेः कथं पादरूपेन्द्रियाभिमानित्वं तत्रान्यदत्तस्वामित्वरूपेन्द्रियाभिमानित्वस्य श्रुत्यादिबाधितत्वादित्यतोऽत्र तात्पर्यं प्रमाणेनैवाह ।। यज्ञनामेति । तुशब्दस्तस्य यज्ञनामकभगवदपेक्षया नीचत्वसूचकः । अन्यो यज्ञनामकाद्धरेः पाददेवता पादनामकेन्द्रियाभिमानी पादनामा तदाविष्ट एवोपेन्द्रनामा हरिर्नामाभिमानी । अतोऽनेनैवाभिप्रायेण तं हरिं पाददेवतामाह ऋषय इत्यर्थः । ननु कुत एवममुख्यार्थकल्पनं मुख्यमेवाभिमानित्वं तस्य कुतो न स्यादित्यत आह ।। तस्येति । अभिमानित्वमन्यदत्तस्वामित्वरूपं पूर्णेति निरवधिकस्वामित्वपूर्णस्याभिमानकृतविकारशून्यस्य चेत्यर्थः ।। ६०,६१ ।।

**नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाहृतम् ।**
**नद्यस्ततः समभवन्नुदरं निरभिद्यत ।। ६२ ।।**

**प्रकाशिका–** नाड्यो गोलकस्थानीयाः । लोहितं रुधिरमिन्द्रियस्थानीयम् । आहृतमुत्पन्नम् । नद्योऽधिदैवं नदीसंज्ञा उदरं गोलकस्थानीयम् ।। ६२ ।।

**क्षुत्पिपासे ततः स्यातां समुद्रस्तु तयोरभूत् ।**
**अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ।। ६३ ।।**

**प्रकाशिका–** क्षुत्पिपासे इन्द्रियस्थानीयेऽधिदैवं समुद्रनामा । हृदयं गोलकम् ।। ६३ ।।

**मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरांपतिः ।**
**अहङ्कारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ।। ६४ ।।**

**तात्पर्यम्– 'चैत्योऽपि भगवान्विष्णुरन्तर्यामी चतुर्मुखात् । स्वेच्छया व्यक्तिमगमत्ततोऽसौ ब्रह्मजः स्मृत' इति च ।। ६४ ।।**

**प्रकाशिका–** मन इन्द्रियमधिदैवं चन्द्रनामा बुद्धिरिन्द्रियमधिदैवं गिरां पतिर्बृहस्पतिरहङ्कारमिन्द्रियमधिदैवं रुद्रश्चित्तमिन्द्रियं तदभिमानी ब्रह्मा च चैत्य इत्यधिदैवस्थानीयं बाह्योक्तिः । नन्वयं ब्रह्मचित्तजश्चैत्यः क इत्यपेक्षायां ब्रह्मान्तर्यामिणो हरे रूपान्तरमिति प्रमाणेनैवाह ।। चैत्योऽपीति । चैत्योऽपि चित्तनामकोऽपि सन् चतुर्मुखाद्विराजः । नन्वनादेस्तस्य कथं ब्रह्मजत्वमित्यत आह ।।

स्वेच्छयेति । तथा च वन्ह्यादिवद्विराजोऽन्यस्याधिदैवस्याभावात्तत्स्थानीयो ब्रह्मान्तर्यामी हरिरेव ब्रह्मचित्तजो जात इत्याशयः । बुद्ध्यहङ्कारचित्तानामपि हृदयमेव गोलकतया वर्णनीयम् । हृदय-शब्दश्च तत्रत्यनाडीविशेषपर इति ज्ञातव्यम् ॥ ६४ ॥

**एते ह्यभ्युत्थिता देवा नैवास्योत्त्थापनेऽशकन् ।**
**पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६५ ॥**

**प्रकाशिका–** इदानीं ब्रह्मवाय्वोः सर्वदेवतोत्तमत्वज्ञापनपूर्वकं हरेः सर्वदेवोत्तमत्वज्ञापनायेतरदेवानां ब्रह्मदेहोत्थापनेऽशक्तिं ब्रह्मवाय्वोस्तत्र शक्तिं च वक्तुमाह ॥ एते हीति । हीत्यनेन तत्श्रुतिप्रसिद्धमिति दर्शयति । अभ्युत्थिता बहिर्निर्गता अस्य ब्रह्मण उत्थापने बहिर्निष्कासने । खानि गोलकस्थानानि । तं देहान्तर्गतं विराजमुत्थापयितुं चेष्टायुक्तं कर्तुम् ॥ ६५ ॥

**वह्निर्वाचा मुखं भेजे नोदतिष्ठत् ततो विराट् ।**
**घ्राणेन नासिको वायुः नोदतिष्ठत् ततो विराट् ॥ ६६ ॥**

**प्रकाशिका–** वाचा वाङ्नामकेन स्वांशेनेन्द्रियेण च एवमग्रेऽपि ॥ ६६ ॥

**अक्षिणी चक्षुषादित्यो नोदनिष्ठत् ततो विराट् ।**
**श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत् ततो विराट् ॥ ६७ ॥**

**त्वचं रोमभिरोषध्यो नोदतिष्ठत् ततो विराट् ।**
**रेतसा शिश्नमापस्तु नोदतिष्ठत् ततो विराट् ॥ ६८ ॥**

**गुदं मृत्युरपानेन नोदतिष्ठत् ततो विराट् ।**
**हस्ताविन्द्रो बलेनैव नोदतिष्ठत् ततो विराट् ॥ ६९ ॥**

**विष्णुर्गत्यैव चरणौ नोदतिष्ठत् ततो विराट् ।**
**नाडीर्नद्यो लोहितेन नोदतिष्ठत् ततो विराट् ॥ ७० ॥**

**तात्पर्यम्– 'यद्यान्तस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः । शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः । तत्स्थ उत्थापयामास ब्रह्मदेहं विशन्प्रभुरि'ति च ॥ ७० ॥**

**प्रकाशिका–** विष्णुर्गत्यैवेति । अत्र विष्णोरशक्तिप्रसक्तौ तात्पर्यं प्रमाणेनैवाह ॥ यद्यान्तस्थ इति । तु शब्दोऽवधारणे । बलज्ञप्त्या वेत्यन्वयः । अशक्त एव किं न स्यादित्यत आह ॥ तत्स्थ इति । यत इति शेषः । तत्स्थो ब्रह्मवायुस्थः ॥ ७० ॥

**क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत् ततो विराट् ।**
**हृदयं मनसा चन्द्रो नोदतिष्ठत् ततो विराट् ॥ ७१ ॥**

**बुद्ध्या ब्रह्माऽपि हृदयं नोदतिष्ठत् ततो विराट् ।**
**रुद्रोऽभिमत्या हृदयं नोदतिष्ठत् ततो विराट् ॥ ७२ ॥**

**तात्पर्यम्– ब्रह्मा बृहस्पतिः । 'यस्मिन्ब्रह्मा राजनि पूर्व एती'ति श्रुतिः । 'बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिरि'त्यभिधानम् ॥ ७२ ॥**

**प्रकाशिका–** बुद्ध्या ब्रह्मापि हृदयमित्यत्र ब्रह्म शब्दो न विराट्पर इत्याह ॥ ब्रह्मेति । ब्रह्मशब्दस्य बृहस्पतिपरत्वं कुत इत्यतस्तत्र श्रौतप्रयोगं तावद्दर्शयति ॥ यस्मिन्निति । तस्मै विशः स्वयमेवानमन्ते यस्मिन् ब्रह्मा राजनि पूर्व एतीति श्रुतौ यस्मिन् राजनीन्द्रे निर्गते सति ब्रह्मा पूर्व एति तस्मै राज्ञे विशः प्रजाः स्वयमेवामनन्त इति श्रुत्यर्थः । अत्रेदं पुरो गन्तृत्वलिङ्गेन ब्रह्मशब्दो बृहस्पतिपरतया निर्णीत इति भावः । अत्राभिधानमप्याह ॥ बृहस्पतिरिति ॥ ७२ ॥

**चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद् यदा ।**
**विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७३ ॥**

**तात्पर्यम्– 'अंशेन सुप्तो ब्रह्माऽपि अंशेन निरगात्तथा । स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः । तमुत्थापयितुं देवास्तानृते त्रीन्महाबलान् । नाशक्नुवुस्त्वेकसंस्थास्ततस्ते त्वविशंस्त्रयः । उदतिष्ठद्ब्रह्मदेहस्तदा तेषां प्रभावतः । विशेषेण हरेरेव प्रभावेन श्रियः पते॰ । चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः । प्राणो वायुरिति प्रोक्तस्तयोरीशो हरिः स्वयमि'ति च ॥ ७३ ॥ इति तृतीयतात्पर्ये सप्तविंशोऽध्यायः ॥ २७ ॥**

**प्रकाशिका–** चित्तेनेति । चैत्यश्चैत्यनामा क्षेत्रज्ञो ब्रह्मान्तर्यामी । चित्तेन तन्नामकेन ब्रह्मणा सह हृदयं प्राविशदित्यर्थः । अत्र ब्रह्मणः स्वदेहादितरदेववत्सर्वात्मना बहिर्निर्गमनेनोदतिष्ठत्तदा विराडित्युक्तविरोधः । प्रमाणेन विराजस्तत्रैकांशेनावस्थानावगमादतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ॥ अंशेनेति । सुप्तो निर्व्यापारस्थितः । अविशंस्त्रय इत्युक्त्या मूले वायुरपि ग्राह्य इति सूचयति ॥ एषां साम्यशङ्कायामाह ॥ विशेषेणेति । श्रियःपतेरित्यनेन श्रियोऽपि तन्नियामकत्वं नास्तीति सूचयति । ननु चित्तेन हृदयं चैत्य इति श्लोकार्धे ततस्ते त्वविशंस्त्रय इत्यादिनोच्यते । तत्र ब्रह्मविष्णुवायुवाचकपदानि कानीत्यपेक्षायां तानि दर्शयन् ब्रह्मादिपरतया व्याख्याति ॥ चित्ताभिमानीति । तथा च चित्तपदेन ब्रह्मा ग्राह्य इति भावः । तद्गतो ब्रह्मान्तर्यामी विष्णुः क्षेत्रज्ञः

क्षेत्रपदवाच्यः । उत्तरश्लोके प्राणेन्द्रियमनोधिय इति वक्ष्यमाणत्वादत्रापि प्राणो ग्राह्य इति भावः । तस्य व्याख्यानम् ॥ प्राणो वायुरिति । विशेषेण हरिरेवेत्यत्र हेतुमाह ॥ तयोरीश इति । यत इति शेषः । स्वयं स्वातन्त्र्येण ॥ ७३ ॥

**यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः ।**
**प्रभवन्ति विना येन नोत्थापयितुमोजसा ॥ ७४ ॥**

**प्रकाशिका–** अत्र दृष्टान्तमाह ॥ यथेति । प्राणो वायुरिन्द्रियाणि तदभिमानिनो ब्रह्माद्या मनश्चन्द्रो धीर्बृहस्पतिरेते येन हरिणा विना पुरुषं जीवं प्रसुप्तं कर्तुं न प्रभवन्ति । ओजसा स्वसामर्थ्येनैव येन विनोत्थापयितुं जाग्रदवस्थां कर्तुं च न प्रभवन्ति । तथा च तेन क्षेत्रज्ञेन हरिणा विना ब्रह्मदेहान्तर्गताः प्राणादयो ब्रह्मदेहपतनोत्थानयोर्न शक्ता बभूवुरिति वाक्यशेषः ॥ ७४ ॥

**तमस्मिन् प्रत्यगात्मानं धिया योगविपक्वया ।**
**भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत् ॥ ७५ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे सप्तविंशोऽध्यायः ।**

**प्रकाशिका–** एवं हरेः सर्वोत्तमत्वज्ञापनेन किं प्रयोजनमित्यतस्तद्ध्यानमेवेत्याह ॥ तमिति । तं सर्वेन्द्रियदेवोत्तमं ब्रह्मवाय्वोरपीशं अस्मिन्देहे विद्यमानं प्रत्यगात्मानमन्तर्यामिणं योगपक्वया प्रवृत्तया निवृत्तकर्मानुष्ठानादिरूपयोगजातया धिया बुद्ध्याऽपरोक्षरूपया जातेन ज्ञानेन मननरूपेण विविच्य सर्वोत्तमतया निश्चित्यात्मनि मनसि चिन्तयेत् । अधिकारीति शेषः ॥ ७५ ॥ इति श्रीभागवत-टिप्पण्यां सप्तविंशोऽध्यायः ॥ ३-२७ ॥

## अथ अष्टाविंशोऽध्यायः

**प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ।**
**अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥**

**प्रकाशिका–** जीवपरयोरेकशरीरस्थत्वेऽपि परस्य न तत्कृतदुःखादिभोगः किन्तु जीवस्यैवेति यत्प्रागुक्तं तदेव तत्र तात्पर्यातिशयद्योतनाय पुनराह ॥ प्रकृतिस्थोऽपीत्यादिना । प्रकृतिस्थोऽपि प्राकृतशरीरस्थोऽपि । अत एव पुरुषो भगवान् नाज्यते न लिप्यते प्राकृतैः शरीरनिमित्तैर्गुर्ण-दुःखादिभिरकर्तृत्वात्परतन्त्रकर्तृत्वरहितत्वान्निर्गुणत्वात्सत्त्वादिगुणान्यत्वाज्जलार्कवत्प्रतिबिम्बजनन -

द्वारा जलगतबिंबभूततस्यार्कस्य यथा न जलगुणदुष्टत्वं तथैवेत्यर्थः । जलार्कवज्जलप्रतिबिंबितार्कवत्पुरुषो जीव एव लिप्यत इत्यपि ग्राह्यम् ॥ १ ॥

**स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ।**
**अहङ्कारविमूढात्मा कर्तास्मीत्यभिमन्यते ॥ २ ॥**

**प्रकाशिका–** ननु जीवस्यापि स्वतश्चिद्रूपस्य कुतोऽयं स्वाभाविकः संसार इत्याशङ्कायां तत्र कारणमाह ॥ स एष इति । प्रत्यगात्मानमात्मनि चिन्तयेदिति । कर्तृतया पूर्वाध्यायान्ते प्रकृत एषः पूर्वश्लोके प्रकृतो जीवो यर्हि यदा प्रकृतेर्गुणेषु शरीरकार्यसुखादिष्वभिविषज्जतेऽनुभवेन संबद्ध्यते तदाऽहङ्कारेण मनः प्रभेदरूपेणेन्द्रियेण विमूढात्माऽज्ञात परमात्मा स्वतन्त्रोऽहमेव सुखदुःखादौ कर्ताऽस्मीत्यभिमन्यतेऽभिमानवान् भवति ॥ २॥

**तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः ।**
**प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥**

**प्रकाशिका–** तेनाभिमानेनावशः परब्रह्माधीनः संसारपदवीमभ्येति प्राप्नोति । कथं भूतः । प्रासङ्गिकैर्विषयस्नेहनिमित्तकैः कर्मदोषैः पुण्यपापैः सदसन्मिश्रयोनिषु देवासुरमनुष्ययोनिष्वनिर्वृतो दुःखासंभिन्नसुखरहितः सन् आत्यन्तिकसुखरूपं प्रयोजनाभावेऽपि संसारपदवीमभ्येतीत्याशयः ॥ ३ ॥

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।**
**ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४ ॥**

**प्रकाशिका–** ननु प्रयोजनाभावादस्वाभाविको जीवस्य संसारः किं स्वयमेव निवर्तेत नेत्याह ॥ अर्थे हीति । अर्थे प्रयोजनेऽविद्यमानेऽपि । विषयान् ध्यायत इति हेतुगर्भविशेषणम् । हिशब्देन ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायत इत्यागमसिद्धिं दर्शयति । विषयाभिध्यानजनितकामादिना पुनः संसरतीत्याशयः । अत्र दृष्टान्तमाह ॥ स्वप्न इति । यथा जाग्रदवस्थायां नानाविधान् पदार्थान्ध्यायतः । तज्जनितसंस्कारैः स्वप्ने स्वप्नावस्थायां न विद्यतेऽर्थः प्रयोजनं यस्य तस्य संसारस्यागमः प्राप्तिस्तथेत्यर्थः ॥ ४ ॥

**प्रबुद्ध्य स्वप्नसुप्तिभ्यां संस्मरन्नात्मवैशसम् ।**
**वैतथ्यं व्यभिचारं च नासौ ध्यायेद् यतो भयम् ॥ ५ ॥**

**तात्पर्यम्– 'अज्ञानं सुप्तिशब्दोक्तं स्वप्नश्चैव विपर्यय' इति भारते ॥ ५ ॥**

**प्रकाशिका–** इदानीं संसारनिवृत्त्युपायमाह ।। प्रबुध्येति । अत्र स्वप्नसुप्तिभ्यां प्रबुद्धयात्मवैशसं वैतथ्यं व्यभिचारं च स्मरन्नित्युक्त्या जाग्रदवस्थाया आत्मवैशसादिस्मरणकारणत्वमुच्यत इति भाति । न च तत्संभवति । जाग्रतां तदनुपलंभात् । अतोऽत्र विवक्षितं सुप्तिशब्दार्थं प्रमाणेनैव दर्शयति ।। अज्ञानमिति । प्रकृत इति शेषः । न प्रसिद्धावस्थापर इत्येव शब्दः ।। ततश्चायं श्लोकार्थः ।। स्वप्नसुप्तिभ्यां विपरीतज्ञानाभ्यां दुर्विषयसेवयाऽऽत्मवैशसमात्मनाशं प्रबुद्धय गुरूपदेशेन प्रकर्षेण ज्ञात्वा विषयाणां वैतथ्यं नित्यपुरुषार्थासाधनत्वम् । व्यभिचारं स्वात्मानं विहायापगमनं चास्मरन्नसौ अधिकारीमान्विषयान्न ध्यायेत् । यतो येभ्यः पुनः संसारलक्षणं भयं भवति ।। ५ ।।

**अत एव शनैश्चित्तं प्रसक्तमसतां पथि ।**
**भक्तियोगेन तीव्रेण विरक्त्यात्मवशं नयेत् ।। ६ ।।**

**प्रकाशिका–** गुरूपदेशादिमतामप्युक्तरीत्या विषयध्याने मनसो हरौ निवेशनमेव हेतुरित्याह ।। अत एवेति । यत एवं मनसो विषयेषु सङ्गः संसारहेतुरत एवेत्यर्थः । असतां विषयाणां पथि मार्गे प्रसक्तं वशं नयेत् । यथा हरिविषयमेव स्यात्तथा कुर्यादित्यर्थः ।। ६ ।।

**यमादिभिर्योगपथैरभ्यसंच्छ्रद्धयाऽन्वितः ।**
**मयि भावेन सत्येन मत्कथाश्रवणेन च ।। ७ ।।**

**प्रकाशिका–** मनो वशीकरणेऽपि कारणानि दर्शयन् तत्साध्यं भगवदपरोक्षज्ञानमेव मोक्षसाधनमित्याह ।। यमादिभिरित्यादिना । अभ्यसन् पुनः पुनश्चित्तमेकाग्रीकुर्वन् भावेन भक्त्या सत्येन सज्जनहितवचनेन ।। ७ ।।

**सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः ।**
**ब्रह्मचर्येण मौनेन स्वधर्मेण महीयसा ।। ८ ।।**

**प्रकाशिका–** सर्वभूतसमत्वेन सर्वत्र भगवतः पूर्णत्वादिना साम्यदर्शनेन । तत्तद्वस्तुयोग्यतानुसारिज्ञानेन वा । निर्वैरेण वैष्णवद्वेषराहित्येनाप्रसङ्गतो दुष्टसङ्गत्यागेन स्वधर्मेण स्वविहितधर्मानुष्ठानेनेश्वरर्पणादिना महीयसा ।। ८ ।।

**यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ् मुनिः ।**
**विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ।। ९ ।।**

**प्रकाशिका–** यदृच्छयैवोपलब्धेन स्वप्रयत्नाभावेऽपि हरिच्छया प्राप्तधनेन विविक्तशरण एकान्तवासी शान्तो भगवदेकनिष्ठः । मैत्रः स्वसमेषु मित्रबुद्धिमान् करुणः स्वनीचसज्जनेषु कृपावान् आत्मवान्स्वोत्तमेषु स्वामित्वबुद्धिमान् ॥ ९ ॥

**सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् ।**
**ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥ १० ॥**

**प्रकाशिका–** असदाग्रहमविद्यमानममताबुद्धिम् । प्रकृतेः पुरुषस्य दृष्टं यथावद्विषयीकृतं तत्त्वं स्वरूपं येन तेन ज्ञानेन ॥ १० ॥

**निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ।**
**उपलभ्यात्मनात्मानं चक्षुषेवार्कमेकदृक् ॥ ११ ॥**

**तात्पर्यम्– बुद्धेरवस्थानं निद्रादि ॥ ११ ॥**

**प्रकाशिका–** निवृत्तबुद्ध्यवस्थान इत्यत्र प्रकृतसङ्गतं बुद्ध्यवस्थानशब्दार्थं दर्शयति ॥ बुद्धेरवस्थानमिति । आदिपदेन स्वप्नसङ्ग्रहः । तथा च निवृत्तनिद्रावानित्यर्थः । श्रवणादिविना नैव क्षणं तिष्ठेदपि कचित् । अत्यशक्ये तु निद्रादौ पुनरेव समभ्यसेदिति वचनात् । अन्यदर्शनं विषयदर्शनं शास्त्रं वा । आत्मना मनसाऽऽत्मानं परमात्मानमुपलभ्यापरोक्षतया ज्ञात्वाऽऽत्मदृक् तद्दासतया स्वात्मदृक् ॥ ११ ॥

**मुक्तलिङ्गः सदाभासमसति प्रतिपद्यते ।**
**सतो बन्धुं समं चक्षुः सर्वानुस्यूतमद्वयम् ॥ १२ ॥**

**तात्पर्यम्– असति प्रलये ॥ १२ ॥**

**प्रकाशिका–** मुक्तलिङ्गस्त्यक्तलिङ्गशरीरः सन् मुख्यवायुराभासः प्रतिबिंबो यस्य स सदाभासः । तं वायुः स्वप्राप्तान्स्वबिंबभूतं ब्रह्म प्रापयतीति प्रदर्शनायेदं विशेषणम् । असतीत्यस्य प्रकृतसङ्गतमर्थमाह ॥ असतीति । महाप्रलय इत्यर्थः । सतो वायोः बन्धुं पितरं सतो बन्धुमसति निरविंदन्निति श्रुत्यर्थानुवादोऽयमिति ज्ञातव्यम् । सर्वरूपेषु पूर्णत्वादिना समम् । चष्ट इति चक्षुः सर्वज्ञं सर्वेषु प्राणिषु नियामकतयाऽनुस्यूतं प्रविष्टम् । अद्वयं समाधिकरहितम् ॥ १२ ॥

**यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ।**
**स्वाभासेन यथा सूर्यो जलस्थेन दिवि स्थितः ॥ १३ ॥**

**प्रकाशिका–** उपलभ्यात्मनात्मानमित्युक्तं भगवदपरोक्षज्ञानं स्वबिंबद्वारेणैव भवतीति दृष्टान्तमुखेनाह ॥ यथा जलस्थ इति । भस्मादिनिर्णिक्तकांस्यपात्रस्थले स्थित आभासः सूर्यप्रतिबिंबो यथा गृहान्तर्वर्तिभित्त्यादौ प्रतिफलति तदा गृहस्थितैः पुरुषैर्भित्त्यादिस्थलस्थेन स्वाभासेन बिंबभूतः कांस्यपात्रगतजलस्थ आभासः सूर्यप्रतिबिंबो दृश्यते तथा चेतनजलस्थेन स्वाभासेन दिवि स्थितः सूर्यो बिंबूभतो दृश्यते ॥ १३ ॥

**एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोगुणैः ।**
**स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १४ ॥**

**तात्पर्यम्– 'शेषस्य प्रतिबिम्बास्तु देवाः शेषस्तु ब्रह्मणः । स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः । ततः स्वबिम्बद्वारेण परमात्मप्रदर्शनमि'ति ब्रह्मतर्के ॥ १४ ॥**

**प्रकाशिका–** दार्ष्टान्तिकमाह ॥ एवमिति । अप्रतीतेरेतत् श्लोकतात्पर्यं प्रमाणेनैव दर्शयति शेषस्येति । शेषस्याहङ्काराभिमानिनः । देवा भूतेन्द्रियाभिमानिनः । ब्रह्मणः सन्नामकस्य परब्रह्मणः सत्यदृक् शब्दवाच्यस्य । एव शब्दो यत इत्यर्थे । यतस्ते स्वबिंबदर्शकास्तत इति योज्यम् । अनेन स्वाभासैरित्यादितृतीयान्तपदानां तात्पर्यमुक्तमिति ज्ञेयम् ॥ ततश्चायं श्लोकार्थः ॥ एवं तथा त्रिवृद्वैकारिकादिभेदेन त्रिविधोऽहंकारस्तदभिमानी शेषः स्वाभासैः स्वबिंबैर्भूतेन्द्रियमनोगुणैः । गुणाः शब्दादयः सत आभासः । षष्ठीतत्पुरुषोऽभिप्रेतः । तदभिमानिभिर्देवैर्लक्षितो ज्ञातो भवति । सदा भासेन ब्रह्मप्रतिबिंबभूतेनानेन शेषेण सत्यदृक् स्वप्रतिबिंबभूतो ब्रह्मा लक्षितो भवति । सदा भासेन सन्नामकपरब्रह्मप्रतिबिंबभूतेन ब्रह्मणा सत्यदृक् स्वपरगतबाह्याखिलविशेषदृक् परमात्मा लक्षितो भवतीत्यपि योज्यम् । तथा चाधिकारिणां परमात्मापरोक्षज्ञानं स्वबिंबद्वारेणैव भवतीति भावः ॥ १४ ॥

**भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया ।**
**लीनेषु सत्सु यस्तत्र विनिद्रो निरहङ्क्रियः ॥ १५ ॥**

**मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ।**
**नष्टेऽहङ्करणे द्रष्टा नष्टचित्त इवातुरः ॥ १६ ॥**

**तात्पर्यम्– यो विनिद्रः स सत्यदृक् । यः अनष्टो नष्टवन्नाज्ञासिषमिति मन्यमानः स आतुरो द्रष्टा जीवः ॥ १६ ॥**

**प्रकाशिका–** परमात्मापरोक्षज्ञाने जीवपरयोर्वैलक्षण्याज्ञानं जीवस्य भगवदाश्रितत्वादिज्ञानं च मुख्यकारणमित्याशयेनाह ॥ भूतसूक्ष्मेति । अत्र भूतसूक्ष्मेत्यारभ्यातुर इत्यंतस्यैकवाक्यताभ्रमं वारयन्योजनां दर्शयति ॥ यो विनिद्र इति । तथा चायं श्लोकः पूर्वश्लोकगतयच्छब्द-स्यात्राप्यनुवृत्तिरिति सूचयति । अनष्टोऽविलुप्तस्वरूपो नष्टवन्मृतवत् । वत्यर्थसादृश्यप्रदर्शनायाह ॥ नाज्ञासिषमिति ॥ मन्यमान इति । आतुरो विवशो द्रष्टाऽऽतुरद्रष्ट शब्दवाच्यो जीव इत्यर्थः ॥ ततश्चायं श्लोकद्वयार्थः ॥ असति प्रलये भूतादिषु जीवेषु नष्टेष्विह संसारिषु निद्रया प्रलयकालीनया लीनेषु श्लिष्टेषु यस्तत्र तस्यामवस्थायां विगतनिद्रो निरहङ्क्रियोऽहङ्कारशून्यः स सत्यदृक् नित्यदृक् परमात्मा । जीवस्तु नैतादृश इत्याह ॥ मन्यमान इति । योऽनष्टोऽविलुप्तस्वरूपोऽपि तदा प्रलयेऽहङ्करणेऽहङ्कारममकाररूपाभिमानजनके मनःप्रभेदरूपेऽहङ्कारे नष्टे सति मृषाऽऽत्मानं स्वात्मानं नष्टवन्मृतवन्मन्यमानः । मृतो यथा मरणानन्तरं मरणसमये किमपि नाज्ञासिषमिति मन्यते एवं प्रलयानन्तरं पुनः स्थूलशरीरप्राप्तौ । एतावन्तं कालं प्रलये किमपि नाज्ञासिषमिति मन्यमान इति यावत् । स आतुरो द्रष्टा विवशद्रष्टा जीवः । नाज्ञासिषमित्यनुभवस्य मृषात्वोपपादनाय द्रष्टेत्युक्तम् । तदाऽपि स्वस्वरूपकालादिद्रष्टेत्यर्थः ॥ १५,१६ ॥

**एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ।**
**साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १७ ॥**

**तात्पर्यम्– साहङ्कारं द्रव्यं जीवः तस्यावस्थानमनुग्राहकश्च परमात्मा । 'नित्यदृक्परमात्माऽसौ मृतवद्यो न किञ्चन । जानाति जीवः स ज्ञेयः परमात्मा तदाश्रय' इति हरिवंशेषु ॥ १७ ॥ इति तृतीयतात्पर्ये अष्टाविंशोऽध्यायः ॥ २८ ॥**

**प्रकाशिका–** एवं जीवपरयोर्वैलक्षण्यं प्रत्यवमृश्य सम्यग्विचार्यासावधिकार्यात्मानं परमात्मानं प्रतिपद्यतेऽपरोक्षतो जानाति । कथंभूत आत्मेत्यत उक्तम् ॥ साहङ्कारस्येति । साहङ्कारद्रव्यशब्दयोः प्रकृतसङ्गतमर्थं दर्शयति ॥ साहङ्कारमिति । निरहङ्कृतिरित्यस्य हि प्रतियोगितयेदमुच्यते । अतः साहङ्कारद्रव्यशब्दो जीवपर एव युक्त इति भावः । अवस्थानमाश्रयोऽनुग्राहकश्च यः स परमात्मे-त्यर्थः । भूतसूक्ष्मेत्यादिश्लोकत्रयोक्तार्थे प्रमाणसंवादं दर्शयति ॥ नित्यदृगिति । अनेन सत्यदृगित्य-नेनान्वयः प्रमापित इति ज्ञातव्यम् । नष्टवदित्यस्यार्थः ॥ मृतवदिति । वत्यर्थप्रदर्शनम् ॥ न किञ्चन जानातीति । आतुर आतुरद्रष्टेत्यस्यार्थः ॥ जीव इति । आत्म शब्दार्थः ॥ परमात्मेति । साहङ्कारस्येत्यादेरर्थः ॥ तस्य जीवस्याश्रय इति ॥ १७ ॥

**देवहूतिरुवाच–**

**पुरुषं प्रकृतिर्ब्रह्मन् न विमुञ्चति कर्हिचित् ।**
**अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥ १८ ॥**

**प्रकाशिका–** मुक्तलिङ्गः सदाभासमित्यत्र प्रकृत्यात्मकलिङ्गशरीरसंबन्धाभावो मुक्तस्योक्तः स न युक्त इत्याशङ्कते ॥ पुरुषमिति । अत्र पुरुषशब्दो जीवपरः । कर्हिचित्कदाचिदप्यनयोः प्रकृतिपुरुषयोर्नित्यत्वादन्योन्याश्रयत्वाच्चान्यतरं विनाऽन्यतरस्य प्रवृत्त्यादावसामर्थ्याच्चेत्यर्थः । तथा च प्रकृतिपुरुषसंबन्धस्यानादितो विद्यमानस्य संबन्धिद्वयाऽविनाभूतस्य संबन्धिद्वयसत्वे कथमपगम इति शङ्कार्थः ॥ १८ ॥

**यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ।**
**अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १९ ॥**

**प्रकाशिका–** एतदेव दृष्टान्तमुखेनोपपादयति ॥ यथेति । भूमेस्तद्गुणस्य गन्धस्य च व्यतिरेकतो भावो विनाभावो नास्ति । तथा च तयोः संबन्धस्तदुभयाविनाभूत इति भावः । एवमपामित्येतदपि व्याख्येयम् । तथा च यः संबन्धः संबन्धिद्वयाविनाभूतः स सति संबन्धिद्वये न नश्यतीत्यत्रेदमुदाहरणद्वयमिति भावः । उपनयमाह ॥ तथा बुद्धेरिति । प्रकृतेरित्यर्थः । परस्य तद्विलक्षणस्य जीवस्याव्यतिरेकतो भावो नास्ति ॥ १९ ॥

**अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः ।**
**गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ २० ॥**

**प्रकाशिका–** निगमयति ॥ अकर्तुरिति । अतस्तस्मात्प्रकृतिं विना कर्तुः पुरुषस्यायमनादिसिद्धः कर्मबन्धः संसारो यदाश्रयो यन्मूलस्तेषु प्रकृतेर्गुणेषु सत्त्वादिषु सत्सु विद्यमानेषु प्रकृतेः सत्त्वादिरूपायाः सकाशात्कैवल्यं मोक्षः कथं न कथमपीत्यर्थः । संबन्धिद्वयसत्वे तदविनाभूतसंबन्धनिवृत्तिः कथमिति भावः ॥ २० ॥

**सकृत् तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ।**
**निवृत्तस्यानिवृत्तत्त्वात् पुनः प्रत्यवतिष्ठते ॥ २१ ॥**

**प्रकाशिका–** ननु प्रबुद्धः स्वप्नसुप्तिभ्यामित्यादिना संसारमोक्षसाधनं मया कथितमित्यत आह ॥ सकृदिति । तत्त्वावमर्शेनोक्तरीत्या वैतथ्यव्यभिचारादिस्मरणेन विषयानभिध्याने न

मनोवशीकरणादिनाऽपरोक्षज्ञानेन कर्मक्षये स्थूलशरीरप्राप्तिरूपभयस्य सकृन्निवृत्तावपि तन्निमित्तस्य लिङ्गशरीरस्योक्तरीत्याऽनिवृत्तत्वात्पुनः स्थूलशरीरप्राप्तिरूपं भयं प्रत्यवतिष्ठत एव । यथा प्रलये स्थूलशरीराभावेऽपि सूक्ष्मशरीरसत्वेन पुनः संसारारंभः सृष्टिसमये तथैवेत्याशयः । न च कर्मनाशात्पुनः कथं संसारारंभ इति वाच्यम् । कर्मसंबन्धस्यापि प्रकृतिसंबन्धतुल्यतया सर्वात्मनाऽपगमासंभवादित्याशयात् ॥ २१ ॥

**भगवानुवाच–**

**अनिमित्तप्रवृत्तेन स्वधर्मेणामलत्मना ।**
**तीव्रया मयि भक्त्या च श्रुतिसंभृतया चिरम् ॥ २२ ॥**

**प्रकाशिका–** उक्तवक्ष्यमाणसाधनसन्दर्भजातेनाघटितघटकेन प्रसादेनानिवर्त्यतया प्रसक्तोऽपि प्रकृतिसंबन्धः कर्मसंबन्धश्च सर्वथा निवर्तते । तथा च निवृत्तनिमित्तत्वाभावान्न पुनः संसारारंभ इत्याशयेन समाधानमाह ॥ अनिमित्तेत्यादिना । अः परमात्मा तन्निमित्तं तत्प्रीत्यर्थं प्रवृत्तेनानुष्ठितेनात एवामलात्मना निर्दुष्टेन मनसा चिरं श्रुत्या वेदान्तश्रवणेनैव संभृतया सम्यग्वर्धितया ॥२२॥

**दृष्टतत्त्वेन ज्ञानेन वैराग्येण बलीयसा ।**
**तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २३ ॥**

**प्रकाशिका–** दृष्टतत्त्वेन विषयीकृतपरापरतत्त्वेन योगेन प्राणायामादिरूपेणात्मसमाधिना मनसः एकाग्रतालक्षणध्यानेन ॥ २३ ॥

**प्रकृतिः पुरुषस्यैवं दह्यमाना त्वहर्निशम् ।**
**तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २४ ॥**

**प्रकाशिका–** अग्नेर्योनिः स्थानभूतारणिदृष्टान्तस्तिरोभावमात्रे न नाशे प्रकृतेर्नित्यत्वादिति ज्ञेयम् ॥ २४ ॥

**भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ।**
**नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २५ ॥**

**प्रकाशिका–** ईश्वरस्य भगवत्प्रसादेन प्रकृतिजये समर्थस्य स्वे महिम्नि स्वस्वरूपभूतानन्दानुभवे स्थितस्य तद्युक्तस्य ॥ २५ ॥

**यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत् ।**
**स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २६ ॥**

**प्रकाशिका–** अप्रतिबुद्धस्य जाग्रदाद्यवस्थाशून्यस्य प्रस्वापो निद्रा बह्वनर्थकृत् स्वाप्नव्याघ्रादिनिमित्तभयजनकः । प्रतिबुद्धस्य जाग्रतः ॥ २६ ॥

**एवं विदिततत्त्वस्य प्रकृतिर्मति मानसम् ।**
**युञ्जतो नापकुरुते आत्मारामस्य कर्हिचित् ॥ २७ ॥**

**प्रकाशिका–** नापकुरुते । मत्प्रभावादिति शेषः ॥ २७ ॥

**यदैवमध्यात्मरतः कालेन बहुजन्मना ।**
**सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः ॥ २८ ॥**

**प्रकाशिका–** एवमुक्तसाधनानुष्ठानेऽपि प्रकृत्यपसरणमस्मिन् जन्मनि नोपलभ्यत इत्याशङ्कायामाह ॥ यदैवमिति । अध्यात्मरतः परमात्मरतः ॥ २८ ॥

**मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ।**
**निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २९ ॥**

**प्रकाशिका–** प्रतिबुद्धार्थोऽपरोक्षीकृतपरतत्त्वः । स्वसंस्थानं स्वस्वरूपाविर्भावरूपम् ॥ २९ ॥

**प्राप्नोतीहाञ्जसा धीरः स्वदृशा च्छिन्नसंशयः ।**
**यद् गत्वा न निवर्तेत योगी लिङ्गविनिर्गमे ॥ ३० ॥**

**प्रकाशिका–** स्वदृशा स्वस्य भगवद्दासत्वापरोक्ष्येण ॥ ३० ॥

**यदा न योगोपचितासु चेतो**
**मायासु सिद्धस्य विषज्जते च ।**
**अनन्यहेतुष्वथ मे गतिः स्याद्**
**आत्यन्तिकी यत्र न मृत्युहासः ॥ ३१ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे अष्टाविंशोऽध्यायः ।**

**प्रकाशिका–** जीवन्मुक्तो ज्ञानसामर्थ्यप्राप्ताणिमाद्यैश्वर्यभोगानासक्तश्चेत्क्षिप्रमेव मल्लोकं व्रजतीत्याह ।। यदेति । योगोपचितासु विद्यासामर्थ्यलब्धासु मायास्वणिमादिविभूतिषु न विषज्जेत विशेषेण सक्तं न भवति । अन्यन्यहेतुषु न विद्यते मदन्यो हेतुर्यासाम् । अथ तदाऽऽत्यन्तिकी पुनरावर्तिवर्जिता । मृत्योर्यमस्य हासो व्यापारो मृतिरूपो यत्र यस्यां गतौ नेत्यर्थः । अपरोक्षज्ञानिनोऽणिमादिसिद्धयोऽपि प्राप्ता भवन्ति । तासु यद्यासक्तस्तर्हि मल्लोकगमने विलंबो यद्यनासक्तस्तर्हि क्षिप्रमेव मल्लोकं गच्छतीति भावः ।। ३१ ।। इति श्रीभागवतटिप्पण्यामष्टाविंशोऽध्यायः ।। ३-२८ ।।

## अथ एकोनत्रिंशोऽध्यायः

**भगवानुवाच–**

**योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ।**
**मनो येनैव विधिना प्रपन्नं याति सत्पथम् ।। १ ।।**

**तात्पर्यम्– 'सबीजो वैष्णवो योगो निर्बीजस्त्वन्यदैवतः । बीजं विष्णुर्हि जगतः शाखाद्याश्चान्यदेवता' इति कौर्मे ।। १ ।।**

**प्रकाशिका–** इदानीमपरोक्षज्ञानजनकमष्टविधयोगं वक्ष्यामीति प्रतिजानीते ।। योगस्येति । अत्र सबीजस्येत्यस्य प्रकृतासंगतमर्थं तद्व्यावर्त्यं च प्रमाणेनैव दर्शयति ।। सबीज इति । कुत इत्यत आह ।। बीजमिति । हि यस्माद्विष्णुर्व्यञ्जकत्वाद्बीजशब्दवाच्यः । अन्यदेवास्तु न तथा । किन्तु शाखारूपा एवातो युक्तमुक्तमित्यर्थः । सबीजस्य विष्णुसहितस्य विष्णुदेवताकस्य । योगस्याष्टाङ्गस्य लक्षणं स्वरूपम् । नृपात्मजे मनो येन विधिना प्रकारेण प्रसन्नं सत् । सत्पथं ब्रह्ममार्गम् ।। १ ।।

**स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ।**
**दैवलब्धेन सन्तोष आत्मविच्चरणार्चनम् ।। २ ।।**

**प्रकाशिका–** तत्र नियमानाह ।। स्वधर्माचरणमित्यादिना । विधर्माद्धर्मवदवभासमानात् । शास्त्रनिषिद्धाच्च । निवर्तनं परित्यागः । सन्तोषोऽलंबुद्धिः । आत्मविदां ब्रह्मविदां ब्रह्मज्ञानिनां श्रीपादार्चनम् ।। २ ।।

**ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ।**
**मितमेध्यादनं शश्वद् विविक्तक्षेत्रसेवनम् ।। ३ ।।**

**प्रकाशिका–** ग्राम्यस्त्रैवर्गिको धर्मस्तस्मान्निवृत्तिः । मोक्षधर्मरतिर्निवृत्तधर्मसेवा । मितं च तन्मेध्यं च शुद्धं च तस्यादनम् । तत्र द्वौ भागौ पूरयेदन्नैस्तोयेनैकं तु पूरयेन्मारुतस्य प्रचारार्थं चतुर्थमवशेषयेदिति स्मृत्युक्तप्रकारेण मितत्वं ज्ञातव्यम् । विविक्तो भगवांस्तत्क्षेत्रसेवनम् । विजनक्षेत्रसेवनमिति वा ॥ ३ ॥

**अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।**
**ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥**

**प्रकाशिका–** यमानाह ॥ अहिंसेत्यादिना । अहिंसा शास्त्रनिषिद्धहिंसावर्जनम् । सत्यं सद्धितकथनम् । अस्तेयं स्वाम्यननुज्ञातस्य तृणादेरप्यग्रहणम् । यावताऽर्थः शरीरावस्थितिरूपं प्रयोजनं भवति तावतो धान्यादेः प्ररिग्रहः स्वीकारः ॥ ४ ॥

**मौनं सदासनं स्थैर्य प्राणानां च जयः शनैः ।**
**प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥**

**प्रकाशिका–** आसनादीन्यङ्गान्याह ॥ सदाऽऽसनेत्यादिना । सदापद्माद्यासनरूपजयः । स्थैर्यं वैष्णवसिद्धान्तादचलनम् । प्राणायामैः प्राणानां जयः । मनसा सहेन्द्रियाणां विषयात् । विषयेभ्यो हृदि स्थितं हरिं प्रत्याहरणमानीय स्थापनम् ॥ ५ ॥

**स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ।**
**वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥ ६ ॥**

**तात्पर्यम्– 'समाधिरप्रयत्नेन मनसः संस्थितिर्भवेदि'ति च ॥ ६ ॥**

**प्रकाशिका–** यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभेदेन योगोऽष्टविधः । तत्र यमादीनां पञ्चानां धारणाद्यङ्गत्वमित्याशयेन तान्युक्त्वेदानीं धारणादिकमाह ॥ स्वधिष्ण्यानामिति । स्वस्य विष्णोर्धिष्ण्यानां पदादिस्थानानां मध्ये एकदेशे एकैकावयवे मनसा सह प्राणानामिन्द्रियाणां धारणं स्थापनम् । एकैकावयवस्मरणमिति यावत् । तदुक्तम् । खंढस्मृतिर्धारणा स्यादिति । धारणासाध्यं समग्राङ्गध्यानमाह ॥ वैकुण्ठेति । वैकुण्ठस्य हरेर्लीलानां स्वयोग्योपसंहार्यगुणानामभिसम्यग्ध्यानम् । ध्यानसाध्यं समाधिमाह ॥ समाधानमिति । आत्मनो मनसः समाधानं समाधिः । अत्र ध्यानभिन्नं समाधिशब्दार्थं प्रमाणेनैव दर्शयति ॥ समाधिरिति ॥ हराविति शेषः। तथा च प्रयत्नेन हरौ मनसः स्थितिर्ध्यानमतो न पौनरुक्त्यमिति भावः ॥ ६ ॥

**एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ।**
**बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥**

**प्रकाशिका–** एतैरन्यैश्चेति । व्रतदानादिभिः पथिभिरुपायैर्बुद्ध्या हरावेव युंजीत तमेव चिन्तयेदित्यर्थः । शनकैर्जितप्राणो जितश्वासः । जितेन्द्रिय इति वा । पूर्वावस्थाद्यनुवादोऽयम् ॥७॥

**शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ।**
**तस्मिन् स्वस्तिसमासीन ऋजुकायः समभ्यसेद् ॥ ८ ॥**

**प्रकाशिका–** आसनमारभ्य समाधिपर्यन्तमुक्तं पुनर्विशदयति ॥ शुचावित्यादिना । अन्यैश्च व्रतदानादिभिर्विजितासनोऽभ्यस्तपद्मासनः । आसनं चैलाजिनकुशोत्तरं तस्मिन्स्वस्ति यथा स्यात्तथा सम्यगासीनः । स्वस्तिक इति पाठे वीरपद्मादेरुपलक्षणम् । अभ्यसेत् । प्राणधारणमिति शेषः ॥८॥

**प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।**
**प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् ॥ ९ ॥**

**प्रकाशिका–** तदेवाह ॥ प्राणस्येति । प्रतिकूलेन रेचकादिक्रमेण । वा शब्दाद्रेचकपूरककुम्भकैरिति पक्षान्तरमपि सूचयति । यथा स्थिरं सदचञ्चलं चञ्चलं यथा न भवति तथा शोधयेत् ॥ ९ ॥

**मनोऽचिरात् स्याद् विरजं जितश्वासस्य योगिनः ।**
**वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥**

**प्रकाशिका–** प्राणायामफलमाह ॥ मन इति । ध्यानं संतप्तं लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात् । ततश्चाचलं स्यादिति भावः ॥ १० ॥

**प्राणायामैर्दहेद् दोषान् धारणाभिश्च किल्बिषान् ।**
**प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥ ११ ॥**

**प्रकाशिका–** प्राणायामादिफलं विवृण्वन् धारणादिफलमाह ॥ प्राणायामैरिति । दोषान्मनोदोषान् रागादीन् धारणाभिः स्वधिष्ण्यानामेकदेश इत्युक्तिभिः किल्बिषान् ब्रह्महत्यादिकान्संसर्गान्दुष्टविषयसंसर्गान् ध्यानेन वैकुण्ठलीलाभिध्यानेनेत्यत्रोक्तेन हरेः सर्ववैलक्षण्यध्यानेनानीश्वरानीश्वरव्यतिरिक्तान् गुणान् दहेद्दूरीकुर्यात् । तान्द्रष्टुं नेक्षते तद्दर्शनेच्छा न भवतीत्याशयः । यद्वक्ष्यति । न पृथग्दिदृक्षेदिति ॥ ११ ॥

**यदा मनः स्वं विरजं योगेन सुसमाहितम् ।**
**काष्ठां भगवतो ध्यायेत् स्वनासाग्रावलोकनः ॥ १२ ॥**

**प्रकाशिका–** योगेन प्राणायामादिरूपेण सुसमाहितमप्रयत्नेन हरौ स्थितं भवति । काष्ठामुत्कृष्ट-तारतम्यावधिभूतां मूर्तिम् । स्वनासाग्रावलोकन इत्यनेन दिशामनवलोकनं सूचयति ॥ १२ ॥

**प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् ।**
**नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥**

**प्रकाशिका–** ध्येयमूर्तिं वर्णयति ॥ प्रसन्नेत्यादिभिः । पद्मगर्भवत्पद्मान्तर्भागवदरुणे ईक्षणे नेत्रे यस्य तम् ॥ १३ ॥

**लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् ।**
**श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ १४ ॥**

**प्रकाशिका–** लसतः पङ्कजस्य किंजल्कवत्केसरवत्पीतकौशेये वाससी यस्य तम् । श्रीवत्सो वक्षो यस्य । भ्राजत्कौस्तुभेन मुक्ता संश्लिष्टा कंधरा यस्य ॥ १४ ॥

**मत्तद्विरेफाकुलया परीतं वनमालया ।**
**परार्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥**

**प्रकाशिका–** मत्तैर्द्विरेफैर्भ्रमरैराकुलया व्याप्तया । परार्ध्यान्यनर्ध्यतया श्रेष्ठानि हारादीनि यस्य तम् ॥ १५ ॥

**काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ।**
**दर्शनीयतमं शान्तं मनोनयननन्दनम् ॥ १६ ॥**

**प्रकाशिका–** काञ्चीगुणेन काञ्चीकलापेनोल्लसन्ती श्रोणिर्नितम्बप्रदेशो यस्य । भक्तानां हृदयां-भोजमेव विष्टरमासनं यस्य । भक्तानां मनांसि नयनानि च वर्धयति वर्षयतीति मनोनयनस्य वर्धनम् ॥ १६ ॥

**अपीच्यदर्शनं शश्वत् सर्वलोकनमस्कृतम् ।**
**सन्तं वयसि कैशोरे भक्तानुग्रहकातरम् ॥ १७ ॥**

**प्रकाशिका–** आपीच्यदर्शनं प्राप्तषोडशवर्षवद्दृश्यमानम् । अथवा । कैशोरवयसि द्वादशवर्षलक्षणे सन्तं स्थितम् ॥ १७ ॥

**कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ।**
**ध्यायेद् देवं समग्राङ्गं यावन्न च्यवते मनः ॥ १८ ॥**

**प्रकाशिका–** कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तम् । पुण्यश्लोका ब्रह्मादयो येषां यशस्करं यशः सम्पादकम् ॥ १८ ॥

**स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।**
**प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥**

**प्रकाशिका–** प्रेक्षणीयमीहितं चेष्टितं यस्य स तथा तम् । शुद्धो भावो भक्तिर्यस्य तेन ॥ १९ ॥

**तस्मिन् लब्धपदं चित्तं सर्वावयवसंस्थितम् ।**
**विलोक्यैकत्र संयुज्यादङ्गे भगवतो मुनिः ॥ २० ॥**

**तात्पर्यम्– सर्वस्मरणाशक्तावेकाङ्गे । 'यावन्नच्यवते मन' इत्युक्तत्वात् । 'सर्वं स्मर्तुमशक्तः सन्नेकाङ्गं चिन्तयेद्बुध' इति च ॥ २० ॥**

**प्रकाशिका–** तस्मिन्हरौ समग्राङ्गे लब्धं पदं प्राप्तं स्थानं सर्वावयवसंस्थितं युगपत्सर्वावयव-विषयकतया स्थितं विलोक्यैकत्रावयवे संयुज्यात् । नन्विदमनुपपन्नं समग्राङ्गध्यानकाले एकत्र मनोयोगस्यासङ्गतत्वात् । अतोऽत्राभिप्रेतं तात्पर्यं दर्शयति ॥ सर्वस्मरणेति । अत्रान्तरङ्गं ज्ञापकमाह ॥ यावन्नच्यवत इति । तत्र यावन्न च्यवते मन इत्युक्त्या समग्राङ्गे मनसध्यवनेऽसमग्रध्यानस्यार्थत उक्तत्वादित्याशयः । स्पष्टं च प्रमाणमाह ॥ सर्वमिति । ततश्च तत्रासक्तं विलोक्येति मूलं योज्यमिति भावः ॥ २० ॥

**सञ्चिन्तयेद् भगवतश्चरणारविन्दं**
**वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।**
**उत्तुङ्गरक्तविलसन्नखचक्रवाल-**
**ज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥**

**प्रकाशिका–** एकत्र संयुज्यादित्युक्तमेव पादादिक्रमेण दर्शयति ॥ सञ्चिन्तयेदित्यादिना । पादतले रेखात्मकानि वज्रादीनि लाञ्छनानि चिह्नानि तैराढ्यं युक्तम् । उत्तुङ्गरक्तान्युत्कृष्टानि विलसन्ति

नखानि तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो दूरीकृतो महतां ध्यातॄणां हृदयान्धकारो येन ॥ २१ ॥

**यच्छौचनिःसृतसरित्प्रवरोदकेन**
**तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत् ।**
**ध्यातुर्मनः शमलशैलनिसृष्टवज्रं**
**ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥**

**प्रकाशिका–** यस्य चरणारविन्दस्य शौचात्प्रक्षालनान्निःसृता सरित्प्रवरा गङ्गा तस्या उदकेन तीर्थेन पावनेन शिवो महादेवोऽपि शिवः परममङ्गलरूपत्वेन शिवनामधेयो ध्यातुर्मनसि वर्तमानो यः शमलशैलः पापपर्वतस्तद्विदारणाय निसृष्टं क्षिप्तं वज्रमिव वज्रम् ॥ २२ ॥

**ऊरू सुपर्णभुजयोरधिशोभमाना-**
**वोजोनिधी स्वतसिकाकुसुमावभासौ ।**
**व्यालम्बिपीतवरवाससि वर्तमान-**
**काञ्चीकलापपरिरम्भिनितम्बमम्ब ॥ २३ ॥**

प्रकाशिका– जानुनी पूर्वोत्तरान्तर्भूते इति भावेनोरूपास्तिमाह ऊरू इति । सञ्चिन्तयेदित्यन्वयः । भुजयोरधि उपरिस्कन्धे । ओजसो बलस्य निधी आधारौ स्वतसिकाकुसुमं प्रफुल्लकल्पकुसुमं तद्वदवभासो ययोस्तौ । अथ नितंबं सञ्चितयेत् । कथंभूतम् । व्यालं विलंबमानं पीतं पीतवर्णं वरमुत्तमम् । यद्वासस्तस्मिन्वर्तमानो यः काञ्चीकलापस्तेन परिरंभः संश्लेषो यस्यास्तीति परिरंभिकाञ्चीकलापपर्यस्तवस्त्राच्छादितमिति यावत् ॥ २३ ॥

**नाभिह्रदं भुवनकोशगुहोदरस्थं**
**यत्रात्मयोनिधिषणाखिललोकपद्मम् ।**
**व्यूढं हरिन्मणिमुषः स्तनयोरमुष्य**
**ध्यायेद् द्वयं विततहारमयूखगौरम् ॥ २४ ॥**

**प्रकाशिका–** अमुष्य हरेर्नाभिहृदयं ध्यायेत् । निम्नवत् पद्माधारत्वसाम्येन नाभेर्ह्रदत्वोपमा । कथंभूतम् । भुवनानां कोशभूता आश्रयभूता यदि काचिद्गुहा तत्तुल्यं यदुदरं तत्रस्थम् । प्रसिद्धह्रदेऽपि पर्वतगुहोदरस्थो यत्र यस्मिन्नाभिह्रदे आत्मयोनेश्चतुर्मुखस्य धिषणं धिष्ण्यमखिललोकात्मकं पद्मं

व्यूढमुत्थितं हरिन्मणिरिन्द्रनीलरत्नंस्य प्रभां मुष्णतोऽमुष्य हरेः स्तनयोर्द्वयं ध्यायेत् । अनेन वस्तुतः स्तनद्वयमिन्द्रनीलनिभमिति सूचयति । अथाऽपि विततानां विस्तृतानां हाराणां मयूखैः किरणैर्गौरं श्वेतमिव दृश्यमानम् ॥ २४ ॥

**वक्षोऽधिवासमृषभस्य महाविभूतेः**
**पुंसां मनोनयननिर्वृतिमादधानम् ।**
**कण्ठं च कौस्तुभमणेरधिभूषणार्थं**
**कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २५ ॥**

**प्रकाशिका–** ऋषभस्य श्रेष्ठस्य हरेर्महाविभूतेर्महालक्ष्म्या अधिवासमावासस्थानं वक्षो मनसि कुर्यात् । पुंसां स्मर्तॄणां द्रष्टॄणां च निर्वृतिः सुखमादधानमुत्पादयत् । कौस्तुभमणेरधिकभूषणं भूषैवार्थः प्रयोजनं यस्य तं कण्ठं च मनसि कुर्यात् ॥ २५ ॥

**बाहूंश्च मन्दरगिरेः परिवर्तनेन**
**निर्णिक्तबाहुवलयानधिलोकपालान् ।**
**सञ्चिन्तयेद् दशशतारमसह्यतेजः**
**शङ्खं च तत्करसरोरुहराजहंसम् ॥ २६ ॥**

**प्रकाशिका–** बाहूंश्च सञ्चिन्तयेत् । मन्दरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्तान्युज्वलीकृतानि बाहुवलयान्यङ्गदानि येषु । अधिश्रिता लोकपाला इन्द्रादयो येषु । दशशतं सहस्रमराणि दलानि यस्य । असह्यं सोढुमशक्यं तेजो यस्य तच्चक्रं कर एव सरोरुहं पद्मं तत्र राजहंस इव वर्तमानम् ॥ २६ ॥

**कौमोदकीं भगवतो दयितां स्मरेत**
**दिग्धामरातिभटशोणितकर्दमेन ।**
**मालां मधुव्रतवरूथगिरोपघुष्टां**
**चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥ २७ ॥**

**तात्पर्यम्– 'ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः । स च ब्रह्मा हरेः कण्ठे कौस्तुभत्वेन भासत' इति भागवततन्त्रे ॥ २७ ॥**

**प्रकाशिका–** कौमोदकीं नाम गदामस्य हरेः कण्ठे मालाममलं कौस्तुभमणिं च संस्मरेत् । कथंभूतां गदाम् । अरातयो भटा योद्धारस्तेषां शोणितं रुधिरमेव कर्दमं तेन दिग्धां लिप्ताम् । कथंभूतां

मालाम् । मधुव्रतानां भ्रमराणां वरूथस्य समूहस्य गिरोपघुष्टां नादिताम् । कथंभूतं मणिम् । चैत्यस्य तत्त्वम् । अत्र चैत्यशब्दस्यार्थं प्रमाणेनैव दर्शयति ॥ ब्रह्मेति । चैत्यश्चैत्यशब्दवाच्यः । ननु चित्तेन हृदयं चैत्येत्यत्र पूर्वं चैत्यशब्देन हरिर्व्याख्यातः । तत्र किं निमित्तमित्यपेक्षायां प्रसङ्गात्तत्रापि निमित्तमाह ॥ तन्नियमनादिति । चित्तनियमनादित्यर्थः । हरिश्चैत्यश्चैत्यशब्दवाच्य इत्यर्थः । एवं चैत्यशब्दार्थमुक्त्वाऽस्य कण्ठे चैत्यस्य तत्त्वं मणिमित्यस्य तात्पर्यमाह ॥ स चेति । चशब्दः प्रकृतत्वानुसंधानार्थः । अस्येत्यस्यार्थः ॥ हरिरिति । तत्त्वमित्यस्य तात्पर्यम् ॥ कौस्तुभत्वेनेति । तथा च तत्त्वशब्दः स्वरूपपर इति भावः । अनेन चैत्यस्य चित्ताभिमानिनो ब्रह्मणस्तत्त्वं स्वरूपभूतम् । अभिमन्यमानमिति यावदिति योजनां सूचयति । अभिमान्यभिमन्यमानयोरभेदव्यपदेशो महतश्चतुर्मुखादित्यादौ प्रसिद्धः ॥ २७ ॥

**भृत्यानुकम्पितधियेह गृहीतमूर्तेः**
**सञ्चिन्तयेद् भगवतो वदनारविन्दम् ।**
**यद् विस्फुरन्मकरकुण्डलवल्गितेन**
**विद्योतितामलकपोलमुदारहासम् ॥ २८ ॥**

**प्रकाशिका–** भृत्येष्वनुकंपिता कृपायुक्ता या धीस्तया गृहीता मूर्तिराकारविशेषो येन तस्य । यद्वदनारविन्दं विस्फुरती विशेषेण दीप्यमाने ये मकराकारकुण्डले तयोर्वल्गितेन प्रचलनेन विद्योतितावमलौ कपोलौ यस्मिंस्तत् । उदारो भक्ताभीष्टदानशूरो हासो यस्मिंस्तत् ॥ २८ ॥

**यच्छ्रीनिकेतमलिभिः परिसेव्यमानं**
**भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ।**
**मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं**
**ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ॥ २९ ॥**

**तात्पर्यम्– 'साक्षाच्छ्रीस्तु हरे रूपमिन्दिरा तु तदाश्रयादि'ति च ॥ २९ ॥**

**प्रकाशिका–** श्रीनिकेतम् । अत्र निरुपपदश्रीशब्देन श्रीशब्दमुख्यवाच्या भगवत्स्वरूपभूतैव श्रीर्विवक्षिता न लक्ष्मीः । तस्या वक्षस्थितेः पूर्वमुक्तत्वात् । मुख्यश्रीशब्दवाच्यत्वाभावाच्चेत्याशयेन श्रीशब्दमुख्यवाच्या हरिस्वरूपश्रीरेवेत्यत्र प्रमाणमाह ॥ साक्षादिति । मुख्यया वृत्त्येत्यर्थः । श्रीः श्रीशब्दवाच्या । तु शब्दोऽवधारणे । आद्यस्य रूपमेवेत्यन्वयः । तदाश्रयादेव श्रीरिति द्वितीयस्य । तथा च यद्वदनारविन्दं श्रियो हरिस्वरूपभूतशोभाया निकेतमाश्रय इति मूलं योज्यमिति भावः ।

सौरभलोभादलिभिः परितः सेव्यमानम् । यच्च स्वया स्वरूपभूतया भूत्या शोभयैव कुटिला वक्त्राः । न तु केनचिन्निमित्तेन । ते च ते कुन्तला ललाटपतिताः केशविशेषास्तेषां वृन्देन समूहेन जुष्टं युक्तम् । मीनद्वयस्यायामत्वपृथुमध्यत्वतनूभयभागत्वादिलक्षणं श्रियं कान्तिमधिक्षिपती धिक्कुर्वती । अब्जसदृशनेत्रे यस्मिन्स तत्तथा । नित्यसापेक्षत्वात्समासः । मनोमयं प्राचुर्येण मनोविषयम् । मनोहरमिति यावत् । अतन्द्रित आलस्यवर्जितः । अनेन ध्याने आदरनैरन्तर्ये सूचयति । उल्लसन्त्यौ भ्रुवौ यस्मिंस्तत् ॥ २९ ॥

**तस्यावलोकमधिकं कृपयातिघोर-**
**तापत्रयोपशमनाय निसृष्टमक्ष्णोः ।**
**स्निग्धस्मितानुगुणितं विपुलप्रसादं**
**ध्यायेच्चिरं विततभावनया गुहायाम् ॥ ३० ॥**

**प्रकाशिका–** अवलोकमवलोकनं ध्यायेत् । कथंभूतम् । कृपयाऽधिकं यथा स्यात्तथाऽक्ष्णोरक्षिभ्यां निसृष्टं प्रयुक्तं स्निग्धस्मितेन स्नेहयुक्तमन्दहासेनानुगुणितमनुकूलितम् । विपुलो बहुतरः प्रसादो ज्ञेयो यस्मात्तम् । विततभावनया वर्धमानभक्त्या शास्त्रजनितसंस्कारानुसारेण वा । गुहायां हृदि हरिं रहसि ध्यायेदित्यन्वयः ॥ ३० ॥

**हासं हरेरवताखिललोकतीव्र-**
**शोकाश्रुसागरविशोषणमत्युदारम् ।**
**संमोहनाय रचितं निजमाययास्य**
**भ्रूमण्डलं मनुसुते मकरध्वजस्य ॥ ३१ ॥**

**प्रकाशिका–** कथंभूतम् । अवनता येऽखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा । अत्युदारं भक्ताभीष्टदानशूरम् । भो मनुसुते । अस्य हरेर्भ्रूमण्डलं च ध्यायेत् । कथंभूतम् । निजमायया स्वेच्छया मकरध्वजस्य कामस्यापि संमोहनाय रचितम् । सर्वमोहकोऽपि कामो हरेर्भ्रूमण्डलरचनादर्शनेन स्वयमेव मोहितः सन् तस्मिंस्तदीयेषु चाकिञ्चित्करो जात इति भावः ॥ ३१ ॥

**ध्यानायनं रहसि तद् बहुलाधरोष्ठ-**
**भासाऽरुणायिततनुद्विजकुन्दपङ्क्ति ।**

**ध्यायेत् स्वहृत्कुहरकेऽवसितस्य विष्णो-**
**र्भक्त्यार्द्रयार्पितमना न पृथग् दिदृक्षेत् ॥ ३२ ॥**

**तात्पर्यम्– 'न पृथग्दिदृक्षेत् । तमेव दिदृक्षेदित्यर्थः ॥ ३२ ॥**

**प्रकाशिका–** एवमेकैकावयवध्यानायासचित्तस्य समग्रध्यानवपुराह ॥ ध्यानायनमिति । रहस्येकान्ते स्थित्वा स्वहृत्कुहरके स्वहृदयगुहायामवसितस्य निश्चितावध्यानस्य विष्णोर्ध्यानायनमप्रयत्नेनैकैकावयवध्यानास्पदं तद्वपुर्ध्यायेत् । कथं भूतम् । बहुलयाऽधिकयाऽधरोष्ठस्य भासा कान्त्याऽरुणीकृतास्तनवः सूक्ष्मा द्विजा दन्ता एव कुन्दकुड्मलानि तेषां पङ्क्तिर्यस्मिंस्तत्तथोक्तम् । अनेन हासध्यानानन्तरं दन्तपङ्क्तिरप्येवं ध्येयेति सूचयति । ध्यातुर्ध्यानफलमाह ॥ भक्त्येति । प्रेमरसेनार्द्रया पूर्णमिति यावत् । भक्त्या तस्मिन्नेवार्पितमनः स्थिरीकृतं चित्तो न पृथग्दिदृक्षेत् । अत्र स्वस्मात्परमात्मानं पृथङ्न दिदृक्षेदितिन्यथाप्रतीतिवारणाय तत्तात्पर्यमाह ॥ न पृथगिति । तथा च पृथक् तदतिरिक्तं वस्तु न दिदृक्षेद्द्रष्टुं नेच्छेत । किन्तु तमेव दिदृक्षेदिति मूलं योज्यमिति भावः । भगवति चित्तैकाग्र्यरूपध्यानेन परमानन्दलाभेन विषयदर्शनेच्छा न भवति । भगवद्दर्शनेच्छैव भवतीति ध्येयम् ॥ ३२ ॥

**एवं हरौ भगवति प्रतिलब्धभावो**
**भक्त्या द्रवद्धृदय उत्पुलकप्रमोदः ।**
**औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमान**
**स्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥ ३३ ॥**

**तात्पर्यम्– चित्तबडिशवियोगो ध्यानानन्तरसमाधिः ॥ ३३ ॥**

प्रकाशिका– ध्यानानन्तरं साध्यसमाधिमाह ॥ एवं हराविति । प्रतिलब्धभावः प्रतिलब्धमनःस्थितिर्द्रवद्धृदय आर्द्रचित्त उदुत्कृष्टौ पुलकप्रमोदौ रोमाञ्चहर्षौ यस्य स तथा । औत्कण्ठ्येनाविर्भूतया बाष्पकलयाऽश्रुधारया मुहुरर्द्यमान आर्द्रीक्रियमाणः पुमान् तच्चापि तदपि चित्तमुक्तरीत्या स्ववशमपि । चशब्दस्य वियुंक्ते चेत्यन्वयः । चित्तबडिशं दुर्ग्रहस्य भगवतो ग्रहणे मत्स्यबन्धनवदुपायभूतं वियुंक्ते । अत्र वियुक्तं करोतीत्यन्यथाप्रतीति वारणाय वियोगशब्दार्थमाहाचित्तेति ॥ वियोगो विशेषेणयोगः । प्रयत्नभावेऽपि योग इति यावत् । स च समाधिरूप एवेति भावः । तथा च चित्ताख्यं बडिशं हरौ शनकैरभ्यासपाटवानुसारेण वियुङ्क्ते विशेषेण योजयति अप्रयत्नेन स्थापयतीत्यर्थः । समाधिमान् भवतीति यावत् ॥ ३३ ॥

मुक्ताश्रयं यर्हि निर्विषयं स्वचित्तं
निर्वाणमृच्छति मनः सहसा यथार्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३४ ॥

**तात्पर्यम्– मुक्ताश्रयं विष्णुविषयम् । स्वचित्तं जीवचैतन्ये ततम् । निर्वाणमृच्छति शरीराभिमानं जहाति । स्वचिदभिमानेन ॥ ३४ ॥**

**प्रकाशिका–** एवंविधसमधिपरिपाकफलमपरोक्षज्ञानमित्याह ॥ मुक्ताश्रयमिति । अत्र मुक्ताश्रयमित्यस्य प्रकृतसङ्गतमर्थमाह ॥ मुक्ताश्रयमिति । स्वचित्तमित्येतदपि प्रकृतसङ्गतत्वेन योजयति ॥ स्वचित्तं जीवेति । स्वेत्यनुवादेन जीव इति व्याख्यानम् । चिदित्यस्यार्थः ॥ चैतन्य इति । तकारार्थः ॥ ततमिति । निर्वाणमृच्छतीत्यस्य स्वरूपत एव नाशमृच्छतीत्यन्यथाप्रतीतिवारणाय प्रकृतोपयुक्तं तात्पर्यमाह ॥ निर्वाणमिति । तथा चाभिमाननाश एव निर्वाणशब्दार्थो न स्वरूपनाश इति भावः । तत्र स्वचित्तमित्येतद्धेतुतयोक्तमित्याशयेन तत्तात्पर्यमाह ॥ स्वचिदाभिमानेनेति । जीवस्वरूपचैतन्याभिमानेनेत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ यर्हि यदा मनो निर्विषयं विषयेभ्यो निर्गत्य मुक्ताश्रयं नित्यमुक्तविष्णुविषयम् । उक्तसमाधियुक्तमिति यावत् । स्वचित्तं जीवचैतन्ये ततं भवति चिदानन्दात्मके स्वरूपदेह एव ममायं देह इत्यभिमानयुक्तं भवतीति यावत् । तेन स्वरूपदेहाभिमानेन सहसा निर्वाणमृच्छति जडशरीराभिमानं जहाति मनोगतो जडशरीराभिमानो नश्यतीत्यर्थः । अत्र दृष्टान्तमाह ॥ यथेति । यथाऽर्चिर्ज्वाला सहसेन्धनाद्यभावे निर्वाणमृच्छति तथैवेति । अत्रास्यामवस्थायां पुरुष उपासको जीव एकं सर्वोत्तममव्यवधानं समाधिपरिपाकेन परमाच्छादिकाया व्याघुट्टितत्वेन लक्षणव्यवधानशून्यमात्मानं स्वबिंबादिरूपं परमात्मानमीक्षतेऽपरोक्षतः पश्यति । अनु पश्चादारब्धकर्मक्षये सति प्रतिनिवृत्तगुणप्रवाहः संसारशोषो यस्य स तथोक्तोऽप्रारब्धकर्मनिर्मितदेहपरंपराशून्यो भवतीत्यर्थः ॥ ३४ ॥

सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महिम्न्यवसितः सुखदुःखबाह्ये ।
हेतुत्वमप्यसति कर्तरि दुःखयोर्न
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥ ३५ ॥

**तात्पर्यम्– 'असत्कर्ता तु जीवः स्यात्सत्कर्ता परमेश्वर' इति शब्दनिर्णये । 'दुर्दुःखमिति विज्ञेयं खं सुखं च तयोर्यतः । प्रदाता परमो विष्णुस्तस्माद्दुःखादिनामवानि'ति हरिवंशेषु ॥३५॥**

**प्रकाशिका–** जीवन्मुक्तस्य स्थितिमाह ॥ सोऽप्येतयेति श्लोकद्वयेन । योऽपरोक्षतो हरिं दृष्टवान् स एतया समनसो निवृत्त्या जडशरीराभिमानत्यागरूपया सौषुप्तिकाभिमानत्यागवृत्तये चरमयेत्युक्तम्। तस्मिन्पूर्वोक्तसुखदुःखबाह्ये महिम्नि स्वरूपज्ञानानन्दलक्षणेऽवसितोऽहं निर्दोषज्ञानानन्दादिस्वरूपो भगवदधीनोऽस्मीति निश्चितोऽसति कर्तरि स्वात्मन्स्वात्मनि दुःखयोर्हेतुत्वं कर्तृत्वमपि न विधत्ते न पश्यति । पूर्वश्लोकोक्तप्रतिनिवृत्तगुणप्रवाहत्वसमुच्चयार्थोऽपिशब्दः । यतः उपलब्धाऽपरोक्षतो ज्ञाता परमात्मनः काष्ठा कर्तृत्वादिरूपा स्थितिर्येन स तथोक्तः । अत्र कर्तर्यसति सतीत्यन्यथाप्रतीतिवारणायासति कर्तरीत्यस्य तात्पर्यं तद्व्यावर्त्यं च प्रमाणेनैवाह ॥ असत्कर्तात्विति । तु शब्दोऽवधारणे । जीव एवेत्यन्वयः । तथा चासत्यस्वतन्त्रे कर्तरीत्यर्थः । परमात्मनः सकर्तृत्वात्तद्व्यावृत्त्यर्थमेतद्विशेषणमिति भावः । दुःखयोरित्यस्य दुःखद्वयार्थप्रतीतिवारणायार्थं प्रमाणेनैवाह ॥ दुर्दुःखमिति । तथा च दुर्दुःखं च खं सुखं च दुर्दुःखे तयोरिति मूलार्थ इति भावः ॥३५॥

**देहं तु तं न चरमं स्थितमुज्झितं वा**
**सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम् ।**
**दैवादुपेतमथ दैववशादपेतं**
**वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥**

**प्रकाशिका–** येन देहेनापरोक्षज्ञानं जातं तं देहं चरमं पश्चात्सिद्धोऽपरोक्षज्ञानी । स्थितं स्वप्रेरणयैकत्र स्थितमुझ्झितं तत्स्थानरहितं च न पश्यति । किन्तु दैवात्प्रारब्धाददृष्टात्प्रेरकेश्वरात् । तत्प्रेरणयैवेति यावत् । उपेतमेकत्र प्राप्तम् । अपेतं तस्मादपगतं च पश्यति । कुतः यतोऽध्यगमत्स्वरूपं चैतन्यात्मकम् । सदेह एवाभिमानवान्यत इत्यर्थः । स्वस्य विद्यमानमपि स्वकार्यमिदमिति न पश्यतीत्यत्र दृष्टान्तमाह ॥ वास इति । मदिरापानेनोत्पन्नमदेनान्धः पुमान् परिकृतं कटितटे परिवेष्टितं वासस्तत्र स्थितमुझ्झितं वा यथा न पश्यति तथैवेत्यर्थः ॥ ३६ ॥

**देहोऽपि दैववशगः खलु कर्म यावत्**
**स्वारम्भकं प्रतिसमीक्षत एव सासुः ।**
**तं सप्रपञ्चमधिरूढसमाधियोगः**
**स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः ॥ ३७ ॥**

**प्रकाशिका–** नन्वेवंविधेऽपि देहे सति कथमुक्तरीत्या शङ्कायामाह ॥ देहोऽपीति । सासुरिन्द्रियसहितो यावत्स्वारंभकं कर्म प्रारब्धं तावत्पर्यन्तमेव प्रतिसमीक्षते स्थितो भवति । तदवसाने त्वाह ॥

तमिति । स्वप्नप्रपञ्चपुत्रादिसहितं तद्देहं तज्जातीयं देहान्तरं वाऽधिरूढसमाधियोगः प्राप्तसमाधियोगफलः । सोऽपरोक्षज्ञानी पुनर्न भजते न प्राप्नोति । बीजाभावादिति भावः । अत्र दृष्टान्तमाह ॥ स्वाप्नं प्रतिबुद्धवदिति । यथा प्रतिबुद्धो निद्रावसानं प्राप्तः स्वाप्नदेहं वा तत्सदृशं देहान्तरं वा न भजते तथैवेत्यर्थः ॥ ३७ ॥

**यथा पुत्राच्च वित्ताच्च पृथङ् मर्त्यः प्रतीयते ।**
**अप्यात्मत्वेनाभिमताद् देहादेः पुरुषस्तथा ॥ ३८ ॥**

**प्रकाशिका–** ननु गौरोऽहङ्कृष्णोऽहमित्यादिव्यवहारबलान्न देहातिरिक्तात्माऽस्त्यतः कर्मापगमे पुनस्तं न भजत इत्ययुक्तमित्याशङ्कायामाह ॥ यथेति । आत्मत्वेनाभिमतादात्माभिन्नत्वेन व्यवह्रीयमाणादपीत्यर्थः । अपिपदेन हेतोरप्रयोजकतां सूचयति । स्नेहविशेषेणाहमेवेदं पुत्रादीति व्यवह्रीयमाणत्वात्पुत्रादेर्यथा मर्त्यः । पित्रादिः पृथक् प्रतीयते तथा पुरुषो जीवोऽपि आत्मत्वेन गौरोऽहमित्याद्यात्माभिन्नत्वेन व्यवह्रीयमाणाद्देहादेः पृथक् प्रतीयते मम देह इत्यनुभवात् । तथा च निर्बाधभेदानुभवबलादभेदव्यवहार औपचारिक एव न मुख्य इति भावः ॥ ३८ ॥

**यथोल्मुकाद् विस्फुलिङ्गाद् धूमाद् वापि स्वसम्भवात् ।**
**अप्यात्मत्वेनाभिमताद् दाहकोऽग्निः पृथङ् मतः ॥ ३९ ॥**

**प्रकाशिका–** ननु तथाऽपि दैववशग इत्यनुपपन्नम् । भूतेन्द्रियान्तःकरणात्मकदेहात्स्वामित्वेन तत्प्रधानाज्जीवाच्च पृथक् दैवशब्दाभिधेयेश्वरस्यानुपलंभात् । प्रत्युत राजादिदेहस्य वा तदभिमानिजीवस्य वेश्वरत्वेनाव्यवहारादित्यत आह ॥ यथोल्मुकादिति । स्वसंभवात् । अग्निसंभवात् । अविवेकिभिरात्मत्वेनाभिमतादुल्मुकादेरेवाग्निरित्यग्नित्वेन व्यवह्रीयमाणादुल्मुकादेर्यथा तद्दाहकोऽग्निः पृथङ्मतो निश्चितः । अन्यथाऽग्नेर्जनकत्वमेव न स्यादिति युक्तिसूचनाय स्वसंभवादित्युक्तम् ॥३९॥

**भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात् ।**
**आत्मा तथा पृथग् द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४० ॥**

**प्रकाशिका–** तथा भूतेन्द्रियान्तःकरणादविवेकिभिरयमेवेश्वर इति व्यवह्रीयमाणादप्यात्मा परमात्मा पृथक् । अत्र प्रमाणकथनाय द्रष्टा सर्वज्ञ इत्यादिकमुक्तम् । वेदे श्रूयमाणं सर्वज्ञ इत्यादिपदजातं जीवादिष्वसंभाव्यमानार्थकं तदतिरिक्तमीश्वरं गमयतीति भावः । स्वसंभवादित्यस्य दार्ष्टान्तिकेऽप्यन्वये देहादिजनकत्वयुक्तिरप्यत्रोक्तेति ज्ञातव्यम् ॥ ४० ॥

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षेतानन्यभावेन भूतेषु च तदात्मताम् ॥ ४१ ॥**

**तात्पर्यम्– अनन्यभावेन तद्रूपाणामभेदेन । तदात्मतां तस्यादानादिकर्तृत्वं च भूतविषये । ॥ ४१ ॥**

**प्रकाशिका–** सिंहावलोकनन्यायेन मोक्षसाधनज्ञानजनकध्याने उपसंहार्यगुणान्दर्शयति ॥ सर्वभूतेष्विति । आत्मानमन्तर्यामिणं हरिं सर्वभूतेषु सर्वभूतानि चात्मनीक्षेत । इदं चिन्तनद्वयं मोक्षरूपेष्टसाधनमित्यर्थः । आद्ये स्थानभेदाद्भेदशङ्कायामाह ॥ अनन्यभावेनेति । अत्र भूतेभ्योऽनन्यभावेनेति प्रतीतिवारणाय तात्पर्यमाह ॥ अनन्यभावेनेति । तद्रूपाणां भूतान्तःस्थितभगवद्रूपाणां परस्पराभेदेनेत्यर्थः । द्वितीये तदात्मतामित्यस्य तदैक्यप्रतीतिवारणाय तात्पर्यमाह ॥ तदात्मतामिति । तथा च भूतेष्विति विषयसप्तमीति भावः ॥ ४१ ॥

**स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ।**
**योनीनां गुणवैषम्यात् तथात्मा प्रकृतौ स्थितः ॥ ४२ ॥**

**प्रकाशिका–** नन्वेवं सर्वभूतगतहरिरूपाणामभेदे देवादिस्थितं भगवद्रूपं बहुसामर्थ्यव्यक्तिमन्मनुष्यादिस्थितं तु न तथेति वैलक्षण्यं कथमित्यत आह ॥ स्वयोनिष्विति । यथैकं ज्योतिरग्न्याख्यं स्वयोनिषु कारणेषु योनीनां काष्ठानां गुणवैषम्यादार्द्रशुष्कत्वादिवैलक्षण्यान्नाना विलक्षणमिव प्रतीयते न वस्तुतो विलक्षणम् । अभिमानिदेवतापेक्षयैतत् । तथा प्रकृतौ प्रकृतिकार्येषु देहेषु स्थित आत्मा हरिर्विलक्षण इव प्रतीयते नं वस्तुतो विलक्षण इत्यर्थः ॥ ४२ ॥

**तस्मादिमां स्वां प्रकृतिं देवीं सदसदात्मिकाम् ।**
**दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४३ ॥**

**तात्पर्यम्– प्रकृतिं पराभाव्य तदुत्तमत्वेनैव सदावतिष्ठते परः । 'सर्वभूतस्थमीशेशं जेतारं प्रकृतेरपि । अविशेषं सदैवैकं चिन्तयन्विप्रमुच्यत' इति च ॥ ४३ ॥ इति तृतीयतात्पर्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥**

**प्रकाशिका–** ननु प्रकृतिस्थाननानात्वेऽप्यवैलक्षण्यं हरेः कुत इत्यत आह ॥ तस्मादिति । तस्मात्सर्वत्रस्थितस्यैकरूपत्वादेवेत्यर्थः । अत्र प्रकृतिं पराभाव्य जीवः स्वरूपेणावतिष्ठत इत्यन्यथाप्रतीतिवारणाय प्रकृतसङ्गतां योजनां दर्शयति ॥ प्रकृतिमिति । स्वरूपेणेत्यस्य तात्पर्यम् ॥ तदुत्तमत्वेनेति । अवतिष्ठत इति लट् क्रियाप्रबन्ध इत्याशयेन सदेत्युक्तम् । परः परमात्मेति

कर्तुरध्याहारः । अवधारणेन तमसः परस्तादित्यादिश्रुतिसिद्धत्वमस्य दर्शयति । तथा च तस्मात्सर्वत्रैकरूपत्वादेव स्वां स्वाधीनां प्रकृतिं देवीं नानाविधकार्यात्मना द्योतमानां सदसदात्मिकां कार्यकारणरूपिणीं दुर्विभाव्यामव्यक्तरूपस्वरूपां पराभाव्यातिक्रम्य स्वरूपेण तदुत्तमत्वेन सर्वदाऽवतिष्ठत इति श्रुत्यादिसिद्धमुपपद्यते । अन्यथा । तन्न स्यादिति मूलाभिप्राय इति भावः । सर्वभूतेष्वित्यादिश्लोकद्वयार्थे समाख्यामाह ।। सर्वभूतस्थमिति । अनेन सर्वभूतेष्वित्येतदुक्ततात्पर्यम् । ईशेशमित्यनेन स्वरूपेणेत्येतदुक्ततात्पर्यम् । जेतारं प्रकृतेरपीत्यनेन प्रकृतिं पराभाव्येत्येतदुक्ततात्पर्यम् । अविशेषमेकमित्यनेन स्वयोनिषु यथेति श्लोकतात्पर्यमुक्तम् । क्रियाप्रबन्धात्मकलङर्थकथनम् ।। सदेति । अवधारणेन श्रुत्यादिप्रसिद्धिं दर्शयति । ईक्षेतेत्यस्यार्थः ।। चिन्तयन्निति । विध्यर्थभूतेष्टसाधनत्वप्रदर्शनाय विप्रमुच्यत इत्युक्तम् ।। ४३ ।।

**अन्वयव्यतिरेकाच्च साक्ष्यात्मा व्यभिचारिणः ।**
**वैतथ्यं व्यभिचारं च निद्रान्तेऽस्यानुचिन्तयेत् ।। ४४ ।।**

**इति श्रीमद्भागवते तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ।**

**प्रकाशिका–** उपासकस्य पुनरित्थं भावान्तरमाह ।। अन्वयेति । यः साक्षात्सर्वसुकृतदुष्कृतादिकमीक्षत इति साक्ष्यात्माऽऽदानादिकर्ता हरिरन्वयव्यतिरेकात्सिद्धोऽस्ति । प्रपञ्चसहितदेशकालयोस्तद्रहितदेशकालयोश्च हरेः सत्त्वात् । व्यभिचारिणोऽस्य प्रपञ्चस्य निद्रान्ते ब्राह्मे मुहूर्ते उत्थाय वैतथ्यं निष्प्रयोजनत्वं व्यभिचारं सर्वतद्देशकालयोरसारत्वमनुचिन्तयेत् । इदं चिन्तनं मोक्षसाधनमित्यर्थः ।। ४४ ।। इति श्रीभागवतटिप्पण्यामेकोनत्रिंशोऽध्यायः ।। ३-२९ ।।

## अथ त्रिंशोऽध्यायः

**देवहूतिरुवाच–**
**लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ।**
**स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम् ।। १ ।।**

**यथा साङ्ख्येषु कथितं यन्मूलं तत् प्रचक्षते ।**
**भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ।। २ ।।**

**तात्पर्यम्– यथा साङ्ख्येषूक्तं तथा कथितम् । यत्साङ्ख्यमूलं तल्लक्षणं प्रचक्षते ।। १,२ ।।**

**प्रकाशिका–** इदानीं भक्तियोगस्य तारतम्यादिकं ज्ञातुं तत्प्रसञ्जनाय देवहूतिरुक्तं प्रशस्य भक्तिमार्गादिकथनं प्रार्थयते ॥ लक्षणमिति । अत्र यथा साङ्ख्येषु कथितमित्यत्यस्यान्वयाप्रतीतेरपेक्षितमध्याहृत्ययोजयति ॥ यथेति । तथा चोक्तशब्दस्य तथाशब्दस्य चाध्याहार इति भावः । साङ्ख्येषु शास्त्रेषु यथोक्तं तथैव । कुतः कथनीयमित्यतः प्राप्तं यन्मूलं तत्प्रचक्षत इत्येतद्व्याख्याति ॥ यत्साङ्ख्यमूलमिति । तथा च यत्साङ्ख्यमूलं प्रतिपादकं यस्येति मूलार्थ इति भावः । तल्लक्षणं महदादीनां लक्षणं प्रचक्षते प्राज्ञाः । तथा च साङ्ख्यशास्त्रस्य प्राचुर्येण महदादिलक्षणप्रतिपादनाय प्रवृत्तत्वात्तदनुसारेणैव त्वया मम कथितमित्युक्तस्य प्रशंसाऽनेन कृतेति ज्ञातव्यम् ॥ ततश्चायं मूलार्थः ॥ महदादीनां प्रकृतेः पुरुषस्य च लक्षणं यथा साङ्ख्येषु शास्त्रेषूक्तं तथा त्वया कथितम् । नाहमत्र त्वया प्रलोभितेत्याशयः । कीदृशं लक्षणं येन लक्षणेनामीषां महदादीनां पारमार्थिकं यथावस्थितं स्वरूपं लक्ष्यते इतरव्यावृत्ततया ज्ञायते तत् । साङ्ख्योक्तप्रकारेणैव कस्मात्कथनीयमित्यत उक्तम् ॥ यन्मूलमिति । यत्साङ्ख्यमूलं प्रतिपादकं यस्य तत्तथा । तन्महदादिलक्षणं प्रचक्षते प्राज्ञाः । तथा च तन्महदादिलक्षणं यन्मूलं प्रचक्षते तेषु साङ्ख्येषु यथोक्तं तथा त्वया कथितमिति योजना । एवमुक्तं प्रशस्य स्वजिज्ञासितकथनं प्रार्थयते ॥ भक्तियोगस्येति । पूर्वमुक्तेः पुनः किमर्थं प्रश्न इत्यत उक्तम् ॥ विस्तरश इति ॥ १,२ ॥

**विरागो येन पुरुषो भगवन् सर्वतो भवेत् ।**
**आचक्ष्व जीवलोकस्य विविधाः कर्मसंसृतीः ॥ ३ ॥**

प्रकाशिका– भक्तिदार्ढ्याय वैराग्यस्यापेक्षितत्वात्तत्साधनमपि कथयेति प्रार्थयते ॥ विराग इति । कर्मानुसारिणी संसृतिर्येन संसृतीनामाख्यानेन सर्वत्र देहगेहादौ विरागो विगतरागो भवेत् ॥ ३ ॥

**कालस्येश्वररूपस्य परेषां च परस्य ते ।**
**स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥**

**प्रकाशिका–** जना यद्धेतोर्यस्य कालनाम्नस्तव भयात्कुशलं कर्म कुर्वन्ति परेषामुत्तमानां सकाशादपि परस्योत्तमस्य तस्य ते तवेश्वररूपस्यैश्वर्यमूर्तेः कालस्य स्वरूपमाचक्ष्वेत्यन्वयः ॥ ४ ॥

**लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ।**
**श्रान्तस्य कर्मण्यनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥ ५ ॥**

**प्रकाशिका–** त्वदवतारस्य ज्ञानप्रवर्तनार्थत्वात्त्वमेवेदं वक्तुं समर्थ इत्याशयेनाह ॥ लोकस्येति । अचक्षुषो ज्ञानदृष्टिशून्यस्यातो मिथ्याभिमतेर्मिथ्याभूतस्वातन्त्र्याभिमानयुक्तस्यातः कर्मसु पुण्यपाप-

रूपेष्वनुविद्धयाऽऽसक्तया धिया श्रान्तस्यात एवानाश्रयेऽपारे तमसि संसारे चिरमनादित एव प्रसुप्तस्य शयानस्य लोकस्य मोक्षयोग्यजनस्य । तादर्थ्ये षष्ठी । तदर्थम् । तद्धितार्थमिति यावत् । योगभास्करो ज्ञानयोगप्रकाशने भास्कर इव स्थितस्त्वमाविरासीः । किलेति प्रमाणप्रसिद्धिं दर्शयति ॥ ५ ॥

**मैत्रेय उवाच–**

**इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ।**
**आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥ ६ ॥**

**प्रकाशिका–** श्लक्ष्णं मृदु करुणार्दितः कृपां गतः प्राप्तः अर्द गताविति धातोः ॥ ६ ॥

**भगवानुवाच–**

**भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ।**
**स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥**

**प्रकाशिका–** भो भामिनि । संसाराख्ये वैरिणि कोपयुक्तसुन्दरि । मार्गैः शास्त्रमार्गैर्भाव्यते निरूप्यते । बाहुविध्ये निमित्तमाह ॥ स्वभावो योग्यता तदुद्बोधका गुणाः सत्त्वादयस्तेषां भेदेनेत्यर्थः । भावो भक्तिः ॥ ७ ॥

**अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव च ।**
**संरम्भी भिन्नदृग् भावं मयि कुर्यात् स तामसः ॥ ८ ॥**

**प्रकाशिका–** बाहुविध्यमेवाह ॥ अभिसन्धायेति । यो हिंसां परोपद्रवं दंभं धर्मध्वजवृत्तिं मात्सर्यं हरिभक्तेषु द्वेष्यभिसंधाय मनसि कृत्वा संरंभी हरिभक्तेषु द्वेषी भिन्नदृक् वरत्वापेक्षयाऽन्यथादर्शी भावं भक्तिम् ॥ ८ ॥

**विषयानभिसन्धाय यश ऐश्वर्यमेव च ।**
**अर्चादावर्चयेद् यो मां पृथग्भावः स राजसः ॥ ९ ॥**

**तात्पर्यम्– तद्रूपाणां पृथग्भावः ॥ ९ ॥**

**प्रकाशिका–** अर्चादौ प्रतिमादौ । आदिपदात्स्थण्डिलपरिग्रहः । पृथग्भाव इत्यस्य राजसभक्तधर्मत्वसिध्यर्थमपेक्षितमध्याहृत्यार्थमाह ॥ तद्रूपाणामिति । तथा चार्चादिस्थितभगवद्रूपाणां पृथक् पृथग्भक्तिमानित्यर्थः । कृष्णादिर्न मदिष्टदाने समर्थः । किन्तु रामादिरेवेति मत्वा । तत्रैव सम्यग्भक्तिमानिति यावत् ॥ ९ ॥

**कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।**
**यजेद् यष्टव्यमिति वाऽपृथग्भावः स सात्त्विकः ॥ १० ॥**

**तात्पर्यम्–** अपृथग्भावः स सात्त्विकः ॥ १० ॥

**प्रकाशिका–** कर्मनिर्हारं पापक्षयं परस्मिन्सर्वोत्तमे मयि तस्य कर्मणोऽर्पणं समर्पणं चोद्दिश्य यजेत् । यष्टव्यं विहितत्वादेवेदं कर्म कर्तव्यम् । न फलकांक्षयेति वा यजेत् । अत्रापि पृथग्भाव इति छेदभ्रान्तिं वारणायाह ॥ अपृथग्भाव इति । तद्रूपेषु सर्वेषु साम्येनैव भक्तिमानित्यर्थः । ननु कुत एवं छेदप्रदर्शनमित्यत उत्तरवाक्यबलादित्याशयेन तदनुवदति ॥ स सात्त्विक इति । तथा च सात्त्विकभक्तधर्मत्वसिद्ध्ये तथैव छेदः कार्यः । अन्यथा राजसधर्माद्भेदो न स्यादित्याशयः ॥ १० ॥

**मद्गुणश्रुतमात्रेण मयि सर्वगुणाश्रये ।**
**मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ११ ॥**

**प्रकाशिका–** एवं गुणकायभक्तियोगलक्षणमुक्त्वेदानीमुत्तमभक्तानां यः स्वाभाविक इदं प्रथमतः शून्यो भक्तियोगस्तस्य लक्षणमाह ॥ मद्गुणेति । मद्गुणश्रुतमात्रेण मद्गुणानां श्रवणमात्रेणापि मनोमतिर्मनसः प्रावण्यरूपा या भक्तिः सा निर्गुणस्य स्वाभाविकभक्तियोगस्य लक्षणं स्वरूपमुदाहृतं हीत्यन्वयः । कथं भूते मयि । सर्वगुणाश्रये ज्ञानानन्दादिकल्याणगुणपूर्णे । पुरुषोत्तमे क्षराक्षरचेतनोत्तमे । कथं भूता मनोगतिः । यथा गङ्गाभसोऽविच्छिन्नांबुधौ गतिस्तथाऽव्यवहिता निरन्तरा ॥ ११ ॥

**लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।**
**अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥**

**प्रकाशिका–** अहैतुकी फलानुसन्धानशून्या ॥ १२ ॥

**सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमित्युत ।**
**दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥**

**प्रकाशिका–** तेषां निष्कामतां कैमुत्येनोपपादयति ॥ सालोक्यमिति । सार्ष्टिं समानैश्वर्यम् । एकत्वं सायुज्यम् । उत शब्दोऽप्यर्थः । इति प्रसिद्धान्मोक्षादीनपि दीयमानान् फलत्वेन न गृह्णन्ति । ते तदा तेषामितरपुरुषार्थकामना नास्तीति किं वक्तव्यमित्याशयः । तर्हि किमिच्छन्तस्ते भक्तिं कुर्वन्तीत्यत आह ॥ विनेति । मत्सेवामेवेच्छन्तीत्यर्थः ॥ १३ ॥

**स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।**
**येनातिव्रज्य त्रिगुणान् मद्भावायोपपद्यते ॥ १४ ॥**

**प्रकाशिका–** नन्विदमात्यन्तिकभक्तियोगलक्षणत्वेन शास्त्रेषूच्यतेऽतः कथं स्वाभाविकभक्तियोगलक्षणत्वेनोक्तमित्यत आह ॥ स एवेति । य उक्तरीत्या स्वाभाविको भक्तियोगो स एवेत्यर्थः । अतो न विरोध इति भावः । कुतोऽयमात्यन्तिकभक्तियोगाख्य इत्यतस्तत्फलस्यानेन जायमानत्वादित्याशयेनाह ॥ येनेति । येन स्वाभाविकेन भक्तियोगेन त्रिगुणान्सत्वादिभक्तान् अतिव्रज्यातिक्रम्य मद्भावाय मयि स्थित्यै । सायुज्यायेति यावत् । उपपद्यते योग्यो भवति ॥ १४ ॥

**निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ।**
**क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥**

**प्रकाशिका–** एवं भूताया भक्तेरभिवृद्धौ कारणान्याह ॥ निषेवितेनेति । अनिमित्तेन विष्णूद्देश्यकेन । अनिमित्तमिति पाठे अः विष्णुरेव निमित्तमुद्देश्यो यथा स्यात्तथा नितरां सेवितेनेत्यर्थः । महीयसा श्रद्धातिशययुक्तेन क्रियायोगेन तन्त्रसारोक्तभगवदर्चनरूपेण । नातिहिंस्रेण हिंसारहितेन ॥१५॥

**मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ।**
**भूतेषु मद्भावनया सत्येनासङ्गमेन च ॥ १६ ॥**

**प्रकाशिका–** मद्धिष्ण्यानां मत्प्रतिमानां दर्शनादिभिर्भूतेषु जीवेषु मद्भावनयाऽन्तर्यामित्वेन मदुपासनया सत्येन सज्जनहितवचनेन । असङ्गमेन दुर्जनसङ्गराहित्येन ॥ १६ ॥

**महतां बहुमानेन दीनानामनुकम्पया ।**
**मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥**

**आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे ।**
**आर्जवेनार्यसङ्गेन निरहंक्रियया तथा ॥ १८ ॥**

**प्रकाशिका–** आध्यात्मिकं वेदान्तशास्त्रं तस्य निरन्तरश्रवणात् । आर्जवेन विष्णुवैष्णवेषु मनोवाक्कायवृत्तीनामवैपरीत्येन कार्याणां पण्डितानां सङ्गेन । निरहङ्क्रिया देहादिष्वहं ममतावर्जनेन् । ॥१७,१८॥

**मद्धर्मणापि यर्ह्येतैः परिसंशुद्ध आशयः ।**
**पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥**

**प्रकाशिका—** मद्धर्मेण विष्णुपञ्चकोपवासादिरूपेणेत्येतैः साधनैर्यर्हि यदा पुरुषस्याधिकारिण आशयोऽन्तःकरणं परिसंशुद्धोऽत्यन्तं निर्मलस्तदा श्रुतमात्रगुणं मामञ्जसाऽभ्येति । मद्गुणश्रवण-मात्रेण प्रतिदिनं मय्येव वर्धमानं सदेत्यर्थः ॥ १९ ॥

**यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ।**
**एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥**

**प्रकाशिका—** उक्तसाधनसम्पत्त्यनन्तरं यत्नाभावेऽपि मनसो भगवत्प्राप्तौ दृष्टान्तमाह ॥ यथेति । वातो रथः प्रापको यस्य गन्धस्य स तथा । आवृंक्ते आवृणोति । वशीकरोतीति यावत् । आशयात्पुरुषाख्यस्थानादागत्य योगरतमुक्तसाधनसहितम् । अत एवाविकारी विषयविकारशून्यं यच्चेतस्तदात्मानं परमात्मानम् आवृंक्ते ॥ २० ॥

**अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा ।**
**तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥**

**प्रकाशिका—** यदुक्तं पूर्वाध्याये सर्वभूतेषु चात्मानमित्यनेन सर्वभूतनिष्ठस्य भगवतो भिन्नत्वं भूतानादिकर्तृत्वं च तदवश्यं ज्ञात्वा सर्वत्र भगवदनुसन्धानेन पूजा कार्येति वक्तुं तदनुसन्धाना-भाववतो निन्दति ॥ अहं सर्वेष्विति । तं मामविज्ञाय हित्वा प्रतिमादिकमेव देव इति ज्ञात्वा यत्तत्पूजादिकं कुरुते तदर्चा विडंबनं वास्तवपूजाया अनुकरणं न वास्तवपूजेत्यर्थः ॥ २१ ॥

**यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।**
**हित्वार्चां भजते मौढ्याद् भस्मन्येव जुहोति सः ॥ २२ ॥**

**द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ।**
**भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥**

**प्रकाशिका—** तदेव विवृणोति ॥ यो मामिति । मौढ्यादयमेव देव इति बुद्ध्या । एवं भूतेषु भगवानस्तीति ज्ञानाभावे निन्दामुक्त्वा तद्रूपाणामभेदाभावेऽपि निन्दामाह ॥ द्विषत इति । परकाये मां द्विषत इत्यस्य विवरणम् ॥ भिन्न दर्शिन इति । अन्तर्यामिभेददर्शिन इत्यर्थः । भूतेषु बद्धवैरस्य हरिप्रतिमात्वेनानुसन्धानेन तेषु दानमानादिरूपपूजाशून्यस्य । शान्तिर्भगवन्निष्ठा ॥ २३ ॥

**अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे ।**
**नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥**

**प्रकाशिका–** ननु किमेतेषां पूजया सालग्रामादिरूपार्चायामेव सम्यगर्चितो भगवांस्तृप्तो भविष्यतीत्यत आह ॥ अहमिति । अर्चायां सालग्रामादिरूपायां विद्यमानत्वेनाहमर्चितोऽप्युच्चावचैर्द्रव्यैरुत्पन्नया क्रिययाऽन्नजलदानादिरूपया भूतग्रामावमानिनो भगवत्प्रतिमात्वेन भूतसमूहापूजकस्य नैव तृप्ये तृप्तो न भवामि । अतो मत्प्रतिमात्वेन तेषामपि पूजा कार्येत्याशयः ॥ २४ ॥

**अर्चादावर्चयेत् तावदीश्वरं मां स्वकर्मकृत् ।**
**यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥**

**तात्पर्यम्– 'अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान्भवेत् । ज्ञस्त्वर्चयन्स गुणवानन्यथा दोषवान्न त्वि'ति कापिलेये ॥ २५ ॥**

**प्रकाशिका–** ननु तर्ह्यर्चादावर्चनं किं न कार्यं नेत्याह ॥ अर्चादाविति । आदिपदेन स्थण्डिलपरिग्रहः । स्वविहितनिष्कामकर्मकृत् जिज्ञासुः सर्वभूतनियामकतया स्थितं परमात्मानं यावन्न स्वहृद्यपरोक्षतो वेद तावदेव तावत्पर्यन्तम् । अर्चादावर्चयेदित्युक्त्यापरोक्षज्ञानिनोऽर्चादावर्चनं नापेक्षितमिति प्रतीयते न चैतद्युक्तम् । अपरोक्षज्ञानिनामप्यर्चादावर्चनस्य श्रुत्यादिसिद्धत्वादतोऽस्याभिप्रायं प्रमाणेनैवाह ॥ अज्ञ इति । जिज्ञासुरित्यर्थः । ज्ञोऽपरोक्षज्ञानी । अर्चायामर्चयन् । तुशब्दोऽवधारणे । गुणवानेवानन्दाभिवृद्धिमानेव । एवकारव्यावर्त्यमाह ॥ अन्यथेति । सोऽपरोक्षज्ञानी । अन्यथाऽर्चादावर्चनाभावे जिज्ञासुवद्दोषवान्नैव भवेदित्यर्थः । अनेन दोषभीत्याऽर्चादावर्चनमपरोक्षज्ञानपर्यन्तं तदनन्तरं तु न दोषभीत्या तत्रार्चनमिति मूलाभिप्राय उक्त इति ज्ञातव्यम् ॥ २५ ॥

**आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।**
**तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणम् ॥ २६ ॥**

**तात्पर्यम्– अन्तरोदरं भिन्नं ब्रह्म । आत्मस्थमन्यस्थं च ब्रह्म यो भेदेन पश्यति । 'उदरं ब्रह्मे'ति श्रुतेः ॥ २६ ॥**

**प्रकाशिका–** अन्तर्यामिभेददर्शिनो न शान्त्यभाव एव फलं किन्तु तमःप्राप्तिश्चेत्याह ॥ आत्मनश्चेति । अत्रान्तरोदरमित्यस्य प्रकृतोपयुक्तमर्थं तावदाह ॥ अन्तरोदरमिति । अन्तराशब्दो भेदवाची । उदरशब्दो ब्रह्मवाची । अन्तराऽन्तरेण युक्तमुदरमिति युक्तपदाध्याहारमभिप्रेत्य भिन्नं ब्रह्मेत्युक्तम् । इदानीमात्मनश्चेति पूर्वार्धतात्पर्यं दर्शयति ॥ आत्मस्थमिति । ब्रह्मवाचिन उदरशब्दस्यात्मनः परस्येत्येताभ्यां प्रत्येकं संबन्धः । उभयत्र षष्ठ्यर्थः । तत्स्थत्वमभिप्रेत्य तदुभयतात्पर्यमाह

।। आत्मस्थमिति । अन्तरेत्यस्यार्थः ।। भेदेनेति । करोतीत्यस्यार्थः ।। पश्यतीति । उदरशब्दस्य ब्रह्मवाचकत्वे प्रमाणमाह ।। उदरमिति ।। ततश्चायं श्लोकार्थः ।। य आत्मनः स्वस्य संबन्ध्युदरं ब्रह्म स्वस्थितम् । ब्रह्मेति यावत् । परस्य स्वभिन्नस्य देवदत्तादेः संबध्युदरं तत्स्थं ब्रह्मान्तराऽन्तरेण भेदेन करोति पश्यति तस्य भिन्नदृशो भूतान्तर्यामिभेदज्ञानिनो मृत्युः सर्वदुर्जनमारकः श्रीनृसिंह उल्बणं भयं तमोरूपं भयं विधत्ते ददाति ।। २६ ।।

**अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।**
**अर्हयेद् दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ।। २७ ।।**

**प्रकाशिका–** एवमन्तर्यामिभेदज्ञानिनोऽनर्थमुक्त्वेदानीं सर्वभूतस्थं परमात्मानमभेदेन पूज्यं ज्ञात्वा तदधिष्ठानत्वेन सर्वभूतान्यपि पूजयेदित्याह ।। अथेति । यत एवं भेदज्ञानमनर्थकरमथ तस्मात्सर्वभूतेषु कृतालयं कृतावासं भूतात्मानं भूतानामादिकर्तारं मामभिन्नेन चक्षुषा मद्रूपाणामभेदज्ञानेन मदधिष्ठानभूतेषु सर्वभूतेषु भिन्नेन चक्षुषा मत्तः परस्परं च भेदज्ञानेन मैत्र्या मित्रभावेन च दानमानाभ्यां तान्यर्हयेदर्चयेदित्यर्थः ।। २७ ।।

**जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ।**
**ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ।। २८ ।।**

**तात्पर्यम्– प्राणभृतश्चलनयुक्ताः 'पशुवृक्षादिभेदेन जीवा एव स्वतः स्थिताः । संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता । तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तकाः । तेभ्यो मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः । ततोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः । अर्थज्ञा ऋषयस्तेभ्योऽतो देवाः संशयच्छिदः । पूर्णधर्मा ततस्त्विन्द्रो निःसङ्गो गरुडस्ततः । भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः । मुक्तौ वा संसृतौ वापि सम्यगेषु हि ते गुणा इति कापिलेये ।। २८ ।।**

**प्रकाशिका–** दानमानाभ्यामर्चनं च हरिभक्तेषु तारतम्यानुसारेणैव कर्तव्यमिति वक्तुं तावत्सर्वभक्ततारतम्यं दर्शयति ।। जीवा इत्यादिना । अत्र ततो जीवेभ्यः प्राणभृतो जीवाः श्रेष्ठा इत्युच्यत इति प्रतीयते । न चैतत्संभवति । जीवेभ्यो जीवानामुत्तमत्वस्य बाधितत्वादतोऽत्र विवक्षितं प्राणभृच्छब्दार्थं दर्शयति ।। प्राणभृत इति । तथा च चलजीवाः स्थावराश्च जीवपदेन ग्राह्याः । प्राणभृच्छब्देन तु चलनयुक्ताः पश्वादयो जङ्गमा अतो नानुपपत्तिरिति भावः । नन्विदं तारतम्यं न जीवस्वरूपेषु । तेषां स्वतश्चिद्रूपत्वेन पशुवृक्षत्वादिरूपत्वाभावात् । नापि देहावच्छिन्नेषु । तत्र कर्मवशादुच्चानामपि मनुष्यादीनां स्थावरादित्वप्राप्त्योक्ततारतम्यासम्भवादित्याशङ्कापरिहाराय मूलव्याख्यानरूपां स्मृतिं पठति ।। पशुवृक्षादीति । जीवाः स्वत एव स्थिताः । तथा च केषाञ्चिज्जीवानां

पशुपक्ष्यादिरूपो यो देहश्चिन्मात्रकोऽस्ति अतो नोक्तशङ्काऽवकाश इति भावः । ननु तेषामपि कर्मवशाब्यत्ययोऽस्त्येवेत्यत आह ॥ संसृताविति । तत्तत्स्वरूपता पशुपक्ष्यादिस्वरूपता । एकप्रकारेति शेषः । तथा चेदं तारतम्य कथनं मुक्तजीवस्वरूपविवक्षयैवेति भावः । एवमनुपपत्तिं परिहृत्येदानीं ततः प्राणभृत इत्यारभ्य व्याख्याति ॥ तत्र स्थावरेति । तत इत्यस्यार्थः ॥ स्थावरमुक्तेभ्य इति । प्राणभृत इत्यस्यार्थः ॥ जङ्गममुक्तिगा इति । प्राणभृत्स्वान्तरतारतम्यकथनाय ततः सचित्ता इत्यादिको ग्रन्थः । तत्र चतुष्पाद इत्यन्तस्य जङ्गममुक्तिगा इत्यनेन ग्रहणमिति ज्ञातव्यम् । ततो द्विपादित्यस्य व्याख्यानम् ॥ तेभ्यो मानुषमुक्ताश्चेति । तेभ्यो मुक्ताश्चत्वारो वर्णा इति ग्राह्यम् । ततस्तेषु विप्रमुक्ता अधिका इत्यनेन तेषां ब्राह्मण उत्तम इत्येतदुक्तार्थम् । तत्र विप्रमुक्तेष्वपि केचिदनधीतवेदा वैदिकमन्त्रार्थोपदेशतदुपासनामात्रजातेनापरोक्षज्ञानेन मुक्ता इति ग्राह्यम् । उपदेशमात्रेण मुक्तेभ्य इत्यनुवादात् । वेदवेदिनो यथा शक्त्याऽधीतऋगादिवेदाः । अनेन वेदज्ञ इत्येतदुक्तार्थम् । मानुषेषु सम्प्रदायपूर्वकं वेदार्थमसम्भाविकमित्याशङ्कायामुक्तम् ॥ ऋषय इति । अर्थज्ञा वेदार्थज्ञानिनः । अनेनार्थज्ञ इत्येतदुक्तार्थम् । ये संशयच्छिदः कथितास्ते देवा बृहस्पत्यादय इत्यर्थः । अनेन संशयच्छेत्तेत्येतदुक्तार्थम् । अत्र वेदवेदिन इत्यादिवचनाद्वेदज्ञ इत्याद्येकवचनानि समुदायाभिप्रायाणीति सूचयति । स्वधर्मकृदित्यस्य तात्पर्यम् ॥ पूर्णधर्म इति । संपूर्णस्व-धर्मकृदित्यर्थः । सः क इत्यपेक्षायामिन्द्र एवात्र विवक्षित इत्याह ॥ इन्द्र इति । मुक्तसङ्ग इत्यस्यार्थः ॥ निःसङ्ग इति । सः कोऽत्र विवक्षित इत्यपेक्षायां गरुड इत्युक्तम् । मय्यर्पिताशेषक्रियार्था-त्मारतिरित्यस्य तात्पर्यम् ॥ हरेर्भक्तिपूर्ण इति । सः क इत्यपेक्षायामुक्तम् ॥ ब्रह्मेति । मय्यर्पितात्मन इति श्लोकतात्पर्यम् ॥ तस्मान्नान्योऽधिक इति । नन्वर्थज्ञानादिशब्दैर्ऋष्यादयो व्याख्याताः । तत्र किं नियामकमित्यपेक्षायामाह ॥ सम्यगेष्विति । हि यस्मात्तेऽर्थज्ञात्वादयो गुणा एषु ऋष्यादिषु मनुष्याद्यपेक्षया सम्यक् संत्यतस्तद्वाचकैः शब्दैस्त एव व्याख्येया इत्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ जीवा मोक्षयोगजीवविरुद्धजीवा नित्यसंसारिणस्तमोयोग्याश्च तेषां सकाशाज्जीवाः स्थावरमुक्ता श्रेष्ठाः । हीति तत्र प्रमाणप्रसिद्धिं दर्शयति । ततः स्यवरमुक्तेभ्यः प्राणभृतः प्रकर्षेणाणनं चेष्टा तद्भृतो जङ्गममुक्ता इत्यर्थः । हे शुभे मातः । जङ्गमेष्वपि तारतम्यमाह ॥ सचित्ता इत्यादिना । सचित्ता मनोव्यापारमात्रयुक्ता इन्द्रियवृत्तयश्चक्षुरादीन्द्रियाणां वृत्तयो येषु ते तथा ॥ २८ ॥

**अत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।**
**तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥**

**प्रकाशिका–** अत्रापीन्द्रियवृत्तिष्वपि स्पर्शवेदिनः प्रवरा इति ग्राह्यम् । तेभ्यो माधुर्यादिरसज्ञा मत्स्यादयस्तेषां सकाशाद्गन्धविदो भ्रमरादयः शब्दविदः सर्पादयः ॥ २९ ॥

**रूपभेदविदस्तत्र ततश्चोभयतोदतः ।**
**तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥**

**प्रकाशिका–** रूपभेदविदः । शुक्लादिरूपविशेषज्ञा उभयतो दन्ता येषां ते तथा । उत्तराध-रदन्तयुक्ता अपादेभ्यस्तेभ्यो बहुपदास्तेभ्यश्चतुष्पदा द्विपात् मनुष्योवर्णहीनः ॥ ३० ॥

**ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।**
**ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥**

**प्रकाशिका–** ब्राह्मणादिलक्षणश्चत्वारो वर्णाः । तेषामज्ञानिनां सकाशाद्ब्राह्मणोऽनधीतवेदो गुरूपदिष्टं वैदिकमन्त्रार्थोपासनामात्रजनितापरोक्षज्ञानेन मुक्त उत्तमः । वेदज्ञो यथाशक्त्य-धीताखिलवेदः । अर्थज्ञो यथाशक्त्यधीताखिलवेदार्थज्ञः स ऋषिरुक्तः ॥ ३१ ॥

**अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत् ।**
**मुक्तसङ्गस्ततो भूयान् न दोग्धा धर्ममात्मनः ॥ ३२ ॥**

**प्रकाशिका–** संशयच्छेत्ता बृहस्पत्यादिर्देवाः । अत्र पूर्वत्र चैकवचनं समुदायापेक्षम् । स्वधर्मकृ-दुक्तदेवापेक्षया स्वविहितपूर्णधर्मकृदिन्द्रो मुक्तसङ्गो गरुडः । मुक्तसङ्गत्वमेव विवृणोति ॥ न दोग्धेति आत्मनः स्वस्य धर्मं न दोग्धा भगवत्प्रीतिं विना तेन पुरुषार्थार्थं स्वधर्मव्यत्ययमकुर्वाणः ॥ ३२ ॥

**तस्मान्मय्यर्पिताशेषक्रियार्थात्मरतिर्नरः ।**
**मय्यर्पितात्मनः पुंसो मयि संन्यस्त कर्मणः ।**
**न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥**

**प्रकाशिका–** तस्माद्गरुडान्मय्यर्पिताशेषक्रियार्था अशेषक्रियाफलानि येन स तथा । स चासावा-त्मरतिरितरापेक्षया पूर्णपरमात्मभक्तिश्चेति कर्मधारयः । स च ब्रह्मैव । नरः परान्तकालात्पूर्वं न क्षीयत इत्यर्थः । ब्रह्मणोऽप्यधिकोऽस्ति किं नेत्याह ॥ मय्यर्पितेति । परमुत्तममकर्तुः अः परमात्मा कर्ता यस्य स तथा । तस्य समं सर्ववेदोक्तं परं ब्रह्म तस्य दर्शनं यस्य स तथा तस्मात् ॥ ३३ ॥

**मनसैतानि भूतानि प्रणमेद् बहुमानयन् ।**
**ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥**

**तात्पर्यम्– जीवकलया सह भूतानि बहुमानयंस्तदालयत्वेनेश्वरं प्रणमेत् ॥ ३४ ॥**

**प्रकाशिका–** एवं हरिभक्ततारतम्यमुक्त्वेदानीं तदनुसारेणैव तेषु हर्यधिष्ठानत्वबुद्ध्या दानमानाभ्यामर्चनं कुर्वंस्तैः सह तदधिष्ठितं परमात्मानमपि प्रणमेदित्याह ॥ मनसेति । अत्र जीवकलया जीवस्वरूपेणेत्यन्यथाप्रतीतिवारणाय तदर्थमाह ॥ जीवकलया सहेति । तथा च जीवाख्यभिन्नांशेन सहेत्यर्थः । भूतानि प्रणमेदिति भूतानामेव नम्यत्वमुच्यत इति प्रतीयतेऽतोऽत्रान्वयं दर्शयन्नपेक्षितमध्याहृत्य योजनां दर्शयति ॥ भूतानीति । बहुमानयन्दानमानाभ्यामर्चयंस्तदालयत्वेन तानि भूतान्यालयो यस्य स तथा तस्य भावस्तत्वं तेन विशिष्टं तदन्तर्यामिणमित्यर्थः ॥ ततश्चायं श्लोकार्थः ॥ एतानि तारतम्योपेतानि पूर्वोक्तानि भूतानि बहूमानयंस्तारतम्येनैव दानमानाभ्यामर्चयन् जीवकलयोक्तजीवरूपांशैः सह तदाश्रितमीश्वरं प्रणमेत् । कुत एवं भूतानां तारतम्येनार्चनमित्यतोऽत्र कारणमाह । भगवानीश्वर एतानि भूतानि तारतम्येनैव प्रविष्ट इति मनसा बुद्ध्वेति । जीवकलया सह तदाश्रितमीश्वरं प्रणमेदिति । ईश्वराधिष्ठानाज्जीवानां स्वापेक्षयोत्तमत्वमेवैतत् । अन्यथा केवलमीश्वरं प्रणमेदिति ज्ञातव्यम् ॥ ३४ ॥

**भक्तियोगश्च योगश्च मया मानव्युदीरितः ।**
**ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥**

**तात्पर्यम्– एकतरभावेऽन्यतरस्य नियतत्वादेकतरेणैव ॥ ३५ ॥**

**प्रकाशिका–** उपसंहरति ॥ भक्तियोगश्चेति । हे मानवि । योगो ज्ञानयोगः । नन्वनयोर्मध्ये एकैकस्यापि मोक्षहेतुत्वं तरति शोकमात्मविद्भक्त्या त्वनन्यया शक्य इत्यादावुच्यते । तत्कुत उभयोक्तिरित्यत आह ॥ ययोरिति । अनेन कथमुक्तशङ्कानिवृत्तिरित्यतोऽवधारणाभिप्रायमाह ॥ एकतरभाव इति । नियतत्वान्नियतत्वानां नियतत्वमभिप्रेत्यैकतरेणैव । इत्युक्तमिति शेषः । तथा चाविनाभावरूपायोगव्यवच्छेदार्थ एवैवकारो न त्वन्ययोगव्यवच्छेदार्थ इति भावः ॥ ततश्चायं श्लोकार्थः ॥ यथार्थभक्तिज्ञानयोगयोरेकतरेणैवैकतरस्यैकतराविनाभावेनैकतरेण पुरुषोऽधिकारी पुरुषमीश्वरं व्रजेदित्युच्यते । श्रुत्यादाविति शेषः । अत उभयोक्तिर्युक्तेत्याशयः ॥ ३५ ॥

**यत् तद् भगवतो रूपं ब्रह्मणः परमात्मनः ।**
**परं प्रधानात् पुरुषाद् दैवं कर्मविचेष्टितम् ॥ ३६ ॥**

**तात्पर्यम्– सर्वकर्माणि यस्य विचेष्टानिमित्तानि तत्कर्म विचेष्टितम् ॥ ३६ ॥**

**प्रकाशिका–** यदन्यत्पृष्टं जीवस्य संसृतिः कालस्य स्वरूपं च ममाचक्ष्वेति तत्र जीवसंसृतेर्बहुत्वादादौ तावत्सूचीकटाहन्यायेन कालस्य स्वरूपं वक्ति ॥ यत्तदिति । प्रधानात्प्रकृतेः पुरुषाद्ब्रह्मणः परमुत्तमं दैवं सर्वदेवोत्तमम् । कर्मविचेष्टितमित्येतदप्रतीत्या व्याख्याति ॥ सर्वकर्माणीति । सर्वेषां

कर्माणीत्यर्थः । यस्येत्यन्यपदार्थप्रदर्शनेन बहुव्रीहिरयमिति सूचयति । विचेष्टानिमित्तानीत्यनेन विचेष्टितं विचेष्टाविषयीभूतं तज्जन्यमिति यावदिति विचेष्टितशब्दार्थः प्रदर्शितः । तथा च सर्वेषां कर्माणि यस्य विचेष्टितानि प्रेरणाजन्यानि तदिति मूलार्थः । रूपभेदाः प्रतिमाविशेषाः । त एवास्पदमाश्रयो यस्य तत् । कालशब्दवाच्यवाय्वादिरूपप्रतिमासंनिहितमित्यर्थः । अतीतवर्तमानादि-कालविशेषरूपप्रतिमासंनिहितमिति वा । अभिधीयते । परममुख्यया वृत्त्येति शेषः ॥ ३६ ॥

**रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ।**
**भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥**

**तात्पर्यम्– भिन्नदृशां ईश्वरापेक्षयाल्पदृशाम् । 'भिन्नमल्पं विजानीयादभिन्नं पूर्णमिष्यत' इति शब्दनिर्णये ॥ ३७ ॥**

**प्रकाशिका–** यतो यस्मात्कालाख्यान्महदादीनां भूतानां ब्रह्मादिजीवानां भयं भवति स इत्युत्तरेणान्वयः । कथं भूतानां महदादीनाम् । भिन्नदृशाम् । अत्र भेदज्ञानिनां भयमित्यन्यथा-प्रतीतिवारणाय विवक्षितमर्थं दर्शयति ॥ भिन्नदृशामिति । ननु सर्वज्ञानां ब्रह्मादीनां कथमल्प-ज्ञत्वमुच्यत इत्यत उक्तम् ॥ ईश्वरापेक्षयेति । तथा चेश्वरापेक्षया तेऽल्पज्ञा एवेति भावः । भिन्नशब्दस्याल्पवाचित्वमेव कुत इत्यतस्तत्र प्रमाणमाह ॥ भिन्नमिति । यो भूतानामन्तः प्रविश्य तैर्भूतैर्भूतान्यत्ति संहरति यश्चाखिलानामाश्रयः ॥ ३७ ॥

**योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ।**
**स विष्ण्वाख्यो धिया ज्ञेयः कालः कलयतां प्रभुः ॥ ३८ ॥**

**प्रकाशिका–** कलयतां संहरतां रुद्रादीनां प्रभुः संहरणसमर्थः स धिया ज्ञेयः ॥ ३८ ॥

**न चास्य कश्चिद् दयितो न द्वेष्यो न च बान्धवः ।**
**आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥**

**तात्पर्यम्– 'यथायोग्यातिरेकेण न द्वेष्यश्च प्रियो हरेरि'ति कापिलेये ॥ ३९ ॥ इति तृतीयतात्पर्ये त्रिंशोऽध्यायः ॥ ३० ॥**

**प्रकाशिका–** इतरपुरुषवत्स्वद्वेषिण एवात्ति न स्वदयितानिति किं नेत्याह ॥ न चास्येति । दयितः प्रियः । ननु भगवतोऽपि ब्रह्मरुद्रादीनां दयितानां कल्यादीनां द्वेष्याणां च सत्वात्कथमेतदित्यतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ यथायोग्येति । यथेति भिन्नं पदम् । योग्यशब्दो योग्यतापरः। तथा च यथा यावती यस्य द्वेषयोग्यता प्रीतियोग्यता वा । तदतिरेकेण तदाधिक्येन स हरेर्द्वेष्यः

प्रियश्च न भवतीत्यर्थः । न च बान्धव इति मूलम् । नापि शरीरसंबन्धीत्यर्थः प्रमत्तं विषयासक्तम् । अन्तकृत्संहर्ता सन् ॥ ३९ ॥

**यद्भयाद् वाति वातोऽयं सूर्यस्तपति यद्भयात् ।**
**यद्भयाद् वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥**

**प्रकाशिका–** यतो भयमित्युक्तं विवृणोति ॥ यद्भयादिति । अयं भूतवायुः प्रवहः । देव इन्द्रः । भगणो नक्षत्रगणः ॥ ४० ॥

**यद् वनस्पतयो भीता लताश्चौषधिभिः सह ।**
**स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥ ४१ ॥**

**प्रकाशिका–** यद्यस्माद्भीताः ॥ ४१ ॥

**स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ।**
**अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥ ४२ ॥**

**प्रकाशिका–** स्रवन्ति स्यन्दन्ते । यतो यस्य भयान्नोत्सर्पति वेलामतिक्रम्य न गच्छति । इन्धे दीप्यते सह गिरिभिर्भूर्न मज्जति ॥ ४२ ॥

**नभो ददाति श्वसतां मार्गं यन्नियमाददः ।**
**लोकस्य देहं तनुते महान् सप्तभिरावृतः ॥ ४३ ॥**

**प्रकाशिका–** अदो नभो यन्नियमाद्यस्य नियमनात् श्वसतां प्राणिनां महान् ब्रह्मा सप्तभिर्महदहङ्कारपञ्चभूतैरावृतस्तदात्मके देहे स्थितो ब्रह्माण्डान्तर्गत इति वा लोकस्य जनस्य देहं तनुते सृजति ॥ ४३ ॥

**गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ।**
**वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥**

**प्रकाशिका–** गुणाभिमानिनः शब्दाद्यभिमानिनो रुद्राद्या अस्य विश्वस्य सर्गादिषु वर्तन्ते । एतच्चराचरमेषां वशे तिष्ठति ॥ ४४ ॥

**सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।**
**जनं जनेन जनयन् मारयन् मृत्युनात्मनः ॥ ४५ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे त्रिंशोऽध्यायः ।**

**प्रकाशिका–** आत्मनः स्वाधीनेन जनेन मृत्युना रुद्रदुर्गादिना मारयन् अन्तकर इत्युच्यते । स्वयं त्वनादिरनन्त इत्यन्वयः । एवं विधया ज्ञेय इत्येतदत्राप्यनुषंजनीयम् । तथा चोक्ता गुणा उपसंहार्यतयोक्ता इति ध्येयम् ॥ ४५ ॥ इति श्रीभागवतटिप्पण्यां त्रिंशोऽध्यायः ॥ ३-३० ॥

## अथ एकत्रिंशोऽध्यायः

**भगवानुवाच–**

**तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ।**
**काल्यमानोऽपि बलिना वायोरिव घनावलिः ॥ १ ॥**

**प्रकाशिका–** इदानीमध्यायत्रयेण जीवसंसृतिं निरूपयंस्तत्र मूलकारणं तावद्दर्शयति ॥ तस्येति । अयं जनः संसारीजनस्तस्य सृष्ट्यादिकर्तुरेतस्य कालनाम्न ईश्वरस्य बलिना कालनामकेन काल्यमानो विद्राव्यमाणः । कल द्रावण इति धातोः । विद्राव्यमाणत्वे दृष्टान्तो वायोर्घनावलिर्मेघपङ्क्तिर्यथा काल्यते तथा काल्यमानोऽपीति । अनेन जनस्य हरिविक्रमाज्ञानमेव संसारकारणमुक्तमिति ज्ञातव्यम् ॥ १ ॥

**यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ।**
**तं तं धुनोति भगवान् पुमाञ्छोचति यत्कृते ॥ २ ॥**

**प्रकाशिका–** तस्योरुविक्रममेव दर्शयति ॥ यं यमिति । अर्थं सुखसाधनमुपादत्ते संपादयति । दुःखेन प्रयासेन धुनोति विनाशयति । यत्कृते यन्निमित्तम् ॥ २ ॥

**यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः ।**
**ध्रुवाणि मन्यते मोहाद् गृहक्षेत्रवसूनि च ॥ ३ ॥**

**प्रकाशिका–** भ्रान्तिरपि संसारे कारणमिति दर्शयन् शोके निमित्तमाह ॥ यदध्रुवस्येति । यद्यस्मादध्रुवस्यानित्यस्य देहस्य संबन्धीनि ग्रहादीनि । अनुक्तसमुच्चयार्थश्चकारः । ध्रुवाणि मन्यते तानि भगवान्धुनोति । तस्माच्छोचतीत्यन्वयः ॥ ३ ॥

**जन्तुर्वै भव एतस्मिन् यां यां योनिमुपव्रजेत् ।**
**तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥**

**प्रकाशिका–** दुर्मतित्वमेव दर्शयन्वैराग्याभावोऽपि संसारे कारणमित्याशयेनाह ॥ जन्तुर्वा इत्यादिना । योनिं शरीरं निर्वृतिं विषयभोगजन्यं सुखम् । लभते पुरुषार्थतयाऽनुभवति ॥ ४ ॥

**नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ।**
**नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥**

**प्रकाशिका–** न विरज्यत इत्युक्तमेव कैमुत्यन्यायेनोपपादयन्संसारे कारणान्तरमाह॥ नरकस्थोऽपीति । नारक्यां नरकस्थाहारादिभिर्जातायां देवमाया बन्धकशक्तिः ॥ ५ ॥

**आत्मजायासुतागारपशुद्रविणबन्धुषु ।**
**निरूढमूलहृदय आत्मानं बहुमन्यते ॥ ६ ॥**

**प्रकाशिका–** अहंममेत्याभिमानोऽपि संसारकारणमित्याशयेनाह ॥ आत्मजायेति । आत्मनः स्वस्य जायादिषु निरूढमूलं नितरामभिवृद्धरागस्नेहादिकं हृदयं यस्य स तथा । बहुमन्यते ममैतेऽहमेषां पोषक इत्याद्यभिमानवान् भवतीत्यर्थः ॥ ६ ॥

**सन्दह्यमानसर्वाङ्ग एषामुद्वहनादिना ।**
**करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥**

**प्रकाशिका–** एतादृशाभिमानफलमाह ॥ सन्दह्यमानेति । उद्वहनादिना तच्चिन्तया दुरितानि पापसाधनानि । अनेन पापकर्मापि संसारे कारणमिति सूचयति ॥ ७ ॥

**आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ।**
**रहोरचितसल्लापैः शिशूणां कलभाषणैः ॥ ८ ॥**

**प्रकाशिका–** निरूढमूलहृदयत्वे कारणं दर्शयन्दुराशयत्वमेव विशदयति ॥ आक्षिप्तेति । आक्षिप्त आत्मा मन इन्द्रियाणि च यस्य स तथा । असतीनां च पुंश्चलीनामपि मायया मोहकशक्त्या कलभाषिणां मधुरभाषिणामालापैश्च । आक्षिप्तात्मेन्द्रियः सन् सुखवन्मन्यत इत्युत्तरेणान्वयः ॥ ८ ॥

**गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ।**
**कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥**

**प्रकाशिका–** कपटवचनमेव धर्मो येषु । अत एव दुःखतन्त्रेषु दुःखसाधनेषु ॥ ९ ॥

**अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।**
**पुष्णाति येषां पोषेण शेषभुग् यात्यधः स्वयम् ॥ १० ॥**

**प्रकाशिका–** सन्दह्यमानेति श्लोकं दुरितानि करोतीत्युक्तं विशदयति । अर्थैरिति । गुर्व्या हिंसया प्रबलतमपरापकारादिनेतस्ततः आपादितैः संपादितैरर्थैस्तान् जायादीन्पुष्णाति । तान्कान् येषाम् । पोषणे स्वयमेवाधो याति । शेषभुक् पोष्यजनभुक्तशेषान्नादेर्भोक्ता ॥ १० ॥

**वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ।**
**लोभाभिभूतो निःसत्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥**

**प्रकाशिका–** वार्तायां कृष्यादिरूपायां जीविकायाम् । परार्थे परकीयद्रव्ये स्पृहामिच्छां चौर्येण तदा दातुमिच्छतीत्यर्थः ॥ ११ ॥

**कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ।**
**श्रिया विहीनः कृपणो ध्यायञ्छ्वसति मूढधीः ॥ १२ ॥**

**प्रकाशिका–** श्रिया शरीरकांत्या श्वसति दीर्घश्वासं करोति । मूढधीरहमेवैषां पोषक इत्यभिमानवान् ॥ १२ ॥

**एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा ।**
**नाद्रियन्ते यथापूर्वं कीनाश इव गोजरम् ॥ १३ ॥**

**तात्पर्यम्– कीनाशः कर्षको मतः ॥ १३ ॥**

**प्रकाशिका–** अकल्पमसमर्थम् । पूर्वं यथाऽऽद्रियन्ते न तथा आदरं कुर्वन्ति । कीनाश शब्दार्थमप्रतीत्या प्रमाणेनैवाह ॥ कीनाश इति । तथाच कीनाशाः भूकर्षकाः कृषीवलाः । यथा गोजरं वृद्धबलीवर्दं नाद्रियन्ते तथैवेत्यर्थः ॥ १३ ॥

**तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयंभृतैः ।**
**जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥**

**प्रकाशिका–** तत्रापि तस्यामवस्थायामपि ॥ १४ ॥

**आस्तेऽवमत्याऽपत्याद्यैर्गृहपाल इवाहरन् ।**
**आमयेनाप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥**

**प्रकाशिका–** अवमत्याऽवज्ञयाऽपत्याद्यैः कृतया । उपन्यस्तं समीपे प्रक्षिप्तमन्नादिकं गृहपाल इव श्वान इवाहरन्स्वीकुर्वन्नास्ते । वैराग्याय तदीयमरणावस्थां दर्शयति ॥ आमयेत्यादिना ॥ १५ ॥

**वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः ।**
**कासश्वासकृतायासः कण्ठो घुरुघुरायते ॥ १६ ॥**

**तात्पर्यम्–** उत्तारमुद्गतिं विन्द्यात् ॥ १६ ॥

**प्रकाशिका–** उत्तारकफसंरुद्धनासिक इत्यत्रोत्तारशब्दार्थं प्रमाणेनाह ॥ उत्तारमिति । तथा चायं मूलार्थः ॥ उत्क्रामता निर्गच्छता वायुना श्वासेनोत्तारमुद्गतं कफः श्लेष्म तेन संरुद्धा नासिका यस्य स तथा । कासश्वासाभ्यां कृतायासः कृतदुःखस्य कण्ठो घुरुघुरायते घुरुघुरु इति शब्दं करोति सः शयानो न ब्रूत इत्युत्तरेणान्वयः । कासश्वासकृतायासकण्ठ इति पाठे कासश्वासकृतायासः कण्ठो यस्येति बहुव्रीहिः ॥ १६ ॥

**शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ।**
**वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥**

**प्रकाशिका–** परिवीतः परिवेष्टितः ॥ १७ ॥

**एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः ।**
**म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥**

**प्रकाशिका–** अजितेन्द्रिय उरुवेदनया मरणकालीनयाऽस्तधीर्नष्टमतिः ॥ १८ ॥

**यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ।**
**स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥ १९ ॥**

**प्रकाशिका–** सरभँसे क्रोधसहिते ईक्षणे ययोस्तौ । शकृन्मूत्रपुरीषं च ॥ १९ ॥

**यातनादेह आवृत्य पाशैर्बध्वा गले बलात् ।**
**नीयते दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ २० ॥**

**प्रकाशिका–** वैराग्यार्थं तस्य नरकगमनमार्गं नरकभोगादिकं च निरूपयति ॥ यातनादेह इत्यादिना । नरकभोगार्थं कल्पितो देहो यातनादेहः तस्मिन् आवृत्य प्रवेश्य ॥ २० ॥

**तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ।**
**पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥ २१ ॥**

**प्रकाशिका–** तयोस्तर्जन्यैर्निर्भिन्नहृदय आर्तः सन् चलतीत्युत्तरेणान्वयः ॥ २१ ॥

**क्षुत्तृट्परीतोऽर्कदवानलानिलैः**
**सन्तप्यमानः पथि तप्तवालुके ।**
**कृच्छ्रेण पृष्ठे कशया च ताडित-**
**श्चलत्यशक्तोऽपि निराश्रयोदके ॥ २२ ॥**

**प्रकाशिका–** क्षुत्तृड्भ्यां परीतो व्याप्तस्तप्ता वालुकाः सिकता यस्मिन्निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन् ॥ २२ ॥

**तत्र तत्र पतञ्छ्रान्तो मूर्च्छितः पुनरुत्थितः ।**
**तथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥**

**प्रकाशिका–** यमसादनं यमगृहं नीतो भवति ॥ २३ ॥

**योजनानां सहस्राणि नवतिर्नव चाध्वनः ।**
**त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाम् ॥ २४ ॥**

**तात्पर्यम्– 'त्रिभिर्मुहूर्तैर्द्वाभ्यां वा दिनैर्दशभिरेव वा । पक्षान्मासेन वा याति यमलोकमितो गत' इति नारदीये ॥ २४ ॥**

**प्रकाशिका–** नयने कालविशेषमाह ॥ योजनानामिति । अध्वनः संबन्धिनां योजनानां नवाधिकनवतिसहस्राणि । यद्यपि यमसदनमार्गसंबन्धीनि योजनानि इतोप्यधिकानि तथाऽपि क्लेशयुक्तमार्गसङ्ख्याकथनमित्येतदवगन्तव्यम् । पापाधिक्ये द्वाभ्यां पापाधिक्याभावे त्रिभिरित्युपलक्षणम् । पक्षान्तरमपि तत्र तारतम्येनास्तीति प्रमाणेनैवाह ॥ त्रिभिरिति ॥ २४ ॥

**आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ।**
**आत्ममांसादनं क्वापि स्वकृतं परतोऽपि वा ॥ २५ ॥**

**प्रकाशिका–** यातनाः संक्षेपेण दर्शयति ॥ आदीपनमित्यादिना । आदीपनं प्रज्वलनं स्वगात्राणां स्वावयवानाम् । प्राप्नोतीति शेषः । स्वकृतं स्वेन छिन्नं परतोऽन्येन वा । कृतमित्यनुवर्तते । यदात्मनः स्वस्य मांसं तस्य भक्षणमित्यर्थः ॥ २५ ॥

**जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने ।**
**सर्पवृश्चिकदंशाद्यैः स्मरद्भिश्चात्मवैशसम् ॥ २६ ॥**

**प्रकाशिका–** आत्मवैशसं स्वजातिहिंसाम् ॥ २६ ॥

**कृन्तनं चावयवशो गजादिभ्योऽभिधावनम् ।**
**पातनं गिरिशृङ्गेभ्यो रोधनं बन्धगर्तयोः ॥ २७ ॥**

**प्रकाशिका–** अभिधावनं विदारणप्रापणम् । रोधनं शृङ्खलाबन्धे विष्ठागर्ते ॥ २७ ॥

**यास्तामिस्रान्धतामिस्ररौरवाद्याश्च यातनाः ।**
**भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥ २८ ॥**
**अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ।**
**या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥**

**तात्पर्यम्– अत्रैवेत्येवशब्दः सामीप्यार्थे । 'सामीप्ये च प्रधाने च एवशब्दोऽवधारण' इति शब्दनिर्णये । अत्राप्यस्तीत्यर्थः ॥ २९ ॥ इति तृतीयतात्पर्ये एकत्रिंशोऽध्यायः ॥ ३१ ॥**

**प्रकाशिका–** न चैतदसंभावितम् । यतोऽत्राप्यस्तीत्याह ॥ अत्रैवेत्येव शब्द इति । सामीप्यार्थत्वे प्रमाणमाह ॥ सामीप्ये चेति । अत्रैवेत्यस्य सामीप्यस्य चावस्थितत्वात् । अत्रैवकारस्यान्यव्यावृत्त्यर्थत्वे बाधकमालोच्य योग्यमर्थं दर्शयति ॥ अत्रापीति । नन्वेतदपि बाधितम् । प्रसिद्धनरकस्वर्गयोरत्रासत्त्वादित्यतस्तदुपपादयति ॥ यातना इति । यातना आदीपनं स्वगात्राणामित्यादिरूपाः । इह राजभृत्यैर्दण्ड्येषूपलक्षिता दृष्टाः । उपलक्षणमेतत् । ये स्वर्गलोकस्थभोगास्तेऽपि जायादिषु दृष्टा इत्यपि ग्राह्यम् । तथाच पूर्वार्धस्थनरकस्वर्गशब्दौ दुःखसुखविशेषपरावेव न प्रसिद्धनरकस्वर्गलोकपरावतो न विरोध इति भावः ॥ २९ ॥

**एवं कुटुम्बं बिभ्राण उदरम्भर एव वा ।**
**विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥**

**प्रकाशिका–** उपसंहरति ॥ एवमिति । उभयं कुटुम्बमुदरं च । तत्फलं कुटुम्बोदरपोषणयोः फलम् ॥ ३० ॥

**एकः प्रपद्यतेऽध्वानं हित्वेह स्वकलेवरम् ।**
**कुशलेतरपाथेयो भूतद्रोहेण यद् भृतम् ॥ ३१ ॥**

**प्रकाशिका–** उभयं विसृजेत्युक्तमेव विवृणोति ॥ एक इति । यद्भूतद्रोहेण भृतं पोषितं तत्कलेवरं कुटुम्बं चेहैव हित्वेत्यन्वयः । मार्गे नरके च भोगायात्र संपादितं किञ्चिन्नायाति किमोमित्याह ॥ कुशलेति । कुशलादितरत्पापं तदेव पापं पाथेयं भोग्यं यस्य स तथा ॥ ३१ ॥

**दैवेनासादितं तस्य शमलं निरये पुमान् ।**
**भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥**

**प्रकाशिका–** ननु पापमपि विहाय कस्मान्न गच्छतीत्यत आह ॥ दैवेनेति । तस्य पूर्वोक्तस्य कुटुम्बपोषकस्य सकाशाद्यच्छमलं पापं दैवेनेश्वरेणासादितं प्रापितं तद्भुङ्क्ते । दैवाधीनत्वात्पापं परित्यक्तुं न शक्नोतीति भावः । अत्र दृष्टान्तमाह ॥ हृतवित्त इति । अत्र वित्तं शरीरस्थानीयम् । तस्यापगमेऽपि यथाऽऽतुरो दैवोपसादितम् । व्याधिं भुङ्क्तेत्युक्तं न समर्थस्तथैवेत्यर्थः ॥ ३२ ॥

**केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ।**
**याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥**

**प्रकाशिका–** एवं कुटुम्बपोषणादिमात्रनिरतानां पापफलमुक्त्वेदानीं विष्णुवैष्णवद्वेषिणां पापफलं दर्शयति ॥ केवलेनेति । मुख्येनाधर्मेण हरिद्वेषादिरूपेणेत्यर्थः । तमसः पदं यस्य । अलुक्समासः । तमः पदवाच्यम् । तामिस्रापेक्षया चरममन्धन्तामिस्रसंज्ञं नित्यनरकं यातीत्यर्थः । हिशब्दोऽत्र प्रमाणप्रसिद्धिद्योतकः ॥ ३३ ॥

**अधस्तान्नरलोकस्य यावतीर्यातनास्तु ताः ।**
**क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे एकत्रिंशोऽध्यायः ।**

**प्रकाशिका–** इतरेषां पापिनां पुनरावृत्तिरस्तीत्याह ॥ अधस्तादिति । नरलोकस्य भूलोकस्याशुचिर्भोगेन क्षीणपापः सन् ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यामेकत्रिंशोऽध्यायः ॥ ३-३१ ॥

## अथ द्वात्रिंशोऽध्यायः

**भगवानुवाच–**
**कर्मणा दैवतन्त्रैण जन्तुर्देहोपपत्तये ।**
**स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥**

**कलिलं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।**
**दशाहेन तु कर्कन्धुः पेश्यण्डं वा ततः परम् ॥ २ ॥**

**तात्पर्यम्–** **'नानाविधा गर्भवृद्धिः कर्मभेदाद्भविष्यति । अतो नानाविधं ग्रन्थे गर्भसंस्थान-मुच्यत' इति षाड्गुण्ये ॥ २ ॥**

**प्रकाशिका–** अत्र पुनर्वैराग्याय गर्भवासादिनिमित्तं दुःखं निरूपयितुं तावद्गर्भप्राप्तिप्रकारमाह ॥ कर्मणेति । दैवतन्त्रेण दैवाधीनेन पूर्वकर्मणा रेतःकणाश्रयो रेतोबिन्द्वन्तर्गतः सन् कलिलं रेतः शोणितेन मिश्रितं भवति । तुशब्दो वंध्याशोणितमिश्रीभावाद्विशेषसूचकः । बुद्बुदं वर्तुलाकारं कर्कन्धुरिव कर्कन्धुर्बदरीफलाकारं कठिणम् । पेशो जरायुरुद्दिष्टः सुवर्णं पेश उच्यत इति वचनात्पेश शब्दो जरायुवाची । तथाच पेशीत्यस्य जरायुणा वीतमित्यर्थः ॥ अण्डं वेति । मनुष्यगर्भस्यैवात्र विकल्पेनाङ्गीकृतत्वमुच्यत इति भाति । न च तद्युक्तम् । अण्डत्वस्य पक्ष्यादिगर्भधर्मत्वादतोऽण्डं वेति पक्षान्तरोक्तेरभिप्रायं प्रमाणेनैवाह ॥ नानाविधेति । मनुष्यपक्ष्यादिरूपेत्यर्थः । भविष्यति भवति । प्राणिनामिति शेषः । नानाविधं पेश्यण्डं वेत्येवंरूपं गर्भसंस्थानं गर्भवृद्धिः । तथा च पक्ष्यादिगर्भमभिप्रेत्याण्डं वेति पक्षान्तरमुक्तं न मनुष्यगर्भमपेक्ष्यैवातो न विरोध इत्याशयः ॥ १,२ ॥

**मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः ।**
**नखरोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥ ३ ॥**

**प्रकाशिका–** बाह्वङ्घ्र्यादिभिरङ्गैरवयवैर्युक्तो विग्रहो देहो भवति । नखलोमास्थिचर्माणि भवन्ति । लिङ्गस्य पुल्लिङ्गादिलक्षणस्य छिद्राणामिन्द्रियद्वाराणां चोद्भव उत्पत्तिस्त्रिभिर्मासैः ॥ ३ ॥

**चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः ।**
**षड्भिर्जरायुणा वीतः कुक्षौ भ्रमति दक्षिणे ॥ ४ ॥**

**प्रकाशिका–** धातवस्त्वक्चर्मादयो जरायुणा गर्भवेष्टनेनावीत आवृतः ॥ ४ ॥

**सप्तमे जन्मकर्माणि गतानि स्मरते ऋषिः ।**
**जगत्यां यानि देवस्य मायया बन्धमात्मनः ॥ ५ ॥**

**प्रकाशिका–** जगत्यां कर्मभूमौ यानि गतानि जन्मानि कर्माणि च स्वकृतानि तथा देवस्य हरेर्माययेच्छयाऽऽत्मनः स्वस्य बन्धनं सुखदुःखाद्यनुभवरूपं स्मरते स्मरति । ऋषिर्ज्ञानी । तथा च सप्तमे मासि तस्य सम्यग्ज्ञानमुत्पद्यत इत्याशयः ॥ ५ ॥

**मातुर्जग्धान्नपानाद्यैरेधत्यातुरसम्मतः ।**
**आस्ते विण्मूत्रयोर्गर्ते सजन्तुर्जन्तुसम्भवे ॥ ६ ॥**

**प्रकाशिका–** आतुरो रोगी तस्य संमतस्तद्वत्स्थितः स यथा परतः स्वदेहयात्रामाप्नोति तथाऽयमपीति। जन्तूनां संभवो यस्मिन्गर्ते स जन्तुः स जीवः ॥ ६ ॥

**कृमिभिः क्षतकण्डूवङ्गः सौकुमार्यात् प्रतिक्षणम्।**
**मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ७ ॥**

**प्रकाशिका–** तत्रत्यैः कृमिभिः खादद्भिः क्षतं च कंडु चाङ्गेषु यस्य सः क्षतकंडूवंगः ॥ ७ ॥

**कटुतीक्ष्णोष्णलवणक्षाराम्लादिभिरुल्बणैः।**
**मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ ८ ॥**

**प्रकाशिका–** कटुर्मरीचिकादिः तीक्ष्णः सर्षपादिः क्षारं चूर्णादिराम्लश्चूतः सर्वाङ्गेषूत्थितोत्पन्ना वेदना यस्य स तथा ॥ ८ ॥

**उल्बेन संवृतस्तस्मिन्नान्त्रैश्च बहिरावृतः।**
**आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ९ ॥**

**प्रकाशिका–** उल्बेन जरायुणा तस्मिन्गर्ते स्वशिरः कुक्षौ कृत्वा भुग्नं कुटिलीकृतं पृष्ठं शिरोधरा ग्रीवा च यस्य ॥ ९ ॥

**अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे।**
**तत्रलब्धस्मृतिर्दैवात् कर्म जन्मशतोद्भवम्।**
**स्मरन् दीर्घमनुछ्वासं गर्भे किं नाम विन्दते ॥ १० ॥**

**प्रकाशिका–** शकुन्तोऽनुत्पन्नपक्षः पक्षी दीर्घं चिरकालमनुच्छ्वासं कुर्वन् तत्र गर्भे किं नाम सुखं विन्दते न किमपीत्यर्थः ॥ १० ॥

**आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः।**
**नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ ११ ॥**

**प्रकाशिका–** सूतिवातैः सूतिहेतुभिर्वातैर्वेपितः। सोदरः समानभूर्विष्ठाभूर्विष्ठोत्पन्नः कृमिरिव ॥ ११ ॥

**नाथमानो ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः।**
**स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ १२ ॥**

**तात्पर्यम्– 'वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चोच्यत' इति शब्दनिर्णये ॥ १२ ॥**

**प्रकाशिका–** नाथमान एवं विधो गर्भवासो मा भूदिति याचमानः । नाथृ नाधृ याञ्चायामिति धातोः । भीतः पुनर्गर्भवासात् । अत्र वध्रि शब्दस्य विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ वध्रयस्त्विति । तुशब्द इति शब्दार्थः । तथा च वध्रय इतीन्द्रियाण्याहुरित्यर्थः । चापि शब्दौ परस्परसमुच्चयौ । उतशब्द आहुरित्यस्यानुकर्षणार्थः । तथा च मनोबुद्धिसहितानि श्रोत्रादीनि पञ्चेति सप्तवध्रय इन्द्रियाणि यस्य स तथा । स्वव्यापारानुकूलज्ञानेन्द्रियवानित्यर्थः । स्तुवीत स्तवीत । कचित्तथैव पाठः । तं परमात्मानं विक्लवया व्याकुलया श्रोतॄणां कृपाजनकयेति वा ॥ १२ ॥

**जीव उवाच–**

**तस्योपसन्नमवितुर्जगदिच्छयात्त-**
**लीलातनोर्भुवि लसच्चरणारविन्दम् ।**
**सोऽहं व्रजामि शरणं नकुतोभयं मे**
**येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १३ ॥**

**प्रकाशिका–** योऽसौ दैवाल्लब्धस्मृतिः सोऽहं येन हरिणाऽसतोऽशुभस्य ममेदृशी गर्भवासलक्षणा गतिः स्थितिरदर्शि तस्य हरेर्लसच्चरणारविन्दं शरणं व्रजामि । कथंभूतस्य । तस्योपपन्नं शरणागतं जगदवितू रक्षितुः । अव रक्षण इति धातोः । अवितुमित्यपि कचित्पाठः । इच्छया भक्तानुग्रहेच्छया भुव्यात्तलीलातनोः स्वीकृतलीलावतारस्य । अनेन स्ववत्तस्य गर्भवासदुःखं नास्तीति सूचयति । कथं भूतं तं चरणारविन्दम् । न विद्यते कुतोऽपि भयं यस्मात्तन्नकुतोभयम् । दूरस्थं तम् ॥ १३ ॥

**यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा**
**भूतेन्द्रियाशयमयीभवलम्ब्य मायाम् ।**
**आस्ते विशुद्धमविकारमखण्डबोध-**
**मातप्यमानहृदयेऽवसितं नमामि ॥ १४ ॥**

**प्रकाशिका–** कथं शरणं व्रजिष्यसीत्यपेक्षायामाह ॥ यस्त्वत्र इति । तुशब्दो जीवाद्वैलक्षण्य-सूचनार्थः । यो भूतेन्द्रियाशयमयीं भूतेन्द्रियान्तःकरणरूपेण परिणतां मायामवलंब्य प्रवर्तकत्वेना-श्रित्यात्र तदात्मके देहे कर्मभिः पुण्यपापलक्षणैरावृतात्माऽनाविर्भूतस्वरूपो बद्ध इव संसारीवास्ते । तथाऽपि विशुद्धं अखण्डबोधं अपरिच्छिन्नज्ञानम् । अत एवाविकारं सर्वथा विकाररहितम् । एतैर्विशेषणैस्तु शब्दसूचितं वैलक्षण्यं विवृतमिति ज्ञातव्यम् । आ सम्यक् तप्यमाने मदीये हृदयेऽवसितं प्रतीतमेमि । शरणमिति शेषः ॥ १४ ॥

**यः पञ्चभूतरचिते रहितः शरीरे**
**छन्नो यथेन्द्रियगुणार्थविदात्मकोऽहम् ।**
**तेनाविकुण्ठमहिमानमृषिं तमेनं**
**वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १५ ॥**

**प्रकाशिका–** एतदेव विवृण्वन्प्रकृतिपुरुषौ विहायायमेव कुतस्तूयत इत्याशङ्कामपाकरोति ॥ यः पञ्चेति । छन्नः सन् अवहितः प्रेरकतया स्थित इन्द्रियाणि गुणान् शब्दादीन् अर्थं पुरुषार्थं वेत्तीतीन्द्रियगुणार्थविदात्मकः परमात्मबिंबोऽहं यथाऽवहितस्तथा । एवं समीपस्थत्वेन कारणेन तमेनं हरिं अकुण्ठमहिमानमृषिं सर्वज्ञम् । अत एव प्रकृतिपुरुषयोः परमुत्तमं पुमांसं वन्दे स्तौमि ॥ १५ ॥

**यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन्**
**सांसारिके पथि चरंस्तदतिश्रमेण ।**
**नष्टस्मृतिः पुनरयं प्रवृणीत लोको**
**युक्त्या कया महदनुग्रहमन्तरेण ॥ १६ ॥**

**प्रकाशिका–** इदानीं गर्भाद्बहिर्निर्गतस्य सांसारिके मार्गे चरतो मम हरिस्मृतिर्नष्टा भविष्यति सा पुनर्मम महतामनुग्रहेणैव भविष्यति । अतो महतामनुग्रहो ममास्त्वित्याशयेनाह ॥ यन्माययेति । यस्य हरेर्माययेच्छयोरुगुणाः सत्त्वादयः कर्माणि च निबन्धनानि निमित्तानि यस्य तस्मिन् । तदतिश्रमेण संसारमार्गप्राप्तौ क्लेशेन नष्टस्मृतिर्नष्टहरिज्ञानोऽयं लोको मल्लक्षणो जनः पुनस्तां हरिस्मृतिं मदनुग्रहमन्तरेण कया युक्त्या युक्तिर्योग उपायः केनोपायेन प्रवृणीत न कयाऽपि । अतो महदनुग्रहो मय्यस्त्वित्याशयः ॥ १६ ॥

**ज्ञानं यदेतददधात् कतमः स देव-**
**स्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ।**
**तं जीवकर्मपदवीमनुवर्तमाना-**
**स्तापत्रयोपशमनाय वयं भजेम ॥ १७ ॥**

**तात्पर्यम्– कतमः सुखतमः ॥ १७ ॥**

**प्रकाशिका–** सर्वपुरुषार्थसाधनमिदं ज्ञानं येन ममेदानीं दत्तं स एवेदानीं गर्भवासनिमित्त-कतापत्रयोपशमनं करिष्यतीत्याशयेनाह ॥ ज्ञानमिति । अत्र कतम इत्यस्य प्रकृतसङ्गत्यर्थमाह ॥

कतम इति । तथा च कशब्दः सुखवाची । अतिशयार्थे तमबिति भावः ।। ततश्चायमर्थः ।। यः कतमः सुखपरिपूर्णः । न केवलं मय्येव किन्तु स्थिरचरेष्वनुवर्तिताशस्तत्प्रेरणाय तदन्तःस्थापितरूप· स देवस्त्रैकालिकमतीत जन्मादिविषयमेतज्ज्ञानं मेऽदधादुत्पादितवांस्तं परमोपकारिणम् । ननु ज्ञानिनस्तव कुतस्तापत्रयप्रसक्तिरित्यत उक्तम् ।। जीवकर्मेति । जीवबन्धकप्रारब्धकर्ममार्गेऽनुवर्तमाना इत्यर्थः । तथा च तापत्रयप्रसक्तिः प्रारब्धकर्मबलादेवेति भावः ।। १७ ।।

**देह्यन्यदेहविवरे जठराग्निनासृग्-**
**विण्मूत्रकूपपतितो भृशतप्तदेहः ।**
**इच्छन्नितो विवसितुं गणयन् स्वमासान्**
**निर्वास्यते कृपणधीर्भगवन् कदा नु ।। १८ ।।**

**प्रकाशिका–** इदानीं गर्भवासस्य तापत्रयसाधनत्वं दर्शयन् गर्भाद्बहिर्निष्कासनं प्रार्थयते ।। देहीति । मल्लक्षणो देही । अन्यदेहविवरे मातुरुदरे । वर्तमानो सृग्विण्मूत्रपङ्के पतितो मातुर्जठराग्निना भृशं सन्तप्तदेहोऽत एव कृपणधीरितो मातुर्देहाद्विवसितुं निर्गन्तुमिच्छन्स्वमासान्स्वविषयकदशमा-सान्कत्यतीताः कत्यवशिष्टा इति गणयन्कदा नु निर्वास्यते बहिर्निष्कास्यते शीघ्रं बहिर्निष्कासनं करोत्वित्याशयः ।। १८ ।।

**येनेदृशीं मतिमसौ दशमास्य ईश**
**सङ्ग्राहितः पुरुदयेन भवादृशेन ।**
**स्वेनैव तुष्यतु कृतेन स दीननाथः**
**को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात् ।। १९ ।।**

**प्रकाशिका–** इदानीं भगवत्कृतोपकारस्य न प्रतिक्रियेत्याशयेनाह ।। येनेति । हे ईश । असौ दशमास्योऽहं येन भवादृशेन भवतः सदृशेन भवतः सदृशो भवानेव नान्य इति सूचयितुमिदं पुरुषेणेदृशीं भगवद्विषयां मतिं सङ्ग्राहितः । स दीननाथो भगवान्स्वेनैव कृतेन स्वकृतेनैव स्वयं तुष्यतु मम स्वातन्त्र्येण कर्तृत्वाभावात् । स्वयमेव तुष्यत्वित्यस्याभिप्रायं स्वयमेवाह । अस्य हरेरञ्जलिं विना तत्प्रति तस्य प्रत्युपकारं को नाम कुर्यात् । न कोऽपि कर्तुं समर्थ इति ।। १९ ।।

**पश्यत्ययं धिषणया ननु सप्तवध्रिः**
**शारीरभेदमशरीरवदस्य देहे ।**

**यद्दत्तया स तमहं पुरुषं पुराणं**
**पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम् ॥ २० ॥**

**तात्पर्यम्–** **अशरीरवत्परमात्मवत् । परमात्मन एव देहोऽपि तद्वशत्वात् । तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति । उत्तमानामृषीणां वाप्यन्येषां बहुजन्मगमि'ति स्कान्दे ॥ २० ॥**

**प्रकाशिका–** इदानीं श्रीहरिणाऽनुगृहीतज्ञानफलं किं येन तत्प्रतिक्रिया नास्तीत्युच्यत इत्यतस्तत्फलं स्फुटतरदेहात्मसाक्षात्कारः सर्वगतश्रीहरिसाक्षात्कारश्चेत्याह ॥ पश्यत्ययमिति । अत्राशरीरवदित्यस्य योग्यमर्थं दर्शयति ॥ अशरीरवदिति । नन्वस्य देह इत्यत्रास्येत्यनेन न जीवपरामर्शः । तथात्वे स्वदेह इत्येव वक्तव्यत्वात् । अशरीरशब्दोक्तपरमात्मपरामर्शे व्याघातः । अशरीरस्य देहाभावादतोऽत्रोपपत्तिमाह ॥ परमात्मन एवेति । अशरीरस्यैवेत्यर्थः । देहोप्युच्युत इति शेषः । अपि शब्द उक्तव्याघातस्याभासत्वप्रदर्शनार्थः । तदेवाह ॥ तद्वशत्वादिति । तथा चास्येति प्रकृतशरीरपरामर्शेऽपि न व्याघातः । अस्मदादिदेहस्य भगवदधीनत्वेन गौण्येव वृत्त्याऽस्य देह इत्युक्तत्वादिति भावः ॥ ततश्चायं श्लोकार्थः ॥ सप्तवध्रिः स्वानुकूलव्यापारोन्मुखसप्तज्ञानेन्द्रियोऽयं जीवोऽस्य शरीरस्य परमात्मनोऽधीने देहेऽशरीरवत्परमात्मन इव परमात्मप्रतियोगिकभेदमिव । एतदुपपादनायैव स्वदेह इत्युक्तम् । शरीरभेदं जीवप्रतियोगिकभेदम् । यत्सृष्ट्या यद्दत्तया धिषणया पश्यति सोऽहं तं पुराणपुरुषं प्रतिहृदि चैत्यमिव चित्ताभिमानिनं विरिञ्चमिव प्रतीतं विज्ञातं बहिश्चेतनगतिं स्थितिं पश्ये देहे स्फुटतरात्मभेदसाक्षात्कारः सर्वगतहरिसाक्षात्कारश्च सर्वः पुरुषार्थसाधक इति भावः । इदं सर्वगतहरिदर्शनादिकं गर्भस्थान्देवानुत्तमानृषीन्वाऽभिप्रेत्योक्तं न सर्वानित्याशयेनात्र प्रमाणमाह ॥ तत्त्वज्ञानमिति । तु शब्दस्तस्योक्तापरोक्षत्वादिरूपविशेषद्योतकः ॥ उत्तमानामिति । अप्रतीकालंबनानामित्यर्थः । अन्येषां गर्भस्थानां बहुजन्मगमतीतबहुजन्मविषयकमेव ज्ञानं भवति न तत्त्वविषयकमित्यर्थः ॥ २० ॥

**सोऽहं वसन्नपि विभो बहुदुःखवासं**
**गर्भान्न निर्भिगमिषे बहिरन्धकूपे ।**
**यत्रोपयातमुपसर्पति देवमाया**
**मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २१ ॥**

**प्रकाशिका–** इदानीं बहिर्निर्गमने ज्ञाननाशादिकं पश्यन् अत्रैव स्थास्यामीत्याशास्ते ॥ सोऽहमिति । हे विभो । बहुदुःखवासं वसन्ननुभवन्नपि सोऽहं गर्भाद्बहिर्न निर्जगमिषे निर्गन्तुं

नेच्छामि । कुत इत्यत आह ॥ यत्रेति । अन्धकूपप्राये यत्र बहिर्देशे उपयान्तं गतं मां देवमाया मिथ्यामतिर्देवस्य हरेर्मायया बन्धकशक्त्या कृता मिथ्यामतिरहंममेत्यादिस्वातन्त्र्यमतिः । ततः किमित्यत आह ॥ यदन्विति । यस्या मिथ्यामतेरनु एतज्जननमरणादिलक्षणं संसारचक्रं संसारपरिवर्तनं भवति । अतो न निर्जिगमिष इत्यन्वयः ॥ २१ ॥

**तस्मादहं विगतविक्लव उद्धरिष्य**
**आत्मानमाशु तमसः सुहृदात्मनैव ।**
**भूयो यथा व्यसनमेदतनेकरन्ध्रं**
**मा मे भविष्यदुपसादितविष्णुपादः ॥ २२ ॥**

**प्रकाशिका–** अत्रैव स्थित्वा किं करिष्यसीत्यपेक्षायामाह ॥ तस्मादिति । बहिर्निर्गमनस्यानर्थ-साधनत्वात् । विगतविक्लवो विगतो धैर्य उपसादितौ हृदयं प्रापितौ विष्णुपादौ येन स तथा । विष्णुपादध्यानपरोऽहमाशु शीघ्रमात्मानं मां तमसोऽऽज्ञानमूलात्संसारात्सुहृदात्मनैवानिमित्तबन्धु-भूतपरमात्मप्रसादेनैवोद्धरिष्ये मुक्तो भविष्यामि । भूयः पश्चाद्यथैतदनेकरन्ध्रमनेकानर्थद्वारं व्यसनं संसाराख्यं मे मा भविष्यन्न भविष्यति तथा ॥ २२ ॥

**भगवानुवाच–**
**एवं कृतमतिं गर्भे दशमास्यं सपद्यृषिम् ।**
**सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २३ ॥**

**प्रकाशिका–** एवं कृतमतिर्विनिश्चितबुद्धिं सपद्यृषिं तत्काल एवं ज्ञानिनमर्वाचीनमवाक् शिरसम् । अनेन हरेर्माहात्म्यं जीवास्वातन्त्र्यं च ध्वनितम् ॥ २३ ॥

**तेनोपसृष्टः सहसा कृत्वाऽवाक् शिर आतुरः ।**
**विनिष्क्रामति कृच्छ्रेण निरुच्छवासो गतस्मृतिः ॥ २४ ॥**

**प्रकाशिका–** वैराग्याय जायमानस्य जातस्य च दुःखं दर्शयति ॥ तेनेति । तेन सूतिमारुतेनोपसृष्ट उपक्षिप्तः ॥ २४ ॥

**पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ।**
**रोरूयति गतज्ञानो विपरीतां गतिं गतः ॥ २५ ॥**

**प्रकाशिका–** विष्टाभूरिव कृमिरिव रोरूयति रोरूयते । विपरीतां गतिमज्ञानलक्षणाम् ॥ २५ ॥

**परच्छन्दं नविदुषा पुष्यमाणो जनेन सः ।**
**अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २६ ॥**

**प्रकाशिका–** परच्छन्दं परस्याभिप्रायम् । जनेन मात्रादिना । अनभिप्रेतं क्षुधितस्यौषधमुदरव्यथादियुक्तस्य स्तन्यादिरूपमनपेक्षितमापन्नः प्राप्तः प्रत्याख्यातुमिदं मम नापेक्षितमिति वक्तुं अनीश्वरोऽसमर्थः ॥ २६ ॥

**शायितोऽशुचिपर्यङ्के जन्तुः स्वेदजदूषिते ।**
**नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २७ ॥**

**प्रकाशिका–** अशुचिपर्यङ्के विण्मूत्रयुक्तत्वादशुद्धे तल्पे ॥ २७ ॥

**तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ।**
**रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २८ ॥**

**प्रकाशिका–** आत्मत्वचं मृदुनूतनत्वचम् । दंशाः सूचिमुखाः । मशकाः सूक्ष्ममक्षिकाः कृमिकं कृमिपूर्णक्षताङ्गं मणिकीटमित्यप्याहुः ॥ २८ ॥

**स त्वेवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च ।**
**अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः ॥ २९ ॥**

**प्रकाशिका–** शैशवं पञ्चवर्षाणि । ततो यौवनादर्वाक् पौगण्डं तत्राध्ययनादिदुःखं च यौवनदुःखमाह ॥ अलब्धाभीप्सित इत्यादिना । अज्ञानाद्धरिस्वातन्त्र्याज्ञानात् । शुचार्पितो व्याप्तः ॥२९॥

**सह देहेन मानेन वर्धमानेन मन्युना ।**
**करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ ३० ॥**

**प्रकाशिका–** सहदेहेन मानेन देहेन सहैव वर्धमानेनाभिमानेन मन्युना च विग्रहं विरोधं करोति । आत्मनः स्वस्यान्ताय नाशाय ॥ ३० ॥

**भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् ।**
**अहंममेत्यसद्ग्राहां करोति कुमतिर्मतिम् ॥ ३१ ॥**

**प्रकाशिका–** अज्ञानमेव तत्कार्यप्रदर्शनेन प्रपञ्चयति ॥ भूतैरिति । असद्ग्राहो दुरभिमानो यस्याः सा तथा ताम् ॥ ३१ ॥

**तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ।**
**तमो विशति यद्बद्धो येनासौ मर्त्यजन्मनि ॥ ३२ ॥**

**प्रकाशिका–** तदर्थं अहंममेत्याद्यसद्ग्राहदृढीकरणाय ॥ येन कर्मणा बद्धः ॥ ३२ ॥

**येन यातीदृशं क्लेशमविद्याकर्मबन्धनम् ॥ ३३ ॥**

**प्रकाशिका–** एतदेव स्पष्टयति ॥ येनेति । ईदृशं नरकादिलक्षणम् ॥ ३३ ॥

**यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ।**
**आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३४ ॥**

**प्रकाशिका–** ननु सन्मार्गे निरतः स्वात्मोद्धारं करिष्यतीति चेत् । सत्यम् । असज्जनसङ्गत्यभाव एवैतत् । अन्यथा पुनः संसारप्राप्तिरित्याह ॥ यद्यसद्भिरिति । पथि कथञ्चित्सन्मार्गे आस्थितो जन्तुर्यद्यसद्भिः सह पुना रमते तर्हि पूर्ववदेव तमोऽसद्ग्राहादिरूपं विशति ॥ ३४ ॥

**सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ।**
**शमो दमो भगश्चेति यत्सङ्गाद् याति संक्षयम् ॥ ३५ ॥**

**प्रकाशिका–** ननु सत्यादिगुणवत्त्वे कथमसत्सङ्गात्तमःप्रवेशं इत्यत आह ॥ सत्यमिति ॥ ३५ ॥

**तेष्वशान्तेषु मूढेषु खण्डितात्मावसायिषु ।**
**सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३६ ॥**

**तात्पर्यम्– खण्डितात्मावसायिषु जीवमात्रज्ञानिषु ॥ ३६ ॥**

**प्रकाशिका–** असत्सङ्गः सर्वथा मुमुक्षुणा त्याज्य इत्याशयेन तं निन्दति ॥ तेष्वित्यादिना । अत्र खण्डितात्मावसायिष्वित्यस्य परिच्छिन्नजीवनिश्चयस्त्विति व्याख्याने निन्दाया अलाभात्तदनूद्य तात्पर्यं दर्शयति ॥ खण्डितात्मावसायिष्विति । तथाच खण्डितः परिच्छिन्नो जीव एव देहेऽस्ति नापरिच्छिन्नः परमात्मेति निश्चयस्त्वित्यर्थः । एवं निन्दा लक्ष्यत इति भावः । इदं चासाधारण्येन व्यपदेशा भवन्तीति न्यायेन लभ्यत इति द्रष्टव्यम् । योषितां क्रीडामृगवद्वर्तमानेषु ॥ ३६ ॥

**न तथास्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ।**
**योषित्सङ्गाद् यथा पुंसां यथा तत्सङ्गिसङ्गतः ॥ ३७ ॥**

**प्रकाशिका–** योषित्सङ्गिसङ्गवद्योषित्सङ्गोऽपि मोहक इत्याह ॥ न तथाऽस्येति ॥ ३७ ॥

**प्रजापतिर्दुहितरं दृष्ट्वा तद्रूपधर्षितः ।**
**रोहिद्भूतां सोऽन्वधावद् ऋष्यरूपी गतत्रपः ॥ ३८ ॥**

**प्रकाशिका–** योषित्सङ्गस्य मोहकत्वे कैमुत्यन्यायमाह ॥ प्रजापतिरिति । रोहिद्भूतां भयान्मृगीभूताम् । ऋष्य रूपी मृगरूपीह गतत्रपो निर्लज्जः । असुरजनमोहनाय ब्रह्मणा प्रदर्शितव्यापारानुवादपरमेतदिति ज्ञातव्यम् ॥ ३८ ॥

**तत्सृष्टिसृष्टसृष्टेषु कोन्वखण्डितधीः पुमान् ।**
**ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३९ ॥**

**तात्पर्यम्– 'मयः प्रधान उद्दिष्टो माया तद्वश उच्यत' इति षाड्गुण्ये ॥ ३९ ॥**

**प्रकाशिका–** तस्य ब्रह्मणः सृष्टौ सृष्टा मरीच्यादयस्तत्सृष्टाः कश्यपादयस्तेषु वर्तमानः पुमान्कोऽन्वखण्डितधीरनाकृष्टमना न कोऽपि । अत्र माययेत्यस्य मायाकल्पितयेत्यन्यथाप्रतीतिवारणाय मायाशब्दार्थं प्रमाणेनैव दर्शयति ॥ मय इति । तद्वशो बन्धकशक्तिरूपः पदार्थो मायेत्युच्यते । योगरूढ्यामित्यर्थः । तथा च योषिन्मय्या स्त्रीरूपमायया हर्यधीनबन्धकशक्त्याऽखण्डितधीः क इति मूलार्थ इत्याशयः ॥ ३९ ॥

**बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ।**
**या करोति निजायत्तान् भ्रूविजृम्भेण केवलम् ॥ ४० ॥**

**प्रकाशिका–** योषिन्मय्या मायाया अन्यैरजेयत्वं दर्शयति ॥ बलमिति । मे मदाधीना या दिशां जयिनः शूरानपि निजायत्तान्स्वाधीनान् ॥ ४० ॥

**सङ्गं न कुर्यात् प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ।**
**मत्सेवया प्रतिलब्धात्मलाभो वदन्ति यां निरयद्वारमस्य ॥ ४१ ॥**

**प्रकाशिका–** एतादृशजयोपायस्तत्सङ्गत्याग एवेत्याशयेनाह ॥ सङ्गमिति । सङ्गं स्नेहं संसर्गं वा । एवं पारं चरमावधिम् । ननु सुखदुःखप्रदायास्तस्याः कथमकस्मात्त्याग इत्यत आह ॥ मत्सेवयेति ।

प्रतिलब्धः प्राप्त आत्मलाभः स्वरूपानन्दानुभवो येन स तथा । तत्त्यागेन तदपेक्षयाऽधिकं स्वरूपसुखं लभ्यत इत्याशयः । प्रतिलब्धात्मभाव इतिपाठे सम्प्राप्तपरमात्मभक्तिरित्यर्थः । तदा भगवद्भक्तिरेव परमपुरुषार्थरूपेति भावः । तत्सङ्गेऽनर्थ इत्यत्र वृद्धसंमतिमाह ।। वदंतीति । अस्य तत्रासक्तस्य ।। ४१ ।।

**योपयाति शनैर्माया योषिद् देवविनिर्मिता ।**
**तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ।। ४२ ।।**

**प्रकाशिका–** इतोऽपि स्त्रीसङ्गस्त्याज्य इत्याह ।। योपयातीति । शनैः शुश्रूषादिमिषेण । मृत्युं मृत्युतुल्यम् ।। अनर्थप्रदामिति यावत् ।। ४२ ।।

**यां मन्यते पतिर्मोहान्मन्मायामृषभायतीम् ।**
**स्त्रीत्वं स्त्रीसङ्गतः प्राप्तां वित्तापत्यगृहप्रदाम् ।। ४३ ।।**

**प्रकाशिका–** एवमन्यस्त्रीसङ्गोऽनर्थप्रद इत्युक्त्वेदानीं च स्वस्त्रीसङ्गोऽप्यनर्थप्रद इत्याह ।। यामिति । ऋषभायतीं पुरुषवदाचरन्तीम् । सर्वनिर्वाहिकामिति यावत् । अनेनैतादृशी पूर्वं पुरुष इति सूचयति । तर्हि कथं स्त्रीत्वं प्राप्तेत्यपेक्षायामाह ।। स्त्रीत्वमिति । स्त्रीसङ्गतः पूर्वदेहत्यागकाले स्त्रीध्यानेन । यं यं वाऽपि स्मरन् भावमिति वचनात् । तमिति । विधेयलिङ्गापेक्षया पुल्लिङ्गनिर्देशः ।। ४३ ।।

**तमात्मनो विजानीयाद् भृत्यापत्यगृहात्मकम् ।**
**दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ।। ४४ ।।**

**तात्पर्यम्– 'सत्पुंसु च तथा स्त्रीषु न सङ्गो दोषमावहेत् । यथायोग्यं गुणायैव दोषकृद्दुष्टजन्तुष्वि'ति वाराहे ।। ४४ ।।**

**प्रकाशिका–** एवं स्त्रीसङ्गस्यानर्थहेतुत्वकथनप्रसङ्गाद्भृत्यादिसङ्गोऽपि तथेति दर्शयति । भृत्येति । भृत्यादिरूपमपि दैवोपसादितं मृत्युं जानीयादित्यर्थः । यथा मृगयोर्लुब्धकस्य गायनमनुकूलत्वेन प्रतीयमानमपि मृगस्य मृत्युहेतुरिति जानाति तथेत्यर्थः । अत्र प्रकरणे स्त्रीसङ्गिसङ्गः स्त्रीसङ्गश्च सर्वात्मना न कर्तव्य इति भाति । न चेदं युज्यते । तथात्वे स्त्रीसङ्गिनां विशिष्टादीनां सङ्गस्य गार्हस्थ्यस्य च मुमुक्षुणाऽननुष्ठेयत्वप्रसङ्गात् । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ।। सत्पुंस्स्विति । स्त्रीषु । सतीष्विति शेषः । तर्हि निषेधवचनस्य का गतिरित्यत उक्तम् ।। दोषकृदिति ।

दुष्टजन्तुषु स्त्रीपुरुषेषु । तथाच दुष्टानां स्त्रीसङ्गिपुरुषाणां दुष्टस्त्रियश्च सङ्गं न कुर्यादित्येवैतन्मूलार्थ इत्याशयः ॥ ४४ ॥

**देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ।**
**भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ॥ ४५ ॥**

**तात्पर्यम्–** जीवभूतेन जीवकर्मभूतेन ॥ ४५ ॥

**प्रकाशिका–** एवं दुष्टयोषित्सङ्गिसङ्गस्य दुष्टयोषित्सङ्गस्यानर्थहेतुत्वमुक्त्वेदानीं तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिमिति यत्कर्मपरंपरायाः संसृतिपरंपराहेतुत्वमुक्तं तद्विशदयति ॥ देहेनेति । अत्र जीवभूतेन जीवरूपेण देहेनेत्यन्यथाप्रतीतिवारणाय व्याख्याति ॥ जीवेति । तथाच जीवपदं जीवकर्मोपलक्षकम् । जीवकर्मभूतं जीवभूतमिति मध्यमपदलोपी समास इत्याशयः ॥ ततश्चायमर्थः । जीवभूतेन पूर्वार्जितजीवकर्मजातेन देहेन यातनानिमित्तेन तेजोमयेन वा युक्तो जीवो लोकादिमं लोकं नरलक्षणं वाऽनुव्रजंस्तत्र कर्माणि कर्मफलानि भुंजान एव शेषेणेमं लोकमागत्य तत्रापि पूर्वकर्मफलानि भुञ्जान एव पुनः कर्माणि करोति । एवमविरतमनवसानं यथा स्यात्तथा करोतीत्यर्थः ॥ ४५ ॥

**जीवो यस्यानुगो देहो भूतेन्द्रियमनोमयः ।**
**तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भवः ॥ ४६ ॥**

**प्रकाशिका–** ननु भवेदिद्रिंयादिसम्बन्धो हि जीवस्य बन्धः । तदपगमश्च मृतावेव जातः । अतो मुक्तस्य कथं नरकाद्यनर्थप्राप्तिरित्यत आह ॥ जीव इति । देहो लिङ्गशरीररूपो यस्यानुगो येन सह गच्छति स जीव उक्तरीत्याऽविरतं कर्माणि करोतीत्यन्वयः । अनेन प्रसिद्धमतौ न सर्वथा भूतेन्द्रियादीनां सम्बन्धापगमो येन तदैव तस्य मुक्तिः स्यात् । लिङ्गशरीररूपेण तेषां जीवेन सह गमनात् । किंतु स्थूलात्मना विकृतानामेव केषाञ्चिद्भागानामित्युक्तं भवति । नन्वथाऽपि जीवो जात मृत इत्यादिव्यवहारात्तस्य देहेन सह नष्टत्वेन कथं परलोकगमनमित्यतोऽयं व्यवहारोऽमुख्य इत्याह ॥ तन्निरोध इति । तत्तस्य स्थूलदेहस्य निरोधो नाश एवास्य जीवस्य मरणं मरणव्यवहारे कारणमाविर्भावो भूतसंयोगलक्षणो विशेषतया प्रकाशः सम्भव उत्पत्तिव्यवहारे कारणम् । जीवोनित्यो धातुरस्यत्वनित्य इत्येतत्प्रमाणान्तरबलादेवं कल्प्यत इत्याशयः ॥ ४६ ॥

**द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा ।**
**तत् पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४७ ॥**

**प्रकाशिका–** ननु तन्निरोधोस्य मरणमित्युक्तम् । भस्मीभावात्पूर्वं स्थूलदेहे शवरूपे विद्यमानेऽपि जीवो मृत इति व्यवहारप्रदर्शनादित्यतस्तस्याभिप्रायं मूलकृत्स्वयमेवाह ॥ द्रव्योपलब्धीति । द्रव्योपलब्धिस्थानस्य जीवे पदार्थदर्शनेऽवच्छेदकस्य देहस्य द्रव्येक्षायां पदार्थदर्शनजनने यदाऽयोग्यता भवति तत्तदेव तस्य पञ्चत्वं मरणं विवक्षितं न स्वरूपनाशः । ईक्षाभाव इत्येवोक्ते सुप्तादावपि मृत इति व्यवहारप्रसङ्गः । अतस्तद्योग्यताभावपर्यन्तं धावनमिति ज्ञातव्यम् । घटादाव-प्युक्तायोग्यत्वस्य सत्वेन पञ्चत्त्वव्यवहारप्रसङ्गवारणाय द्रव्योपलब्धिस्थानस्येत्युक्तम् । नन्वेवं तर्ह्युत्पत्तिरप्येतद्विपरीतैव देहस्य वक्तव्या । ओमित्याह ॥ अहं मानादिति । द्रव्योपलब्धिस्थानस्य यदहंमानादहंमानेन शरीरेण कर्ता ममेदं शरीरमित्यभिमानविषयत्वाद्द्रव्यदर्शनं पदार्थदर्शनयोग्यतावत्वं भवति तत्सैव तस्योत्पत्तिरित्यर्थः । अहं मानादित्युक्तरूपाभिमानविषयत्वयोग्यताभावः पञ्चत्वं तद्योग्यतावत्वमेवोत्पत्तिरित्यपि सूचयति ॥ ४७ ॥

**यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ।**
**तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वं योग्यताऽनयोः ॥ ४८ ॥**

**तात्पर्यम्–** **चक्षुःसकाशाद्द्रष्टुर्द्रष्टृत्वमक्ष्णोर्योग्यता ॥ ४८ ॥**

प्रकाशिका– ननु जन्ममरणरूपयोरुक्तयोग्यतायोग्यतयोर्देहनिष्ठयोः कथं जीवे तद्व्यवहारजनक-त्वमित्याशङ्कायां दृष्टान्तमुखेन तदुपपादयति ॥ यथेति । अत्र द्वितीयार्धे चक्षुषो द्रष्टुरित्येत-त्सामानाधिकरण्यभ्रान्तिवारणाय व्याख्याति । चक्षुःसकाशाद्द्रष्टुरिति । अनयोरित्यस्यार्थं दर्शयन् चतुर्थपादेऽन्वयं दर्शयति ॥ द्रष्टृत्वमक्ष्णोर्योग्यतेति । अक्ष्णोर्गोलकयोः ॥ ततश्चायं श्लोकार्थः । यथा चक्षुषमिन्द्रियस्य द्रव्याणि च तदवयवाश्च चक्षुर्योग्याः । सर्वे पदार्था इति यावत् । तेषां दर्शनायोग्यता तज्जननायोग्यता यदा मरणकाले भवति तदैव तस्मिन्नेव कालेक्ष्णोर्गोलकयोरपि सा भवतीति व्यवहारः । यथाच यदा चक्षुषः सकाशाद्द्रष्टुर्जीवस्य द्रष्टृत्वम् । चक्षुषो जीवकर्तृकपदार्थ-विषयकदर्शनजननयोग्यता भवतीति व्यवह्रीयते । तथैव देहधर्मयोरुक्तरूपयोर्जननमरणयोर्जीवे व्यवहार इति ॥ ४८ ॥

**पुंसो यथैवेन्द्रियाणि विन्दन्ति स्वगतं परम् ।**
**सुखं दुःखं नान्यगतं तथेशांशाः पृथक्कलाः ॥ ४९ ॥**

**प्रकाशिका–** ननु तथाऽपि जीवस्य नोक्तरूपसंसारो वास्तवः सम्भवति किंतु मिथ्याभूत एवेति कल्पनीयम् । तस्य ममैवांशो जीवलोक इत्यादिना भगवदंशत्वावगमात् । न हि भगवदंशेषु

मत्स्यादिषु वास्तवः संसारोऽस्तीत्यत आह ॥ पुंस इति । यथेंद्रियाणि षोडशकलाः पुरुष इत्यादौ जीवांशत्वेनोक्तान्यपि पुंसो जीवस्य पृथक् कला भिन्नांशाः कल्प्यंते न जीवस्वरूपभूतास्तथेशांशा ईशांशत्वेनोक्ता जीवा अपि पृथक् कला भिन्नांशा एव कल्पनीयाः । अतस्तद्गतसंसारोऽपि वास्तव एवेत्यर्थः । अंशत्वेनोक्तिरप्रयोजिकेत्याशयः । नन्ववश्यमिंद्रियाणां जीवपृथक्कलात्वमेव कल्पनीयम् । जीवानां चेतनत्वादिन्द्रियाणामचेतनत्वात् । प्रकृते च जीवानां परमेश्वराद्भेदसाधकमस्तीत्यत आह ॥ विंदन्ति स्वगतमिति । यतो जीवाः परं केवलं स्वगतं सुखं विन्दन्ति लभन्ते । अनुभवन्तीति यावत् । नान्यगतमीश्वरादिगतमतः पृथक् कला इत्यर्थः । जीवा नेश्वराद्यभिन्नास्तद्गतसुखदुःखाद्यनुसांधन-शून्यत्वादिति युक्तिरत्रापि भेदसाधिकाऽस्तीत्याशयः । दुःखग्रहणेनानयैव युक्त्या जीवांतरभेदोऽपि साधनीय इति सूचयति । तेनात्मैकत्ववादिनां मतं निरस्तमिति ज्ञातव्यम् ॥ ४९ ॥

**आत्मनः केवलं ज्ञानमर्थो देहाद्यसङ्गिनः ।**
**सुखदुःखादयो भावा न देहस्य न चात्मनः ॥ ५० ॥**

**तात्पर्यम्– केवलं ज्ञानं पुरुषार्थः । देहादिष्वसङ्गिनो जीवस्य तन्निमित्तसुखदुःखादयो न सन्ति किमुत देहस्याचेतनत्वात् ॥ ५० ॥ इति तृतीयतात्पर्ये द्वात्रिंशोऽध्यायः ॥ ३२ ॥**

**प्रकाशिका–** नन्वेवं संसारसत्यत्वे कथं तन्निवृत्तिरित्यत आह ॥ आत्मन इति । अत्र केवलशब्दस्यात्मपदेनान्वयभ्रमं वारयन् अर्थशब्दस्य प्रकृतोपयुक्तमर्थं दर्शयति ॥ केवलं ज्ञानमिति । पुरुषार्थः संसारनिवृत्तिरूपपुरुषार्थहेतुरित्यर्थः । तथा चात्मनः परमात्मनो जीवस्य वा केवलं तदुभयस्वरूपेतरविषयकं ज्ञानमर्थः पुरुषार्थहेतुरित्यर्थः । सत्योऽपि संसारोऽस्वाभाविकत्वादुक्तज्ञानेन निवर्तत इत्याशयः । ननु कथमुक्तज्ञानेन सुखदुःखादिरूपसंसारनिवृत्तिरित्यतस्तदुपपादयितुं प्राप्तस्य देहाद्यसङ्गिन इत्यादि मूलस्याभिप्रायमाह ॥ देहादिष्वसङ्गिन इति । अन्ते विद्यमानस्यात्मन इत्यस्य व्याख्यानम् ॥ जीवस्येति । तन्निमित्तसुखादयः स देहादिसङ्गो निमित्तं येषां ते तन्निमित्तास्ते च ते सुखादयो न सन्ति न भवन्ति । चशब्दोऽपिशब्दार्थः । आत्मेत्यनेन सम्बध्यते । तेन कैमुत्यलाभ इत्याशयेनोक्तम् । किमुतेति ॥ ततश्चायं मूलाशयः ॥ सुखदुःखादिलक्षणो हि संसारो देहविशिष्टजीव निष्ठः । स च तस्य देहाद्यासक्तिनिमित्तः । तदासक्तिश्च जीवेश्वरस्वरूपाज्ञाननिमित्ता उक्तरीत्या जीवेश्वरस्वरूपज्ञानेन तत्रासक्तिनिवृत्तौ तन्निमित्तसुखदुःखादिरूपसंसारस्य देहविशिष्टे तावन्नोत्पत्तिः तद्विशेषणीभूतदेहे तु विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवतीति न्यायेन प्रसक्तोऽपि दुःखादिरूपः संसारो न सम्भवति । अचेतनत्वात् । अत उक्तज्ञानेन देहे विशिष्टजीवगतः सुखदुःखादिलक्षणः सारो निवर्तत इति ॥ ५० ॥

**तस्मान्न कार्यः सन्त्रासो न कार्पण्यं न सम्भ्रमः ।**
**बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह ॥ ५१ ॥**

**प्रकाशिका–** सिद्धमित्युपसंहरति ॥ तस्मादिति । संसारस्य जीवस्वरूपाज्ञाननिमित्तत्वे-नास्वाभाविकत्वाज्जीवगतिं जीवस्वरूपस्थितिमुक्तरीत्या बुद्ध्वा मुक्तसङ्गो देहाद्यासक्तिरहितः सन् धीरः श्रीहरिविषयकबुद्धौ रममाण इह स्ववासोचितलोकेषु चरेद्वर्तेत ॥ ५१ ॥

**सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ।**
**मायाविरचिते लोके चरेद् यस्य कलेवरम् ॥ ५२ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ।**

**प्रकाशिका–** उक्तमेव विशदयन्नेवं वर्तमानं स्तौति ॥ सम्यगिति । अत्र बुद्ध्वा जीवगतिमित्ये-तावदनुवर्तनीयम् ॥ ततश्चायमर्थः ॥ सम्यग्दर्शनं यया सा तथा । तया योगो भक्त्यादिरूपः । एतादृश्या बुद्ध्या जीवगतिं बुद् ध्वाविषयीकृत्य मायाविरचिते हरीच्छानिर्मिते भूरादिलोके कलेवरम् । चरेद्वर्तते स एव धीर इति ॥ ५२ ॥ इति श्रीभागवतटिप्पण्यां द्वात्रिंशोऽध्यायः ॥ ३-३२ ॥

## अथ त्रयस्त्रिंशोऽध्यायः

**भगवानुवाच–**
**अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे ।**
**काममर्थं च धर्मं च दोग्धि भूयः पिपर्ति तान् ॥ १ ॥**

**प्रकाशिका–** अत्र निवृत्तकर्मणां भक्त्यतिशयवतामपुनरावृत्तिलोकप्राप्ति फलं तत्र श्रद्धोत्पादनाय प्रवृत्तकर्मणां पुनरावृत्तिमल्लोकप्राप्त्यादिरूपं फलं तावद्दर्शयितुमाह ॥ अथेति । अथ शब्दः प्रकरणांतरारम्भसूचकः । यो गृह एवावसन् गृहमेधीयान् गृहस्थाश्रमयोग्यान् धर्मान्दोग्धि । दोह्यमाह ॥ काममर्थं च धर्मं चेति ॥ तान्दोग्धान्धर्मादीन् भूयः पिपर्ति पूरयति । पृ पालनपूरणयोरिति धातोः। पुत्रादिषूपदिश्य स्वयमनुतिष्ठतीति यावत् ॥ १ ॥

**स चापि भगवद्धर्मात् काममूढः पराङ्मुखः ।**
**यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयान्वितः ॥ २ ॥**

**प्रकाशिका–** तदनुष्ठानं विशदयंस्तन्निन्दति ॥ स चापीति ॥ चशब्दो हेत्वर्थः । अपि शब्दः पूर्वाध्यायोक्तपापिसमुच्चयार्थः । न केवलं पूर्वोक्तपापी भक्त्या भगवदाराधनरूपाद्भगवद्धर्मात्पराङ्मुखः किंतु यस्तानिपपर्ति सोऽपि कुतो यतः काममूढः सन् क्रतुभिर्देवान्यजते श्रद्धादिभिश्च पितॄन् ॥ २ ॥

**तच्छ्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान् ।**
**गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥**

**तात्पर्यम्– 'ईषद्भक्तो भगवति सुकर्मा स्वर्गमेष्यति । अभक्तो निरयं याति सुकर्माऽपि न संशय' इति वामने ॥ ३ ॥**

**प्रकाशिका–** ततोऽपि किमित्यत आह ॥ तच्छ्रद्धयेति ॥ तच्छ्रद्धया तेषां पितॄणां देवानां श्रद्धयाऽऽक्रान्तामतिर्यस्य । पितॄणां देवानां च तुष्ट्यर्थं व्रतं यस्य स पितृदेवव्रतः । चान्द्रमसं चन्द्रेणाधिकृतं लोकं स्वर्गैकदेशम् । सोमपाः सोमयाजी । उपलक्षणमेतत् । श्राद्धादिकर्मकर्ता पितृलोकं गत्वा पुनरेष्यतीत्यपि ग्राह्यम् । तथा च पुनरावृत्तिमल्लोकप्राप्तिसाधनकर्मकर्तृत्वादपुनरावृत्तिमल्लोकसाधनभगवद्धर्मात्सोऽपि पराङ्मुख इत्याशयः । अत्र सर्वथा भगवद्भक्तिशून्यस्यापि यजमानस्य स्वर्गलोकप्राप्तिरुच्यत इति भाति । न च तत्सम्भवति । पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरेरिति वचनात् । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैव दर्शयति ॥ ईषद्भक्त इति । स्वर्गसाधनीभूताधमप्रसादजनकभक्तिमानित्यर्थः । सुकर्मावेदविहितयज्ञादिकर्मकर्ता । अभक्तः सर्वथा भक्तिशून्यः । तथा च गत्वा चन्द्रमसं लोकमित्येतदीषद्भक्तमभिप्रेत्यैवोक्तमित्याशयः ॥ ३ ॥

**यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ।**
**तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥**

**प्रकाशिका–** लोकेषु सत्स्वपि पुण्यक्षयात्तत आवृत्तिमुक्त्वेदानीं तल्लोकानामपि लयावधिमाह ॥ यदा चेति । दैनन्दिनप्रलय इत्यर्थः । तस्मान्न प्रवृत्तकर्मनिरतो भूयादित्याशयः ॥ ४ ॥

**ये स्वधर्मं न दुह्यन्ति धीराः कामार्थहेतवे ।**
**निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥**

**प्रकाशिका–** इदानीं निर्वृत्तकर्मिणां भगवल्लोकप्राप्तिं दर्शयति ॥ य इति । दुह्यन्ति दुहन्ति न्यस्तकर्माणो भगवत्येव समर्पितकर्माणः ॥ ५ ॥

**निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः ।**
**स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥**

**प्रकाशिका–** निवृत्तिर्विषयवैराग्यं तल्लक्षणे धर्मे नितरां रताः स्वधर्माख्येन स्वस्वरूपभूतधर्मरूपेण सत्वेन सतो भावः सत्वं मोक्षयोग्यत्वं तेनाप्रतीकालम्बनत्वादिरूपेण ॥ ६ ॥

**सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ।**
**परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥**

**प्रकाशिका–** परावरेशं मुक्तामुक्तेशम् । प्रकृतिं मूलकारणमुत्पत्त्यन्तौ भावयति करोतीत्युत्पत्त्यन्तभावनस्तम् । अत्र सूर्यद्वारेण पुरुषं यान्तीत्युपलक्षणम् । ब्रह्मनाड्युत्क्रान्ता अर्चिरादिना मुख्यवाय्वन्तेन मार्गेण स्वस्वयोग्यतानुसारेण कार्यं परं वा ब्रह्म यान्ति । नाड्यन्तरोत्क्रान्तास्तु महरादिलोकस्थं ब्रह्मेत्यपि ग्राह्यम् । एतत्सूचनायैव स्वधर्माख्येन सत्त्वेनेत्युक्तम् ॥ ७ ॥

**द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ।**
**तावदध्यासते लोके परस्य परिचिन्तकाः ॥ ८ ॥**

**प्रकाशिका–** कियत्पर्यन्तं तेषां तेषु लोकेष्ववस्थानमित्यपेक्षायामाह ॥ द्विपरार्धावसान इति । लोके वैकुण्ठादिषु ॥ ८ ॥

**क्ष्माम्भोनलानियन्मन इन्द्रियार्थ-**
**भूतादिभिः परिवृतः प्रतिसंजिहीर्षुः ।**
**अव्याकृतं विशति यर्हि गुणत्रयात्मा**
**कालं परं स्वमनुभूय परःस्वयम्भूः ॥ ९ ॥**

**प्रकाशिका–** नन्वेषां परममुक्तिः कदेत्यपेक्षायां ब्रह्मणा सहैवेत्याह ॥ क्ष्मामित्यादिना । अर्थाः शब्दादयो भूतादिस्तामसोऽहङ्कारः । अत्र क्ष्मादिपदैः पञ्चानां महाभूतानां मनसो दशानामिन्द्रियाणाम् । पञ्चानां विषयाणाम् । भूतादिपदोपलक्षितस्य त्रिविधस्याप्यहङ्कारस्याभिमानिनो देवा उच्यन्ते । प्रतिसञ्जिहीर्षुः स्वसृष्टं जगत्संहर्तुकामः । अव्याकृतं परमेश्वरम् । यर्हि यदा गुणत्रयस्यात्माभिमानी । परं परसंख्योपेतं परः क्ष्मादिभ्यः ॥ ९ ॥

**एवं परेत्य भगवन्तमनुप्रविष्टा**
**ये योगिनो जितमरुन्मनसो विरागाः ।**

**तेनैव साकममृतं पुरुषं पुराणं**
**ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥**

**प्रकाशिका–** एवं तदा परेत्य देहत्यागेन भगवन्तं तदीयं लोकं तेनैव ब्रह्मणैव पुरुषं वासुदेवमगताभिमाना अत्यक्तजीवभावाः । अनेन जीवभावात्यागकथनेन लिङ्गशरीरादेस्त्यागः सूचितः ॥ १० ॥

**आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ।**
**योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ ११ ॥**

**तात्पर्यम्– 'अभिमानेन पूर्णज्ञानेन । सङ्गत्य लये परमेश्वरं प्रविश्य । यथापूर्वं प्रजायते उच्चनीचादिभावेन जायते । अगुणव्यतिकरे बहिः श्वेतद्वीपे निर्गच्छति । 'गुणव्यतिकराभावेऽप्युच्चनीचादिपूर्ववत् । विष्णोश्चैव विमुक्तानां न कदाचन गच्छती'ति गारुडे ॥ ११ ॥**

**प्रकाशिका–** एवं ज्ञानिभिः सह परमपुरुषं प्रविष्टस्य ब्रह्मणः पूर्ववत्तरतमभावेनैवावस्थितिं सृष्टिकाले पुनर्बहिर्निर्गमनं दर्शयति ॥ आद्य इति । अत्राभिमानेनेत्यस्य प्रकृतोपयुक्तमर्थं दर्शयति अभिमानेनेति । पूर्णज्ञानेनेति । स्वयोग्यमुक्तिजनने इति शेषः । तथाच स्वस्वरूपाभिव्यक्तिमविद्यमानं ज्ञानमभिमानमिति निरुक्तिरत्राभिप्रेतेति ज्ञातव्यम् । पुरुषं सङ्गत्येत्यस्यापि प्रकृतोपयुक्तमर्थं दर्शयति ॥ सङ्गत्येति । अगुणव्यतिकर इत्येतदत्रापि सम्बध्यत इत्यभिप्रेत्य तदर्थमाह ॥ लय इति । परमेश्वरमित्यनेन पुरुषर्षभमित्येतदुक्तार्थम् । यथापूर्वं प्रजायत इत्यस्य यथापूर्वं जन्मोच्यत इति प्रतीतिवारणायार्थमाह ॥ यथापूर्वमिति ॥ पूर्वं संसारदशायां यथा प्रतियोगिकनीचोच्चभाववान्स्थितस्तथैव तत्प्रतियोगिकनीचोच्चभाववानेव प्रजायते प्रादुर्भूतो भवतीत्यर्थः । पुरुषं प्रविश्य किं तत्र तिष्ठतीत्यपेक्षायां जाते गुणव्यतिकर इत्युक्तं तत्रापेक्षितं छेदमध्याहारं च दर्शयन्व्याख्याति ॥ अगुणव्यतिकर इति । गुणानां व्यतिकरो विकारस्तच्छून्य इत्यर्थः । स क इत्यपेक्षायामुक्तम् । बहिरिति । भगवदुदराद्बहिः स्थिते श्वेतद्वीप इत्यर्थः । निर्गच्छतीत्यध्याहारः । यथापूर्वं प्रजायत इत्येतदनन्तरमस्य व्याख्यानं त्वाकाङ्क्षाक्रममनुसृत्येति ज्ञातव्यम् । यथा पूर्वं प्रजायत इत्यस्योक्तार्थत्वे प्रमाणसंवादमाह ॥ गुणव्यतिकरेति । प्रलय इत्यर्थः । मुक्त्यवस्थायामपीति यावत् । अनेनागुणव्यतिकर इत्येतद्यथापूर्वमित्यत्रापि संबध्यत इति सूचयति ॥ ततश्चायं श्लोकार्थः । यो वेदगर्भो ब्रह्मा स्थिरचराणां स्थावरजङ्गमानामाद्य आदौ भवः स ऋषिभिर्मनुष्योत्तममारभ्य सरस्वत्यन्तैर्ज्ञानिभिः सिद्धैः स्वयोग्यसाधनसम्पूर्णैः सह ॥ ११ ॥

**भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा ।**
**कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १२ ॥**

**प्रकाशिका–** भेददृष्ट्या पञ्चविधभेददर्शनेनाभिमानेन स्वयोग्यमुक्तिसाधनज्ञानेन सगुणं ज्ञाना-नन्दादिसर्वगुणपूर्णमत एव ब्रह्मशब्दवाच्यम् । तस्य सर्वगुणपूर्णत्वं कुत इत्यत उक्तम् ॥ कर्तृ-त्वादिति । जन्मादिकर्तृत्वादित्यर्थः । यथोक्तम् । जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ब्रह्मणो लक्षणं प्रोक्तमिति । पुरुषं वासुदेवं पुरुषर्षभं परमेश्वरम् ॥ १२ ॥

**स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ।**
**जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥ १३ ॥**

**प्रकाशिका–** अगुणव्यतिकरे प्रलये सङ्गत्य प्रविश्येश्वरस्य मूर्तिना नियामकेन तेन कालेन परिवर्तनेन । काले सृष्टिकाले प्राप्ते सति पुनरगुणव्यतिकरे गुणविकारशून्येऽप्राकृते श्वेतद्वीपे बहिर्जाते प्रादुर्भूते सति तत्र पुनर्निर्गच्छति ॥ १३ ॥

**ऐश्वर्यं पारमेष्ठ्यं यत् तेऽपि धर्मविनिर्मितम् ।**
**निषेव्य पुनरायान्ति गुणव्यतिकरेऽसति ॥ १४ ॥**

**तात्पर्यम्– गुणव्यतिकरे असति । प्रलये प्राप्ते पुनः परमेश्वरमायान्ति । 'ब्रह्मा देवैः परिवृतः प्रलये परमेश्वरम् । प्रविश्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदते ॥ ज्ञानधर्मफलांस्तत्र भोगान्भुक्त्वा लये पुनः । नारायणं समाविश्य ज्ञानं व्यक्तं निजं सुखम् । भुञ्जते त्वेवमेवैषां काले संसर्गनिर्गमौ । नित्यौ नित्यसुखं चैव सृष्टौ भोगास्तथोत्तमाः । यथापूर्वं हरेः सर्वगुणैर्नीचोच्चता तथा । ब्रह्मणश्च तथान्येषामन्येषां च यथापदमि'ति स्कान्दे ॥ १४ ॥**

**प्रकाशिका–** तत्र तेषामपेक्षितविषयभोगानन्तरं पुनः प्रलये परमेश्वरप्रवेशमाह । ऐश्वर्यमिति । अत्र गुणव्यतिकरे सति इत्यस्य विवक्षितं छेदमर्थं च दर्शयन् पुनरायान्तीत्यपेक्षितं कर्म पूरयति ॥ गुणव्यतिकर इति । गुणव्यतिकरेऽसतीति पदद्वयलब्धार्थप्रदर्शनम् ॥ लये प्राप्त इति । ततश्चायं श्लोकार्थः ॥ ये श्वेतद्वीपे तिष्ठन्ति ते ब्रह्मादयो मुक्ताः । धर्मनिर्मितज्ञानोत्तरकृतकर्मजनितधर्म-विनिर्मितं यत्पारमेष्ठ्यं परमेष्ठी सर्वोत्तमो भगवान् तत्प्रसादप्राप्तमैश्वर्यमपेक्षितनानाविषयाधिपत्यं तदपि निषेव्य भुक्त्वा । ज्ञानमात्रलब्धस्वरूपसुखसमुच्चयार्थोऽपिशब्दः पुनर्गुणव्यतिकरे कार्यप्रपञ्चेऽसति नश्यति सति प्रलये प्राप्ते परमेश्वरमायान्ति प्रविष्टा भविष्यन्ति । तत्र च स्वरूपसुखादिमात्रं भुंज्यत इत्यपि द्रष्टव्यम् । एवं प्रतिसर्गं श्वेतद्वीपादौ निर्गत्य तत्र स्थित्वा ज्ञानधर्मार्जितान्विषया-ननुभूय पुनः प्रतिलयं परमेश्वरं प्रविश्य तत्र ज्ञानफलं स्वरूपसुखं भुंक्त इत्याशयः । आद्यः

स्थिरचराणां य इति चतुःश्लोक्युक्तार्थे प्रमाणान्तरसंवादं दर्शयति ।। ब्रह्मेति । ब्रह्मा देवैः परिवृत इत्यनेनाद्यश्लोकतात्पर्यकथनम् । प्रलये परमेश्वरं प्रविश्येत्यनेन ससङ्गत्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदत इत्यनेन जातेऽगुणव्यतिकर इत्यस्य ज्ञानधर्मफलानित्यादिना भुञ्जत इत्यन्तेनैश्वर्यं पारमेष्ठ्य-मित्यादेर्निषेव्येत्यन्तस्यैवमेवैषां काल इत्यादिनोत्तमा इत्यन्तेन पुनरायान्ति गुणव्यतिकरे संतीत्यस्य यथापूर्वं हरेः सर्वगुणैरित्यादिना यथा पदमित्यन्तेन यथा पूर्वं प्रजायत इत्यस्य विवरणं कृतमिति ज्ञातव्यम् । ज्ञानधर्मफलानित्युक्त्या ज्ञानधर्मयोः समुच्चयेन भोगजनकत्वमिति सूचयति । ज्ञानव्यक्तमित्यनेन प्रलयकालीनस्वरूपसुखाभिव्यक्तौ ज्ञानमात्रकारणं नभोगाभिव्यक्तसुख इव धर्मोऽपीति सूचयति । काले संसर्गनिर्गमौ प्रलयकाले संसर्गः प्रवेशरूपः सृष्टिकाले निर्गम इत्यर्थः । नित्यौ । प्रवाहत इति शेषः । नित्यसुखमेव प्रलये । चशब्दस्तुशब्दार्थः । सृष्टौ तु तथा भोगा भोगा अपि ।। यथा पूर्वं हरेरित्यादेरयमर्थः ।। ।। ब्रह्मा यथा पूर्वं हरेः सकाशात्सर्वगुणैर्नीचताऽन्येषां सरस्वत्यादीनां सकाशादुच्यता यथा चान्येषां शेषादीनाम् । पूर्वं यथापदं तरतमभावोपे-तस्वपदमनतिक्रम्य सर्वगुणैर्नीचोच्चता । तथैव मुक्त्यनन्तरमपि नीचोच्चता । अस्तीति शेषः ।। १४ ।।

**अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ।**
**श्रुतानुभावं शरणं व्रज भावेन भामिनि ।। १५ ।।**

**प्रकाशिका–** उपसंहरति ।। अथेति । अतस्तस्मात्तं स्वशरणागतानां मुक्तिप्रदं भावेन भक्त्या । ।। १५ ।।

**ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ।**
**कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ।। १६ ।।**

**तात्पर्यम्– 'अत्यल्पभक्ता विष्णौ च सदा श्राद्धादिकारिणः । पितृलोकं समाविश्य स्वसन्ताने पुनःपुनः । क्षिप्रमेव प्रजायन्ते ये तु भुक्तिविवर्जिताः । अन्यसामान्यवेत्तार-स्तदन्योत्तमवेदिनः । तद्भक्तिनिन्दकाश्चैव यान्त्येव निरयं ध्रुवम् । अपि धर्मैकनियमा नात्र कार्या विचारणे'ति च ।। मुक्तियोग्यास्तु देवाद्या मानुषा यज्ञभोगिनः । मनुष्यभेदाः श्राद्धादिकृतो विद्वेषिणोऽसुरा' इति च ।। १६ ।।**

**प्रकाशिका–** एतदेव विधातुं पुनः पुनः काम्यकर्मिणो निन्दयति ।। ये त्विहेति षड्भिः । तुशब्दो मोक्षमार्गनिरतेभ्योऽत्यन्तवैलक्षण्यसूचकः । अत्र पितृलोकं व्रजन्ति त इति सर्वथा हरिभक्तिशून्या-नामपि पितृलोकप्राप्तिरुच्यत इति भाति । अतोऽत्र विवक्षितं तात्पर्यं प्रमाणेनैवाह ।। अत्यल्पभक्ता

इति । अधमप्रसादजनकभक्तिमन्त इत्यर्थः । मधुद्विषः कथायां ये विमुखास्ते दैवेन विहता इत्यस्य तात्पर्यम् ॥ भक्तिवर्जिता निरयं यान्तीति । नूनमित्यस्यार्थः ॥ ध्रुवमिति । ये चासद्ग्रन्थान् शृण्वन्ति ते नूनं दैवेन विहता इत्यस्य तात्पर्यमाह ॥ अन्यसामान्येत्यादिना । विष्णोरन्यसाम्यवेत्तार इत्यर्थः ॥ तदन्येति । विष्ण्वन्योत्तमवेदिन इत्यर्थः । ध्रुवमेव निरयं स्थिरमेव नरकम् । तम इति यावत् । अपि धर्मेति । केवलविहितानुष्ठातारोऽपीत्यर्थः । अनेन कुर्वन्त्यप्रतिषिद्धानीत्यादेस्तात्पर्यमुक्तमित्य-वगन्तव्यम् । एवं त्रैवर्गिकाणां त्रैविध्ये प्रमाणान्तरमप्याह ॥ मुक्तियोग्या इति । अधमप्रसाद-जनकभक्तिमन्त इत्यर्थे तुशब्दः । देवपदमतात्त्विकदेवपरम् । तथाच ये वस्तुतो मुक्तियोग्या अतात्विकदेवाद्याः सादियोगिनस्ते पूर्वं यदा मानुषा अभूवंस्तदाऽत्यल्पभक्तिमन्तः सन्तो यज्ञभोगिनो यज्ञादिकं कृत्वा तत्फलस्वर्गादिभोगिनो भवन्ति । अनेन पितृलोकं व्रजन्तीत्ये-तत्प्रमापितम् । ये श्राद्धादिकृतः श्राद्धादिमात्रकृतः । हरिभक्तिवर्जिता इति यावत् । ते मनुष्यभेदाः नरकगन्तृमनुष्यप्रभेदा इत्यर्थः । ये तु हरिद्वेषिणः श्राद्धादिकृतस्तेऽसुरास्तमोयोग्या इत्यर्थः । अनेन विमुखा हरिमेधस इत्यादेस्तात्पर्यमुक्तमित्यवगन्तव्यम् ॥ ततश्चायं श्लोकषट्कार्थः ॥ इह स्वर्गादावप्रतिषिद्धानि विहितानि ज्योतिष्टोमादीनि नित्यानि संध्यावन्दनादीनि ॥ १६ ॥

**रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ।**
**पितॄन् यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥**

**प्रकाशिका–** रजसा रजोगुणेन कुण्ठमनसो मोक्षविषये प्रतिबद्धमनसोऽत एव कामात्मानो विषयासक्तमनसोऽत एवाजितेन्द्रियाः पितृनित्युपलक्षणम् । देवादीनित्यापि द्रष्टव्यम् ॥ १७ ॥

**त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ।**
**कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥**

**नूनं दैवेन विहता ये त्वच्युतकथासुधाम् ।**
**हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥**

**दक्षिणेन पथार्यम्णः पितृलोकं व्रजन्ति ते ।**
**प्रजायां तु प्रजायन्ते श्मशानान्तक्रियाकृतः ॥ २० ॥**

**ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ।**
**पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥**

**प्रकाशिका–** ते त्रैवर्गिका मोक्षव्यतिरिक्तपुरुषार्थसाधनशीला अल्पभक्तिकाः । मोक्षयोग्याश्चेदर्यम्णः सूर्यस्य दक्षिणेन यथा दक्षिणायनसंज्ञेन मार्गेण पितृलोकम् । उपलक्षणमेतत् । चान्द्रमसं च लोकं व्रजन्ति । ततस्ते क्षीणसुकृताः सन्तः । भो सति मातः । पुनरिमं लोकं प्रति पतन्ति आयान्ति । दैवैर्दैवदूतैर्विभ्रंशिता उदया भोगसाधनानि येषां ते तथा । ततः प्रजायान्तु प्रजायन्ते स्वसन्ताने पुनः क्षिप्रमेव प्रजायन्ते । तत्र श्माशानान्तक्रियाकृतो गर्भाधानमारभ्यान्त्यकर्मपर्यन्तं सर्वविहितकर्मकृत इत्यर्थः । ततः पितृलोकं व्रजन्ति । ततस्ते क्षीणसुकृता इमं लोकं प्रति पतन्ति । तत्र च प्रजायान्तु प्रजायन्त इत्यावृत्त्ययोज्यम् । अत एव प्रमाणे स्वसन्ताने पुनः पुनरित्युक्तम् ।

ये त्विहासक्तमनस इत्यादिविशेषणोपात्तास्त्रैवर्गिका नित्यसंसारिणो हरिमेधसः सूर्यवर्चसः कथनीया उरवो विक्रमाः पराक्रमा यस्य तस्य मधुद्विषः कथायां विमुखा हरिभक्तिवर्जिताश्चेत्ते न्यूनं दैवेनादृष्टप्रेरकेण हरिणा विहता नरकभागिनो भवन्तीत्यर्थः । अत्यल्पहरिभक्तियुक्ताश्चेत्तेऽपि पितृलोकं व्रजन्तीत्यपि ग्राह्यम् । ये त्विहासक्तमनस इत्यादिविशेषणविशिष्टा अपि ये त्रैवर्गिकाः पुरुषा अच्युतकथासुधां हित्वा विट्भुजो विड्वराहाद्याः पुरीषमिवासद्गाथास्तानि शृण्वन्ति सेवन्ते । तेऽसुरजीवा नूनं दैवेन विहता हरिकोपेन तमोगन्तारो भवन्तीति ॥ १८-२१ ॥

**तस्मात् त्वं सर्वभावेन भजस्व परमेष्ठिनम् ।**
**तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥ २२ ॥**

**प्रकाशिका–** एवमितरपुरुषार्थकामिनां मोक्षाभावाद्भगवद्भजनमेव मोक्षाय त्वया कार्यमित्याह ॥ तस्मादिति । सर्वभावेन सर्वप्रकारेण तद्गुणाश्रयया तद्गुणश्रवणजातया ॥ २२ ॥

**वासुदेवे भगवति भक्तियोगः प्रचोदितः ।**
**जनयत्याशु वैराग्यं ज्ञानं यद् ब्रह्मदर्शनम् ॥ २३ ॥**

**प्रकाशिका–** भक्तियोग्यस्य मोक्षसाधनत्वं किं साक्षान्नेत्याह ॥ वासुदेव इति । वैराग्यम् । अतिशयितमिति शेषः । तदनन्तरं ज्ञानं ध्यानं जनयति । ब्रह्म दृश्यतेऽनेनेति ब्रह्मदर्शनं ब्रह्मापरोक्षज्ञानसाधनमित्यर्थः ॥ २३ ॥

**यदास्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः ।**
**न विगृह्णान्ति वैषम्यं प्रियमप्रियमप्युत ॥ २४ ॥**

**प्रकाशिका–** एतदेवोपपादयति ॥ यदाऽस्येति । अस्य वैराग्यादिसाधनसंपन्नस्योपासकस्य चित्तं बन्धकत्वादिना समेष्वर्थेषु शब्दादिषु इन्द्रियवृत्तिभिरिदं मम प्रियमिदं ममाप्रियम् । उतशब्द इति

शब्दार्थे । इति वैषम्यं यदा न गृह्णाति किन्तु शब्दाद्यर्थाः सर्वे बन्धकत्वेन ममाप्रिया एव । भगवानेव परमप्रिय इति । गृह्णातीति यावत् ॥ २४ ॥

**स तदैवात्मनात्मानं निःसङ्गं समदर्शिनम् ।**
**हेयोपादेयरहितमारूढपदमीक्षते ॥ २५ ॥**

**प्रकाशिका–** स तदैवात्मना स्वरूपचित्तमिश्रितेन जडचित्तेनात्मानं स्वबिंबरूपं परमात्मानं निःसङ्गमसङ्गं समदर्शनं यथार्थज्ञानिनं हेयोपादेयरहितं हेयत्वसहितोपादेयत्वरहितम् । अत्युपादेयमिति यावत् । आरूढपदं स्वचित्तारूढस्वरूपम् । स्वध्यानविषयीभूतस्वरूपमिति यावत् । आत्मानमित्युक्तो न जीव इत्युपपादनाय निःसङ्गमित्यादिविशेषणानि ॥ २५ ॥

**ज्ञानमात्रं परंब्रह्म परमात्मेश्वरः पुमान् ।**
**दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ २६ ॥**

**प्रकाशिका–** ननु दृश्यस्पृश्यादिनानाविधवस्त्वंतर्गतस्य भगवतोऽपि नानात्वादनेकेषां च परमैश्वर्यासंभवान्न तत्र निरतिशय भक्तियोगः संभवतीत्याशङ्कायां सर्वत्रावस्थितो भगवानेक एवेति सोपपत्तिकमाह ॥ ज्ञानमात्रमिति । एक एव भगवान्दृश्यादिभिर्भावैरधिष्ठानभूतैः पृथगीयते पृथक्त्वेन भ्रान्त्यैव ज्ञायत इत्यर्थः । कुतः । यतो भगवान्ज्ञानमात्रं परं ब्रह्मेत्यादिवैदिकशब्दवाच्यमात्रशब्दवाच्यः । ज्ञानपदमानन्दादेरप्युपलक्षकम् । एवं च सर्वोत्तमज्ञानान्दादिमात्रशब्दवाच्यत्वं परंब्रह्म परमात्मा परमेश्वरः परमपुरुषादिशब्दवाच्यत्वं च नानेकेषु संभवतीत्याशयः ॥ २६ ॥

**एतावानेव योगेन समग्रेणेह योगिनः ।**
**युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः ॥ २७ ॥**

**प्रकाशिका–** उक्तभक्तियोगस्य सर्वतो वैराग्यमेव साक्षात्फलमित्येतत्प्रमाणप्रसिद्ध्योपपादयति ॥ एतावानेवेति । इहाधिकारिणां मध्ये योगिनो मोक्षोपायमनुतिष्ठतः समग्रेणाधिकेन योगेनाभिमतार्थः साक्षात्फलमेतावानेव युज्यते युक्तो भवति । कुत एतदित्यत उक्तम् ॥ यदसंग इति । कृत्स्नशः साकल्येन । सर्वत्रेति यावत् । असंग आसक्तिशून्यः । पुरुषोभवतीति यत् । एतावानित्यर्थः । हीति प्रमाणप्रसिद्धिमत्र दर्शयति ॥ २७ ॥

**ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ।**
**अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणाम् ॥ २८ ॥**

**तात्पर्यम्–** **'मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम् । तन्मन्यते भौतिकं तु ये गच्छन्त्यधरं तम' इति ब्राह्मे ॥ २८ ॥**

**प्रकाशिका–** यदुक्तं ज्ञानमात्रमिति ज्ञानानन्दादिरूपत्वं भगवतस्तद्युक्तम् । यतो भगवदंशानां मत्स्यादीनां भौतिकं रूपं दृश्यत इत्यत आह ॥ ज्ञानमेकमिति । अस्य श्लोकस्यार्थाप्रतीत्या तात्पर्यं प्रमाणेनैवाह ॥ मत्स्येति । च शब्दोऽप्यर्थः । ज्ञानैकमात्रात्मकमपि वस्तुतो मुख्यज्ञानानन्दादिमात्रात्मकमपीत्यर्थः । यन्मत्स्यकूर्मादिरूपं तद्ये भौतिकं तु भौतिकमेव मन्यन्ते तेऽधरन्तमो गच्छन्ति । अतस्तज्ज्ञानं भ्रमरूपमेवेत्याशयः ॥ ततश्चायं श्लोकार्थः ॥ यदेकं ज्ञानं केवलं ज्ञानानन्दात्मकं निर्गुणं सत्त्वादिगुणविकारशून्यं ब्रह्म गुणपूर्णं मत्स्यकूर्मादिरूपं तच्छब्दादिधर्मिणां शब्दादिविषयासक्तानां पुंसां पराचीनैर्बहिर्मुखैरिन्द्रियैरर्थरूपेण भौतिकत्वेन भ्रान्त्याऽवभाति । अवस्तुतोऽतो ज्ञानमात्रमित्युक्तमिति भावः ॥ २८ ॥

**यथा महानहङ्कार स्त्रिवृत् पञ्चविधः स्वराट् ।**
**एकादशविधस्तस्य वपुरण्डं जगद् यतः ॥ २९ ॥**

**तात्पर्यम्–** **'एकादशेन्द्रियात्मा च पञ्चभूतात्मकस्तथा । सर्वाभिमानी भगवान्स्वराडिन्द्रः पुरन्दरः । इदमण्डं जगत्सर्वं शक्रदेहं विदुर्बुधाः । तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिरि'ति वामने ॥ यथैतान्पश्यन्ति तद्वदेव ज्ञानात्मकं मत्स्यादिरूपं पश्यन्त्यज्ञाः ॥ २९ ॥**

**प्रकाशिका–** ननु कथमेवं विधा भ्रान्तिः पुरुषाणामित्यतो दृष्टान्तमुखेन तदुपपादयति ॥ यथेति । अस्याप्रतीत्या तात्पर्यं वक्तुं तावत्प्रमाणं पठति । एकादशेति । एकादशविध इत्यस्य तात्पर्यम् ॥ एकादशेन्द्रियात्मेति । पञ्चविध इत्यस्य व्याख्यानम् ॥ पञ्चभूतात्मक इति । तथा शब्दोऽनुक्तसमुच्चायकः । अण्डात्मकस्तत्स्थजगदात्मकश्चेत्यर्थः । अज्ञैर्भ्रान्त्या । ज्ञायत इति शेषः । भ्रान्तित्वोपपादनायोक्तं सर्वेषामिन्द्रियाणां पञ्चभूतानां चाभिमानीति । तथा च तेभ्यो भिन्न इति भावः । स्वराडित्यस्येन्द्र इति व्याख्यानम् । इतरेन्द्रव्यावृत्त्यर्थं पुरन्दर इति । अण्डात्मकजगदात्मकश्चेत्यनयोरपि भ्रान्तित्वोपपादनायाह । इदमण्डं सर्वं तत्स्थं जगच्च शक्रदेहं शक्राभिमन्यमानं विदुरिति । तथा च ताभ्यामपि स भिन्न इत्याशयः । अनेन तस्य वपुरण्डं जगद्यत इत्येतदुक्तार्थम् । स्वराडित्यस्य महानित्यादिनाऽपि सामानाधिकरण्याय तस्याभिधेयान्तरमप्यभिप्रेत्याह ॥ तत्पतिरिति । तस्येन्द्रस्य पतिरित्यर्थः । त्रिवृदित्यस्यार्थः ॥ त्रिगुण इति । सत्त्वाद्यात्मकवैकारिकादिरूपेण त्रिविध इत्यर्थः । तस्य रुद्रस्य च ब्रह्मा । पतिरित्यनुवर्तते । तथा च स्वराट्शब्दवाच्येन्द्राधिपतित्वाद्रुद्रब्रह्मणोरपि स्वराट्शब्दवाच्यत्वमस्तीति भावः । एवं दार्ष्टान्तिकभूतो हरिरपि

स्वराट्शब्दवाच्य इत्याशयेनाह ॥ तत इति । ततस्तस्य ब्रह्मणो हरिः पतिरित्यर्थः । तथा च हरिरपि स्वराट्शब्दवाच्य इत्याशयः । एवं प्रमाणमुदाहृत्य दृष्टान्तदार्ष्टन्तिकभावस्यास्फुटत्वादिदानीं स्ववाक्येन श्लोकतात्पर्यं दर्शयति ॥ यथैतानिति । एतान् ब्रह्मरुद्रेन्द्रान् स्वाभिमन्यमानमहदादिभिन्नानपि तदात्मकत्वेन पश्यन्ति तद्वदेव तथैव ज्ञानात्मकम् । वस्तुतोऽप्राकृतमिति यावत् । गुणमयं प्राकृतम् ॥ ततश्चायं श्लोकार्थः ॥ यथा स्वराट् ब्रह्मा महान्महत्तत्त्वात्मक इति यथा वा स्वराट् रुद्रस्त्रिवृत्त्रिविधोऽहंरूपस्त्रिविधाहङ्कारात्मक इति । यथा च स्वराडिन्द्रः पञ्चविधः पञ्चभूतात्मक एकादशविध एकादशेन्द्रियात्मकोंऽडात्मको जगदात्मकश्चेति भ्रान्त्या शब्दादिधर्मिणामज्ञानामवभाति । कुत एतेषां ज्ञानानां भ्रान्तित्वमित्यत उक्तम् ॥ तस्येति । तस्येन्द्रस्याण्डं तत्स्थं जगच्च यतो वपुरभिमन्यमानम् । ततो भिन्नमिति प्रमाणप्रसिद्धमिति यावत् । इदमुपलक्षणम् । तस्य ब्रह्मणो महान्यतो वपुस्तस्य रुद्रस्याहङ्कारो यतो वपुस्तस्येन्द्रस्येन्द्रियादिकमपि यतो वपुरित्यपि ग्राह्यम् । तथा स्वराट् मत्स्यादिरूपी हरिर्यतः केवलज्ञानरूपं निर्गुणं ब्रह्म तदात्मकत्वेन । पूर्णमदः इत्यादिश्रुत्याऽपि सिद्धः । अत भ्रान्त्यैवार्थरूपेण जडदेहात्मनाऽज्ञानामवभातीति ॥ २९ ॥

**एतद् वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ।**
**समाहितात्मा निःसङ्गो विरक्तः परिपश्यति ॥ ३० ॥**

**प्रकाशिका–** मत्स्यादिरूपं परं ब्रह्म शब्दादिधर्मिणो चेदन्यथा भाति तर्हि कस्तत्सम्यक् पश्यतीत्यपेक्षायामाह ॥ एतद्वेति । एतन्मत्स्यादिरूपं परं ब्रह्म श्रद्धादिसाधनसंपन्न एवाधिकारी परिपश्यति ज्ञानानन्दात्मकमेवेदं न प्राकृतमिति पश्यतीत्यर्थः ॥ ३० ॥

**इत्येतत् कथितं गुर्विज्ञानं तद् ब्रह्मदर्शनम् ।**
**येनैव बुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥**

**प्रकाशिका–** उपसंहरति ॥ इत्येतदिति । हे गुर्वि पूज्ये मातः । एतत्श्रुत्यादिप्रसिद्धम् । ब्रह्म दर्शयतीति ब्रह्मदर्शनं परतत्त्वविषयकम् । प्रकृतेश्चेतनाया अचेतनायाश्च पुरुषस्य ब्रह्मादिजीवसमूहस्य च तत्त्वम् । अनेन परतत्त्वविषयकत्वमुक्तमिति ज्ञातव्यम् । तथाच परापरतत्त्वविषयकं ज्ञानं कथितमित्युक्तम् ॥ ३१ ॥

**ज्ञानं योगाश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।**
**द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥**

**तात्पर्यम्– 'ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते । तयोरेकतरेणापि विष्णुगेनोभयं विना । एवमप्येतयोरेकभावेऽन्यनियतेर्ध्रुवम् । एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनमि'ति हरिवंशेषु ॥ ३२ ॥ इति तृतीयतात्पर्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥**

**प्रकाशिका–** अपरतत्त्वविषयमपि ज्ञानम् । अन्ततो मद्विषयकं चेन्मुक्तिसाधनमित्याह ॥ ज्ञानमिति । ज्ञानं ज्ञानरूपयोगोऽपि मन्निष्ठो मद्विषयको नैर्गुण्यो निर्गुणमुक्तिसंबन्धी । तत्साधक इति यावत् । नन्वेवं भक्त्युपदेशो व्यर्थ इत्यत उक्तम् ॥ भक्तिलक्षण इति । भक्तिरूपो योगश्च नैर्गुण्यो भक्तिसहितमेव ज्ञानं भक्तिसाधनं न केवलमतो नोक्तदोष इत्याशयः । ननु निर्विशेषब्रह्मज्ञानमेव परं मुक्तिसाधनं भक्तिस्तु भगवच्छब्दवाच्यसगुणविषया न तत्साधनमिति केचिदास्थितास्तान्प्रत्याह ॥ द्वयोरपीति । माहात्म्यज्ञानसुदृढसर्वतोऽधिकस्नेहयोरित्यर्थः । अर्थो विषय एक एव । स क इत्यत उक्तम् ॥ भगवच्छब्देति । भगवच्छब्दो लक्षणं ज्ञापको यस्य भगवच्छब्दवाच्य इत्यर्थः । तथाच निर्विशेषज्ञानं परं मुक्तिसाधनमित्येतदप्रामाणिकमित्याशयः । नन्वेवं तमेवं विद्वानमृत इत्यादौ केवलज्ञानस्य भक्त्या त्वनन्ययेत्यादौ केवलभक्तेश्च कथं मोक्षसाधनत्वमुच्यते । कथं चोभयं विना अपामसोमममृता अभूमेत्यादौ कर्मादेरित्याशङ्कां प्रमाणेनैव परिहरति ॥ ज्ञानभक्तीति । ज्ञानभक्ती विना तयोर्ज्ञानभक्त्योर्मध्ये विष्णुगेनैकतरेणैव कस्यापि मुक्तिर्नैव विद्यत इत्यन्वयः । तथोभयं विना कर्मादिनाऽपि मुक्तिः कस्यापि न विद्यत इत्यर्थः । नन्वेवं तयोरेकतरेणापि मुक्तिर्भवतीत्युदाहृतवचनानां का गतिरित्यत आह ॥ एवमपीति । उभयोरावश्यकत्वेऽपीत्यर्थः । तयोर्ज्ञानभक्त्योर्मध्ये एकस्य भावेऽन्यस्यान्यसत्वस्य नियतेर्नियमात् एकेनापि मुक्तिर्भवतीति वचनम् उपपद्यत इति शेषः । अपरोक्षज्ञानाभावे मोक्षजनकभक्तेरसंभवात् । भक्त्यभावेऽपरोक्षज्ञानासंभवाच्चैकतरस्यान्याविनाभावो ध्रुव इति द्रष्टव्यम् । अपामसोमेत्यादिश्रुतिविरोधं परिहरति ॥ तदर्थमिति । भक्तिज्ञानरूपोभयार्थमित्यर्थः । अन्यसाधनं कर्मादिकम् । उच्यत इति शेषः । तथाच तद्वचनं ज्ञानादिद्वारा कर्मणां मोक्षसाधनत्वपरं न साक्षादतो न विरोध इत्याशयः ॥ ३२ ॥

**यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।**
**एको नानेयते तद्वद् भगवाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥**

**प्रकाशिका–** ननु शास्त्रेषु मुक्तिगतनानाविधफलसाधनतयाऽनेके विलक्षणगुणा उपास्या उक्तास्तथाविधफलसंपादकविलक्षणानेकगुणवत्त्वं च नैकस्य भगवतः संभवति । तथा च भगवज्ज्ञानमेव मोक्षसाधनमित्युक्तमित्यत एकस्यापि तथा गुणवत्वमुपपद्यत इति दृष्टान्तमुखेनोपपादयति ॥ यथेति ।

पृथक् चारैः पृथक् चारश्चरणं वर्तनं येषां तानि तथा तैर्भिन्नमार्गैरिन्द्रियैर्बहूनां रूपरसादीनामाश्रयो गुडादिरेक एवार्थश्चक्षुषा रक्त इति त्वचाऽनुष्णाशीत इति रसनेन मधुर इत्यादिरूपेण नानेयते ज्ञायते तद्वद्भगवानपि शास्त्रवर्त्मभिर्मौक्तनानाविधफलसंपादकगुणविधायकशास्त्रमार्गैरेक एव नाना तत्तद्गुण-विशिष्टतयेयत इति न कोऽपि विरोधः ॥ ३३ ॥

**क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः ।**
**आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥ ३४ ॥**

**योगेन विविधांशेन भक्तियोगेन चैव हि ।**
**धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥**

**आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ।**
**ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६ ॥**

**प्रकाशिका–** यदुक्तं भगवज्ज्ञानार्थमेव कर्मादिकमुच्यत इति तत्प्रपञ्चयन् अपरोक्षज्ञानसाधनानि दर्शयति ॥ क्रियेति त्रिभिः । क्रियया नित्यनैमित्तिकादिरूपया । दर्शनं भगवत्प्रतिमानाम् । आत्मा मनः कर्मणां काम्यानां निषिद्धानां च संन्यासेन त्यागेन । योगेन ध्यानरूपेण । एव शब्दस्येत्यत एवेति संबन्धः । धर्मेणादृष्टविशेषेण पूर्वोक्तक्रियाजनितेन तस्योभयचिन्हवत्त्वमेव दर्शयति ॥ य इति । प्रवृत्तिमान्मोक्षमार्गे प्रवृत्तिजनको निवृत्तिमान्संसारे वैराग्यजनक आत्मतत्त्वं परमात्मनो याथात्म्यं तदवबोधेन श्रवणमननरूपेणेयतेऽपरोक्षेण ज्ञायते स गुणोऽधिकार्यपेक्षितफलसंपादकगुणपूर्णो निर्गुणः सत्त्वादिगुणशून्यः स्वं स्वीयं भक्तं कृपया पश्यतीति स्वदृक् ॥ ३४-३६ ॥

**प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ।**
**कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ॥ ३७ ॥**

**प्रकाशिका–** ज्ञानयोगमुपसंहृत्य तस्य भक्तिसाहित्यादिकं तत्साधनानि चोक्त्वेदानीं भक्तियो-गादिकमुपसंहरति ॥ प्रावोचमित्यादि द्वाभ्याम् । चतुर्विधं त्रिगुणनिर्गुणभेदेनान्तर्धावति । उत्पत्ति-मरणादिकं करोति ॥ ३७ ॥

**जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ।**
**याः स्वयं प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥**

**प्रकाशिका–** आत्मा जीव आत्मनः परमात्मनो गतिं स्थितिमात्मनः स्वस्य गतिं गम्यमिति वा ॥ ३८ ॥

नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित् ।
न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥

प्रकाशिका— एतदुपदेशानधिकारिण आह ॥ नैतदिति । खलः परोपद्रवकर्ता । स्तब्धो गुरुनियोगमकुर्वाणः । भिन्नोऽवैष्णवसमयनिष्ठो धर्मध्वजो डांभिको ॥ ३९ ॥

न लोलुपायोपदिशेन्न गृहारूढचेतसे ।
नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥

प्रकाशिका— लोलुपो विषयाभिलाषी ॥ ४० ॥

श्रद्दधानाय भक्ताय विनीतायानसूयवे ।
भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥

प्रकाशिका— अधिकारिण आह ॥ श्रद्दधानायेति द्वाभ्याम् ॥ ४१ ॥

बहिर्जातविरागाय शान्तचित्ताय दीयते ।
निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥

य इदं श्रृणुयादम्ब श्रद्धया पुरुषः सुकृत् ।
यो वाभिधत्ते मच्चित्तः स ह्येति पदवीं च मे ॥ ४३ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ।

प्रकाशिका— एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिः किम्वनुष्ठातुरित्यभिप्रेत्याह ॥ य इदमिति ॥ ४३ ॥ इति श्रीभागवतटिप्पण्यां त्रयस्त्रिंशोऽध्यायः ॥ ३-३३ ॥

## अथ चतुस्त्रिंशोऽध्यायः

मैत्रेय उवाच—
एवं निशम्य कपिलस्य वचो जनित्री
सा कर्दमस्य दयिता किल देवहूतिः ।
विस्रस्तमोहपटला तमभिप्रणम्य
तुष्टाव तत्त्वविषयाखिलसिद्धभूमिम् ॥ १ ॥

**प्रकाशिका–** विस्रस्तमुन्मीलितं मोहरूपमज्ञानमिथ्याज्ञानाख्यं पटलमावरणं यस्याः सा तथा । तत्त्वविषये येऽखिलाः सिद्धा ज्ञानिनः साङ्ख्याचार्यास्तेषां भूमिमाश्रयम् ।। १ ।।

**देवहूतिरिवाच–**

**अथाप्ययान्ते सलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ।**
**गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ।। २ ।।**

**स एव विश्वस्य भवान् विधत्ते गुणप्रवाहेषु विभक्तवीर्यः ।**
**सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ।। ३ ।।**

**तात्पर्यम्– भूतेन्द्रियार्थात्ममयं तेभ्यः प्रधानम् । 'त्वं प्रधानमयो देव प्रधानादधिको यत' इति वाराहे ।। २ ।।**

**प्रकाशिका–** अथशब्दो मङ्गलार्थः । स्तोत्रारंभार्थो वा । भूतेन्द्रियार्थात्ममयमित्येतद्भूताद्यात्मकमिति प्रतीतिवारणाय व्याख्याति ।। भूतेति । तथाच भूतान्याकाशादीनीन्द्रियाणि श्रोत्रादीनि । अर्थाः शब्दादय आत्मा मनः । अत्र भूतादिशब्देन तदभिमानिनो देवा ग्राह्याः । एतेभ्यो मयं प्रधानमित्यर्थः । मयं प्रधानमुद्दिष्टमिति वचनादिति भावः । अत्र प्रमाणसंवादमाह ।। त्वमिति । अत्र प्रधानशब्दद्वयं तत्कार्यभूताद्युपलक्षकमतो न प्रकृतासंगतिरिति ध्येयम् । मूले यज्जठराब्जजातो यन्नाभिस्थकमलजातो ब्रह्मा स्वयं साक्षाद्यस्य ते तत्ते वपुर्दध्यौ । स एव तादृशवपुष्मानेव । योभवान् विश्वस्य सर्गादि विधत्ते न तु तव सर्गादिकर्ता कश्चिदन्योऽस्ति सत्वं मे जठरेण कथं भृत इति त्रयाणामन्वयः । कथं भूतं वपुः । अप्ययान्ते प्रलयान्ते सलिले शयानं भूतेन्द्रियार्थात्ममयं भूताद्यभिमानिसर्वदेवोत्तमम् । गुणानां कार्याणां प्रवाहो यस्मिन्सन्निर्दुष्टाशेषबीजं सर्वजगद्व्यञ्जकम् । स एवेत्येवकारेण भगवद्देहानां भेदो नास्तीति सूचयति । गुणप्रवाहेषु रजोगुणादिकार्यसृष्ट्यादिप्रवाहेषु विभक्तं ब्रह्मादिरूपेण पृथक् कृतम् । वीर्यं जगत्सर्जनादिरूपं माहात्म्यं यस्य स तथा । सृष्ट्यादि सृष्ट्याद्यष्टकम् । अनीहः प्रयोजनेच्छारहितः क्लिष्टचेष्टारहित इति वा । अवितथाभिसन्धिः सत्यसङ्कल्प आत्मेश्वरः सकलचेतनस्वाम्यतर्क्यसहस्रशक्तिरचिन्त्यानन्त्यशक्तिः । अनेन विचित्रानेककार्यकर्तुर्न श्रमचिन्तादिदोषप्रसक्तिरिति सूचयति ।। २,३ ।।

**स त्वं भृतो जठरेण नाथ कथं नु यस्योदर एतदासीत् ।**
**विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः ।। ४ ।।**

**प्रकाशिका–** हे नाथ । यस्य तवोदरे एतद्विश्वमासीदस्ति सत्वं नु इदानीं कथं मे मया जठरेण भृतः । अल्पमात्रमपि भारं वोढुमसमर्थाऽहं सर्वजगदाधारं त्वां कथमवहमतस्त्वमतर्क्य-सहस्रशक्तिरसीत्याशयः । यस्त्वं युगान्ते प्रलयेऽङ्घ्रिं पदाङ्गुष्ठं पिबतीत्यङ्घ्रिपा नो माययेच्छया शिशुः सन् एक एव वटपत्रे शेते । स्मेति प्रमाणप्रसिद्धिमत्राह । स त्वं कथं मे जठरेण भृतो न कथमपि । यथा प्रलये इच्छयैव शिशुरूपं धृतमेवमिदानीमपीच्छयैव शिशुस्वरूपं मज्जठरे त्वया धृतमतो न मत्पुत्रस्त्वमसीत्याशयः ॥ ४ ॥

**त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ।**
**यथावतारास्तव सूकरादयस्तथायमप्यात्मपथोपलब्धये ॥ ५ ॥**

**तात्पर्यम्– देहतन्त्रः देहप्रकाशः । 'ततिः प्रकाशो विस्तारस्तन्त्रं चेत्यभिधीयत' इति तन्त्र-मालायाम् ॥ ५ ॥**

**प्रकाशिका–** एतदेव पुनः स्पष्टयति ॥ त्वमिति । अत्र देहतन्त्र इत्यस्य देहाधीन इत्यन्यथा-प्रतीतिवारणायार्थमाह ॥ देहतंत्र इति । तन्त्रशब्दस्य प्रकाशार्थत्वे प्रमाणमाह ॥ ततिरिति । प्रकाशस्ततिरित्यादिशब्दैरुच्यत इत्यर्थः । त्वं देहतन्त्रः पूर्वं विद्यमानस्य देहस्य प्रकाशो व्यक्तिर्यस्य सोऽसि । न तु जीववदविद्यमानदेहोत्पत्तिमांस्त्वमित्याशयः । परिपूर्णस्य तव किमर्थमवतार इत्या-शङ्कायां प्रयोजनार्थमिति दृष्टान्तमुखेनाह ॥ यथेति । यथा तव सूकरादयोऽवताराः पाप्मनां पापिष्ठानां हिरण्याक्षादीनां प्रशमाय नाशनाय निदेशभाजां स्वाज्ञाकारिणां ब्रह्मादीनां विभूतये च कृतास्तथाऽयमप्यवतार आत्मयथोपलब्धये निदेशकारिणां परमात्मज्ञानमार्गप्रदर्शनाय कृत इति ॥५॥

**यन्नामधेयश्रवणानुकीर्तनाद् यत्प्रह्वणाद् यत्स्मरणादपि क्वचित् ।**
**श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन् नु दर्शनात् ॥ ६ ॥**

**प्रकाशिका–** त्वद्दर्शनादिनाऽहं कृतार्थाऽस्मीति कैमुत्येनाह ॥ यन्नामधेयेति । श्वानमत्तीति श्वादः श्वपचः सवनाय सोमलतावाहनाय यज्ञकारणायेत्यर्थः । कल्पते समर्थो भवति । पूज्यो भवतीति भावः ॥ ६ ॥

**अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।**
**तेपुस्तपस्ते जुहुवुः सुराद्यान् ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ ७ ॥**

**प्रकाशिका–** तदेवोपपादयति ॥ अहो बतेति । अतोऽवैष्णवसोमयाजिनो यस्य त्वद्भक्तस्य श्वपचस्य जिह्वाग्रे तुभ्यं तव नाम यद्यस्माद्वर्ततेऽतो गरीयानिति वा । ननु तप आदिभिः

शुद्धान्तःकरणानामेव भक्तानां नामसङ्कीर्तनादिकं भवति । अतः कथं तदनधिकारिणः श्वपचस्य नामसङ्कीर्तनादिकमित्यत आह ॥ तेपुरिति । ये नाम गृणन्ति ते पूर्वजन्मनि तप आदि कृतवन्त इति ज्ञायत इत्यर्थः । यद्वा । गरीयस्त्वे तप आदिकं प्रयोजकम् । न च श्वपचस्य तदस्ति । अतः कथं तस्य नामसङ्कीर्तनमात्रेण गरीयस्त्वमित्यतस्तप आदिजनितपुण्यवन्तोऽपि त एवेत्याह ॥ तेपुरिति । ते त एव तपस्तेपुः कृतवन्तो जुहुवुर्होमं कृतवन्तः सस्नुस्तीर्थेषु स्नाता आर्यास्त एव सदाचारा ब्रह्म वेदमनूचुरधीतवन्तस्त्वन्नामकीर्तनेनैव तत्फलं तैर्लब्धमित्याशयः ॥ ७ ॥

**तं त्वाद्धाहं ब्रह्म परं पुमांसं प्रत्यक् स्रोतस्यात्मनि संविभाव्यम् ।**
**स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम् ॥ ८ ॥**

**प्रकाशिका–** परब्रह्मरूपत्वं कपिलस्य स्पष्टयन्ती स्तुतिमुपसंहरति ॥ तं त्वेति । प्रत्यक् स्रोतसि विषयसञ्चरणमुक्त्वा प्रत्यक् स्यन्दमाने आत्मनि मनसि संविभाव्यं सम्यग्ध्येयं स्वतेजसा स्वसामर्थ्येनैव ध्वस्तो नित्यं निरस्तो गुणप्रवाहः संसारो यस्य तं वेदगर्भं वेदमहातात्पर्यविषयं वन्दे स्तौमि नमामि च ॥ ८ ॥

**मैत्रेय उवाच–**
**ईडितो भगवानेवं कपिलाख्यः परः पुमान् ।**
**वाचाऽविक्लवयेत्याह मातरं मातृवत्सलः ॥ ९ ॥**

**प्रकाशिका–** अविक्लवया गंभीरया मातृवत्सलो मातरि स्वभक्तिप्रयुक्तवात्सल्यवानित्यर्थः ॥९॥

**भगवानुवाच–**
**मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ।**
**आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥**

**प्रकाशिका–** आस्थितेनानुष्ठितेन परां काष्ठां यावत्स्वानन्दस्याभिव्यक्तिमवरोत्स्यसि प्राप्स्यसि । ॥ १० ॥

**श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद् ब्रह्मवादिभिः ।**
**येन मामभयं यायान्मृत्युमृच्छन्त्यतद्विदः ॥ ११ ॥**

**प्रकाशिका–** मह्यं मम तन्मतं न विदन्तीत्यतद्विदो मृत्युं संसारमृच्छन्ति प्राप्नुवन्ति ॥ ११ ॥

मैत्रेय उवाच–

इति प्रदर्श्य भगवानुशतीमात्मनो गतिम् ।
स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२ ॥

**प्रकाशिका–** उशतीमभीष्टामनुमत आज्ञप्तः ॥ १२ ॥

सा चापि तनयोक्तेन योगादेशेन योगयुक् ।
तस्मिन्नाश्रम आसीना सरस्वत्याः समाहिता ॥ १३ ॥

**प्रकाशिका–** योगादेशेन योगोपदेशेन निमित्तेन योगयुक्ता भक्त्यादिरूपयोगयुक्ता सती सरस्वत्याः संबन्धिनि तस्मिन्नाश्रमे आसीना समाहिताऽसंप्रज्ञातसमाधियुता बभूव ॥ १३ ॥

अभीक्ष्णावगाहकपिशान् जटिलान् कुटिलालकान् ।
आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥

**प्रकाशिका–** एतदेव स्नानतपोवैराग्यादिसाधनोक्तिपूर्वकं विशदयति ॥ अभीक्ष्णेत्यादि षोडशभिः। अभीक्ष्णं त्रिषवणमवगाहनं स्नानं तेन कपिशान्स्वत एव कुटिलान् अलकान्केशान् आत्मानं देहं चीरिणं चीरधारिणं कृशं च बिभ्रती सती ॥ १४ ॥

प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् ।
स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥

**प्रकाशिका–** प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृंभितमतिशयितम् । स्वगार्हस्थ्यं हित्वा । अपत्यविरहातुरा सती वदनं किञ्चिच्चकारेत्युत्तरेणान्वयः । कथंभूतं गार्हस्थ्यम् । अनौपम्यं नोपमाया योग्यं तदनौपम्यं सदृशं न विद्यते औपम्यं यस्य स तथा । वैमानिकैर्देवैः ॥ १५ ॥

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥

**प्रकाशिका–** पुनः कथंभूतम् । यत्र गार्हस्थ्ये पयःफेननिभाः क्षीरफेननिभा मृदुशुभ्राः शय्याः । सन्तीति यावत् । दान्ता गजदन्तनिर्मिता रुक्मपरिच्छदाः स्वर्णपरिकरोपेता मञ्चका आसनानि पीठादीनि सुस्पर्शानि सुखकरस्पर्शान्यास्तरणानि येषु ॥ १६ ॥

स्वच्छस्फटिककुड्येषु महामारकतेषु च ।
रत्नदीपार्चिषो भान्ति ललनारत्नसंयुताः ॥ १७ ॥

**प्रकाशिका–** महामरकतेषु कुड्येषु रत्नरूपदीपार्चिष्वित्यर्थः । ललनानां स्त्रीणामाभरणस्थानानि यानि रत्नानि तैः संयुताः ॥ १७ ॥

गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ।
कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥

**प्रकाशिका–** बहुभिरमरद्रुमै रम्यमुद्यानं यत्र भाति ॥ १८ ॥

यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ।
वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥

**प्रकाशिका–** यत्र गृहोद्याने वाप्यां प्रविष्टं कर्दमेनोपलालितमात्मानं विबुधानुचरा जगुरित्यन्वयः । ॥ १९ ॥

हित्वा तदीप्सिततमप्याखण्डलयोषिताम् ।
किञ्चिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥

**प्रकाशिका–** पुनः कथं भूतं गार्हस्थ्यम् । आखण्डलयोषितामिन्द्रस्त्रीणामपीप्सिततमं प्राप्तुमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा वदनं किञ्चिच्चकार ॥ २० ॥

वनं प्रव्रजिते पत्यावपत्यविरहातुरा ।
ज्ञाततत्त्वाप्यभून्नष्टवत्सा गौरिव वत्सला ॥ २१ ॥

**प्रकाशिका–** वत्से नष्टे वत्सला गौरिव विरहातुराऽभूदित्यन्वयः ॥ २१ ॥

तमेव ध्यायती देवमपत्यं कपिलं हरिम् ।
बभूवाविरतोत्साहा निःस्पृहा तादृशे गृहे ॥ २२ ॥

ध्यायती भगवद्रूपं यदाह ध्यानगोचरम् ।
सुतं प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥

**प्रकाशिका–** समस्तचिन्ता सङ्कुचितचिन्ता व्यस्तचिन्ता विस्तृतचिन्ता । समग्रचिन्तेति यावत् । ॥ २३ ॥

**भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ।**
**युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥**

**प्रकाशिका–** तथा भक्तिप्रवाहरूपयोगेन बलीयसा दृढेन वैराग्येण च युक्ता श्रवणाद्यनुष्ठानजातेन ब्रह्महेतुना ब्रह्मप्रसादजातेन । ब्रह्महेतिनेति पाठे ब्रह्मवशीकरणायुधरूपेण ज्ञानेनेदमित्थमेवेति निश्चयरूपेण निमित्तेन ॥ २४ ॥

**विशुद्धेन तदात्मानमात्मना विश्वतोमुखम् ।**
**स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥**

**प्रकाशिका–** विशुद्धेनैकाग्र्येणात्मना मनसाऽऽत्मानं स्वबिंबरूपं विश्वतोमुखं सर्वत्रव्याप्तं स्वानुभूत्या स्वरूपप्रज्ञया तिरोभूतं दूरनिरस्तं मायागुणानां सत्त्वादीनां विशेषणं देहबन्धादिरूपकार्यं यस्य तं भगवद्रूपम् ॥ २५ ॥

**ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ।**
**निवृत्तजीवोपाधित्वात् क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥**

**नित्यरूढसमाधित्वात् परावृत्तगुणभ्रमा ।**
**न सस्मार तदात्मानं स्वप्नदृष्टमिवोत्थितः ॥ २७ ॥**

**तात्पर्यम्– 'जीवोपाधिप्रभृतयः आमुक्तेः सर्वदेहिनाम् । नियमात्सन्त्यभावस्तु निष्फलत्वादुदीर्यत' इति वाराहे ॥ २७ ॥ इति श्रीमद्भागवततृतीयस्कन्धतात्पर्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते चतुस्त्रिंशोऽध्यायः समाप्तः ॥ ३४ ॥ तृतीयस्कन्धः सम्पूर्णः ॥**

**प्रकाशिका–** भगवद्रूपं सुतं ध्यायत्यापरोक्ष्येण पश्यन्ती आत्मसंश्रये स्वात्माधारे भगवति ब्रह्मणि अवस्थितमतिरचलचित्ता यदा तदाऽऽत्मानं देहं न सस्मार । असंप्रज्ञातसमाधिस्था बभूवेत्याशयः उत्थितो जाग्रदवस्थां प्राप्तः स्वप्नदृष्टमात्मानं देहं यथा न स्मरति तथेत्यर्थः । पुनः कथंभूतेत्यपेक्षायामुक्तम् ॥ निवृत्तजीवोपाधित्वादिति । अत्र जीवोपाधेर्लिङ्गशरीरप्रभृतिकस्य सर्वथा-निवृत्तिरुच्यत इति प्रतीतिवारणाय विवक्षिततात्पर्यं प्रमाणेनैवाह ॥ जीवोपाधिप्रभृतय इति । जीवस्य बाह्योपाधिर्लिङ्गशरीरम् । प्रभृतिशब्देन कामकर्मादिसङ्ग्रहः । आमुक्तेर्लिङ्गशरीरभङ्गरूपमोक्षपर्यन्तम् । तर्ह्यभाववचनानां का गतिरित्यत उक्तम् ॥ अभावस्त्विति । तुशब्दोऽवधारणे । निष्फलत्वादेव दग्धपटादिवदकिञ्चित्करादेवाभाव उदीर्यत इत्यर्थः । ततश्च निवृत्तजीवोपाधित्वादकिञ्चित्कर-

लिङ्गशरीररूपबाह्योपाधित्वात् । निवृत्तजीवभावत्वादिति पाठेऽपि जीवं भावयत्युत्पादयतीति व्युत्पत्त्या जीवभावशब्दो लिङ्गशरीराद्युपाधिपर इति ज्ञेयम् । वीतक्लेशा विगतदुःखा । आत्मनिर्वृतिः प्राप्तस्वरूपानन्दा । नित्यारूढोपलब्धप्रतिष्ठः समाधिर्यस्य स तथा तस्य भावस्तत्वं तस्मात् । परावृत्तः शान्तो गुणेषु शब्दादिषु विषयेषु भ्रमः सुखसाधनत्वभ्रमो यस्याः सा तथा । एतादृश्यात्मानं न सस्मारेत्याशयः ॥ २६,२७ ॥

**तद्देहःपरतः पोषोऽप्यकृशश्चाध्यसम्भवात् ।**
**बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥**

**प्रकाशिका–** तस्या देहस्तद्देहः परतः पराभिः दासीभिराध्यसंभवान्मनोग्लान्यसंभवादकृशः । अकृत इति पाठेऽभ्यङ्गस्नानादिसंस्कारशून्य इत्यर्थः ॥ २८ ॥

**स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् ।**
**दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥**

**प्रकाशिका–** आत्मानं न सस्मारेत्युक्तमेव विवृणोति ॥ स्वांगमिति । तपोयोगमयं तत्प्रचुरम् । न बुबुध इत्यत्र हेतुः ॥ वासुदेवेति ॥ २९ ॥

**एवं सा कपिलोक्तेन मार्गेणाविरहं परम् ।**
**आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ॥ ३० ॥**

**प्रकाशिका–** अविरतमपरिच्छिन्नं निर्वाणं प्राकृतशरीररहितम् । हेत्यास्वादने ॥ ३० ॥

**तद् वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ।**
**नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥**

**प्रकाशिका–** तद्बिन्दुसरोनामकम् । हे वीर विदुर । उपेयुषी प्राप्ता ॥ ३१ ॥

**तस्यास्तद् योगविधुतमाशु मर्त्यमभूत् सरित् ।**
**स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२ ॥**

**प्रकाशिका–** योगविधुतं योगमार्गेण त्यक्तं तन्मर्त्यं शरीरं सरिन्नद्यभून्नद्याकारेण परिणताऽभूदित्यर्थः । स्रोतसां नदीनां प्रवरा श्रेष्ठा ॥ ३२ ॥

**कपिलोऽपि महायोगी भगवान् पितुराश्रमात् ।**
**मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥**

**प्रकाशिका–** पूर्वं कपिलो गत इत्युक्तम् । स कुत्र गत इत्यपेक्षायां तद्गमनं विशदयति ॥ कपिलोऽपीति । प्रागुदीचीमैशानीं ॥ ३३ ॥

**सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः ।**
**स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥**

**प्रकाशिका–** दत्तेऽर्हणनिकेतने पूजानिवासस्थाने यस्मै स तथा ॥ ३४ ॥

**आस्ते योगं समाख्याय साङ्ख्याचार्यैरभिष्टुतः ।**
**त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥**

**प्रकाशिका–** योगं स्वध्यानरूपमुपशान्त्यै मङ्गलाय समाहितः स्वस्थचित्तः ॥ ३५ ॥

**मैत्रेय उवाच–**
**एतन्निगदितं तात यत् पृष्टोऽहं त्वयाऽनघ ।**
**कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥**

**प्रकाशिका–** मैत्रेय आख्यायिकाकथनमुपसंहरति ॥ एतदिति ॥ ३६ ॥

**य इदमनुश्रुणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ।**
**भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम् ॥ ३७ ॥**

**इति श्रीमद्भागवते तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ।**

**॥ इति तृतीयस्कन्धः ॥**

**प्रकाशिका–** उक्तार्थे तात्पर्यद्योतनायैतच्छ्रवणादिमात्रेणापि फलं भवतीत्याह ॥ य इदमिति । आत्मयोगं गुह्यं परमात्मज्ञानोपायरहस्यं कृतधीः संपादितापरोक्षज्ञानः सुपर्णकेतौ गरुडध्वजे भगवति विषये । उपलभते प्राप्नोति ॥ ३७ ॥ इति श्रीभागवतटिप्पण्यां चतुस्त्रिंशोऽध्यायः ॥ ३-३४ ॥ तृतीयस्कन्धतात्पर्यफक्किकार्थप्रकाशिनी ॥ कृतिर्यदुपतेर्भूयात्प्रीत्यै माधवमध्वयोः ॥ १ ॥

इति श्रीभागवतटिप्पण्यां श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां तृतीयः स्कन्धः समाप्तः ॥ ३ ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

श्री सत्याभिनवतीर्थविरचिता

# दुर्घटभावदीपिका

## तृतीयः स्कन्धः - प्रथमोऽध्यायः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ यदा यस्मात्कारणात्। विनष्टदृष्टिः विनष्टभगवत्ज्ञानः । राजा धृतराष्ट्रः । असाधून् स्वसुतान्दुर्योधनादीन् । अधर्मेण । तु शब्द एवार्थे । अधर्मणैव । पुष्णन्सन् । बन्धून् रहितान्यविष्ठस्य भ्रातुः पांडोः सुतान्धर्मादीन् लाक्षाभवने प्रवेश्य । ददाह दाहप्रयत्नं कृतवान् । तस्मात्कारणाद्विदुरोऽयात् । यदा यस्मात्कारणान्नृपो धृतराष्ट्रः सभायामस्रैर्नेत्रजलैः कुचकुङ्कुमानि हरंत्याः कुरुदेवदेवस्य भीमस्य देव्या अत एव स्नुषाया द्रौपद्याः केशाभिमर्शं केशस्पर्शात्मकं गर्ह्यं सुतकर्म न वारयामास । तस्मात्कारणाच्चायादिति । एतेन पाण्डवदाहादि काले विदुरस्य तीर्थयात्रार्थं गभनस्याभावात् । यदा ददाह तदा विदुरोऽयादित्यादि कथनमनुपपन्नमिति दूषणं परास्तम् । यदेति शब्दानां कालार्थकत्वमनङ्गीकृत्य हेत्वर्थकत्वमङ्गीकारात् । एतेनैव पाण्डवानां दाहाभावात् । पाण्डवान्ददाहेति कथनमिति दूषणमपास्तम् । ददाहेत्यस्य दाहप्रयत्नं कृतवानित्यर्थ इत्यङ्गीकारात् । एतेनैव ददाहेत्यादिकमनन्वितमिति दूषणं पराकृतम् । यदा ददाहेत्यादेः परं प्रत्येकं तस्मादिति शेषमङ्गीकृत्य गतव्यथोऽयादुरुमानयान इति वक्ष्यमाणेनान्वय इत्यङ्गीकारात् । ननु धृतराष्ट्रः पाण्डवान्ददाहेत्यनुपपन्नम् । दुर्योधनदीनामेव पाण्डवदाहप्रयत्नकर्तव्यत्वेन धृतराष्ट्रस्य पाण्डवदाहप्रयत्नकर्तृत्वाभावादिति चेन्न । पाण्डवदाहप्रयत्नकर्तृदुर्योधनादिस्वामित्वाभिप्रायेण धृतराष्ट्रः पाण्डवान्ददाहेत्युक्तत्वात् । तर्हि द्रौपदीकेशवावमर्शनं कर्तुर्दुःशासनस्वामित्वाभिप्रायेण धृतराष्ट्रो द्रौपदीकेशाभिमर्शनं कृतवानित्यपि वक्तव्यमिति न वाच्यम्। धृतराष्ट्रः पाण्डवान्ददाहेत्युक्त्वा केशाभिमर्शनं कृतवानित्युक्तेरपि समानन्यायतयाऽर्थात्प्राप्तत्वेन केशाभिमर्शनं कृतवानित्युक्तेरभावस्या- दोषत्वात् । तात्पर्यार्थः ॥ यदा ददाहेत्युक्तं तदा केशाभिमर्शः केशाभिमर्शोक्तिरपि प्राप्तःप्राप्तेति हेतोर्धृतराष्ट्रः केशाभिमर्शनं कृतवानित्युक्त्यभावो न दोषाय । एतेन यदा ददाह तदा केशाभिमर्शः प्राप्त इत्येतदसंगतमनुपपन्नं चेति दूषणं परास्तम् । यदा ददाह तदा केशाभिमर्शः प्राप्त इत्यस्य यदा ददाहेत्यतः परमित्युक्तमित्यस्य शेषमङ्गीकृत्य केशाभिमर्शनशब्दस्य केशाभिमर्शोक्तिलक्षकत्वं चाङ्गीकृत्य प्राप्त इतीत्यतःपरं केशाभिमर्शनं कृतवानित्युक्त्यभावो न दोषायेति शेषं चाङ्गीकृत्य यदा ददाहेत्युक्तं तदा केशाभिमर्शोक्तिरपि प्राप्तेति हेतोः केशाभिमर्शनं कृतवानित्युक्त्या न दोषायेत्यर्थ इत्यङ्गीकारात् । यदेति शब्दानां कालार्थकत्वभ्रान्तिं वारयति ॥ हेत्वर्थ इति । यदाशब्द इत्येकवचनं जातौ । यदाशब्दो यदा तु राजेत्यादि श्लोकस्था

यदाशब्दा हेत्वर्थे वर्तन्ते । यदा शब्दस्य हेत्वर्थकत्वेऽभिधानं दर्शयति ॥ यदेति । अपिचशब्दौ परस्परसमुच्चयौ इति ॥ ३-७ ॥

धनुर्द्वारि निधायेत्यस्य संहारार्थं धनुर्गृहित्वा तद्वारं प्राप्यान्तर्द्वारनिरोधकैः शत्रुभिरन्तर्गृहे स्थितास्तच्छत्रव इव पाण्डवैर्दुर्योधनादयो हता भविष्यन्तीति सूचनार्थं धनुरन्तर्द्वारि निधायेत्यर्थः । तेन द्वारि धनुस्थापनं व्यर्थमिति चोद्यस्यानवकाशः ॥ १६ ॥

नृपासनाधिं परिहृत्येत्यस्य नृपासनविषयमानसव्यथां परिहृत्येत्यर्थः नृपासनविषयं मनो वर्तत इति भ्रमं परिहृत्येति चार्थः । आचार्यैराधिशब्दस्य मनोव्यथावाचित्वस्य पुंस्याधिर्मानसी व्यथेति लोकप्रसिद्धामरसिद्धत्वात् । नृपासनाधिं परिहृत्येत्यस्योग्रसेनस्य नृपासनविषयमानसंव्यथां परिहृत्येत्यर्थस्य शिष्यैरेव ज्ञातुं शक्यत्वात् । तमर्थमनुक्त्वा मनोवाचकस्याधिशब्दस्य मनो वर्तत इति भ्रमलक्षत्वमङ्गीकृत्य नृपासनाधिं परिहृत्येत्यस्य कृष्णस्य नृपासनविषयकं मनो वर्तत इति श्लोके भ्रमं परिहृत्येत्यर्थान्तरं मनसि निधायाधिशब्दस्य मनोवाचित्वे आधिर्मनोरूपं चात्मा स्वमिति चोच्यत इत्यभिधानमिति प्रमाणमुक्तमिति ॥ २९ ॥

अहिवत् सर्पवत् । अत्यमर्षी भीमः । कृताघेषु दुर्योधनादिभिर्मिलित्वा कृतापराधेषु इदानीं विद्यमानेषु दीर्घतममघम् । अघशब्देन पुनः शिक्षाकर्तव्येति बुद्धिर्गृह्यते । अघं पुनः शिक्षा कर्तव्येति बुद्धिं व्यमुञ्चदित्यनेन क्षेमप्रश्नलाभार्थमुक्त्वाऽऽस्त इत्यर्थो ग्राह्यः । व्यमुंचत् मुक्त्वा आस्ते किंवेत्यर्थः । एतेनाघमित्यनेन किं स्वकृताघस्य ग्रहणं किं वा परकृताघस्य ग्रहणम् । नाद्यः । स्वस्मिन्नघस्यैवाभावेनाघत्यागायोगात् । न द्वितीयः । परकृताघत्यागं प्रतिभीमस्य कर्तृत्वायोगादिति चोद्यस्यानवकाशः ॥ ३७ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ३-१ ॥

## तृतीयोऽध्यायः

एषां नृपाणां श्रियो जिहीर्षया भगवता प्रेरणायां कृतायाम् । भीष्मकेणेति शेषः भगवता प्रेरणायां कृतायां भिष्मकेण भीष्मककन्यया । सुषां सुषो भवन्तीति वचनादियं तृतीया चतुर्थ्यादेशः सा चतुर्थी तादर्थ्ये । भीष्मककन्यया भीष्मककन्यायै भीष्मककन्यार्थम् । सवर्णेनेति भावप्रधानोऽयं निर्देशः । सवर्णत्वेन क्षत्रियत्वमातृयोग्यतया ये नृपा आहुतास्तेषां नृपाणां मूर्ध्नि । सुपर्णः सुष्ठु परो णः आनन्दो यस्यासौ सुपर्णः कृष्णः पदं ददत्सन् मिषतां नृपाणां पुरतो गान्धर्ववृत्त्या स्वभागं स्वभागभूतां रुक्मिणीं जिह्रे इति ॥ ता. अर्थः ॥ भीष्मककन्ययेति तृतीया चतुर्थ्यादेशः । सा चतुर्थी तादर्थ्य इत्यङ्गीकृत्य भीष्मककन्ययेत्यर्थमाह ॥ भीष्मकन्ययाअर्थ इति । सवर्णेनेति सवर्ण शब्दो

भावप्रधान इत्यभिप्रेत्य सवर्णैनेत्यस्यार्थमन्वयं च दर्शयति ।। सवर्णैति सवर्णमात्रं क्षत्रियत्वेन विवक्षितम् । एषां श्रियो जिहीर्षयेत्यतःपरं भगवता प्रेरणायां कृतायां भीष्मकेणेत्यस्य शेषमङ्गीकृत्य हृता इत्यनेनान्वयं चाङ्गीकृत्य तात्पर्यार्थमाह ।। एषामिति । एषां नृपाणां श्रियो जिहीर्षया भगवता भीष्मकस्याव्हानबुद्धिर्भगवता कृतेत्यस्य व्याख्येयं नास्तीति दूषणं निरस्तम् । सुपर्णइत्यस्य सु परानन्द इत्यर्थमभिप्रेत्यास्मिन्नर्थे प्रमाणमाह ।। सुपर्ण इतीति ।। ३ ।।

सविधिमित्यत्र सोरमादेशः छान्दसः । एतेन सविधिमित्यस्य विधिनासहितं यथा भवति तथा जग्रह इति क्रियाविशेषणत्वात् क्रियाविशेषणस्य नपुंसकत्वात् स्वमोर्नपुंसकदिति सोर्लुकि सविधीति स्यात् । न तु सविधिमिति । अतः सविधिमिति कथनमनुपपन्नमिति दूषणं निरस्तम् ।। ८ ।।

क्षणदया दत्तक्षणस्त्रीक्षणसौहृद इत्यस्य क्षणदायां रात्रौ दत्तं क्षणः स्त्रीभ्यो दत्तोऽवकाशो येन स तथा स्त्रीक्षणसौहृदः । ईक्षणमित्युपलक्षणम् । संभाषणादिकं च ग्राह्यम् । स्त्रीणां दर्शनसंभाषणादिकं स्त्रीषु सौहृदं च यस्य स तथेत्यर्थः । एतेन क्षणदायां दत्तक्षण इति वक्तव्ये क्षणदया दत्तक्षण इत्युनुपपन्नमिति चोद्यं परास्तम् । क्षणदेति तृतीया सप्तम्यादेश इत्यभ्युपगमात् । एतेनैव मुक्तियोग्य-स्त्रीषु सर्वदा सौहृदस्य वक्तव्यत्वात् स्त्रीक्षणसौहृद इत्यनुपपन्नमिति दूषणं निरस्तम् । स्त्रीक्षणसौहृद इत्यस्य स्त्रीषु क्षणपर्यन्तं सौहृदं यस्य स तथेत्यर्थ इत्यनभ्युपगमात् ।। २१ ।। इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ।। ३-३ ।।

## चतुर्थोऽध्यायः

वसो इत्यस्य देवेत्यर्थः । वसोरिन्द्रं वसुपतिमिति प्रयोगात् । आचार्यैर्ऋग्भाष्ये वसोरिन्द्रं वसुपतिमिति वसुशब्दयोर्वसूनां च पतिं देवदेवेश्वरं प्रभुमिति देवतावाचकत्वं चोक्तत्वात् । टीकाकारैश्च वसुशब्दो देवपर्यायः । जातावेकवचनम् । वसूनां ये वसवस्तेषां पतिं देवदेवेश्वर-मित्युक्तत्वात् । एतेनोद्धवस्य वसुत्वाभावात्प्रयोजनाभावाच्च वसो इति कथनमनुपपन्नमिति दूषणम-पहस्तितम् । वसुशब्देन देवताकर्तृके यागे कथं ममाधिकार इत्युद्धवहार्दशङ्कापरिहारार्थं देवत्वमुच्यत इति स्वीकरणात् ।। ११ ।।

स एष साधो चरमो भवानामित्येतत् साधो उद्धव स ज्ञानादि गुणवत्तया प्रसिद्धः । एष त्वं भवानां प्राणिसंसारक्लेशानां चरमस्तत्त्वोपदेशेन चरमत्वं संपादको निवर्तक इति यावदिति । एतेन पुनः कृष्णावतारवेलायाम् उद्धवस्य पुनरुत्पत्तेर्वक्तव्यत्वादेष भव एष उत्पत्तिर्भवानाम् उत्पत्तीनां चरमः चरमेति कथनमनुपपन्नमिति दूषणं परास्तम् । भवानामित्यनेन संसारक्लेशान्गृहीत्वा

भारततात्पर्यज्ञानिनां मतिर्यस्मिन्भारते ग्राम्यसुखानुवादैर्ग्राम्यसुखानुवादेषु सत्स्वपि ग्राम्यसुखानुवादैर्न गृहीता । किन्तु हरेः कथया गृहीतेति द्वितीयार्थश्लोक्तो भवति । एतेन यस्मिन्नृणामिति भागवतेन यस्मिन्भारत इति तात्पर्येण च भारतेन किं हरिकथायां मतिर्न भवतीत्युच्यते । किंवा भवतीत्युच्यते । नाद्यः । भारतान्नाधिकं विष्णोर्महिमावाचकं क्वचित् । भारतान्न विरागाय भारतान्न विमुक्तये इत्यादि प्रमाणविरोधात् । न द्वितीयः । भारतस्यानुपादेयत्वप्रसङ्गादिति शङ्काऽपास्ता । ज्ञान्यज्ञानिविवक्षया भागवतेन तात्पर्येण चार्थद्वयमप्युचितमित्यस्यार्थस्योपपादितत्वात् । भारतान्नाधिकमित्यादिना प्राप्त इत्यनेनाचार्यैर्भारते हरिकथाऽस्तीति प्रमाणमाह ॥ १२ ॥ इति श्रीभागवतटिप्पण्यां पञ्चमोऽध्यायः ॥ ३-५ ॥

## षष्ठोऽध्यायः

तवाङ्घ्रिछायांशविद्यामित्यस्य त्वत्स्वरूपविषयकत्वकर्तृकप्रतिबिंबांशभूतज्ञानमित्यर्थः। एतेन विद्याशब्देन किं वेदादिविद्याग्रहणं किंवा ज्ञानग्रहणम् । आद्ये चतुर्मुखस्य किं सर्वविद्याश्रयत्वमङ्गीक्रियते किंवांऽशविद्याश्रयत्वम् । नाद्यः । प्रधानांशश्चतुर्मुख इत्यादि प्रमाणविरोधात् । न द्वितीयः । चतुर्मुखस्य वेदादिसर्वविद्याश्रयत्वात् । द्वितीये किं महालक्ष्म्याः सर्वविद्याश्रयत्वमङ्गीक्रियते किंऽवांशविद्याश्रयत्वम् । नाद्यः । ईश्वरादन्यत्रेश्वरविषयकसर्वज्ञानाश्रयत्वस्य बाधितत्वात् । न द्वितीयः । सर्वविद्याश्रया प्रोक्ता इत्यादि प्रमाणविरोधात् । पक्षद्वयेऽपि तवाङ्घ्र्यंशविद्यामित्यनेन पूर्णत्वात् । छायाशब्दो व्यर्थ इति दूषणमपास्तम् । तवाङ्घ्रिशब्दस्य भगवत्स्वरूपविषयकं भगवत्कृर्तृकज्ञानपरत्वमङ्गीकृत्य छायाशब्दस्य प्रतिबिंबार्थत्वमङ्गीकृत्य तवाङ्घ्रिछायांशविद्यामित्यस्य भगवत्स्वरूपविषयकभगवत्कर्तृकज्ञानानां बिंबभूतानि यानि ज्ञानानि तदंशज्ञानमित्यर्थस्योक्तत्वात् ॥ ता. अर्थः ॥ ब्रह्मविद्येति । ब्रह्म शब्देन ब्रह्मविषयकं ब्रह्मकर्तृकं ज्ञानं गृह्यते । विद्याशब्देन प्रतिबिंबज्ञानम् । ब्रह्मविद्या । ब्रह्मविषयक ब्रह्मकर्तृकप्रतिबिंबज्ञानं हरेः छायेत्युच्यते । तदंशो ब्रह्मज्ञानप्रतिबिंबज्ञानांशः सुरेष्वपि । किमु मनुष्यादिष्वित्येतद्धि प्रसिद्धम् । श्रियो महालक्ष्म्याः सर्वविद्या भगवत्ज्ञानप्रतिबिंबसर्वज्ञानानि प्रमाणैः प्रोक्ताः प्रोक्तानि प्रतिपादितानि । चतुर्मुखः प्रधानांशः प्रधानो देवाद्यपेक्षयाऽधिकोंऽशो भगवत्ज्ञानप्रतिबिंबांशो यस्य स प्रधानांश इति प्रमाणैः प्रतिपादित इति ॥ १८ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ३-६ ॥

## सप्तमोऽध्यायः

हे कुरूद्वह पुरुषस्य ब्रह्मान्तर्यामिणः परमपुरुषस्य यत्र मुखे । वर्णानामित्येतदर्थवशाद्वर्णा इति प्रथमाबहुवचनान्तं सम्बध्यते । वर्णाः । उन्मुखा इति शेषः ॥ तस्मान्मुखतः ब्रह्म ब्राह्मणोऽवर्तत

उत्पन्नः । उभयोर्भगवन्मुखत्वे नियामकमाह ।। उन्मुखत्वादिति । ब्राह्मण इत्येतदर्थवशाद् ब्राह्मणस्येति षष्ठ्यन्तं संबध्यते । ब्राह्मणस्य वर्णानां चोन्मुखत्वात् । भगवन्मुखोन्मुखत्वादेव ब्राह्मणो वर्णानां मुख्यो गुरूपदेष्टाऽभूदिति । अत्र वर्णानामुन्मुखत्वं नामाभिव्यक्तत्वं ब्राह्मणस्योन्मुखत्वं नामोत्पन्नत्वमिति विवेको द्रष्टव्यः ।। ३० ।।

भगवतो मायामित्यस्य भगवतो नारायणस्य मायां गुणमहत्त्वमित्यर्थः ।। ता० अर्थः ।। भगवतो मायामयमित्यनुवादः । भगवन्महिमानमिति व्याख्यानम् । भगवन्महिमानमित्यत्र गुणेति योग्यतया सम्बध्यते । अनेन भगवतो मायामयमित्येतद्भगवद्गुणमहत्त्वमिति व्याख्यातं भवति । मायाशब्दस्य गुणमहत्त्वार्थकत्वं प्रमाणेनोपपादयति ।। मायेति ।। प्राचुर्ये तु महत्त्वरूपप्राचुर्यार्थेऽपि मयट्प्रत्ययः । अतोमायेति शब्देन महिमा तु गुणतो महत्त्वमपि प्रोक्ताः प्रोक्तमिति । एतेन प्रकृतिं विना मयट् प्रत्ययायोगात् । मायेति शब्दस्य प्राचुर्यार्थकमयट्प्रत्ययरूपत्वं स्वीकृत्य मायेतिशब्दस्य महत्त्वव्याख्यानमयुक्तमिति चोद्यं निरस्तम् । गुणशब्दात्प्राचुर्यार्थे मयट्प्रत्यये छादसे दीर्घे टापि छान्दसे गुण शब्दलोपे च मायेति रूपं निष्पन्नमित्यभ्युपगम्य मायेतिशब्दस्य गुणतो महत्त्वमिति व्याख्यानात्। एतेनैव ब्राह्मणप्रचुरग्राम इत्यादौ प्राचुर्यार्थकप्रचुरशब्देन ब्राह्मणविरोधिशूद्राणामल्पत्वस्य प्रतीतेर्मायेतिशब्दस्य गुणप्राचुर्यार्थकत्वस्य स्वीकारे गुणविरोधि दोषाणामल्पत्वं प्रतीयेतेति दूषणं निरस्तम् । मायेति शब्दस्य गुणतो महत्त्वरूपप्राचुयार्थ इत्यभ्युपगमात् ।। ३९ ।। इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ।। ३-७ ।।

## अष्टमोऽध्यायः

स्वत इत्यस्य स्वातन्त्र्यादित्यर्थः । एतेन देशकालादिनेव स्वतो ज्ञानलोपस्य क्वाप्यदृष्टत्वात् । परमेश्वरस्य ज्ञानलोपो नास्तीति कथनमनुपपन्नमिति शङ्का निरस्ता । स्वशब्दस्य स्वतन्त्रमित्यभ्युपेत्य भावप्रधानं चाश्रित्य स्वत इत्यनेन परमेश्वरस्य देशादिना ज्ञानलोपो नास्तीत्यत्र देशकालादि स्वातन्त्र्यरूपहेतुरुच्यत इत्यभ्युपगमात् ।। ५ ।।

हे भगवन् विभो यद्यपि तव सूत्रासिना मह्यं मम संशयो द्विकोटिकसंशयः संछिन्नोऽपि तथापि उभयत्र कोटिद्वये प्रत्येकं मे मनः सम्प्रधावति एककोटिकसंशयद्वयं भवति । एतेन संछिन्नः संशय इति संशयो नास्तीति उक्त्वोभयत्र मनो धावतीति संशयोऽस्तीति कथनं व्याहतमिति दूषणं निरस्तम्। उभयत्र मनो धावतीत्यस्य प्रत्येकमिति शेषपूरणेनैककोटिकसंशयद्वयमस्तीत्ति तात्पर्यार्थस्योक्तत्वात् ।। १५ ।।

रतिरास इत्यस्य रतिसार इत्यर्थः । एतेन साररूपार्थलाभार्थं रतिरस इति वक्तव्ये रासक्रीडा-वाचिरास शब्दप्रयोगोऽनुपपन्नमिति दूषणं परास्तम् । रसशब्दः छान्दसे दीर्घे कृतेरास इति निष्पन्न इत्यङ्गीकृत्य इति सार इत्यर्थस्योक्तत्वात् ॥ १९ ॥ इति श्रीभागवतटिप्पण्यामष्टमोऽध्यायः ॥३-८॥

## नवमोऽध्यायः

लोकत्रयसङ्ग्रहेणायमतो विस्तरतः समानदेहेन हरितोपलाद्रेः प्रेक्षां दर्शनीयकान्तिं क्षिपन्तम् । विचित्रदिव्याभरणांशुकानां कृतश्रियोपाश्रितदिव्यवेषमित्यनुपपन्नम् । भगवत आभरणनिमित्तकदि-व्यवेषत्वस्य प्रमाणबाधितत्वात् । कृतेतद्यर्थम् । समानदेहेनेत्येतदनन्वितमिति दूषणानि निरस्तानि । समानदेहेनेत्यस्य हरितोपलाद्रेः प्रेक्षां क्षिपन्तमिति पूर्वेणान्वयमङ्गीकृत्य आभरणादीनां भगवन्नि-मित्तकदिव्यवेषत्वमत्रोच्यत इत्यभ्युपगमात् ॥२५॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥३-९॥

## दशमोऽध्यायः

अथेयं योजना । अत्रापीत्याद्यपेक्षितपदानां शेषः । यदपि यद्यपि त्वं सर्वः । उरुः उत्कृष्टः । भेदरहित इति यावत् । तथाऽपि मायागुणव्यतिकरात् मायागुणानां प्रकृतिकार्याणां व्यतिकरात् व्यत्यासात् । नानात्वादिति यावत् । तदवस्थानेन विभावसि विविधतया । नानात्वेनेति यावत् । भासीति ॥ अयं भावः । सर्वत्र विद्यमानस्य भगवत उत्कृष्टत्वेन विरुद्धधर्माधिकरणत्वाभावात् । भेदाभावेऽपि प्रकृतिकार्याणाम् । भिन्नत्वेन तत्संबंधादविद्यमानो देहः परमेश्वरे प्रतीयत इति । नान्यदित्यनेनेश्वरस्य सर्वनियामकत्वं रूपं माहात्म्यमुक्तम् । मायागुणव्यतिकरादित्यनेन सर्वत्र विद्यमानस्य भगवतोऽभिन्नत्वरूपं माहात्म्यच्यते । तेन पादद्वयं परस्परमसङ्गतमिति दूषणस्या-नवकाशः । आचार्यैर्मायागुणव्यतिकरादिति पदस्य यच्च स्वनानात्वं तदपि स्थानभेदादसदेव भातीत्यनेन तात्पर्यार्थ उक्तः । तेन स्वनानात्वमित्यादि पदानां व्याख्येयं नास्तीति चोद्यानवकाशः । योजना त्वस्मदुक्तैव ॥ १ ॥

ज्ञातोऽसीत्यत्र यस्माद्देहभाजा मया ज्ञातोऽसि तस्माद्देहभाजां भगवतो गतिर्न ज्ञायत इति मतं दुष्टमित्युक्तम् । तदनुपपन्नम् । यत्ज्ञातरूपं ज्ञातोऽन्यस्यैव भगवत्वादित्याशङ्काऽत्र परिह्रियते । हे परम यन्नाभिपद्मभवनात् यस्य रूपस्य नाभिपद्माख्यस्य भवनात् । अहमाविरासम् । अवबोधर-सोदयेन सर्वविषयकज्ञान श्रेष्ठापरोक्षज्ञानोदयेन शश्वन्निवृत्ततमसः सर्वदानिवृत्ताज्ञानस्य भगवतः स्वरूपं सदनुग्रहाय सतामनुग्रहायादौ गृहीतं व्यक्तीकृतम् । अवतारशतैकबीजम् अनन्ता-वताराणामभिन्नं बीजम् आनन्दमात्रम् अविकारम् अविद्धवर्चः विश्वसृजम् एकं स्वगुणादिभिरेकम्

अविश्वं विश्वभिन्नम् आद्यं भूतेन्द्रियात्मकं भूतेन्द्रियनियामकमेतत्प्रमाणप्रसिद्धम् । यद्रूपं पश्यामि अदः प्रत्यक्षप्रसिद्धम् । ते यद्रूपमुपाश्रितोऽस्मि । अतो रूपात्परमुत्तमं नास्ति । अतो मत्ज्ञातरूपस्य भगवत्त्वात् । भगवतो गतिर्नज्ञायत इति मतमवद्यमिति यदुक्तं तदुपपन्नमिति । ता० अर्थः ।। पदानां व्यवहितत्वात् । यन्नाभिपद्मभवनादहमाविरासमित्यारभ्यातःपरं नास्तीत्यंतेनान्वयं प्रदर्श्य तस्य चातो न ज्ञायत इत्यवद्यमिति पूर्वेणान्वयं प्रदर्शितम् । आनन्दमात्रमित्युक्तं सर्वविशेषणानामुपलक्षणम् । ननु दैत्यादिभिः सर्वथा भगवतो ज्ञातत्वात् । भगवान्न ज्ञायत इति मतमवद्यमित्युक्तमित्यत आह ।। अत्युत्तमेति ।। अत्युत्तमेत्यनेन तमोयोग्यजीवानां मिश्रजीवानां च व्यावृत्तिः ।। अयं भावः ।। तमोयोग्यैरधमजीवैर्मिश्रगतिः योग्यैर्मध्यमजीवैर्भगवतो गतिर्न ज्ञायत इति मतं समीचीनम् । मुक्ति-योग्यैर्मध्यमापेक्षयोत्तमैरधमापेक्षयाऽत्युत्तमैर्जीवैर्भगवतो गतिर्न ज्ञायत इति मतं दुष्टमिति । आदौ गृहीतमित्यनेनाव्यक्तस्य व्यक्तिरुच्यत इति भ्रमं वारयति । अनादिगृहीतमेवेति । अचिंत्यशक्त्येति शेषः । गृह्यत इत्यस्यावृत्तिः । आदिकाले व्यक्तमेवाचिंत्यशक्त्याऽऽदिकाले गृह्यते । व्यज्येत । न त्वव्यक्तं व्यज्यते । प्रमाणसंमत्योक्तं स्थापयति ।। यत्तदिति । अनादिनित्यत्वाद्व्यक्तेति शेषः । व्यक्त्याऽनादिनित्यात् । सर्वदा व्यक्तादिति यावत् । अव्यक्तादन्येषामव्यक्तात् । तस्मात्परमेश्वरा-च्चतुर्मुखो जज्ञे । अनेन परमेश्वरस्य नित्यव्यक्तत्वेऽव्यक्तत्वोक्तेः का गतिरिति दूषणं परास्तम् । भगवतो रूपं भगवतो नित्यव्यक्तमेव । अन्येषामव्यक्तमित्यभिप्रायात् । भूतेन्द्रियात्मकमित्यनेन भूतेन्द्रियैक्यमुच्यत इति भ्रमं परिहरति ।। भूतेन्द्रियाणामिति ।। अनेन भूतेन्द्रियनियामकत्वात् भूतेन्द्रियात्मकमित्युच्यते । न त्वैक्यादित्युक्तं भवति । आत्मशब्दस्य नियामकत्वार्थे प्रमाणमाह ।। यच्चेति ।। २,३ ।।

यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थमित्यादि श्लोकस्यार्थः । तत्रेन्द्रियाणामित्यादि पदानां शेषः । हे ईश जनो यावत् यदा आत्मनो जीवस्य इन्द्रियार्थम् इन्द्रियकरणकविषयभोगार्थम् इन्द्रियाणां मनआदीन्द्रियाणां यदिदं पृथक्त्वं ध्यानादि क्रियानुकूलपृथक्शक्तिविशिष्टत्वमस्तीति तत् भगवतो मायाबलं हरीच्छाधीनमिति पश्येत तावत्तदा व्यर्थाऽपि सुखरूपप्रयोजनरहिताऽपि दुःखनिवहं वहती च वहत्यपि असौ संसृतिः क्रियार्था निवृत्तधर्मभगवदपरोक्षज्ञानलक्षणक्रियार्था प्रतिसङ्क्रमेत भवतीति । संसारे विद्यमानोऽपि जनः । यदा सर्वेपीन्द्रियव्यापार ईश्वराधीन इति पश्यति तदेश्वरानुग्रहेण निवृत्तधर्मान्कृत्वातःकरणशुद्धिं सम्प्राप्य भगवदपरोक्षज्ञानं च सम्पाद्य मुक्तो भवतीति भावः ।। ता० अर्थः ।। माया शब्दस्यानेकार्थत्वात् । मायाबलमित्यनेन कस्या बलमुच्यत इति न ज्ञायत इत्यतो मायाबलमित्यनूद्य व्याचष्टे ।। मायाबलमिति । मायाबलमित्यत्र मायाशब्देन भगवदिच्छैव ग्राह्येत्यत्र नियामकं प्रमाणेनैवाह ।। ज्ञेयत्वमिति । यस्मिन्ग्रन्थे यस्या मायाया ज्ञेयत्वं मोक्षार्थं ज्ञेयत्वमुच्यते ।

तस्मिन्ग्रन्थे सा माया हरेरिच्छा । अथवा । बलम् । तत्र मायाशब्देन हरेरिच्छा बलं वा ग्राह्यमिति यावत् । यस्मिन्ग्रन्थे मायायाः सकाशाद् दुर्घटस्यापि घटनोच्यते । तस्मिन्ग्रन्थे सा माया हरेरिच्छा बलं वा । यस्मिन्ग्रन्थे यस्या मायायाः अधिकशक्तितोच्यते । तस्मिन्ग्रन्थे सा माया हरेरिच्छा बलं वा । यस्मिन्ग्रन्थे यस्या मायाया ईश्वरेणापि परमेश्वरेणाप्यभेद उच्यते । तस्मिन्ग्रन्थे सा माया हरेरिच्छा बलं वा । यस्मिन्ग्रन्थे यस्या मायायाः सृष्ट्यादौ भगवत्कर्तृकसृष्ट्यादावन्तरङ्गता आत्माङ्गसाधनतोच्यते । तस्मिन्ग्रन्थे सा मायाहरेरिच्छा बलं वा । यस्मिन्ग्रन्थे यस्या मायाया भगवत्तंत्रता भगवदधीनता । तद्भार्यात्वं सुरूपतेति वोच्यते । तस्मिंन्ग्रन्थे सा माया श्रीः । यस्मिन्ग्रन्थे मायापरिणामिनीति स्मृता प्रतिपादिता सा माया जडप्रकृतिरिति शेषः । यस्मिन्ग्रन्थे माया दोषयुक्तेति स जगद्बन्धात्मिकेति स्मृता । यस्या मायायाः सकाशाद्दोषाः कामक्रोधादिदोषा भवन्तीति चोच्यते । यस्यास्तथा चेतनतोच्यते । सा माया शैवली या माया शैवलीति प्रसिद्धा । सर्वोऽपीन्द्रियव्यापार ईश्वराधीन इत्युक्तमर्थं प्रमाणेन स्थापयति ।। ध्याय इति । जीवस्येन्द्रियभुङ्क्तेन्द्रियकारणकविषयभोगार्थं ध्याये मंस्ये तथा पश्ये शृणोमीत्यनुव्यवसायसिद्धध्यानादिव्यापाराणां साधनम् इन्द्रियाणां या विभक्तया यत्पृथक् पृथक् शक्तिमत्त्वं सा हरेरिच्छाबलात् । इन्द्रियार्थमित्यस्यार्थमाह ।। इन्द्रियाणामिति । इन्द्रियसम्बुद्धिविषयभोगार्थम् । इन्द्रियकरणविषयभोगार्थमिति यावत् । व्यर्थाऽपीत्यस्य व्यवहितेन दुःखनिवर्हतीत्यनेनान्वय इति क्रियार्थेत्यस्य लौकिकक्रियार्थेत्यर्थ इति च भ्रमं वारयितुं व्यवहितेन क्रियार्थेत्यनेनान्वयं सूचयन् क्रियार्थेत्यस्य धर्मादिक्रियार्थेत्यर्थ उक्त इति ।। ९ ।।

सत्क्रियार्थो धर्म इत्यस्य सत्क्रियार्थो निर्दुष्टयज्ञादि क्रिया च तज्जन्यार्थश्च सत्क्रियार्थो धर्म इत्यर्थः । एतेन धर्म इत्यनेन पूर्णस्वात् । सत्क्रियार्थ इत्येतद्व्यर्थमिति दूषणं निरस्तम् । धर्म इत्यनेन यज्ञादि सत्क्रिया तज्जन्यादृष्टस्य वा ग्रहणमिति भ्रान्तिः स्यात् । तन्निरासार्थमुभयोरपि ग्रहणमिति वक्तुं सत्क्रियार्थमित्यस्य वक्तव्यत्वात् ।। १३ ।।

अयमधिकारी स्वरूपेणाभिन्नेन देहनियामकेन मया मद्रूपविशेषणोपेतं भूतेन्द्रियगुणाशयै रहितमात्मानं हृदिस्थितं जीवनियामकं रूपं यदा पश्यन् भवति । तदा स्वाराज्यं मोक्षमृच्छति प्राप्नोतीति । अयमधिकारी मया मम स्वरूपेण स्वरूपस्य मया भिन्नस्य रूपविशेषस्योपपादाब्जसमीपे इदं स्थितं प्राणेन्द्रियगुणाशयैरहितम् आत्मानं स्वात्मानं यदा पश्यन् भवति । तदा स्वाराज्यं मोक्षमृच्छतीति वा । जीवनियामकभगवद्रूपस्य देहनियामकरूपस्य चाभेदं मयोपेतमित्युक्तेरयोगाद्भेद इत्याशङ्कानिरासार्थं जीवानियामकरूपस्य चाभेदेऽपि रूपविशेषाभिप्रायेण मयोपेतमिति साहित्योक्तिर्युज्यत इति भावेन भागवते स्वरूपेणेत्युक्तमित्यभिप्रेत्य स्वरूपेण मयोपेतमित्यनूद्याचार्यैर्हृदिस्थं जीवरूपं हि

परमेश्वरसहितं भवतीति तात्पर्य उक्तः । अनेनाद्ययोजना सूचिता । एवं द्वितीययोजनाऽपि द्रष्टव्ये-त्यभिप्रायेण योजनाद्वयं प्रमाणेनापि सूचयितुं त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदिस्थिते । दृष्ट्वा-त्मभावं तं चापि हरिपादाब्जसंस्थितम् । यदा पश्यत्यापरोक्ष्यात्तदा मुक्तिं व्रजत्यसाविति दत्तात्रेययोग इति प्रमाणमुदाहृतम् ॥ तस्यार्थः । असावधिकारी यद्देहाद्यात्मभावं संस्थितं तं जीवमा-परोक्षात्पश्यतीत्यपि पश्यति च । तदा मोक्षं व्रजतीति ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ३-१० ॥

## एकादशोऽध्यायः

अनिमित्तस्येत्येतत् अ शब्दः परमेश्वरवाची । तेन तदर्पणबुद्धिर्लक्ष्यते । परमेश्वरार्पणबुद्धिर्निमित्तं यस्य तदनिमित्तं तस्य परमेश्वरार्पणबुद्ध्या कृतस्येति यावदिति व्याख्येयम् ॥ ता. अर्थः ॥ एतेन अ शब्दवाचित्वात् । अनिमित्तस्येत्यस्य ब्रह्मणा कृतस्येत्यर्थो वक्तव्यः । ब्रह्मार्पणबुद्ध्या कृतस्येत्यर्थ-कथनमनुपपन्नमिति चोद्यं निरस्तम् । सर्वस्यापि ब्रह्मणा कृतस्य धर्मस्येति विशिष्योक्तेरयोगात् । ब्रह्मवाचकेनाशब्देन ब्रह्मार्पणबुद्धिं लक्षयित्वानिमित्तस्येत्यस्य ब्रह्मार्पणबुद्ध्या कृतस्येत्यर्थ उक्त इत्यभ्युपगमात् ॥ ९ ॥

आत्मनः परमात्मनः सकाशाद्यो गुणवैषम्यनामकमहतो महत्तत्त्वस्य सर्गो भवति । तु शब्द एवार्थे । स तु स एवाद्य इति । ननु महत्तत्त्वसर्गस्य गुणवैषम्यनामकत्वं कथं चेत् । उच्यते । महत्तत्त्वोपादानीभूता दशरजोभागाः प्रलयकाले सत्त्वेन सह मूलप्रकृतौ प्रविष्टाः । सृष्टिकाले प्रकृतिकार्यसत्त्वगुणं विहाय प्रकृतिकार्यरजोगुणेन सम्बन्धा भवन्ति । महत्तत्त्वोपादानीभूतैको रजोभागः प्रकृतिकार्यरजोगुणेन सम्बन्धो भवति । एवं महत्तत्त्वोपादानीभूता द्वादशरजोभागाः स्वसम्बन्धाभावाभावाभ्यां सत्त्वरजस्तमोगुणानां वैषम्यसंपादकत्वात् । गुणवैषम्यनामकः । तज्जन्यत्वान्महत्तत्त्वं गुणवैषम्यनामकम् । तत्सम्बन्धात् । महत्तत्त्वसर्गोऽपि गुणवैषम्यनामकः ॥ ता. अर्थः ॥ महत्तत्त्वसर्गस्य गुणवैषम्यनामकत्वमुपादानीभूतानां द्वादशरजोभागानां गुणवैषम्यनामकत्वेन तेषां च गुणवैषम्यनामकत्वं सत्त्वरजस्तमोगुणनिष्ठवैषम्यावस्थासंपादकत्वेनेत्यभिप्रेत्य गुणनिष्ठवै-षम्यावस्थाज्ञानार्थं गुणानां साम्यावस्था ज्ञातव्या । अतो गुणसाम्यावस्थानिरूपणार्थं गुणानां स्थितिस्तावदुच्यते ॥ तमसो रजस्तु द्विगुणमित्यादिना तद्दशांशेन तु रज इत्यन्तेन । इदानीं गुणनिष्ठ साम्यावस्थां निरूपयति ॥ मूलजमिति । मूलजं महत्तत्त्वमूलरजोगुणतमोगुणाभ्यामभिव्यक्तं महत्-तत्त्वं मूलरजोगुणतमोगुणाभ्यां बहिरागत्योपादानरूपेण । महत्तत्त्वे प्रविष्टमिति यावत् । यद्रजो-द्वादशभागात्मकं रजस्तत् तदेव विलये प्रलयकाले दशांशतो दशांशैः सत्त्वं सत्त्वगुणमिश्रितं भवति ।

एकांशेन तमस्यपि तमोगुणेऽपि मिश्रितं भवति । उपलक्षणमेतत् । एकांशेन रजोगुणेऽपि मिश्रितं भवतीत्येतद्धि प्रमाणप्रसिद्धम् । बुधा एतां गुणानां महत्तत्त्वोपादानरजोमिश्रत्वावस्थां साम्यावस्थां विदुः । महत्तत्त्वोत्पत्तिप्रकारं दर्शयति ॥ यदा त्विति । यदा यद्दशभागात्मकं रजः सत्त्वे प्रविष्टं यच्चैकभागात्मकं रजो रजोगुणे प्रविष्टं यच्चैकभागात्मकं रजस्तमोगुणे प्रविष्टं तत्सर्वं द्वादशभागात्मकं रजस्तमसा तमोगुणप्रविष्टतमोभागेन सह संगतं भवति । तदा तु तदैव पूर्वोक्तत्रयोदशभागेभ्यो महत्तत्त्वं भवति । ननु महत्तत्त्वस्य पूर्वोक्तरीत्या त्रयोदशभागोत्पन्नत्वे महत्तत्त्वं चतुर्भागसंभवमिति ग्रन्थान्तरोक्तेः का गतिरित्यत आह ॥ तदिति । यत्त्रयोदशभागजन्यं महत्तत्त्वं तत् विवक्षाविशेषेण ग्रन्थान्तरे चतुर्भागसंभवमित्युच्यते । तेन महत्तत्त्वस्य त्रयोदशभागजन्यत्वात् । तच्चतुर्भागसंभवमिति कथं चतुर्भागजन्यत्वमुच्यते इति शङ्कानवकाशः । विवक्षाविशेषेण ग्रन्थान्तर इति पदयोः शेषेणं तच्चतुर्भागसंभवमित्यस्य तत् महत्तत्त्वं विवक्षाविशेषेण ग्रन्थान्तरे चतुर्भागसंभवमित्युच्यते इत्यर्थ इत्युक्तत्वात् । विवक्षाविशेषं दर्शयति ॥ तत्रेति । ये दशरजोभागाः प्रलयकाले सत्त्वे गुणे प्रविष्टास्तेषामेकत्त्वस्य विवक्षया तत्र त्रिभागो रजस इत्युक्तम् । यदर्थं गुणसाम्यावस्थानिरूपणं तदिदानीमाह ॥ तदाहुरिति । यत् विवक्षाभेदेन त्रयोदशभागजन्यं चतुर्भागजन्यं च ब्रह्मणो विरिञ्चस्य रूपं शरीरं तन्महत्तत्त्वं सृष्टिकाले सत्त्वगुणे प्रवेशाभावेन गुणानां वैषम्यावस्थायाः सम्पादकैर्द्वादशरजोभागैर्जन्यत्वाद्वैषम्यनामकम् । उपलक्षणमेतत् । महत्तत्त्वसर्गोऽपि गुणवैषम्यनामक इति ज्ञानिन आहुरिति । ततश्चायं तात्पर्यस्य निष्कृष्टोऽर्थः ॥ सृष्टिकाले प्रकृतेः सकाशात् सत्त्वगुणो रजोगुणस्तमोगुणश्चोत्पन्नो भवति । तत्र तमोगुणाद्रजोगुणो द्विगुणः । रजोगुणात्सत्त्वगुणो द्विगुणः। तत्र सत्त्वगुण इतरगुणमिश्रितो न भवति । रजोगुणस्तमोगुणश्चेतरगुणमिश्रितो भवति । तथा हि । तमोगुणस्यैको भागः । तच्छतगुणो रजोभागः । तच्छतगुणः सत्त्वभाग इत्येतावता रजोगुणो भवति । एको रजोभागस्तद्दशगुणस्तमोभागस्तद्दशगुणः सत्त्वभाग इत्येतावता तमोगुणो भवति । महत्तत्त्वोपादानीभूतास्त्रयोदशभागाः । तत्र द्वादशभागा रजस एको भागस्तमसः । तत्र प्रलयकाले दशरजोभागाः प्रकृतिकार्यं सत्त्वगुणं प्रविशन्ति । एको रजोभागः प्रकृतिकार्यं रजोगुणं प्रविशति ।

एको रजोभागः प्रकृतिकार्यं तमोगुणं प्रविशति । तमोभागः प्रकृतिकार्यं तमोगुणं प्रविशति । एको रजोभागः प्रकृतिकार्यं तमोगुणं प्रविशति । तमोभागः प्रकृतिकार्यं तमोगुणं प्रविशति । तत्त्रयाणामपि गुणानां महत्तत्त्वोपादानरजोमिश्रत्व- साम्यादियमेव गुणानां साम्यावस्था । अनन्तरं सत्त्वगुणः स्वप्रविष्टरजोभागैः सह मूलप्रकृतिं प्रविशति । रजोगुणः स्वप्रविष्टैकरजोभागेन सह मूलप्रकृतिं प्रविशति । तमोगुणः स्वप्रविष्टाभ्यां रजस्तमोभागाभ्यां सह मूलप्रकृतिं प्रविशति । सृष्टिकाले सत्त्वगुणः स्वप्रविष्टदशरजोभागान्मूलप्रकृतौ स्थापायित्वा शुद्ध एव बहिरायाति ।

रजोगुणः सत्त्वगुणत्यक्तमूलप्रकृतिस्थितदशरजोभागान् स्वप्रविष्टैकरजोभागं च गृहीत्वा बहिरायाति। सत्त्वगुणस्य महत्तत्त्वोपादानरजोमिश्रितत्वाभावात् । रजोगुणतमोगुणयोर्महत्तत्त्वोपादानरजोमिश्रितत्वादियं गुणानां वैषम्यावस्था । अनन्तरं दशभागात्मकं रजः सृष्टिकाल एव रजोगुणप्रविष्टं यदेकभागात्मकं रजः सृष्टिकाले प्रलयकाले च तमोगुणप्रविष्टं तत्सर्वं द्वादशभागात्मकं रजोगुणो रजोगुणतमोगुणाभ्यां बहिरागत्य सृष्टिकाले प्रलयकाले च तमोगुणप्रविष्टेन बहिरागतेन तमोभागेन सङ्गतं भवति । तदा सङ्गतैस्त्रयोदशभागैर्महत्तत्त्वं भवति । गुणवैषम्यसंपादकद्वादशरजोभागजन्यत्वात् महत्तत्त्वं गुणवैषम्यनामकं तत्सम्बन्धान्मत्तत्त्वसर्गोऽपि गुणवैषम्यनामक इति ॥ १४ ॥

अत्र महत्तत्त्वादित्यादि पदानां शेषः । यस्माद्द्रव्यज्ञानक्रियादयो भवन्ति । तत्र तस्याहमोऽहङ्कारतत्त्वस्य महत्तत्त्वाद्यसर्गः । सतु स एव द्वितीयः । अत्र द्रव्यशब्देन सुवर्णादि द्रव्यजनकभूतानि ज्ञानशब्देन ज्ञानजनकज्ञानेन्द्रियाणि क्रियाशब्देन क्रियाजनककर्मेन्द्रियाणि आदिशब्देन मनोदेवतादेहाश्चोच्यन्ते । अहङ्कारस्त्रिविधः । तामसस्तैजसो वैकारिकश्चेति । तत्र तामसाहङ्कारादाकाशादिभुतान्युत्पन्नानि । तैजसाहङ्कारात्ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चोत्पन्नानि । वैकारिकाहङ्कारान्मनोदेवतादेहाश्चोत्पन्ना इति विवेकः । तन्मात्रद्रव्यशक्तिमानित्यत्र तन्मात्रेति ह्रस्वः छान्दसः । यस्तन्मात्राशक्तिमान् स्पर्शादितन्मात्राजनकशक्तिमान् । द्रव्यशक्तिमान् सुवर्णादिद्रव्यजनकशक्तिमान् भूतसर्ग आकाशादीनां पञ्चानां भूतानां सर्गः । स तु स एव तृतीयः । यद्यपि भूतानामेव तन्मात्राद्रव्यशक्तिमत्त्वम् । तथाऽपि भूतसर्गस्य तन्मात्राद्रव्यशक्तिमत्वमुपचारेणोक्तम् । तन्मात्राजनकशक्तिमत्त्वं न सर्वेषां भूतानां किंत्वाकाशादीनां चतुर्णामेव । पृथिव्यास्तु तत्साहचर्यादुपचारेणेति मन्तव्यम् । सुवर्णादीनां द्रव्यशब्दवाच्यत्वं तु विवादादि निमित्तकशीघ्रगमनात्साकल्येन प्राप्यत्वात् ॥ ता. अर्थः ॥ तादृशांशा इत्यारभ्य तमोज्ञेयमित्यन्तेन महत्तत्त्वे प्रविष्टानां महत्तत्त्वादिगुणानां परिमाणमुच्यते । एकस्तमोभागस्तद्दशगुणो रजोभागस्तद्दशगुणः सत्त्वभाग इति विवेकः । अहङ्कारस्तदात्मकः महत्तत्त्वात्मकः । महत्तत्त्वादुत्पन्न इति यावत् । ननु महत्तत्त्वे प्रविष्टानां सत्त्वभागानामधिकत्वात्तदुत्पन्नाहङ्कारतत्त्वेऽपि सत्त्वभाग एवाधिको वक्तव्यः । अतोऽहङ्कारतत्त्वाभिमानी रुद्रः सात्त्विक एव । कथं तामस इत्युच्यत इत्यत आह ॥ स रुद्र इति । यतो विरिञ्चापेक्षयैव रुद्रे सत्त्वं न्यूनमतः स रुद्रस्तामसोज्ञेयः । अनेन रुद्रस्य तामसशब्दवाच्यत्वे विरिञ्चापेक्षया न्यूनेन सत्त्वगुणोपेतत्वं प्रवृत्तिनिमित्तमित्युक्तं भवति । विरिञ्चापेक्षयैवेत्येवकारव्यावृत्तिं दर्शयति ॥ इतरापेक्षयेति । इतरापेक्षयेति इन्द्राद्यपेक्षया रुद्रे सत्त्वमधिकम् । अहङ्कारतत्त्वे प्रविष्टानां सत्त्वादिगुणानां परिमाणमाह ॥ सत्त्वाद्या इति । अस्याहङ्कारतत्त्वस्य सत्त्वाद्याः सत्त्वगुणाद्याः । तद्वदस्य । च शब्द एवार्थे । तद्वदेव महतत्त्वादेव परिमाणेनोपेताः ।

एकस्तमोभागस्तद्दशगुणो रजोभागस्तद्दशगुणः सत्त्वभाग इति विवेकः । मन आद्याः । आद्यशब्देन देवदेहा गृह्यते । मनोदेवदेहाश्च तत्तमोंऽशात् तस्य पूर्वोक्तरीत्या तमः शब्दवाच्योऽहङ्कारसंज्ञको योंऽशस्तस्माद्बहिरागतः सात्त्विकोंऽश इति प्रकीर्तितः । मनोदेवतादेहाश्चाहङ्कारतत्त्वस्य सात्त्विकेनांशेनोत्पन्ना इति यावत् । इन्द्रियाणि ज्ञानेन्द्रियकर्मेन्द्रियाणि अहङ्कारतत्त्वाद्बहिरागतो राजसोंऽशस्तु । तु शब्द एवार्थे । राजसोंऽश एवेति कीर्तितानि । अहङ्कारतत्त्वस्य राजसेनांशेनेन्द्रियाण्युत्पन्नानीति यावत् । खादय आकाशादयोऽहङ्कारतत्त्वाद्बहिरागतास्तामसोंऽशश्च तामसोंऽश एवेति कीर्तिताः । आकाशादयोऽहङ्कारतत्त्वस्य तामसेनांशेनोत्पन्ना इति यावत् । अयमत्र निष्कृष्टोऽर्थः । अहङ्कारतत्त्वं भागत्रयात्मकम् । तत्रैको भागोऽधिकसत्त्वोपेतत्वात् सात्त्विक इत्युच्यते । स एव वैकारिकाहङ्कार इत्युच्यते । स भागोऽहङ्कारतत्त्वाद्बहिरागत्य ज्ञानेन्द्रियकर्मेन्द्रियाण्युत्पादयति । तृतीयो भागोऽधिकतमसोपेतत्वात् तामस इत्युच्यते । स एव तामसाहङ्कार इत्युच्यते । स एवाहङ्कारतत्वाद्बहिरागत्याकाशादि भूतान्युत्पादयतीति । यतो भूतेषु भूतोत्पन्नेषु सुवर्णादिषु विवादादिनिमित्तेनेत्यादि पदानां शेषः । विवादादिनिमित्तेन लोकानां द्रवणं शीघ्रगमनं भवति । अतो भूतानि द्रवणप्राप्यसुवर्णादिजनकशक्तिमत्त्वात् द्रव्यशक्तीनीत्युच्यन्ते । यतः स्पर्शतन्मात्रादीनामित्यादि पदानां शेषः । स्पर्शतन्मात्रादीनां शब्दाद्यात्मकता । अतो भूतानि तन्मात्राशक्तीनि तन्मात्राजनकशक्तिविशिष्टानि । अनेन स्पर्शतन्मात्रादीनामाकाशादिभूतजन्यत्वाभावे यदि स्पर्शादितन्मात्रा आकाशादिजन्या न स्युस्तर्हि स्पर्शादितन्मात्रास्वाकाशादि गुणानां शब्दादीनामनुवृत्तिर्नस्यादिति बाधकमुक्तं भवति । न केवलं भूतानि द्रव्यशक्तीनि किन्तु तन्मात्राशक्तीनि चेति समुच्चयार्थस्तथा शब्द इति ॥ १५-१६ ॥

प्रभो विरिञ्चादबुद्धिकृतोऽबुद्ध्या कृतः । अथवा । हरिपूजाबुध्या कृतः । यस्तमसोऽविद्यायाः सर्गः । स तु एव षष्ठ इत्यर्थः । यथाऽबुद्धिकृतं कार्यं हेयं भवति । तथा तमसः सर्गस्य हेयत्वादबुद्धिपूर्वकत्वमुपचारेणोक्तम् । एतेन विरिञ्चसृष्टेः सर्वस्यापि बुद्धिपूर्वकत्वात् । तमसः सर्गोऽबुद्धिपूर्वं कृत इति वचनमनुपपन्नमिति दूषणं निरस्तम् । अबुद्धिपूर्वं कृत इत्यनेनोक्तमबुद्धिपूर्वकत्वमौपचारिकमित्युक्तत्वात् । एतेनैव हेयस्य तमसः सृष्टिर्विरिञ्चेन कथं कृतमिति शङ्का परास्ता । अबुद्धिकृत इत्यत्र परमात्मवाचकेन अ शब्देन परमात्मपूजां गृहीत्वा परमात्मपूजाबुद्ध्या कृत इत्यर्थान्तरस्योक्तत्वात् ॥ ता. अर्थः ॥ अनेनाबुद्धिकृत इति मूलस्थपदमबुद्धिपूर्वमिव कृतः । यथाऽहङ्कारादि सृष्ट्या हरिपूजा भवति । यथाऽविद्यासृष्ट्या दैत्यादीनां मोहे जाते हरिपूजा भविष्यतीत्येवं बुद्ध्या कृत इति द्वेधा व्याख्यातं भवति । उत्पन्नेति वक्तव्ये प्रादुर्भूतेत्युक्त्या पूर्वमविद्येश्वरेणोत्पन्नाऽनन्तरं विरिञ्चेन प्रादुर्भूतेत्युक्तं भवति । एतेनाद्यस्तु महतः सर्गो गुणवैषम्यमात्मन

इत्यादिना महदादिसृष्टिः परमेश्वराज्जातेत्युक्तत्वात् अविद्यासृष्टिः परमेश्वराज्जातेति वक्तव्यम् । विरिश्वाज्जातेति कथनमयुक्तमिति शङ्कानवकाशः । अबुद्धिकृत इत्यस्याबुद्ध्योत्पन्न इत्यर्थो न भवति । किंत्वबुद्ध्या प्रादुर्भूत इत्यर्थ इत्यङ्गीकारात् । यद्यपि परमात्मजन्योऽविद्यायाः सर्गः । सृष्टिःस्तथाऽपि तत्सम्बन्धित्वाद्विरिश्चेन प्रादुर्भूतोऽविद्यायाः सर्गोऽपि षष्ठ इत्युच्यते ॥ १७ ॥

अन्तःस्पर्शा इत्यस्येयं योजना । अन्तःशब्देन समीपस्था गृह्यन्ते । अप्रयत्नादिष्टानां प्रत्यक्षतदनुकूलानुमानाभ्यामिति योग्यतया संबध्यते । स्पर्शशब्देन ज्ञानं गृह्यते । ततश्चान्तःस्पर्श इत्यनेन प्रयत्नात्समीपस्थानामिष्टानां प्रत्यक्षतदनुकूलानुमानाभ्या ज्ञानं येषां तेऽन्तःस्पर्शा इत्यर्थो लभ्यत इति ॥ ता. अर्थः ॥ यद्यस्मात्कारणात्तिरश्चीनानां स्थावराणां चाप्रयत्नात् यच्च समीपस्थितं यच्च हृद्गमिष्टं तस्य ज्ञानं प्रत्यक्षतदनुकूलानुमानाभ्यां भवति । अतस्तिरश्चीनाः स्थावराश्चान्तः स्पर्शा इतीरिताः । अनेन स्थावरा एव अन्तः स्पर्शशब्दवाच्या इति भ्रमः परिहृतो भवति । प्रत्यक्षानुमानाभ्यामित्येतद्व्यावर्त्यं दर्शयति ॥ न शाश्वत इति ॥ तिरश्चीनानां स्थावराणां चाप्रयत्नात्समीपस्थितानामिष्टानां ज्ञानं प्रत्यक्षतदनुकूलानुमानाभ्यां भवति । न शाश्वतदनुमानाभ्यामिति ॥ १९ ॥

हृद्यवेदिन इत्यस्येयं योजना । हृच्छब्दो हृदयंगमप्रतिपादकः सन्निकृष्टपरः । सप्तम्या अलुक । अप्रयत्नात्समीपस्थिते प्रत्यक्षानुमानाभ्यामिति योग्यतया संबध्यते । वेदिन इत्यत्र ज्ञानार्थकाद्वेदन शब्दान्मत्वर्थे इनि प्रत्ययः । ततश्च हृदिवेदिन इत्यनेनाप्रयत्नात्समीपस्थिते इष्टे विजये प्रत्यक्षानुमानाभ्यां ज्ञानं येषामस्ति ते हृदिवेदिन इत्यर्थो लभ्यत इति । प्रवृत्तिनिमित्तस्य विद्यमानत्वात्स्थावराणामपि हृदिवेदिन इति शब्दवाच्यं द्रष्टव्यम् । अत्र प्रमाणं तु प्रागुदाहृतमेव ॥ २० ॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ३-११ ॥

## द्वादशोऽध्यायः

ते द्वेघटिके मुहूर्तं विदुरिति पूर्वेणान्वयः । षट्घटिकाः प्रहर इति विदुः । अनेन दिवा रात्रौ च पञ्च प्रहराः । एकैक प्रहरस्य षट् घटिकाः । एवं च दिवा रात्रौ च षट् घटिका भवतीत्युक्तं भवति । यद्यपि यदा दिवा रात्रौ वा त्रिशंद्धटिकापेक्षयाऽधिको न्यूनो वा कालो भविष्यति । तदा प्रहरस्य षट् घटिकापेक्षयाऽधिको वा न्यूनो वा कालो भविष्यति । तथाऽपि अल्पत्वेनाविवक्षामाश्रित्य प्रहरः षट् घटिका भवन्तीत्युक्तम् । सप्त घटिका नृणां याम इति विदुः । अनेन दिवा रात्रौ च चत्वारो यामाः। एकैक यामस्य सप्त घटिकाः । एवं च दिवा रात्रौ चाष्टाविंशत् घटिका भवन्तीत्युक्तं भवति । यद्यपि दिवा रात्रौ वाऽष्टाविंशति घटिकापेक्षयाऽधिको वा न्यूनो वा कालो भविष्यति । तदा यामस्य

सप्तघटिकापेक्षयाऽधिको वा न्यूनो वा कालो भविष्यति । तथाऽप्यल्पत्वेनाविवक्षामाश्रित्य यामस्य सप्त घटिका भवन्तीत्युक्तम् । वा शब्दोऽनुक्तविकल्पे । अष्टौ वा घटिका नृणां यामः । अनेन दिवा रात्रौ प्रत्येकं चत्वारो यामाः । एकैक यामस्याष्टघटिकाः । एवं च दिवा रात्रौ च द्वात्रिंशति घटिका भवन्तीत्युक्तं भवति । यद्यपि दिवा रात्रौ वा त्रिंशद्घटिकापेक्षयाऽधिको वा न्यूनो वा कालो भविष्यति । तदा यामस्याष्ट घटिकापेक्षयाऽधिको वा न्यूनो वा कालो भविष्यति । तथाऽप्यल्पत्वेनाविवक्षामाश्रित्य यामस्याष्टघटिका भवन्तीत्युक्तमिति ॥ ता. अर्थः ॥ यामस्य सप्तौ वाऽष्टौ वा घटिका इत्युक्तम् । कस्मिन्काले यामस्य सप्त घटिकाः कस्मिन्काले यामस्याष्टघटिका इत्याशङ्कापरिहारार्थं निर्णायकहेतुद्वयमनेनोच्यते ॥ राशिभेदात् । धनुरादिराशिभेदात् । घटिकानामिति शेषः । घटिकानामूनातिरेकाद्वा । यामस्येति शेषः । वा शब्दोऽनुक्तविकल्पे । यामस्य सप्तौ वाऽष्टौ वा घटिका इति निर्णयः । कर्तव्य इति शेषः ॥ अयं भावः ॥ यदा धनुरादि राशिरायाति । तदा यामस्य दिवा सप्त घटिका रात्रावष्टौ घटिका इति निर्णयः कर्तव्यः । यदा दिवा द्वात्रिंशद्घटिका भवन्ति । तदा यामस्य दिवा अष्टौ घटिका रात्रौ सप्त घटिका इति निर्णयः कर्तव्य इति ॥ ८ ॥

मनुः स्वं स्वं कालं भुङ्क्ते । स्वकालः क इत्यत आह ॥ साधिकेति । साधिका सार्धाष्टादशलक्षाधिका । महायुगानामिति शेषः । महायुगानामेकसप्ततिः एकाधिका सप्ततिः स्वकालः । उपलक्षणमेतत् । सहस्रसंवत्सराणां विंशतिमनूनां प्रलयकाल इत्यपि द्रष्टव्यम् ॥ अत्रायं विवेकः ॥ सहस्रद्वयं प्रथममनोः प्रलयकालः । द्वितीयमारभ्य षष्ठपर्यन्तानां मनूनां प्रत्येकं चतुःशतोत्तरसहस्रं प्रलयकालः । सप्तममारभ्य द्वादशपर्यन्तानां मनूनां पञ्चशतोत्तरसहस्रं प्रलयकालः । त्रयोदशमनोर्द्विशताधिकसहस्रं प्रलयकालः । चतुर्दशमनोर्द्विशतन्यूनसहस्रं प्रलयकाल इति ॥ ता. अर्थः ॥ युगैकसप्ततेः महायुगानामेकाधिकसप्ततेरूर्ध्वं वत्सराणां मनुष्यवत्सराणां सार्धाष्टादशलक्षकं मनोः प्रत्येकं भुक्तिः भुक्तिकालः । मनूनां भोगकालमुक्त्वा प्रलयकालमाह ॥ सहस्रमिति ॥ अथवा ॥ अपि वेति शब्दौ व्यवस्थितविकल्पे । मनोर्मनूनां शतानां वत्सराणां चतुरुत्तरसहस्रं ॥ अथवा ॥ शतानां पञ्चोत्तरसहस्रम् । अपि वा द्विसहस्रं प्रलयः प्रलयकालः । व्यवस्थां दर्शयति ॥ आद्येष्विति । आद्येष्विति पदसामर्थ्यात् द्वितीयेषु त्रयोदशचतुर्दश इत्यपि लभ्यते । आद्येषु षट्शतानां चतुरुत्तरसहस्रं द्वितीयेषु षट्शतानां पञ्चोत्तरसहस्रं त्रयोदशे द्विसहस्रं द्विशताधिकं सहस्रं चतुर्दशे द्विसहस्रं द्विशतन्यूनं सहस्रम् । आद्येषु षट्चतुरुत्तरसहस्रमित्युक्तस्यापवादमाह ॥ प्रथम इति । आद्येषु षट् प्रथमे द्विसहस्रद्वयं प्रकीर्तितम् । प्रलयश्चैवेत्येवशब्द एवमित्यनेन संबध्यते । एवमेवेन्द्रादीनाम् । ह्रस्वः छान्दसः । इन्द्रादीनां प्रलयश्चेति चशब्दोऽत इत्यनेन संबध्यते । अतश्च प्रलयकालो भोगकालश्च भवेदिति ॥ २४ ॥

अन्ये पूर्वोक्तब्रह्माण्डादन्ये कोटिशः कोटिसंख्याका अण्डराशयः । भगवत्स्वरूपाणामिति शेषः । भगवत्स्वरूपशरीराण्यन्तर्गताः सन्तो लक्ष्यन्त इति ॥ अयं भावः ॥ यथैकमेव गृहमनेकेषु दर्पणेषु प्रतिफलति । तथैकमेव ब्रह्माण्डं भगवत्स्वरूपशरीरेषु प्रतिफलति । दर्पणेषु प्रतिफलितानां गृहाणां भेदः । भगवच्छरीरेषु प्रतिफलितानां ब्रह्माण्डानां सीतातत्प्रतिकृतिनिष्ठाभरणानामिवाभेद इति विशेष इति ॥ ता. अर्थः ॥ स्वशरीराणि भगवदिति योग्यतया संबध्यते । भगवत्स्वरूप-शरीराण्यन्तर्गताः । यस्य पृथिवी शरीरमित्याद्युक्तपृथिव्याद्यौपचारिकशरीरव्यावृत्यर्थं स्वशरीराणी-त्युक्तम् । अन्तरान्तरेण योग इवान्तर्योगेऽपि द्वितीयाया उपसंख्यानात्स्वशरीराणीति द्वितीया । शरीराणां भगवत्स्वरूपशरीराणां बहुत्वेनाण्डान्तानां बहुत्वम् । अण्डबहुत्वे शरीरबहुत्वं कथं निमित्तमित्यत आह ॥ अस्यैवेति । अस्य प्रसिद्धस्य ब्रह्माण्डस्यैव देवकार्येषु नारायणशरीरेषु । सर्वेष्विति शेषः । सर्वेषु च सर्वेष्वपि विष्णुसामर्थ्यतः । प्रतिप्रतिदर्शनात् प्रतिफलनात् । तथाऽतीता-नागतैर्ब्रह्माण्डैः सह वर्तमानब्रह्माण्डस्य बहुत्वम् । अन्यथा पूर्वोक्तप्रकारद्वयात् अन्यथाऽण्डानां बहुत्वं न भवेत् । यथा दर्पणेषु प्रतिफलितानां गृहादीनां भेदस्तथा भगवच्छरीरेषु प्रतिफलितानां ब्रह्माण्डानां भेदं प्रति भ्रमं प्रमाणद्वयोदाहरणेन परिहरति ॥ एकमिति । ब्रह्मा विरिञ्चः अण्डं ब्रह्माण्डं हरेः प्रत्येकं रोमकूपं रोमकूपेषु प्रतिफलितं सदेकं बहुत्वेनावच्छिन्नत्वं जातमित्यपश्यत् । यथाऽऽत्मानं स्वात्मानं तेषु ब्रह्माण्डेषु पृथक् पृथगपश्यत् । एकं ब्रह्माण्डं बृहद्बह्भवदिति ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां द्वादशोऽध्यायः ॥ ३-१२ ॥

## त्रयोदशोऽध्यायः

गृहे विद्यमानां वार्ता बहुभ्यः सुवर्णादि प्रतिग्रहः । असंचयः एकैकदिनोपयुक्तसङ्ग्रहवत्त्वम् । शालीनं शालि शब्दो धान्यपरः । शाल्यादि धान्यसम्बन्धिबहुप्रतिग्रहः । शिला क्षेत्रपति-तकणिशोपादानम् । उंच्छः उलूखलादि समीपपतितकणोपादानम् । इत्येता वृत्तीरसृजदिति पूर्वेण सम्बन्ध इति । वै शब्दः प्रसिद्धिद्योतनार्थः । एतदेवाभिप्रायेण तात्पर्यम् । अत्र यायावरशब्देन सुवर्णादि यायावरं ग्राह्यम् । एतेन वार्ता विचित्रशालीनं यायावर्यं शिलोञ्छनमिति सप्तमस्कन्धे विचित्रशालीनं यायावर्यमित्युक्तत्वात् । शालीनमित्यस्य शाल्यादि धान्यसंबंधि यायावर्यमित्यर्थो वक्तव्यः । तथाच वार्ताशब्देन यायावरमात्रग्रहणेंऽशे पुनरुक्तमिति दूषणमपास्तम् । वार्ता यायावर-मित्यनेन वार्ताशब्दस्य यायावरमात्रार्थः नोच्यते । किन्तु सुवर्णादि यायावरार्थत्वमुच्यत इत्यङ्गीकारात् । शिलोञ्छयोरैक्यविवक्षया गृहस्थवृत्तीनां चतुष्टयं ज्ञातव्यम् ॥ ४२ ॥ इति श्रीभागवतटिप्पण्यां त्रयोदशोऽध्यायः ॥ ३-१३ ॥

## चतुर्दशोऽध्यायः

अथाऽपि प्रजानां न इत्यात्मशक्तिषु इज्यासु पूजारूपेषु आत्मशक्तिषु अस्मच्छक्तिविषयेषु कर्मसु मध्ये केन कर्मणा ते तव शुश्रूषा परमशुश्रूषणं भवेत् । वा शब्द एवार्थे । तद्वा तदेव कर्म विधेहि तुभ्यं नमोऽस्त्विति । एतेन पुजारूपसर्वकर्मभ्यः शुश्रूषाया जायमानत्वात् । केन शुश्रूषा भवेदिति कथनमनुपपन्नमिति दूषणं परिहृतम् । मुख्यामुख्यन्यायेन शुश्रूषाशब्देन परमशुश्रूषाया ग्रहणात् । अत एव परं शुश्रूषणं मह्यमिति वक्ष्यति ॥ ७ ॥

सुनाभसन्दीपिततीव्रमन्युरित्यस्य स्वामिन् हिरण्याक्षं शीघ्रं जहि विलंबः कुतः क्रियत इत्युक्त्वा सुनाभेन चक्रेण सन्दीपितोऽभिव्यक्तीकृतस्तीव्रो मन्युरानन्दात्मककोपो यस्य स सुनाभसन्दीपित-तीव्रमन्युरित्यर्थः ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥ ३-१४ ॥

## पञ्चदशोऽध्यायः

ब्रह्मादयो यत्कृतसेतुपाला यत्कृतमर्यादापालकाः इदं विश्वं यत्कारणं यःकारणं यस्य तद्यत्कारणं यस्य विश्वकारणत्वं माययेच्छामात्रेणेत्येतद्धिप्रमाणप्रसिद्धम् । हसन्ति यस्याचरितमित्यत्र विद्यमानो यस्येति शब्दोऽत्रानुवर्तते । तस्य यस्य विष्णोर्गर्भिणीवधपरिहारार्थं पिशाचचर्यां कृत्वाऽमङ्गलत्वं प्राप्तवानिति प्रदर्शनरूपं चरितं विडम्बनं परापकीर्तिसंपादकलोकानुकरणम् अहो आश्चर्यं चेति । एतेन ब्रह्मादीनां रुद्रकृतसेतुपालकत्वाभावाद्ब्रह्मादयो यत्कृतसेतुपाला इत्युक्तमिति दूषणं निरस्तम् । यच्छब्देन रुद्रस्य ग्रहणमनङ्गीकृत्य विष्णोर्ग्रहणमित्यङ्गीकारात् । एतेनैव पूर्वश्लोकेषु रुद्रस्यैव प्रकृतत्वादस्मिन् श्लोके विष्णोर्ग्रहणमनुपपन्नमिति चोद्यं परास्तम् । हसन्ति यस्याचरितमित्यत्र विद्यमानस्य यस्येति शब्दस्यानुवृत्तिमकारान्तत्वं चाङ्गीकृत्य अकयप्रविसंभूमसख ह्रा विष्णुवाचका इति वचनादयं यशब्दो विष्णुवाचीत्यभिधानात् । एतेनैव पिशाचचर्या-रूपप्रायश्चित्तविषयानुज्ञाप्रधानस्य विडम्बनरूपत्वाभावात्पिशाचचर्यारूपप्रायश्चित्तानुज्ञारूपं चरितं विडम्बनमिति वचनमयुक्तमिति दूषणं परिहृतम् । रुद्रइत्यादि शेषपूरणेन रुद्रो विष्ण्वाज्ञया पिशाचचर्यां कृत्वाऽमङ्गलं प्राप्तवानिति प्रदर्शनरूपं चरितं विडम्बनमित्यर्थस्योक्तत्वात् । अत एव तात्पर्ये प्रमाणम् ॥ २८ ॥ इति श्रीभागवतटिप्पण्यां पञ्चदशोऽध्यायः ॥ ३-१५ ॥

## षोडशोऽध्यायः

अनिमित्तेनेत्यस्य अः विष्ण्वपर्णं निमित्तं उद्देश्यं यस्य तेनानिमित्तेनेत्यर्थः । विष्णुवाचकशब्दो विष्ण्वर्पणपरः । निमित्तशब्द उद्देश्यवाचीत्यभ्युपगमात् ॥ १४ ॥

यत्र वैकुण्ठे सललनाः स्त्रीभिः सहिता वैमानिका विमानेन चरन्तः पुरुषा अन्तर्जले तु विशेषतो विलसन्मधुमाधवीनां विलसन्तीनां वैशाखसम्बन्धिनीनां सुमनसाम् अनिलम् अनिलेन वायुना आनीतेन गन्धेन खण्डितधियः खण्डिता भगवता वियुक्ता धीः अन्तःकरणं येषां ते खण्डित-धियोऽपि पुनर्भगवत्यन्तःकरणं क्षिपन्तः स्थापयन्तो भर्तुः हरेः लोकशमलक्षपणानि लोकपाप-विध्वंसकराणि चरितानि गायन्तीति । अस्मिन् श्लोकेऽमुक्ता एव प्रतिपाद्याः । न मुक्ताः । मुक्तानां खण्डितधीत्वायोगात् ॥ ता. अर्थः ॥ वैकुण्ठलोकगाः केचन मुक्ता एव केचनाधिकारस्था अमुक्ता एवेति द्वेधा द्विप्रकारावच्छिन्नाः । तत्रामुक्तानां कापि कदाचिद्ब्रह्मो भगवतोऽन्यत्रान्तःकरणस्य चलनम् । भगवत्खण्डितधीत्वमिति यावत् । चशब्द एवार्थे । मुक्तानां क्वचिदपि कदाचिदपि भ्रमो न च नैव भवतीति ॥ १७ ॥

येऽभ्यर्थितां सर्वैःसम्यक् प्रार्थितां यत्र यस्यां नृगतौ सहधर्म निवृत्तधर्मेण सहितं तत्त्वविषयं ज्ञानं अमुष्य भगवत आराधनं चोत्पत्तुमर्हति । ताम् । भगवज्ज्ञानाराधनयोग्यमिति यावत् । नृगतिं मनुष्यगतिं प्रपन्ना अपि प्राप्ता अपि भगवतो विततया मायया मोहिताः सन्तः सहधर्मतत्त्वविषयं ज्ञानं न वितरन्ति न सम्पादयन्ति । अमुष्य भगवत आराधनं च न वितरन्ति न कुर्वन्ति ते नृगतिं नोपपन्ना मानुषा एव न भवन्ति । किन्तु पशव एव । इत्येतन्नु निश्चितमिति ॥ ता. अर्थः ॥ य इति शब्दस्य नो इत्यनेन व्यवहितत्वादन्वयं दर्शयति ॥ ये नृगतिमिति । प्रपन्ना अपीति शेषः । अनेन य इति यच्छब्दस्य नृगतिप्रपन्ना अपीत्यनेनान्वय उक्तो भवति । उत्पत्तुमर्हतीत्यस्य शेषेण यत्रेत्यादेः यत्र सहधर्मतत्त्वज्ञानं भगवत आराधनं चोत्पत्तुमर्हति । तामित्यर्थो वक्तव्य इति भावेनाह ॥ ज्ञानादि योग्यामिति । आदिशब्देन निवृत्तधर्माराधनयोर्ग्रहणम् । निषेधकार्थस्य नो इत्यस्य प्रपन्ना इत्यस्या-वृत्तिं कृत्वा तेनान्वयो वक्तव्य इत्यभिप्रेत्याह ॥ न प्रपन्ना इति । अनेन येऽभ्यर्थितां यत्र सहधर्मतत्त्वविषयं ज्ञानं भगवत आराधनं चोत्पत्तुमर्हति । तां नृगतिं प्रपन्ना अपि विततया भगवतो मायया मोहिताः सहधर्मतत्त्वविषयं ज्ञानं वितरन्ति । अमुष्य भगवत आराधनं च न वितरन्ति ते नृगतिं नो प्रपन्ना इति श्लोकस्य पदान्वयः सूचितो भवति । ये नृगतिं प्रपन्ना अपि भगवतो विततया मायया मोहिताः सहधर्मतत्त्वविषयं ज्ञानं न वितरन्ति भगवत आराधनं च न वितरन्तीत्यस्य तात्पर्यार्थमाह ॥ ते मोहादिति । ते धर्मज्ञानभगवदाराधनयोग्यनृगतिं प्रपन्ना मोहात् भगवन्मायया मोहात् । भगवदाराधनं कुर्वन्तीत्युपलक्षणम् । सहधर्मतत्त्वज्ञानं च संपादयन्तीत्यपि द्रष्टव्यम् । ये नृगतिं नो प्रपन्ना इत्यस्य तात्पर्यार्थमाह ॥ धर्मेति । धर्मे । ज्ञानेति भगवदाराधनस्याप्युपलक्षणम् । धर्मज्ञानभगवदाराधनविवर्जिता मानुषा एव न भवन्ति किन्तु पशव इति तात्पर्यार्थ इति । एतेन ये मोहाद्भगवदाराधनं न कुर्वन्तीति वक्तव्यम् । ते मोहाद्भगवदाराधनं न कुर्वन्तीति कथनमनुपपन्नमिति दूषणं निरस्तम् । ये नृगतिमित्यस्यान्वयपूर्त्यर्थं मोहादिति । तच्छब्दः प्रयुक्त इत्यनङ्गीकारात् ॥२४॥

वक्रभ्रुवेत्यस्य वक्रे कुटिल वक्रे स्थितया भ्रुवेत्यर्थः । एतेन वक्रे स्थितयेति विशेषणं व्यर्थमिति दूषणं परास्तम् । वक्रशब्देन कुटिलवक्रं गृहीत्वा कुटिलवक्रस्थितत्वोक्त्या भ्रूकौटिल्ये वक्रकौटिल्यं निमित्तमित्युक्तं भवतीत्यभ्युपगमात् ॥ २८ ॥

आरपुरटवज्रकवाटिका इत्यस्य निर्णिक्तपित्तलसदृशसुवर्णवज्रमयकवाटिका इत्यर्थः । एतेन वैकुण्ठे सुवर्णदौर्लभ्याभावात्कवाटिकासुवर्णस्य पित्तलयुक्तत्वाभिधानमयुक्तमिति दूषणं पराकृतम् । कवाटिका सुवर्णस्य महाकान्तिज्ञापनार्थमारशब्देन निर्णिक्तपित्तलसादृश्यमुच्यत इत्यभ्युपगमात् ॥ २९ ॥

समस्तकुक्षौ स्थिते भगवति इह वैकुण्ठे स्थिताद्भगवतोऽन्तरं भेदो नेत्येतद्धि प्रमाणप्रसिद्धम् । किं तत्प्रमाणमित्यतो वैकुण्ठस्थितज्ञानिनां प्रत्यक्षं प्रमाणमिति भावेनाह ॥ आत्मानमिति । यत्र यस्मिन्वैकुण्ठे स्थिता धीरा आत्मनां सर्व कुक्षिस्थं परमात्मानं आत्मनि वैकुण्ठस्थितपरमात्मान्तर्गतत्वेन पश्यन्ति सर्वकुक्षिस्थितम् । भगवन्तं वैकुण्ठस्थितभगवदैक्येन पश्यन्तीति यावत् । अत्र दृष्टान्तमाह ॥ नभो घटपटाद्याकाशं नभसीव महाकाश इव महाकाशान्तर्गतत्वेन यथा पश्यन्ति । तत्र वैकुण्ठे स्थिताभ्यां सुरलिङ्गिनोः । सुरलिङ्गिभ्यां युवयोः युवाभ्यां अस्य वैकुण्ठस्थितपरमेश्वरस्योदरभेदिभयं सर्वोदरस्थितभगवद्भेदनिमित्तकभयं व्युत्पादितं ज्ञातम् । यतो यत्परमेश्वरस्य भयव्युत्पादनं तत् किं कुत्सितम् । भयसाधनमित्येतद्धि प्रमाणप्रसिद्धमिति ॥ ता. अर्थः ॥ समस्तकुक्षावित्यतः परमध्याहार्यं दर्शयति ॥ स्थित इति । यत्रेत्यस्य तात्पर्यमाह ॥ अस्मिंल्लोक इति । अस्मिन्वैकुण्ठलोके स्थिता धीराः तत्स्थं सर्वोदरस्थितं भगवद्रूपं बहिष्ठैक्येन सर्वोदराद्बहिर्वैकुण्ठे स्थितान् भगवत ऐक्येन पश्यन्ति । भगवदैक्ये नभो नभसीवेति दृष्टान्त उक्त इत्यभिप्रेत्य नभो नभसीवेत्यनुवादः कृतः । यत्रेति यच्छब्दस्य तच्छब्दसापेक्षत्वात्तत्रेत्यध्याहारः कृतः तत्र वैकुण्ठे । स्थिताभ्यामिति शेषः । सङ्कोचे कारणाभावात् । उदरशब्देन सर्वोदरं ग्राह्यमिति भावेन प्रत्युदरेत्युक्तम् । प्रत्युदरभेदनिमित्तं प्रत्युदरान्तर्यामिभेदनिमित्तं मूले यत इति । तसिः प्रथमादेश इत्यङ्गीकृत्य तदित्यध्याहारं चाभ्युपेत्य यत्परमेश्वरभयव्युत्पादनं तत् किं कुत्सितमिति किं शब्दस्यान्वयो वक्तव्य इति भावेन व्युत्पादितं किमित्युक्तम् । एतेन व्युत्पादितं भयमिति सिद्धत्वाद्व्युत्पादितं किमिति पदम् । परमेश्वरे भयमस्तीति भावः कृत इत्यनङ्गीकारे बाधकप्रदर्शनपरतयाऽपि व्याचष्टे ॥ अन्यथेति । तेनान्यथा किमिति निवारणमित्यस्य व्याख्यानं नास्तीति शङ्कानवकाशः । सर्वान्तर्यामिभयं वैकुण्ठस्थितभगवतोऽस्तीति जानतां भयं भवतीत्यत्र प्रमाणमाह ॥ सर्वेति । यद्वैकुण्ठस्थितं ब्रह्म तदेव सर्वोदरगतम् । अतो वैकुण्ठस्थितं ब्रह्म सर्वोदरगतं ब्रह्मभयेन युक्तमिति ये विचक्षते तेषां सर्वत्रापि भयं भवेत् । मृतानां तमश्च भवत्येवेति ॥ ३३ ॥

अत्र रमाद्यङ्गमयोपसृष्टं संसृष्टमित्येव प्रकारेणेन्दिराया उत्स्मृतमित्याश्चर्यविषयीभूतां स्वानां भक्तानां धिया विरचितं विशेषेण स्मृतं बहुसौभगाढ्यं बहु सौभगविशिष्टं चेति । अत्र विरचित-मित्यनेन स्मृतत्वमेवोच्यत न तु कृतत्वमित्यभिप्रेत्याचार्यैस्तात्पर्ये उक्तम् ॥ तस्यार्थः ॥ अविद्य-मानकरणं अविद्यमानस्योत्पादनं तथा पूर्वसिद्धेषु पूर्वज्ञानेष्वर्थेषु विद्यमानस्मृतिज्ञानकाले विद्यमानस्य स्मरणमित्युभयं रचनं प्रोक्तम् । पूर्वज्ञातेषु ज्ञानकालेऽविद्यमानस्य तु स्मरणं स्मृतिरिति । एतेन पुर्वसिद्धेषु तु स्मृतिरित्येव्यर्थमिति चोद्यं निरस्तम् ॥ ४२ ॥

हे अंग ये त्वदङ्घ्रिशरणास्त्वत्पादएव शरणाः कुशला दाराघनकुशलाः कीर्तन्यतीर्थयशसः कीर्तनीयशुद्धयशसो भवतः कथाया रसज्ञास्ते आत्यन्तिकं मुख्यं प्रसादं प्रसादसाध्यं मोक्षं विशेषेण प्राधान्येन । अपि शब्दोऽवधारणे । नापिनैव गणयन्ति । ते भ्रुव उन्नयैः विजृंभणैरर्पितभयमन्यत् । पारमेष्ठ्यादिकं न गणयन्तीति किञ्च वक्तव्यम् । भगवदर्थं मोक्षगणनस्य क्रियमाणत्वान्न गणयन्ती-त्युक्ते बाधः स्यादतो विशेषेण न गणयन्तीत्युक्तम् । गौणमोक्षव्यावृत्त्यर्थं आत्यन्तिकमित्युक्तमिति । अत्र केचन मुक्तियोग्या मोक्षं न गणयन्तीत्युक्त्या केचन मुक्तियोग्या मोक्षं गणयन्तीति प्रतीयते । तदनुपपन्नम् । मोक्षकामनाराहित्यलक्षणभक्तिज्ञानपरिपाकस्य मोक्षसाधनत्वात् । मोक्षकामनाविशि-ष्टानां मोक्षाभावप्रसङ्गादिति चेन्न । मोक्षकामनाराहित्यलक्षणभक्तिपरिपाकाभावेऽपि केषाञ्चिन्मुक्ति-र्भवतीत्यङ्गीकारात् । नन्वेवं तर्हि मोक्षकामनाविशिष्टानामपि मोक्षस्य जायमानत्वान्मोक्षकामनात्यागो व्यर्थ इति चेन्न । मोक्षेच्छुभक्तिसुखापेक्षया मोक्षानिच्छूनां मुक्तिसुखमधिकमित्यङ्गीकारात् ॥ ता. अर्थः ॥ कश्चिद्भक्तिज्ञानपरिपाकान्मोक्षकामनाराहित्यलक्षणभक्तिज्ञानपरिपाकात्पूर्वं च पूर्वमेव । भक्तिज्ञानपरिपाकं विनैवेति यावत् । किञ्चिन्मुच्यते । भक्तिज्ञानपरिपाकाभावे साधनाभावे कथं मोक्ष इत्यत आह ॥ दर्शनेनेति । तत्र तस्य हरेर्दर्शनेन मुच्यते । भक्तिज्ञानपरिपाकं विना भगवद्दर्शनमात्रेण मुक्तिश्चेदुत्तमाधिकारिणां भक्तिज्ञानपरिपाको व्यर्थः स्यादित्याशङ्कापरिहारार्थं किञ्चिन्मुच्यत इत्युक्तम् । तदेव विवृणोति ॥ नेति । भक्तिज्ञानपरिपाकरहितानामानन्दः पूर्णतां व्रजेत् भक्तिज्ञान-परिपाकविशिष्टानामानन्दो न्यूनतां व्रजेत् । मोक्षेच्छुभ्य इत्यतः परमुत्तमाधिकारिणां मोक्षगण-नात्यागः सार्थक इति शेषः । यतो मोक्षेच्छुभ्योऽनपेक्षकाणां मोक्षानपेक्षकाणामानन्दोद्रेकः प्रमाण-सिद्धोऽत उत्तमाधिकारिणां मोक्षगणनात्यागः सार्थकः । तेषां मोक्षेच्छूनां परिपाकतो मोक्षकाम-नाराहित्यलक्षणभक्तिज्ञानपरिपाकतः पूर्वं ब्रह्मदृष्ट्या मुक्तिप्राप्तेः प्रमाणसिद्धत्वाद्भक्तिज्ञानपरिपाका-भावे कथं मुक्तिः स्यादित्याशङ्कानवकाश इति शेषः । मोक्षकामनारहितानां प्रकारान्तरेणाधिक्यं प्रमाणेनाह ॥ मुमुक्षोरिति । न केवलो मोक्षकामनारहितो भक्तो मुक्तेः पूर्वं मुक्तावपि मुमुक्षोः सुखी अधिकसुखी भवेदिति ॥ ४८ ॥ इति श्रीभागवतटिप्पण्यां षोडशोऽध्यायः ॥ ३-१६ ॥

## सप्तदशोऽध्यायः

सोऽसाधुवादस्तत्कीर्तिं तस्यासाधुविषयस्य कीर्तिं हन्ति । अत्र दृष्टान्तमाह ॥ त्वचमिवेति । त्वचे त्वच आमयो रोग इव यथा कुष्टरोगः कीर्तिं हन्ति । एतेन कीर्तिं हन्तीत्यत्रेव दृष्टान्तो वक्तव्यः । आमयो रोगस्त्वचं हन्तीति हननमात्रे दृष्टान्तकथनमसङ्गतमिति दूषणं परास्तम् । त्वचमिति द्वितीया षष्ठ्यादेश इत्यभ्युपगम्य कुष्टरोगो यथा कीर्तिं हन्तीत्यर्थस्योक्तत्वात् ॥ ५ ॥

मधुव्रतपतेः मधुना सारस्य व्रतं भोजनं येषां ते मधुव्रताः । तेषां पतेरिति यावत् । नवदामधाम्नः नूतनमौक्तिकादि धारकस्य तत उरसि स्थिताऽपि लक्ष्मी धन्यार्पिताङ्घ्रितुलसीपादस्था तुलसी तस्याः लोकं पादस्य स्थानं स्पर्धयेव कामयानेति । एतेन तुलस्या इति वक्तव्यं तुलसीति प्रथमान्त-प्रयोगोऽनुपपन्न इति दूषणस्यानवकाशः । तुलसीति प्रथमा षष्ठ्यादेश इत्यङ्गीकारात् ॥ ता. अर्थः ॥ भ्रमराणां पतेरिति प्रतीतिं वारयितुं मधुपतेरित्यस्य विवक्षितमर्थमाह ॥ सारग्राहिणां पतेरिति । ननु पतिःसमास एवेति समास एव घिसंज्ञाया विधानात्सारग्राहिणां पत्युरिति वक्तव्यम् । पतेरित्यनुपपन्नमिति चेन्न । पतिःसमास एवेत्यस्य पतिशब्दः प्रायः समास एव घिसंज्ञकः कचिद-समासेऽपि घिसंज्ञको भवतीत्यर्थ इत्यङ्गीकारात् । अन्यथा इको यणचित्यादाविव समास इत्यनेनैवा-समासव्यावृत्तेः संभवादेवकारो व्यर्थः स्यात् । अङ्घ्रितुलसीति प्रथमायाः षष्ठ्यादेशत्वमङ्गीकृत्य लोकमित्यनेनान्वयः कर्तव्य इति भावेनोक्तम् ॥ अङ्घ्रिस्थतुलसी लोकमिति । लोकशब्देन पादाख्यस्थानमेव ग्राह्यमिति भावेन स्थानमित्युक्तम् । नवदामधाम्न इत्यतः परमध्याहार्यं दर्शयति ॥ उरसिस्थाऽपीति । महालक्ष्म्या भगवत्कामनया विद्यमानत्वात् । कामयानेत्यनुपपन्नमित्याशङ्कायाम्-मिवशब्दस्य कामयानेन नान्वयः किन्तु अध्याहृतेन स्पर्धयेत्यनेनान्वयः । अतो न दोष इत्यभिप्रेत्योक्तम् ॥ स्पर्ध येव कामयानेति । नवदामधाम्न इत्यतः परमुरसिस्थाऽपीत्यस्य शेषः कर्तव्य इत्यत्र ज्ञापकमाह ॥ लब्ध्वेति ॥ २० ॥

क्रुद्धयेत्यतःपरं पुरेति प्रक्षिप्तम् । यदेत्युच्छिन्नम् । अन्यथैतत्पुरेत्यनेन पुनरुक्तिप्रसङ्गः । अत एव कचित्पुस्तके क्रुद्धदयायेति पाठो दृश्यत इति ।३०। इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः॥३-१७॥

## एकोनविंशोऽध्यायः

यद्यस्मादहं त्वदीयेभ्योऽदुद्रुहः । अदुद्रुह इत्येतत्किल प्रसिद्धम् । अर्श आदिभ्योऽच् । रथिनां यूथपाधिपस्त्वं अस्वस्तये नाशाख्यामङ्गलाय नः अस्मान्सुघटस्व । तेनास्मान्संस्थाप्य स्वकानामश्रु प्रमृज च । यः स्वां प्रतिज्ञां नातिपिपर्ति अतिशयेन न पालयति सोऽसन्निति । एतेन

यस्मात्कारणादहं भवदीयं द्रोहमकार्षं तस्मादस्मद्धटेनास्मान् संस्थाप्य स्वकानामश्रु प्रमृजेति वक्तव्यम् । त्वमदुद्रुह इति कथनमसङ्गतमिति दूषणमपास्तम् । तिङा च तिङिति वचनाददुद्रुह इति मध्यमपुरुष उत्तमपुरुषादेश इत्यङ्गीकारात् ॥ १२ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥ ३-१९ ॥

## विंशोऽध्यायः

वचः ऋतं सत्यमित्यसुरमोहनार्थं इत्युक्तम् । एतेन न यावदेष वर्धेत्यादि ब्रह्मवाक्यस्य सत्यत्वाभावाद्वचः ऋतमित्ययुक्तमिति दूषणं पराकृतम् ॥ १ ॥ '

ननु हिरण्याक्षिसंबंधिनिरायुधहरिबाधनाभावस्य हरिप्रियत्वाभावेन धर्मत्वाभावाद्धर्मं मानयन्नित्ययुक्तमित्याशङ्क्य हरिप्रियस्यैव वेदप्रणिहितो धर्म इत्यादि वचनात् । वेदविहितस्यापि धर्मत्वेन निरायुधबाधनाभावस्य विशिष्यवेदविहितत्वाद्धर्मत्वमुक्तमिति परिहारो द्रष्टव्यः ॥ ता. अर्थः ॥ यत्सत्यं सता निर्दुष्टेन वेदेन ज्ञाप्यम् । विशिष्य वेदविहितमिति यावत् । तद्धर्म इति प्रोक्तः । प्रोक्तम् । यद्धरेः प्रियं तद्धर्म इति प्रोक्तम् । चापि शब्दौ परस्परसमुच्चयौ । एतेन सत्यस्य धर्मत्वाङ्गीकारे पदार्थानां सत्यत्वाद्धर्मत्वं स्यादिति चोद्यं परिहृतम् । सच्छब्दाप्यर्थे यत्प्रत्यये सत्यमिति रूपं निष्पन्नमित्यभ्युपगम्य सत्यमित्यस्य वेदज्ञाप्यमित्यर्थ इत्यभ्युपगमात् ॥ ४ ॥ इति श्रीभागवतटिप्पण्यां विंशोऽध्यायः ॥ ३-२० ॥

## एकविंशोऽध्यायः

विविक्ताध्यात्मदर्शनः विविक्तं ज्ञातुमशक्यम् अध्यात्मम् आत्मानं देहमधिकृत्य विद्यमानं त्याज्यत्वादि धर्मजातं पश्यतीति विविक्ताध्यात्मदर्शनः । स भगवान् अस्य चतुर्मुखस्य कार्पण्यमवधार्य घोरामात्मतनुं विमुञ्चेत्युवाच इति भगवतोक्तश्चतुर्मुखो जघनसंज्ञकां तनुं विमुमोचेत्येतद्धि प्रसिद्धमिति । एतेन विविक्ताध्यात्मदर्शन इत्यनेनोच्यत इत्यभ्युपगमात् ॥ २८ ॥

रूपद्रविणपण्येनेत्यस्य रूपलक्षणद्रविणसाध्यपण्येनेत्यर्थः । एतेन रूपपण्येनेत्यनेनैव पूर्णत्वाद्द्रविणेत्येतद्व्यर्थमिति दूषणं परास्तम् । रूपलक्षणस्यातिदुर्लभत्वं वक्तुं द्रविणेत्यनेन बहुद्रविणसाध्यत्वमुच्यत इत्यङ्गीकारात् ॥ ३४ ॥

तया जृंभणाख्यतन्वा उन्मादः । उत्पन्न इति शेषः । येन पिशाचादय उच्छिष्ठान् उच्छिष्ठयुक्तान् पुरुषान् घर्षयन्ति तमुन्मादं प्रचक्षत इति । एतेन तयेत्यादिकमनन्वितमिति दूषणं परास्तम् । उन्माद इत्यादिना शेषमङ्गीकृत्यान्वयस्योक्तत्वात् ॥४१॥ इति श्रीभागवतटिप्पण्यामेकविंशोऽध्यायः ॥३-२१॥

## द्वाविंशोऽध्यायः

अखिलसत्त्वराशेः पूर्णज्ञानबलसमुद्रस्य तव दर्शनान्नोऽक्ष्णोर्जुष्टं फलमथ संसिद्धं सम्यक् सिद्धमित्येतद्बत आश्चर्यमिति । एतेनाक्ष्णोः सम्यक् संसिद्धमिति वक्तव्यमक्ष्णोर्जुष्टं संसिद्धमिति कथनमनुपपन्नमिति शङ्का निरस्ता । जुषी प्रीतिसेवनयोरित्युक्तत्वात् । प्रीत्यर्थकात् जुषी धातोः कर्मणि क्त प्रत्यये जुष्टमिति रूपं निष्पन्नमित्यभ्युपगमम्य जुष्टमित्यनेन प्रीतिविषयत्वेन फलस्य गृहीतत्वात् ॥ १३ ॥

हे अधीश यद्भूतसूक्ष्मं ब्रह्माण्डाख्यं पदं प्रतिमारूपं मायया इच्छामात्रेण जग्रहे तदेतत्पदं प्रतिमारूपं तव ईप्सितं न भवतीत्येतत् बत आश्चर्यम् । तर्हि किमर्थं ब्रह्माण्डाख्य प्रतिमारूपं गृहीतमित्यत आह ॥ तर्हीति । यस्माद्भगवान् त्वं ब्रह्माण्डे ज्ञानिभिर्लक्षितो दृष्टोऽतो ब्रह्माण्डं भगवतस्तव प्रतिमारूपम् । ब्रह्माण्डे ज्ञानिभिर्दृष्टस्य भगवत्वं कुत इत्यतो भगवल्लक्षणयुक्तत्वाद् भगवत्त्वं युक्तमेवेति भावेनाह ॥ मालयेति । यस्माद्ब्रह्माण्डे ज्ञानिदृष्टः पुरुषो लसत्तुलस्या माल्या विलक्षितोऽतो भगवानिति ॥ २० ॥ इति श्रीभागवतटिप्पण्यां द्वाविंशोऽध्यायः ॥ ३-२२ ॥

## त्रयोविंशोऽध्यायः

ये शारीराः शरीरजन्या ये च दिव्या अन्तरिक्षजन्या ये च मानुषा मनुष्यजन्या ये च भौतिका भूतप्रेतादिभ्यो जन्याः क्लेशाः क्लेशसाधनानि पर्यासे च । च शब्दोऽप्यर्थे । व्यत्यस्तेऽपि देवादि-जन्मापेक्षया व्यत्यस्तं यन्मानुषजन्म तस्मिन् प्राप्तेऽपीति यावत् । हरिसंश्रयं कथं बाधं क्लेशमुत्पादयन्ति । न कथमपि । अयं तु हरि संश्रयोत्तमोऽस्य स्वायंभुवमनोः शारीरादि पीडा कथं स्यादिति । पर्यासे चेत्यस्यायमेवार्थो वक्तव्य इति भावेन तात्पर्यार्थः ॥ ३७ ॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ३-२३ ॥

## चतुर्विंशोऽध्यायः

अन्ये पुनर्भगवतो भ्रुव उद्विजृंभविभ्रंसितार्थरचना उद्विजृंभणेन विनाशिता विषयभोगचमत्कारा येषां ते किं कुत्सिताः । अनेन काम्यकर्माणि कृत्वा ये विषयभोगान्कुर्वन्ति तेषां भोगा भगवद्विजृंभणेव पुनः पुनर्नष्टा भवन्ति । अतस्ते भोगा हेयाः । भगवदपरोक्षज्ञानसामर्थ्यलब्धभोग एवोपादेया इत्युक्तं भवति । त्वं तु सिद्धासि अपरोक्षज्ञानसामर्थ्यलब्धभोगेष्वपि कृताऽसि । अतो नरैर्नृपविक्रियाभिर्नृपाणामपि विक्रियाभिर्विजयादिरूपविविधक्रियाभिः दुरधिगान्प्राप्तुमशक्यान् निज-धर्मदेहान् दिव्यान्विभवान् भुंक्ष्वेति ॥ ७ ॥

अथादर्शे स्वमात्मानमित्यस्य अथ अनन्तरम् । आदर्श इत्यस्यावृत्तिः । आदर्शे दर्पणे स्वात्मानमदर्शयदित्यर्थः । अत एव तात्पर्यम् । एतेनादर्श इत्यतः परं ददर्शेति किं शेषः प्रदर्शितः । किंवाऽऽदर्श इत्यनूद्य ददर्शेत्यर्थ उक्तः । नाद्यः । आदर्शइत्यस्य दर्पणार्थत्वमनङ्गीकृत्य ददर्शेन्त्यर्थकत्वाङ्गीकारे आत्मदर्शनस्य सिद्धत्वेनात्मानं ददर्शेत्यस्य प्रसङ्गादिति चोद्यम् निरस्तम् । आदर्श इत्यस्यावृत्तिमङ्गीकृत्यैकस्यादर्श इत्यस्य दर्पणइत्यर्थो वक्तव्य इति भावेन द्वितीयस्यादर्श इत्यस्यानुवादं कृत्वाऽऽदर्शेत्यर्थ उक्त इत्यूरीकरणात् ॥ ३० ॥ इति श्रीभागवतटिप्पण्यां चतुर्विंशोऽध्यायः ॥ ३-२४ ॥

## पञ्चविंशोऽध्यायः

सत्यलौकिकं यथार्थज्ञानयोग्ये विषये मया प्रोक्तं लोकस्य प्रमाणमित्येतद्धि प्रमाणप्रसिद्धमिति । एतेन सत्यलौकिक इत्येतद्व्यर्थमिति दूषणं परास्तम् । सत्यशब्दो यथार्थवाची लोकशब्दो ज्ञानवाची । सत्यलोक शब्दाद्योगार्थे ढक् प्रत्यये उत्तरपदवृद्धौ सत्यलौकिक इति रूपं निष्पन्नम् । विषयसप्तमी चेयम् । ततश्च सत्यलौकिक इत्यस्य यथार्थ ज्ञानयोग्ये विषय इत्यर्थो लभ्यत इति स्वीकृत्य यथार्थ ज्ञानयोग्यं प्रत्येव मया प्रोक्तं लोकस्य प्रमाणं न तु यथार्थ ज्ञानस्यायोग्यं प्रतीति वक्तुं सत्यलौकिक इति पदं सार्थकमित्यभ्युपगमात् । अतस्तात्पर्यम् । अत्र यथार्थज्ञानविषय इत्यस्य यथार्थज्ञानयोग्ये विषय इत्यर्थः । एतेन सत्यलौकिक इत्यस्य यथार्थज्ञानयोग्ये विषय इत्यर्थो वक्तव्यः । यथार्थज्ञानविषय इति व्याख्यानमनुपपन्नमिति चोद्यं परिहृतम् । यथार्थज्ञानविषय इत्यत्र विषयशब्दस्य योग्यार्थत्वं सप्तम्याश्च विषयार्थत्वमिति भावेन सत्यलौकिक इत्यस्य ययार्थज्ञानविषय इत्यर्थ उक्त इति स्वीकरणात् ॥ ३९ ॥

नाख्यात्युपप्लव इत्यस्य उपप्लवः दुःखाद्युपप्लवःनाख्याति न भासत इत्यर्थः । दुःखाद्युपप्लवप्रसक्तिरेव न भवतीति भावः । एतेन दुःखाद्युपप्लवो नेत्यनेनैव पूर्णत्वादाख्यातीत्येतद्व्यर्थमिति दूषणस्यानवकाशः । अत एव विद्यमानस्यापि दुःखाद्युपप्लवस्य प्रतीतिर्न भवतीत्युच्यत इति भ्रमं वारयितुं तात्पर्यम् ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां पञ्चविंशोऽध्यायः ॥ ३-२५ ॥

## षड्विंशोऽध्यायः

चक्षुः सूर्य इवोदित चक्षुरिव सूर्य इवोदित इत्यर्थः । एतेन सूर्य इवोदित इत्यनेनैव पूर्णत्वाच्चक्षुरिवेत्येतद्व्यर्थमिति दूषणस्यानवकाशः । न केवलं सूर्यस्य कार्यं करोति चक्षुषोऽपि कार्यं करोतीति ज्ञापनार्थं चक्षुरिवेति वक्तुं चक्षुरिति पदं प्रयुक्तमिति स्वीकरणात् ॥ ९ ॥

भक्तिः सिद्धेर्गरीयसीत्यस्य सिद्धेरल्पाधिकारिणां मुक्तेर्भक्तिर्गरीयसीत्यर्थः । एतेनोत्तमाधिकारिणां मुक्तेर्भक्तिर्गरीयसी चेत् उत्तमाधिकारिणां मुक्तिर्व्यर्था स्यादिति चोद्यं परिहृतम् । अल्पाधिकारिमुक्तिसुखापेक्षयोत्तमाधिकारिणां संसारे जायमानं भक्तिसुखमधिकमिति भक्तिः सिद्धेर्गरीयसीत्यनेनोच्यत इत्यूरीकरणात् ॥ ता. अर्थः ॥ अल्पाधिकारिणामपूर्णभक्तेः उत्तमाधिकारिभक्त्यपेक्षयाऽपूर्णाया भक्तेर्मुक्तौ तु मुक्तावपि सुखपूर्तिं नेष्यति न प्राप्नोति । उत्तमाधिकारिमुक्तिसुखापेक्षयाऽल्पाधिकारिमुक्तेरप्युत्तमाधिकारिणां पूर्णा । अल्पाधिकारिणां भक्त्यपेक्षया पूर्णा । अधिकेति यावत् । भक्तिर्गरीयसी संसार एवाधिकसुखप्रदेति ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां षड्विंशोऽध्यायः ॥ ३-२६ ॥

## सप्तविंशोऽध्यायः

कार्यकारणकर्तृत्वे कार्याणि शरीराणि कारणानीन्द्रियाणि तेषां कर्तृत्वे ब्रह्मादिनिष्ठे प्रकृतिं चित्प्रकृतिं कारणं विदुः । अनेन जीवा लक्ष्मीमोहेन विष्णोर्ज्ञानशून्याः सन्तो बन्धककर्माणि कृत्वा स्वस्वशरीरेन्द्रियाणि कुर्वन्तीत्युक्तं भवति । सुखदुःखानां भोक्तृत्वे जीवनिष्ठसुखदुःखभोगशक्तौ प्रकृतेः परं पुरुषं नारायणं कारणं विदुः । अनेन विष्णुरेव सुखदुःखभोगशक्तिं जीवेभ्यो ददातीत्युक्तं भवति । यद्यपि लक्ष्मीरपि सुखदुःखभोगशक्तिं जीवेभ्यो ददाति । तथाऽपि सुखदुःखभोगशक्तिदानप्रवृत्तेः प्रवृत्त्यन्तरापेक्षयाऽल्पत्वादविवक्षया विष्णुरेव सुखदुःखभोगशक्तिप्रद इत्युक्तमिति ॥ ता. अर्थः ॥ श्रीविष्णुबलसंश्रयाद् ब्रह्मादिभिः रुद्रादि सर्गकरीलक्ष्मीप्रेरिता ब्रह्मादयो रुद्रादि सर्गं कुर्वन्तीति यावत् ॥ अथवा ॥ श्रीविष्णुबलसंश्रयात् ब्रह्मादिभिः सर्वजीवैः कर्मद्वारा स्व स्वशरीरेन्द्रियसर्गकरी । जीवा लक्ष्मीप्रेरणया कर्माणि कृत्वा स्वस्वशरीरेन्द्रियाणि कुर्वन्तीति यावत् । विष्णुः सुखदुःखभोगशक्तिप्रद इति विशिष्य वक्ष्यमाणे विष्णुः सुखदुःखादिप्रदो नेति शङ्का स्यात् । तां शङ्कामुपोद्घातसंगत्या परिहरति ॥ सुखदुःखप्रद इति । यद्यपि सनातनो विष्णुः स्वयमेव स्वातन्त्र्येणैव सुखदुःखप्रदः । सुखदुःखशब्दः सुखदुःखभोगशक्तिव्यतिरिक्तसर्वोपलक्षकः । सुखदुःखादि सर्वप्रदस्तथाऽपि अन्येषां च ब्रह्मादीनामपि तदाज्ञया विष्ण्वाज्ञया सुखदुःखानां सुखदुःखादीनां कर्तृत्वमस्ति । सुखदुःखभोगशक्तिदातृत्वं विष्णोरेव न तु ब्रह्मादीनाम् । अतो विष्णुः सुखदुःखभोगशक्तिप्रद इति विशिष्टवचनमुपपन्नम् । यदर्थमुपोद्घातः कृतस्तदिदानीमाह ॥ भोक्तृत्वमिति । हरिरेक एव स्वयं स्वातन्त्र्येण सुखदुःखानां भोक्तृत्वं भोगशक्तिं करोति । उक्तमर्थं पिण्डीकृत्योपसंहरति ॥ भोक्तृत्वमात्रहेतुत्वमिति । भोक्तृत्वमात्रहेतुत्वं सुखदुःखभोगशक्तिमात्रहेतुत्वम् । अन्यत्र विष्णोरन्यत्र जीवे ब्रह्मादौ कुत्रचित् कुत्रापि नास्ति । सुखदुःखभोगशक्तिव्यतिरिक्तसुखदुःखादिहेतुत्वं तु विष्ण्वाज्ञया ब्रह्मादि जीवानामप्यस्ति । सुखदुःखभोगशक्ति-

दातृत्वं तु विष्णोरेव । सुखदुःखभोगशक्तिदातृत्वं विष्णोरन्यत्र क्वापि नास्तीति वक्तव्ये विष्णोरन्यत्र जीवे नास्तीत्युक्त्या महालक्ष्म्याः सुखदुःखभोगशक्तिदानेऽल्पप्रवृत्तिस्स्तीति सूचितम् । कार्य-कारणकर्तृत्व इति श्लोकस्य प्रकृतिपुरुषशब्दयोर्लक्ष्मीनारायणपरत्वाङ्गीकारे कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत इति गीतावाक्यस्य प्रकृतिपुरुषशब्दयोरपि लक्ष्मीनारायणपरत्वं वक्तव्यम् । समानार्थकत्वाद्गीताश्लोकस्य । तदनुपपन्नम् । प्रकृतिं पुरुषं चैवेति पूर्वश्लोके जडप्रकृतिजीवयोरेव प्रकृतत्वादित्याशङ्कां परिहरति ॥ प्रकृतिमिति । अनेन प्रकृतिं पुरुषं चेति श्लोके प्रकृतिशब्देनाचेतनप्रकृतिश्चेतनप्रकृतिश्चेत्यु- भयेऽपि प्रकृती विवक्षिते । पुरुषशब्देन जीवो विष्णुश्चेत्युभावपि परुषौ विवक्षितौ । अन्यथोभावपीत्येतद्व्यर्थं स्यात् । अतःप्रकृतिं पुरुषं चेति श्लोके लक्ष्मीनारायणयोः प्रकृतत्वात् गीताश्लोकस्थप्रकृतिपुरुषशब्दयोर्लक्ष्मी- नारायणपरत्वमुपपन्नमित्युक्तं भवति ॥ ९ ॥ इति श्रीभागवतटिप्पण्या सप्तविंशोऽध्यायः ॥ ३-२७ ॥

## अष्टाविंशोऽध्यायः

पुरुषः परमात्मा प्रकृतिस्थोऽपि प्रकृतिकार्यशरीरस्थोऽपि प्राकृतैः प्रकृतिकार्यसंबन्धिभिर्गुणैः सुखदुःखादिभिर्नाज्यते न संबध्यते । तत्र हेतुमाह ॥ अविकाराहिति । अविकारात् षड्भाव-विकाराभावात् । अकर्तृत्वात् आयासेन कर्तृत्वाभावात् । निर्गुणत्वात् सत्त्वादिगुणरहितत्वात् । पुरुषो जीवः प्रकृतिकार्यशरीरस्थः सन् प्रकृतेः प्रकृतिकार्यसंबन्धिभिर्गुणैः सुखदुःखादि गुणैर्नाज्यते संबध्यते । तत्र दृष्टान्तमाह ॥ जलार्कवदिति । यथा जलगतः प्रतिबिंबसूर्यो जलगुणैः कंपादिभिः संबध्यते । तथा स एष जीवो यर्हि यस्मात् प्रकृतेः प्रकृतिकार्यशरीरस्य गुणेषु सुखदुःखादि गुणेषु अभिविषज्जते अतिविशेषेण सक्तिमान्भवति । यस्मादहङ्कारविमूढात्मा अहंकारेण विमूढो विस्मृतः परमात्मा येन सोहंकारविमूढात्मा सन् अहंकर्ताऽस्मीत्यभिमन्यते अभिमानवान्भवतीति । एतेन जलगतप्रतिबिंबार्कस्य जलगतकंपादिगुणैः संबन्धस्य विद्यमानत्वात् । जलार्कवत्परमात्मा प्राकृतैर्गुणैर्नाज्यत इति वक्तव्यमनुपपन्नमिति चोद्यं निरस्तम् । पुरुष इत्यादीनामावृत्तिमङ्गीकृत्य पुरुषो जीवो जलार्कवत्प्राकृतैर्गुणैरज्यत इत्यर्थस्यैवोक्तत्वात् । एतेनैव पूर्वश्लोके जीवः प्राकृतगुणैरज्यत इत्यर्थस्यानुक्तत्वात् । स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जत इत्यनुवादोऽनुपपन्न इति दूषणं पराकृतम् । पुरुष इत्यादि पदानामावृत्तिं स्वीकृत्य प्रकृतिस्थोऽपीति पूर्वश्लोके पुरुषो जीवः प्राकृतैर्गुणैरज्यत इत्यर्थ उच्यत इत्यभ्युपगमात् ॥ १-२ ॥

निवृत्तबुद्ध्यवस्थान इत्यस्य निवृत्तं बुद्ध्यवस्थानं निद्रादि यस्य निवृत्तबुद्ध्यवस्थान इत्यर्थः । बुद्ध्यवस्थान शब्देननिद्रादिकं ग्राह्यमित्यभिप्रेत्याचार्यैर्बुद्धेरवस्थानं निद्रादीत्युक्तम् । बुद्धि

शब्दोऽहमिति स्वरूपज्ञानमात्रपरः । अवस्थानशब्दस्य मत्वर्थीयाजन्तत्वात् । अवस्थानशब्दोऽवस्थानवद्वाची । निद्रादीत्यादि शब्देन स्वप्नो गृह्यते । ततश्चाहमिति स्वरूपज्ञानमात्रावस्थानविशिष्टत्वाद् बुद्ध्यवस्थानशब्दो निद्रास्वप्नवाचीत्यर्थः । यद्यपि स्वप्नावस्थायां स्वाप्नार्थज्ञानमप्यस्ति । तथाऽपि बाह्येन्द्रियजन्यज्ञानाभावाद् बुद्ध्यवस्थानशब्देन स्वप्नावस्थाग्रहणं युज्यते ॥ ११ ॥

अप्रतिबुद्धस्य सर्पव्याघ्रादि विचाररहितस्य प्रस्वापो बव्हनर्थकृत् सर्पव्याघ्रादिनिमित्तकमरणादि बव्हनर्थकृत् इत्येतद्धि प्रसिद्धम् । स एव प्रस्वापः प्रतिबुद्धस्य सर्पव्याघ्रादि विचारविशिष्टस्य मोहाय मोहकार्यसर्पव्याघ्रादिनिमित्तकमरणाद्यनर्थाय न वै नैव कल्पते यथेति । एतेन प्रतिबुद्धस्यैव स्वाप इति नियमात् । प्रतिबुद्धस्य स्वापोऽप्रतिबुद्दस्य स्वाप इति स्वापद्वैविध्याभिधानमनुपपन्नमिति दूषणं पराकृतम् । प्रतिबुद्धस्येत्यस्य जाग्रदवस्थाविशिष्टस्येत्यर्थमनङ्गीकृत्य सर्पव्याघ्रादि विचारविशिष्टस्येत्यर्थस्योक्तत्वात् ॥ २६ ॥ इति श्रीभागवतटिप्पण्यामष्टाविंशोऽध्यायः ॥ ३-२८ ॥

## एकोनत्रिंशोऽध्यायः

ध्यानेनानीश्वरान् गुणानित्यस्य ध्यानेन भगवद्ध्यानेन अनीश्वरान् ईश्वरेऽविद्यमानान् गुणान् सत्त्वादि गुणान् दहेदित्यर्थः । एतेनानीश्वरानित्येतद्व्यर्थमिति दूषणं परास्तम् । गुणानित्येवोक्ते ज्ञानादि गुणानां प्रतीतिः स्यात् । तद्व्यावृत्त्यर्थमनीश्वरानित्यनेन न विद्यन्ते ईश्वरे एतेऽनीश्वरा इति विग्रहमङ्गीकृत्य गुणानामीश्वरेऽविद्यमानत्वमुच्यत इत्यनङ्गीकारात् । यद्यपि जीवस्वरूपभूता ज्ञानादि गुणा ईश्वरे न सन्ति । तथाऽपि तज्जातीयानां ज्ञानादि गुणानां विद्यमानत्वादनीश्वरानित्यनेन तत्प्राप्तिः सत्त्वादि गुणानां सर्वथाऽभावादनीश्वरानित्यनेन तत्प्राप्तिर्युज्यते ॥ ११ ॥ इति श्रीभागवतटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥ ३-२९ ॥

## त्रिंशोऽध्यायः

द्विषतः परकाये मामित्यस्य परकाय इत्येकवचनं जातौ । परकायेषु परेषां मत्तोन्येषां कायेषु देहेषु । स्वस्यान्येषां च देहेष्विति यावत् । मां द्विषतः कारयिता विष्णुर्नास्तीति वदत इत्यर्थः । अयं भावः । यदि ममान्येषां च देहेषु स्थित्वा विष्णुः सर्वकार्याणां कारयिता स्यात्तर्हीदानीं कार्यविशेषमकुर्वाणं मां कारयितुं कुर्वाणं निवारयत्विति वदति ॥ २३ ॥

चापि शब्दौ परस्परं समुच्चयौ । य आत्मनश्चान्तर्यामिणश्च परस्परान्तर्यामिणः सकाशादपि अन्तरोदरं भिन्नं ब्रह्म करोति जानाति । तस्य भिन्नदृशो मृत्युरुल्बणं भयं विधत्त इति ॥ ता. अर्थः

॥ भेद वाचकान्तरशब्दान्मत्वर्थीयाच् प्रत्यये कृतेऽन्तर शब्देन भिन्नमित्यर्थो लभ्यते । उदर शब्दो ब्रह्मवाचीति भावेनान्तरोदरमित्यनूद्य भिन्नं ब्रह्मेति व्याख्यातम् । आत्मन इति पञ्चमी । परस्ये-त्यनन्तरं सकाशादिति शेष इत्यङ्गीकृत्यान्तर्यामिणः सकाशात्परान्तर्यामिणः सकाशादपि भिन्नं मूलब्रह्म यो जानातीत्यर्थो वक्तव्य इति भावेन तल्लब्धमर्थमाह ॥ आत्मस्थमिति । आत्मस्थमा-त्मान्तःस्थित्वा नियामकं अन्यगमन्यान्तःस्थित्वा नियामकं ब्रह्म च । मूलब्रह्मण इति शेषः । मूलब्रह्मणः सकाशाद्योभिन्नं पश्यति । उदरशब्दस्य ब्रह्मवाचकत्वे श्रुतिमाह ॥ उदरमितीति ॥ २६ ॥
इति श्रीभागवतटिप्पण्यां त्रिंशोऽध्यायः ॥ ३-३० ॥

## एकत्रिंशोऽध्यायः

जरोऽस्यास्तीति जरः । जरश्चासौ गोश्च गोजरस्तमित्यर्थः । एतेन वृद्धबलीवर्दमित्यर्थलाभार्थं जरद्गवमिति वक्तव्यम् । गोजरमिति कथनमयुक्तमिति चोद्यं निरस्तम् । जर शब्दस्य मत्वर्थीयाजन्त-त्ववृद्धवाचित्वविशेषेणस्य परनिपात इति चाभ्युपेत्य गोजरमितिशब्देन वृद्धबलीवर्दमित्यर्थो लभ्यत इत्यभ्युपगमात् ॥ १३ ॥

हे मातः न केवलमेव समीपस्थितपरलोके किन्तु अत्रापि अस्मिंल्लोकेऽपि नरको नरकदुःखं स्वर्गः स्वर्गमस्तीति ज्ञानिनः संप्रचक्षते । अनुपलंभबाध इत्यत आह ॥ या इति । या नारक्यो नरकसंबन्धिन्यो यातना दुःखविशेषास्ता इति । अस्मिन् लोके राज्यादिभिर्दण्ड्येषु या लक्षिता दृष्टा ये स्वर्गसंबन्धिनः सुखविशेषास्तेऽपि इह लोके राजादिषु दृष्टा इत्येवमिहापीत्यपि शब्दोऽनुक्तसमुच्चय इति । यद्यपि परलोको दूरे वर्तते । तथाऽपि मरणानन्तरं शीघ्रं प्राप्यत्वात्समीपस्थितत्वमुक्तम् । एतेन परलोके नरकदुःखादेर्विद्यमानत्वात् । अत्रैव नरकः स्वर्गो न तु परलोक इति कथनमनुपपन्नमिति दूषणं परिहृतम् । एवशब्दस्य सामीप्यार्थकत्वं न केवलमित्यादीनां शेषं चाङ्गीकृत्य न केवलं समीपस्थितपरलोके किंत्वस्मिंल्लोकेऽपि नरकः स्वर्गश्चास्तीत्यर्थस्योक्तत्वात् ॥ ता. अर्थः ॥ अत्रैवे-त्येवशब्दोऽस्मिंल्लोक एव न तु परलोक इत्यन्ययोगव्यवच्छेदार्थ इति भ्रमं वारयति ॥ अत्रैवेत्येव शब्द इति । अनेन एवशब्दः समीपस्थितपरलोकपर इत्युक्तं भवति । एवशब्दस्य सामीप्यार्थत्वे प्रमाणमुदाहरति ॥ सामीप्ये चेति । न केवलमत्र किन्तु समीपस्थितपरलोकेऽपीत्यर्थ इति भ्रमं वारयति ॥ अत्राप्यस्तीत्यर्थ इति । न केवलं समीपस्थितपरलोके किंत्वत्राप्यस्मिंल्लोकेऽपि नरकदुःखमस्तीत्यर्थ इत्यर्थः । अनेन परलोके दुःखादिकमस्तीतित्यर्थस्य पूर्वग्रन्थेन सिद्धत्वात् । एवेत्युनवादः। इह लोके दुःखादिकमस्तीत्यर्थस्यासिद्धत्वात् । अत्रेति विधिरित्युक्तं भवतीति ॥२९॥
इति श्रीभागवतटिप्पण्यामेकत्रिंशोऽध्यायः ॥ ३-३१ ॥

## द्वात्रिंशोऽध्यायः

चैत्यमिव प्रतीतमित्यस्य चितो भावश्चैत्यं चैतन्यं स्वात्मानमिव प्रतीतं पुरस्फूर्तिविषयमित्यर्थः । एतेनैव चैत्यशब्दो न भगवदादि चैतन्यग्रहणेऽप्रसिद्धत्वेन दृष्टान्तत्वानुपपत्तिरिति शङ्कानवकाशः । चैतन्यवाचकेन चैतन्यमित्यनेन तात्पर्यार्थतया स्वात्मनो गृहीतत्त्वात्तस्य चाहमिति प्रसिद्धत्वेन दृष्टान्तत्वसंभवात् । एतेनैव प्रतीतमित्यनेनैव भगवद्दर्शनस्योक्तत्वात् । प्रतीतं भगवन्तं पश्य इत्यनुपपन्नमिति चोद्यस्यानवकाशः । प्रतीतशब्देन भगवद्दर्शनहेतुपरिस्फूर्तेर्गृहीतत्वात् ॥ २० ॥

तदर्थमिति तच्छब्देन भूतैः पञ्चभिरारब्धे देह इति प्रकृतो देहः परामृश्यते । तदर्थं देहार्थम् । देहपोषणार्थमिति यावत् । तत्कर्म कुरुते । तत्किमित्य आह ॥ यद्बद्ध इति । यद्बद्धो येन कर्मणा बद्धस्ताम् । संसृतिं याति । तां कामित्यत आह ॥ तमो विशतीति । यद्बद्धःयथा संसृत्या बद्धस्तमस्तमोऽज्ञानं विशति । तत्किमित्यत आह ॥ येनेति । येनाज्ञानेनासौ जीवस्तस्मिन्मर्त्यजन्मनि भवति । तत्किमित्यत आह ॥ येनेति । येन मर्त्यजन्मना ईदृशमविद्याकर्मबन्धनं च यातीति । एतेन यच्छब्दानामनन्वय इति दूषणं परास्तम् । तच्छब्दानां शेषेणान्वयस्योक्तत्वात् ॥ ३२-३३ ॥

मन्मायां मन्मायाविशिष्टां ऋषभायनीं ऋषभः श्रेष्ठः । पतिरिति यावत् । तद्वदाचरतन्तीम् आचरणेन पतित्वप्राप्तामिति यावत् । यां पतिमोहाज्जातात् स्त्रीसङ्गतः स्त्रीस्नेहात् । स्त्रीत्वमाचरणेनापि स्त्रीत्वं प्राप्तां वित्तापत्यगृहप्रदां च मन्यते तां मृत्युमीक्षतेति पूर्वेणान्वय इति । एतेन स्त्रीत्वजातेर्विद्यमानत्वान्मोहात्स्त्रीत्वं प्राप्ता मन्यत इति कथनमनुपपन्नमिति दूषणं परास्तम् । आचरणेनापीत्यस्य शेषमङ्गीकृत्य मोहनिमित्तकस्नेहाज्जात्या स्त्रीत्वमिवाचरणेनापि स्त्रीत्वमस्तीति मन्यत इत्यर्थस्योक्तत्वात् ॥ ४३ ॥ इति श्रीभागवतटिप्पण्यां द्वात्रिंशोऽध्यायः ॥ ३-३२ ॥

## त्रयस्त्रिंशोऽध्यायः

स्वधर्माख्यसत्त्वेनेत्यस्य सात्विकेन धर्मेणेति तात्पर्यार्थो द्रष्टव्यः । एतेन स्वधर्माणां सत्त्वगुणकार्यत्वात्सात्विकेन स्वधर्मेणेति वक्तव्यमिति दूषणं परास्तम् । स्वधर्माणां केवलसात्विकत्वज्ञापनार्थं सत्त्वगुणरूपत्वमुक्तमित्यभ्युपगमात् ॥ ६ ॥

दृश्यादिभिर्दृश्यादिषु । आदिपदेन स्पृश्यादीनां ग्रहणम् । दृश्यस्पर्श्यादिषु पृथग्भावेषु भिन्नपदार्थेषु विद्यमानो भगवानेक इतीयते ज्ञानिभिर्ज्ञायत इति । एतेन दृष्यादिभिर्भिन्नपदार्थैर्भगवत ऐक्याभावाद्दृश्यादिभिःपृथग्भावैर्भगवानेक ईयत इति कथनमयुक्तमिति चोद्यं निराकृतम् । दृश्यादिभिः पृथग्भावैरिति तृतीयाबहुवचनं सप्तमी बहुवचनादेश इति स्वीकृत्य दृश्यादिभिन्नपदार्थेषु विद्यमानस्य भगवत ऐक्यमुच्यत इत्यूरीकरणात् ॥ २६ ॥

मत्स्यादे रूपमिति विशेष्यमध्याऱ्हीयते । ज्ञानं ज्ञानमात्रं एकं सर्वोत्तमं ब्रह्म आनन्दादि गुणपूर्णं निर्गुणम् आरंभकसत्त्वादि गुणरहितम् । सत्त्वादिगुणारब्धं नेति यावत् । मत्स्यादे रूपम् । शब्दादि धर्मिणां शब्दस्पर्शादि धर्मवताम् । शब्दस्पर्शादिविषयासक्तानामिति यावत् । अज्ञाना पराचीनैर्बहिर्मुखैः । भगवद्विमुखैरिति यावत् । इन्द्रियैर्भ्रांत्याऽर्थरूपेण अर्थशब्देन आकाशादि भूतरूपार्थो गृह्यते । तद्रूपेण । सत्त्वादि गुणकार्याकाशादिभूतारब्धत्वेनेति यावत् । अवभाति । ज्ञानानन्दात्मकोऽपि मत्स्यादि देहः सत्त्वादि गुणमय इति । अज्ञकर्तृकभ्रमविषयो भवतीत्युक्तम् । तत्रनिमित्तमाह ॥ यथेति । महान् महत्तत्त्वाभिमानी चतुर्मुखः अहङ्कारः अहङ्काराभिमानी रुद्रः पञ्चविधः पञ्च आकाशादीनां पञ्चभूतानि विशेषेणाधत्त इति पञ्चविधः । पञ्चभूताभिमानीति यावत् । एकादशविधः एकादशेन्द्रियाणि विशेषतो धत्त इति । एकादशेन्द्रियाभिमानीति यावत् । स्वराट् स्वर्गाधिपतिरिन्द्रश्च यथा त्रिवृत् त्रीन् सत्त्वादि गुणान्वृणोतीति त्रिवृत् । सत्त्वादि गुणनिर्मितदेह इति यावत् । तथा मत्स्यादयो गुणमयदेहा इत्यज्ञा जानन्ति । अनेन मत्स्यादयो गुणमयदेहा इति भ्रमे ब्रह्मादयो गुणमयदेहा इति ज्ञानं निमित्तमित्युक्तं भवति । ब्रह्मादि देवानां गुणमयदेहवत्त्वं प्रमाणं विना कथं वक्तुं शक्यमित्यत आह ॥ तस्येति । प्रमाणप्रसिद्धमिति शेषः । यतः कारणात् अण्डं ब्रह्माण्डं जगच्च तस्य ब्रह्मादेर्वपुः शरीरमिति प्रमाणप्रसिद्धम् । उपलक्षमेतत् । ब्रह्मादीनां जगद्ब्रह्माण्डव्यतिरिक्तानेकगुणमयशरीरं प्रमाणप्रसिद्धमित्यपि द्रष्टव्यम् । अतः प्रमाणैर्ब्रह्मादि गुणमयशरीराणि ज्ञात्वा दृष्टान्तेन मत्स्यादयोऽपि गुणमयदेहा इति जानन्त्यज्ञा इति ॥ तदुक्तम् व्यासयोगे । गौणान् ब्रह्मादि देहादीन्दृष्ट्वा विष्णोरपीदृशः । देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशमिति ॥ ता. अर्थः ॥ श्लोकद्वयं प्रमाणेन व्याचष्टे ॥ मत्स्यकूर्मादि रूपमिति । ये विष्णोः यत् ज्ञानैकमात्रकम् । ज्ञानेत्युपलक्षणम् । ज्ञानानन्दाद्यैकमात्रकं मत्स्यकूर्मादिरूपम् । च शब्दो न केवलं ब्रह्मादिशरीरं किन्तु मत्स्यादिरूपं चेति समुच्चये । तच्च तदपि । तु शब्द एवार्थे । भौतिकं तु भौतिकमेव मन्यन्ते । तेऽधरन्तमो गच्छन्ति । मत्स्यादयो भौतिकदेहा इति ज्ञानं भ्रम इति वक्तुम् अधरं तमो गच्छन्तीत्युक्तम् । एकादशेन्द्रियात्मका । च तथा शब्दौ विशेषणसमुच्चयौ । दशेन्द्रियाभिमानी पञ्चभूतात्मकः पञ्चभूताभिमानी च सर्वभूताभिमानी तथा सर्वभूताभिमानी च स्वराट् स्वर्गाधिपतिः पुरंदरः इन्द्रः त्रिगुणः त्रिगुणदेहः । प्रधानेन्द्रलाभार्थं पुरन्दर इत्युक्तम् । इन्द्रस्य कोऽसौ गुणमयदेहस्तत्र किं प्रमाणमित्यत आह ॥ इदमण्डमिति । बुधा इदमण्डं सर्वं जगच्च शक्रदेहं विदुः । शक्रस्य गुणमयदेहत्वे पराधीनत्वं हेतुरित्युक्तं भवति । रुद्रः त्रिगुणः त्रिगुणाण्डादि देहः । रुद्रस्य त्रिगुणदेहत्वे युक्तिमाह ॥ तस्येति । यतो रुद्रस्य ब्रह्मा पतिस्ततो रुद्रस्त्रिगुणदेहः । ब्रह्म त्रिगुणः त्रिगुणाण्डादिदेहः । यतस्तस्य ब्रह्मणो हरिः पतिस्ततो ब्रह्मापि त्रिगुणस्त्रिगुणाण्डादि देहः । श्लोकद्वयनिष्कृष्टार्थं स्ववाक्येनाह ॥ यथेति । अज्ञा यथा एतान् ब्रह्मादीन् गुणमयदेहान्पश्यन्ति तद्वदेव ब्रह्मादि देवज्ञानात्मकं ज्ञानदेहं मत्स्यादि रूपं गुणमयदेहं पश्यन्तीति ॥ २८-२९ ॥ इति श्रीभागवतटिप्पण्यां त्रयस्त्रिंशोऽध्यायः ॥ ३-३३ ॥

## चतुस्त्रिंशोऽध्यायः

श्वाद इत्यस्य श्वादसमान इत्यर्थः । एतेन श्वादस्य सवनेऽधिकाराभावात् । श्वादोऽपि सद्यः सवनाय कल्पत इत्ययुक्तमिति चोद्यं निरस्तम् । श्वाद शब्देन दुराचारेण श्वादसमानस्य ग्रहणात् ॥६॥

महामारकतेषु महामरकतमणिविशिष्टेषु स्वच्छस्फटिककुड्येषु ललनारत्नसंयुता ललनारत्नेषु स्त्रीश्रेष्ठप्रतिमाचक्षुराद्यवयवेषु संयुताः संबंधाः रत्नाभा अर्चिषो भान्ति च । पूर्वोक्तसमुच्चये च शब्द इति ॥ १७ ॥ इति श्रीभागवतटिप्पण्यां चतुस्त्रिंशोऽध्यायः ॥ ३-३४ ॥

इति श्रीमद्श्रुतपदवाक्यप्रमाणव्याख्यातॄणामभिनवचन्द्रिकाऽभिनवताण्डवाभिनवामृतादि बहुग्रन्थ कर्तॄणां जगत्पूज्यपादुकानां श्रीसत्यनाथश्रीपादानां शिष्येण सत्याभिनवयतिना त्वया भागवतटिप्पणं कारयिष्यामीति तदीयामोघसंकल्पमात्रमवलंब्य कृतायां श्रीमद्भागवतटिप्पण्यां दुर्घटभावदीपिकायां तृतीयः स्कन्धः समाप्तः ॥ ३ ॥

पाङ्गीश्रीनिवासाचार्यविरचितः

## भागवते विरोधोद्धारः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक लक्ष्मीहयग्रीवाय नमः । कच्चिदिति । अत्राग्रे पूर्वजन्मनि यो भवान्यो गर्भे धृतस्तमिति श्रीधरीयं व्याख्यानम् । स्कन्धजन्म तु रुद्रेणाग्निमुखे रेतस्युत्सिके तत्तापात्तेन गङ्गायामुत्सिक्ते तयाऽपि तापत्रस्तया शरस्तम्बे उपन्यस्ते तत्र कृत्तिकाभिः स्वस्वस्तन्यप्राशने कारयिते षण्मुखोऽभूत् तदुपरिष्टात्स्वभर्त्रा सह गच्छन्ती पार्वती प्रस्नुता सती रुद्रवाक्यात्तम् । जग्राह न गर्भे दधारेति पुराणप्रसिद्धं पुत्रत्वेन अतो विरोधस्तस्मादुच्यते । यो गुहः ॥ अम्बिकया ॥ उमया ॥ अग्रे । स्वपुरतः ॥ धृतः । लालनार्थः स्थापितः । यद्वा । अग्रे आदिसर्गे । अम्बिकया । उमया । धृतः । बुद्ध्याम् उमया । स शिवस्त्रिरूपो । मनश्च वैकारिकदेवसङ्घानित्युक्तौ मनः शब्देन स्कन्देन्द्रयोर्ग्रहणात् । यं देवं गुहं व्रताढ्या जांबवती असूत । स साम्बः साम्बाख्यः । सदृक्षः । पितृसदृशः । रथिनामग्रणीः नासीरः ॥ हरेः । कृष्णस्य । सुतः साध्वास्ते कच्चित् हे सौम्योद्धवेति ॥ ३० ॥ क्षेममिति । यतिभिर्दुरापामित्यनेन सिद्धां गतिं मोक्षगतीमित्युक्ते सात्यकेः क्षेमप्रश्नस्यानुपपत्त्या विरोधोऽत उच्यते ॥ यतिभिः । यत्नवद्भिः ॥ दुरापाम् । दुर्लभाम् । तदीयां गतिम् । वैष्णवज्ञानम् । गत्यर्थानां ज्ञानार्थकत्वात् । वैष्णवीं स्थितिं वा ॥ ३१ ॥ इति श्रीभागवते प्रथमोध्यायः ॥ ३-९ ॥

**श्री भागवते पांघरी श्रीनिवासाचार्यविरचिते विरोधोद्धारे तृतीयः स्कन्धः समाप्तः ।**

# श्रीमद् भागवततृतीयस्कन्धश्लोकानुक्रमणिका

## 'आ'कारः

### 'इ, ई' कारौ



### 'उ'कारः

**'ख'कारः**

**'द'कारः**

**'ध'कारः**



**'न'कारः**

**'प'कारः**

**'ब' कारः**



**'भ'कारः**

**'र'कारः**

‘श’कारः



‘ष’कारः



‘स’कारः

**'ह'कारः**